नद और नदियां सूखने लगे व आतुर प्राणी मरने लगे यह देख इन्द्रादि देव ब्रह्मा के पास गये। ब्रह्मा ने देवों से कहा यह सत्त्वगुण युक्त आदि देव है तथा चन्द्रमा रजोगुण युक्त इन दोनों से ही संसार पालित है इसके समान कोई रक्षक नहीं है। इसी का ध्यानकर विप्र मोक्ष साधन करते हैं। ऊषाकाल में दर्शन करने से सम्पूर्ण पाप नष्ट हो जाते हैं। इसी के मण्डल में सन्ध्यास्वरूपिणी देवी गायत्री विराजमान है जिसकी उपासना करनेवालों को स्वर्ग व मोक्ष मिलता है। इसकी उपासना करने से सर्व रोग, दरिद्रता दुःख व अन्धत्व नष्ट हो जाते हैं। सूर्य की आराधना के विषय में देवों ने पूछा तब ब्रह्मा ने सर्व प्रथम स्तुति की स्तुति से प्रसन्न हो सूर्य ने ब्रह्मा से वर मांगने को कहा ब्रह्माजी ने कहा आपकी किरणें अत्यन्त प्रचण्ड हैं इन्हें कोमल कीजिये। आदित्य ने कहा मेरी कोटि कोटि किरण संसार को नाश करनेवाली हैं अतः इनका छेदन कर दीजिये। सूर्य के वचन सुन ब्रह्मा ने विश्वकर्मा को बुला वज्रमयी भ्रमि (चक्र) से सूर्य-किरणों को छेदन करवाया। उन किरणों से विष्णुचक्र, यमदण्ड, त्रिशूल, काल का खड्ग, शक्ति और चण्डिका का परम अस्त्र बनाये गये। केवल सहस्र किरण ही बचाई गई और सब का छेदन कर दिया। अदिति के गर्भ से होने से इसका आदित्य नाम हुआ। इसके द्वारा राशियों को सङ्क्रमण करने को सङ्क्रान्ति कहा जाता है। सङ्क्रान्ति में दानादि करने का पुण्य। माघ पूर्णिमा में पितृतर्पण एवं गोदानादि का महत्त्व। माघ शुक्ल सप्तमी का व्रत उस दिन रविवार हो तो वह महा जया कहलाती है अन्यथा जया नाम से प्रसिद्ध है। जो सूर्य के प्रसन्नार्थ अश्व, सुवर्ण, रक्तवस्त्र और धान्य देता है वह स्वर्ग एवं मर्त्यलोक का पति होता है। सूर्य की प्रसन्नता के लिये अन्यान्य दानादिकों का वर्णन। सूर्य का व्रत रविवार उत्तरायण शुक्लपक्ष और पुंनाम नक्षत्रों में करना चाहिये। पुंनाम नक्षत्र ये हैं—

हस्तो मैत्रं तथा पुष्यः श्रवो मृग पुनर्वसू।
पुंनामधेयनक्षत्राण्येतान्याहुर्मनीषिणः॥

पंचमी को एक वक्त भोजन, षष्ठी को नक्त भोजन और सप्तमी को उपवास कर अष्टमी को पारण करना चाहिये। यहां पर नक्त भोजन का वर्णन यह है कि-

आत्मनो द्विगुणां छायां यदा कुर्वीत भास्करः।
तदा नक्तं विजानीयान्न नक्तं निशि भोजनम्॥

जब अस्त होते सूर्य के प्रकाश में अपनी परछाया दुगुनी होवे वह नक्तकाल है वही वक्त काम में लें प्रथम फलपुष्पों से पूजन करे फिर अन्नदान करे। सूर्य का ध्यान करे व मन्त्र जपे। पारण अष्टमी को ही करना चाहिये नवमी को नहीं। क्षीर आदि पदार्थों से ब्राह्मणों को तृप्त कर दक्षिणा दे। इस अनन्त फल देनेवाली सूर्यसप्तमी का माहात्म्य व फलकथन।



वैशम्पायनजी बोले आपकी कृपा से पावनव्रत मैंने सुना और भी सूर्य का प्रियकरव्रत वर्णन कीजिये। व्यासजी ने कहा कैलास पर्वत पर सुखासीन महादेव को स्कन्द ने इस विषय में पूछा तब महादेव बोले रविवार के दिन लाल पुष्प से अर्घ्य देवे व नक्ताहार हविष्यान्न से करे। सप्तमी रविवार को सङ्क्रान्ति का योग होने से उस दिन व्रत दानादि करने से अक्षय फल प्राप्त होते हैं। रविवार के दिन सूर्य की पूजन विधि विधान से कर जप, स्तुति व मुद्रा प्रदर्शित करे। मेरे हाथ में ब्रह्मवध से कपाल लग गया था वह इन्हीं की कृपा से वाराणसी में गङ्गा-तट पर मुक्त हुआ। इतना सुन स्कन्द ने आश्चर्य प्रगट किया तब महादेवजी बोले संसार के हितार्थ युग-युग में पृथक्रूर ब्रह्मा, विष्णु और महेश कार्य करते हैं हमारा बन्धन नहीं है। सूर्यदेव बारहमहीनों में बारह नामों से तपते हैं। सूर्यमहामन्त्र का वर्णन। सूर्य के आदित्य आदि बारह नामों को जपने से मनुष्य सम्पूर्ण पाप व रोग से मुक्त हो जाता है। आदित्य उच्चारण करने से सम्पूर्ण रोग 'लूता विस्फोटकादि' कामलरोग ( पीलिया ) ज्वर, कुष्ठरोग, कुक्षिरोग

अश्मरी (पथरी), मूत्रकृच्छ्र, वातरोग, चर्मरोग और अन्य वेदना रोग नष्ट हो जाते हैं। सन्ध्या समय हवन के समय मूलमन्त्र जप करने से क्रूर ग्रह शान्त हो जाते हैं। यह व्रत नास्तिक और देव ब्राह्मणों के निन्दक को नहीं कहना चाहिये; केवल गुरुभक्त को बतलाना चाहिये। इसे करने से पुत्रार्थी को पुत्र, कन्यार्थी को कन्या, विद्यार्थी को विद्या और धनार्थी को धन प्राप्त होता है। ब्राह्मण भोजन के समय, पुण्य स्थान व तीर्थों में जपने से कोटिगुणा फल होता है।

## ८१ सूर्यमाहात्म्यप्रसङ्गाद्भद्रेश्वरनामकमध्यदेशनृपतिकथानकम् ६६८

व्यासजी ने कहा मध्यदेश में भद्रेश्वर नामक राजा हुआ। वह नाना व्रतादि व तपस्याओं से पवित्र और देवों की पूजन करता था। उसके बांयें हाथ में कुष्ठ रोग हो गया। उसने मुख्य मन्त्री व ब्राह्मणों से कहा कि मेरे हाथ में कुष्ठ हो गया है अतः वंशहीन मेरे शरीर त्यागने के लिये पुण्यक्षेत्र बतलाओ। ब्राह्मणों ने कहा आपके जाने से सम्पूर्ण संसार ही नष्ट हो जायगा अतः यहीं इसका प्रतिकार है कि आप सूर्य की उपासना कीजिये। ब्राह्मणों की आज्ञा से राजा ने विधिविधान से अर्घ्यदान व जपापुष्पादि से सूर्य की पूजन की इसपर प्रसन्न हुए सूर्य ने उसे वर मांगने को कहा। राजा ने सम्पूर्ण पुरवासियों को स्वर्ग में रहने के लिये वर मांगा। सूर्य ने राजा के मन्त्री व विप्रों को परिवार सहित सूर्यलोक में रहने का आदेश दे राजा के लिये पांच कल्प के बाद मन्वादि में राजा होने को कहा। सूर्य का अन्तर्धान करना। राजा का पुरवासियों सहित स्वर्ग में रहना। वहां के कीटादि भी परिवार सहित स्वर्ग में देववृक्ष में भोग भोगते हैं। सूर्यव्रत करने का फल वर्णन।

---

वैशम्पायनजी के सूर्यादिग्रहों के शुभाशुभ, साधन, और प्रसन्नता के विषय में पूछने पर व्यासजी ने कहा ग्रह संसार में पुण्य, पाप को भोगते हैं सूर्य काल के समान ही दण्ड देता है इसकी शान्ति के लिये 'आकृष्णेन रजसा' मन्त्र से उदुम्बर व पलाश के पत्रों से हवन करना चाहिये। इससे सम्पूर्ण रोगों की शान्ति होती है मासकी समाप्ति में ब्राह्मणभोजन सुदि सप्तमी व पूर्णिमा में करावे। चन्द्रमा का शीतल स्वभाव है इन दोनों की ही आराधना करने से पुष्टि होती है। जो मोह से चन्द्रमा की पूजा नहीं करता है उसकी आयु नष्ट होती है और वह नरक में जाता है। जो चन्द्र को पूजन कर अर्घ्यदान दे व सहस्रनामों से स्तुति करे उसे स्वर्ग की प्राप्ति होती है। चन्द्र-निमित्त दान व जपादि का वर्णन। इसके करने से रूप व सौभाग्य की प्राप्ति होती है।



वैशम्पायनजी ने भौम की उत्पत्ति व तेज (प्रभाव) के विषय में पूछा तब व्यासजी बोले कि भौम की उत्पत्ति शङ्कर से है। वैशम्पायनजी ने पूछा यह शम्भुपुत्र कैसे, कैसे महीपुत्र और कैसे क्रूरग्रह हुआ व इसकी शान्ति का उपाय कैसे हो सो बतलाइये। व्यासजी ने कहा हिरण्याक्षकुल में विष्णु के वरदान से अन्धक दैत्य उत्पन्न हुआ। उसने देवों के राज्य, सुख और यज्ञादि का हरण कर लिया। देवों ने ब्रह्माजी से सब समाचार कहे। ब्रह्माजी ने देवों को उसके पराजय की बात सुनाई। ब्रह्माजी ने श्रद्धायुक्त कामदेव और विचिकित्सा माया को उसे मोहित करने के लिये भेजा। उनसे मोहित हो वह स्त्री की खोज में

फिरने लगा। काममोहित हो पार्वती को लाने के लिये चेष्टा करने लगा। उमा ने कोटवी रूप धारण किया। दैत्य अपनी सेना ले शङ्कर से लड़ने चला। नन्दी की आज्ञा से देवों ने दैत्यों से युद्ध किया। युद्ध में मरे हुए दैत्यों को शुक्राचार्य जीवित करने लगे। यह वृत्त जान शङ्कर ने नन्दी को आज्ञा दी कि शुक्राचार्य को केश पकड़ यहां ले आओ। नन्दी उसे पकड़ लाये। महादेवजी उसे निगल गये फिर देवदानवों का परस्पर युद्ध हुआ। स्वयं महादेवजी के लड़ते हुए भी देवों का बल क्षीण हो गया और वह दैत्य त्रिशूल से भी नष्ट न हुआ तो शङ्कर ने उसे अपना भृङ्गीरिटि नाम का गण बना लिया। देवों से बातचीत कर शुक्र को बाहर निकाला वह गर्भ पृथ्वी पर गिरा इसलिये भौम का शङ्कर पुत्र नाम हुआ। इसका व्रत भौमवार व चतुर्थी के दिन करे जिससे अरिष्ट नष्ट होते है। त्रिकोण मण्डल बना पूजन करे इससे पुत्र, सुख व यश की प्राप्ति होती है। इस धर्मा-ख्यान को सुनने से जन्म-मरण नहीं होता इतना कह व्यासजी का शम्याप्रास क्षेत्र में गमन। नारदजी भी नारायण के दर्शन के लिये बदरिकाश्रम चले गये।



भीष्मजी ने पूछा चण्डिका के अनुग्रह से अवशिष्ट दैत्य रसातल में चले गये अतः चण्डिका-पूजन का फल वर्णन कीजिये। पुलस्त्यजी ने कहा कि चण्डिका पूजन से स्वर्ग के भोग भोगने पर मोक्ष मिलती है। जो चण्डिका का पूजन प्रति दिन करता है उसका फल साक्षात् ब्रह्मा भी वर्णन नहीं कर सकते। जो देवी पूजन प्रति दिन नाना पुष्प धूपदीपादि से करता है वही, योगी, मुनि व

लक्ष्मीवान् है उसके हाथ में ही मुक्ति है। जो भगवती को पूर्णिमा व नवमी को क्षीर से स्नान करवाता है उसे वाजपेययज्ञ के समान फल मिलता है। सम्पूर्ण पर्वकालों में पूजन करनेवाला विमान में बैठ ब्रह्मलोक में जाता है। जो फल चार मास दुर्गापूजन से मिलता है वही कार्त्तिक की नवमी को पूजन करने से मिलता है तथा आश्विन शुक्ला नवमी को देवी पूजन करने से मिलता है। आश्विन शुक्ला नवमी को देवी पूजन करने से हजार अश्वमेध व सौ राजसूय यज्ञ के समान फल मिलता है। प्रत्येक मास में नवमी के दिन पूजन करने से छः मास का फल मिलता है। जो आश्विन मास में एक दिनरात ताम्र पात्र की सूक्ष्मधारा से घृत से देवी का अभिषेक करता है उसके सब पाप नष्ट हो जाते हैं। कार्त्तिक पूर्णिमा युक्त सोमवार को देवीपूजन करने से अग्निष्टोम यज्ञ के समान फल प्राप्त कर सूर्यलोक की प्राप्ति होती है। आषाढ़ी पूर्णिमा को उपवासी रह देवीपूजन करने से परमगति की प्राप्ति होती है। माघ पूर्णिमा को देवी को पूजने से अश्वमेध यज्ञ के समान फल होता है। बिल्वपत्रों की माला तथा गुग्गुलु की माला से देवी पूजन करने से अथवा बिल्ववृक्ष के पत्रों से पूजा करने से राजसूय यज्ञ के समान फल मिलता है। देवी पूजन में सब पुष्पों से उत्तम नीलकमल बतलाया गया है। नाना प्रकार के पुष्पोंसे चण्डी पूजा करनेसे नानालोकों की प्राप्ति का वर्णन। देवी मन्दिर में पुष्पों का मण्डल करने का वर्णन। घृतपिष्ट दीपक जलाने का विधान। देवी मन्दिर में नृत्य, गीत और वादित्र करने से देवीलोक की प्राप्ति। जो एक दिन भी देवी को पञ्चगव्य से स्नान कराता है उसे सुरभीलोक की प्राप्ति होती है। नाना रत्नादिकों से अभिषेक करने से नाना लोकों की प्राप्ति का वर्णन। उत्तरायण में उपवासी रह देवी पूजा करने से बहु पुत्र व बहु धन की प्राप्ति। विषुव (तुला-मेष सङ्क्रान्ति) में उपवास कर देवीपूजन करने से मनुष्य शक्तिमान् व बहुपुत्रोंवाला एवं बलवान् होता है। चन्द्र-सूर्य ग्रहण में उपवास कर दुर्गापूजन करने से पुत्र की प्राप्ति। शान्ति कामना के लिये सूर्यग्रहण में उपवासी रह पूजन करने से विशेष फल कहा है।

दुर्गा का दर्शन पवित्र है दर्शन से प्रणाम, वन्दन से स्पर्श, स्पर्श से पूजन, पूजन से लेपन,लेपन से तर्पण और तर्पण से मांसदान पवित्र है मांस में महिष व अज का ही विधान है परन्तु मार्कण्डेयपुराण में बतलाया है कि सभी में अहिंसा की भावना रख देवी की पूजा करना श्रेष्ठ है "बलिमांसादि पूजेयं विप्रवर्ज्या मयेरिता" विशेष क्या चण्डीपूजन करके ही भोजन करना चाहिये।



पुलस्त्यजी ने कहा देवों ने ब्रह्मा से दुर्गापूजन के विषय में पूछा तब ब्रह्माजी कहने लगे कि शम्भु, विष्णु, कुबेर, विश्वेदेव, वायु, वसु, अश्विनीकुमार, वरुण, अग्नि, सूर्य, सोम, ग्रह, वारिज, पितर, पिशाच, गुह्यक और भूतयोनि क्रम से, मन्त्रशक्तिमयी, इन्द्रनीलमयी, हेममयी, रौप्या, पित्तल से बनी हुई, कांस्य की, पार्थिवी, स्फाटिकी, रत्नमयी, ताम्रा, मुक्ताफलमयी, प्रवालमयी, वारिजा, त्रपुसीसमयी, लोहमयी, त्रिलोहिनी और वज्रलोहमयी देवी का पूजन करते हैं तुम परमगति को चाहते हो तो मणिमयी देवी का पूजन करो जिससे मनोऽभिलषित सिद्धि प्राप्त होगी। उस भगवती प्रतिमा को नाना वाद्यादिकों से स्नान करावे नाना पुष्प चढ़ावे व पुष्पगृह बनावे। जो मनुष्य नवमी व पर्वकाल में पूजन करता है वह पुष्पयुक्त विमान में बैठ चण्डीलोक में अक्षयकाल पर्यन्त सुखी रहता है। देवी के लिये सफेद अगरु देने से गोसहस्र दान करने के समान फल कहा है। आम्र, नारिकेल, खजूर और बिजौरा चढ़ाने का फल। दुर्गा के प्रसन्नार्थ नाना वस्तुओं के दान देने का महत्त्व। कार्त्तिक में देवी के समीप दीप-मालिका करने का फल वर्णन। शुक्ल नवमी को विशेष विधान बतलाया है। चण्डिका की विधान से पूजनकर "दुर्गां शिवां शान्तिकरीं" आदि स्तोत्र का पठन करे इसे जो सुनता है वा पढ़ता है वह सम्पूर्ण पापों से छुटकारा पाकर दुर्गा भगवती महामाया के लोक में पूजित होता है।

८६ बुधगुरुशुक्रशनिराहुकेतूनां पूजाविधिवर्णनम् ६८७

अभयदानस्य सर्वदानापेक्षया महत्त्वम् ६८६

भीष्मजी ने पूछा सूर्य, चन्द्रमा और भौम का पूजा-विधान सुना अब बुध आदि का पूजा विधान वर्णन कीजिये पुलस्त्यजी बोले बुध तारा के गर्भ से तथा चन्द्रांश से उत्पन्न हुआ है मनुष्यों को शुभाशुभ फल देता है। उसका बाणाकार मण्डल है रंग के लिये हरित मणियों के समान उसका चूर्ण से मण्डल बनावे, पुष्प धूपादि से पूजन करे, अरिष्ट होनेपर दानादि करे; दान में कर्पूर, मूंग, हरावस्त्र, हरिन्मणि यथाशक्ति देवे और स्तुति करे। गुरुपूजा में पीतवर्ण का विधान है पुष्प, वस्त्र और सुवर्णादि से पूजन करे। अरिष्ट होनेपर चने की दाल, पीला वस्त्र, सुवर्ण व पुष्पराग दान में देवे। शुक्र की पूजा का वर्णन जिसके करने से सम्पूर्ण कामों की प्राप्ति होती है। इसकी पूजन में पञ्चकोण मण्डल बनावे श्वेतगन्ध, श्वेतपुष्प, वस्त्र और रौप्यक दक्षिणा देवे। अरिष्ट होनेपर सफेद घोड़ा, तण्डुल, श्वेतवस्त्र, रौप्यक, चन्दन और गन्धित कर्पूर का दान दे तथा भार्गव की स्तुति करे इससे शुक्र प्रसन्न होते हैं। शनैश्चर का नराकार मण्डल होना चाहिये इसकी पूजन में कृष्णगन्ध, कृष्णवस्त्र, पुष्प, तिलकूटा तथा लोहा और दक्षिणा देवे अरिष्टहोनेपर दानादि करे। राहु का मण्डल भी शनि की तरह है तथा पूजाविधान भी उसी तरह है। गोमेद ( बहुमूल्य पाषाण ), सरसों, तिल, उड़द, भैंस और बकरा का दान करे तथा उसकी स्तुति करे। केतु का मण्डल ध्वजाकार होना चाहिये इसकी पूजा का विधान शनि की तरह ही है केतु के दान में सप्तधान्य और स्वर्णादि देवे। ग्रहों के मन्त्रों का वर्णन। इस चरित्र के सुनने का फल वणन। सत्ययुग में तप, त्रेता में ज्ञान, द्वापर में यज्ञ और कलि में दान की प्रधानता बतलाई है। सब दानों में उत्तम अभय दान बतलाया है। सृष्टिखण्ड के पठन एवं श्रवण का फल। ॐ शम्भूयसे मङ्गलाय।

विद्वज्जनचरणानुरागिणः—

लक्ष्मणगढ़ वास्तव्य ब्रह्मदत्त त्रिवेदि नवलगढ़ दुर्गाभिजन कजोड़ीलाल मिश्र

रामनाथदाधीचाः

ॐ तत्सद्ब्रह्मार्पणमस्तु

* श्री गणेशाय नमः *

श्री महामुनि वेदव्यास प्रणीतम्

# पद्मपुराणम् ।

## तत्रादौ प्रथमं सृष्टिखण्डं प्रारभ्यते

### प्रथमोऽध्यायः ।

श्रीपुराणपुरुषोत्तमाय नमः ।

तत्रादौ मङ्गलाचरणम्

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम् ।
देवीं सरस्वतीञ्चैव ततो जयमुदीरयेत् ॥

ॐ स्वच्छं चन्द्रावदातं करिकरमकरक्षोभसञ्जातफेनं,
ब्रह्मोद्भूतिप्रसक्तैर्व्रतनियमपरैः सेवितं विप्रमुख्यैः ।
ओङ्कारालंकृतेन त्रिभुवनगुरुणा ब्रह्मणा दृष्टिपूतं,
सम्भोगाभोगरम्यं जलमशुभहरं पौष्करं वः पुनातु ॥ १ ॥

सूतमेकान्तमासीनं व्यासशिष्यो महामतिः । लोमहर्षणनामा वा उग्रश्रवसमाह तत् ॥२
ऋषीणामाश्रमांस्तात गत्वा धर्मान् समासतः। पृच्छतां विस्तराद् ब्रूहि यन्मत्तःश्रुतवानसि

वेदव्यासान्मया पुत्र पुराणान्यखिलानि च। तवाख्यातानि प्राप्तानि मुनिभ्योवदविस्तरात्
प्रयागे मुनिवर्य्यैश्च यथा पृष्टः स्वयं प्रभुः। पृष्टेन चानुशिष्टास्ते मुनयो धर्मकाङ्क्षिणः॥
देशं पुण्यमभीप्सन्तो विभुना च हितैषिणा। सुनाभं दिव्यरूपञ्च सत्यगं शुभविक्रमम्॥
अनौपम्यमिदं चक्रं वर्त्तमानमतन्द्रिताः। पृष्ठतो यात नियमात् पदं प्राप्स्यथ यद्धितम्॥
गच्छतो धर्मचक्रस्य यत्र नेमिर्विशीर्यते। पुण्यः स देशो मन्तव्य इत्युवाच स्वयम्प्रभुः॥
उक्त्वा चैवमृषीन् सर्वानदृश्यत्वमगात् पुनः। गङ्गावर्तसमाहारो नेमिर्यत्र व्यशीर्यत॥
ईजिरे दीर्घसत्रेण ऋषयो नैमिषे तदा। तत्र गत्वा तु तान् ब्रूहि पृच्छतो धर्मसंशयान्॥
उग्रश्रवास्ततो गत्वा ज्ञानविन्मुनिपुङ्गवान्। अभिगम्योपसंगृह्य नमस्कृत्वा कृताञ्जलिः॥
तोषयामास मेधावी प्रणिपातेन तानृषीन्। ते चापि सत्रिणः प्रीताः ससदस्या महात्मने
तस्मै समेत्य पूजाञ्च यथावत् प्रतिपेदिरे॥ १३॥

ऋषय ऊचुः।

कुतस्त्वमागतः सूत कस्माद्देशादिहागतः। कारणञ्चागमे ब्रूहि वृन्दारकसमद्युते॥ १४॥

सूत उवाच।

पित्राऽहन्तु समादिष्टो व्यासशिष्येण धीमता। शुश्रूषस्व मुनीन् गत्वा यत्ते पृच्छन्ति तद्वद
वदन्तु भगवन्तो मां कथयामि कथान्तु याम्। पुराणञ्चेतिहासं वा धर्मानथ पृथग्विधान्
तां गिरं मधुरां तस्य शुश्रुवुर्ऋषिसत्तमाः। अथ तेषां पुराणस्य शुश्रूषा समपद्यत॥१७॥
दृष्ट्वा तमतिविश्वस्तं विद्वांसं लौमहर्षणिम्। तस्मिन् सत्रे कुलपतिः सर्वशास्त्रविशारदः
शौनको नाम मेधावी विज्ञानारण्यके गुरुः। इत्थं तद्भावमालंब्य धर्मान् शुश्रूषुराह तम्॥
त्वया सूत महाबुद्धे भगवान् ब्रह्मवित्तमः। इतिहासपुराणार्थं व्यासः सम्यगुपासितः॥
दुदोहिथ मतिं तस्य त्वं पुराणाश्रयां शुभाम्। अमीषां विप्रमुख्यानां पुराणं प्रतिसम्प्रति
शुश्रूषास्ते महाबुद्धे तच्छ्रावयितुमर्हसि। सर्वे हीमे महात्मानो नानागोत्राः समागताः
स्वान् स्वानंशान् पुराणोक्तान् शृण्वन्तु ब्रह्मवादिनः।
सम्पूर्णं दीर्घसत्रेऽस्मिंस्तांस्त्वं श्रावय वै मुनीन्॥ २३॥
पाद्मं पुराणं सर्वेषां कथयस्व महामते। कथं पद्मं समुद्भूतं ब्रह्मा तत्र कथंन्वभूत्।

प्रोद्भूतेन कथं सृष्टिः कृता तान्तु तथा वद। एवं पृष्टस्ततस्तांस्तु प्रत्युवाच शुभांगिरम्
सूक्ष्मञ्च न्यायसंयुक्तं प्राब्रवीद्रौमहर्षणिः। प्रीतोऽस्म्यनुगृहीतोऽस्मि भवद्भिरिहचोदनात्
पुराणार्थपुराणज्ञैः सर्वधर्मपरायणैः। यथा श्रुतं सुविख्यातं तत्सर्वं कथयामि वः॥
धर्म एष तु सूतस्य सद्भिर्दृष्टः सनातनः। देवतानामृषीणाञ्च राज्ञां चामिततेजसाम्।
वंशानां धारणं कार्यं स्तुतीनाञ्च महात्मनाम्। इतिहासपुराणेषु दृष्टा ये ब्रह्मवादिनः॥
न हि वेदेष्वधिकारः कश्चित् सूतस्य दृश्यते। वैन्यस्य हि पृथोर्यज्ञे वर्त्तमाने महात्मनः।
मागधश्चैव सूतश्च तमस्तौतां नरेश्वरम्। तुष्टेनाथ तयोर्दत्तो वरो राज्ञा महात्मना।
सूताय सूतविषयो मगधो मागधाय च। तत्र सूत्यां समुत्पन्नः सूतो नामेह जायते।
ऐन्द्रे सत्रे प्रवृत्ते तु ग्रहयुक्ते बृहस्पतौ। तमेवेन्द्रं वार्हस्पत्ये तत्र सूतो व्यजायत। ३२॥
शिष्यहस्तेन यत् पृक्तमभिभूतं गुरोर्हविः। अधरोत्तरधारेण जज्ञे तद्वर्णसङ्करम्। ३३॥
येऽत्र क्षत्रात् समभवन् ब्राह्मण्याश्चैव योनितः। पूर्वेणैव तु साधर्म्याद्वैधर्मास्ते प्रकीर्तिताः
मध्यमो ह्येष सूतस्य धर्मः क्षेत्रोपजीविनः। पुराणेष्वधिकारो मे विहितो ब्राह्मणैरिह।
दृष्ट्वा धर्ममहं पृष्टो भवद्भिर्ब्रह्मवादिभिः। तस्मात् सम्यग् भुवि ब्रूयां पुराणमृषिपूजितम्
पितॄणां मानसी कन्या वासवं समपद्यत। अपध्याता च पितृभिर्मत्स्यगर्भे बभूव सा।
अरणीव हुताशस्य निमित्तं पुण्यजन्मनः। तस्यां बभूव पूतात्मा महर्षिस्तु पराशरात्।
तस्मै भगवते कृत्वा नमः सत्याय वेधसे। पुरुषाय पुराणाय ब्रह्मवाक्यानुवर्त्तिने।
मानवच्छद्मरूपाय विष्णवे शंसितात्मने। जातमात्रञ्च यं वेद उपतस्थे ससंग्रहः॥४०॥
मतिमन्थानमाविध्य येनासौ श्रुतिसागरात्। प्रकाशो जनितो लोके महाभारतचन्द्रमाः
भारतं भानुमान् विष्णुर्यदि न स्युरमी त्रयः। ततोऽज्ञानतमोन्धस्य कावस्था जगतोभवेत्
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्। को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्
तस्मादहमुपाश्रौषं पुराणं ब्रह्मवादिनः। सर्वज्ञात् सर्वलोकेषु पूजिताद्दीप्ततेजसः॥४४॥
पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणास्मृतम्। उत्तमं सर्वलोकानां सर्वज्ञानोपपादकम्।
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम्। निःशेषेषु च लोकेषु वाजिरूपेण केशवः।
ब्रह्मणस्तु समादेशाद्वेदानाहृतवानसौ। अङ्गानि चतुरो वेदान् पुराणन्यायविस्तरम्।

असुरेणाखिलं शास्त्रमपहृत्यात्मसात्कृतम् । मत्स्यरूपेणाजहार कल्पादावुदकार्णवे ॥
अशेषमेतदवदुदकान्तर्गतो विभुः । श्रुत्वा जगाद च मुनीन् प्रति वेदांश्चतुर्मुखः ।
प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्तदा । कालेनाग्रहणं दृष्ट्वा पुराणस्य तदा विभुः
व्यासरूपस्तदा ब्रह्मा संग्रहार्थं युगे युगे । चतुर्लक्षप्रमाणेन द्वापरे द्वापरे जगौ ।
तदाष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रकाशितम् । अद्यापि देवलोकेषु शतकोटिप्रविस्तरम्
तदेवात्र चतुर्लक्षं संक्षेपेण निवेशितम् । प्रवक्ष्यामि महापुण्यं पुराणं पाद्मसंज्ञितम् ।
सहस्रं पञ्चपञ्चाशत् पञ्चखण्डैः समन्वितम् । तत्रादौ सृष्टिखण्डं स्याद्भूमिखण्डंततःपरम्
स्वर्गखण्डं ततः पश्चात्ततः पातालखण्डकम् । पञ्चमञ्च ततः ख्यातमुत्तरंखण्डमुत्तमम् ।
एतदेव महापद्ममुद्भूतं यन्मयं जगत् । तद्वृत्तान्ताश्रयं यस्मात् पाद्ममित्युच्यते ततः ।
एतत् पुराणममलं विष्णुमाहात्म्यनिर्मलम् । देवदेवो हरिर्यद्वै ब्रह्मणे प्रोक्तवान् पुरा ।
ब्रह्मणाभिहितं पूर्वं यावन्मात्रं मरीचये । एतदेव च वै ब्रह्मा पाद्मं लोके जगाद वै ।
सर्वभूताश्रयं तच्च पाद्ममित्युच्यते बुधैः । पाद्मं तत्पञ्चपञ्चाशत् सहस्राणीह पठ्यते ।
पञ्चभिःपर्वभिःप्रोक्तं संक्षेपाद्व्यासकारितात् । पौष्करं प्रथमं पर्व यत्रोत्पन्नः स्वयं विराट्
द्वितीयं तीर्थपर्व स्यात् सर्वग्रहगणाश्रयम् । तृतीयपर्वग्रहणा राजानो भूरिदक्षिणाः ।
वंशानुचरितञ्चैव चतुर्थे परिकीर्तितम् । पञ्चमे मोक्षतत्वञ्च सर्वतत्वं निगद्यते ।
पौष्करे नवधा सृष्टिः सर्वेषां ब्रह्मकारिता । देवतानां मुनीनाञ्च पितृसर्गस्तथापरः ।
द्वितीये पर्वताश्चैव द्वीपाः सप्त ससागराः । तृतीये रुद्रसर्गस्तु दक्षशापस्तथैव च ।
चतुर्थे सम्भवो राज्ञां सर्ववंशानुकीर्त्तनम् । अन्त्येऽपवर्गसंस्थानं मोक्षशास्त्रानुकीर्त्तनम्

सर्वमेतत् पुराणेऽस्मिन् कथयिष्यामि वो द्विजाः ॥ ६६ ॥

इदं पवित्रं यशसो निधानमिदं पितृणामतिवल्लभं स्यात् ।
इदञ्च देवस्य सुखाय नित्यमिदं महापातकभिच्च पुंसाम् ॥ ६७ ॥

इति श्रीपद्मपुराणे प्रथमे सृष्टिखण्डे पुराणावतारे प्रथमोऽध्यायः ॥ १ ॥

---

# द्वितीयोऽध्यायः ।

## सूतकृत मङ्गलाचरणम् सृष्टिखण्डस्थ विषयवर्णनञ्च

सूत उवाच ।

नमस्ये सर्वलोकानां विश्वस्य जगतः पतिम् । य इमं कुरुते भावं सृष्टिरूपं प्रधानवित् ॥
लोकक्लृप्लोकतत्त्वज्ञो योगमास्थाय योगवित् । असृजत् सर्वभूतानि स्थावराणि चराणि च
तमजं विश्वकर्माणं चित्पतिं लोकसाक्षिणम् । पुराणाख्यानजिज्ञासुर्व्रजामि शरणं विभुम्
ब्रह्मविष्णुगिरीशेभ्यो नमस्कृत्वा समाहितः । इन्द्राय लोकपालेभ्यः सवित्रे च समाधिना
मुनीनाञ्च वरिष्ठाय वसिष्ठाय महात्मने । तद्वक्त्रे भाततपसे जातूकर्ण्याय चाक्षुषे ॥
तस्मै भगवते नत्वा वेदव्यासाय वेधसे । पुरुषाय पुराणाय भृगुवाक्यानुवर्त्तिने ॥ ६ ॥
तस्मादहमुपाश्रौषं पुराणं ब्रह्मवादिनः । सर्वज्ञात् सर्वलोकेषु पूजिताद्दीप्ततेजसः ॥ ७ ॥
अव्यक्तं कारणं यत्तन्नित्यं सदसदात्मकम् । महदादि विशेषान्तं सृजतीति विनिश्चयः ॥
अण्डे हिरण्मये पूर्वं ब्रह्मणः सूतिरुत्तमा । अण्डस्यावरणञ्चाद्भिरपामपि च तेजसा ॥ ९

वायुना तस्य वायोः खात्तद्भूतादित आवृतम् ।
भूतादिर्महता चापि अव्यक्तेनावृतो महान् ॥ १० ॥

प्रादुर्भावश्च लोकानामण्ड एवोपवर्णितः । नदीनां पर्वतानाञ्च प्रादुर्भावोऽनुवर्ण्यते ॥
मन्वन्तराणां संक्षेपात् कल्पानाञ्चोपवर्णनम् । ब्रह्मवृक्षलयब्रह्म-प्रजासर्गोपवर्णनम् ॥
कल्पानां सञ्चरश्चैव जगतः स्थापनं तथा । शयनञ्च हरेरप्सु पृथिव्युद्धरणं पुनः ॥१३॥
दशधा जन्मसञ्चारो भृगुशापेन केशवे । सन्निवेशो युगादीनां सर्वाश्रमविभाजनम् ॥
स्वर्गस्थानविभागश्च मर्त्यानां स्वर्गचारिणाम् । पशूनांपक्षिणाञ्चैवसम्भवःपरिकीर्तितः ॥
तथा निर्वचनं कल्पं स्वाध्यायस्य परिग्रहः । प्रतिसर्गा पुनः प्रोक्ताब्रह्मणोबुद्धिपूर्वकाः ॥
त्रयोऽन्येऽबुद्धिपूर्वास्तेतथालोकानकल्पयत् । ब्रह्मणो वदनेभ्यश्चभृग्वादीनांसमुद्भवः ॥
कल्पयोरन्तरं प्रोक्तं प्रतिसन्धिश्च सर्गयोः । भृग्वादीनामृषीणाञ्च प्रजासर्गोपवर्णनम् ॥
वसिष्ठस्य च ब्रह्मर्षेर्ब्रह्मत्वं परिकीर्त्तितम् । स्वायम्भुवस्य च मनोस्ततश्चाप्यनुकीर्तनम् ॥

उक्तोनाभेर्विसर्गश्च रजसश्च महात्मनः । द्वीपानाञ्च समुद्राणां पर्वतानाञ्च कीर्तनम् ॥
द्वीपभेदसमुद्राणामन्तर्भावश्च सप्तसु । कीर्त्यन्ते योजनाग्रेण ये च तत्र निवासिनः ॥
तदीयानिच वर्षाणि नदीभिः पर्वतैः सह । जम्बूद्वीपादयो द्वीपाः समुद्रैः सप्तभिर्वृताः ॥

अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ।
सूर्य्याचन्द्रमसोश्चारो ग्रहाणां ज्योतिषां तथा ॥ २३ ॥
कीर्त्यंते ध्रुवसामर्थ्यात् प्रजानाञ्च शुभाशुभम् ।
ब्रह्मणा निर्मितः सौरः स्यन्दनोऽर्थवशात् स्वयम् ॥ २४ ॥

कल्पितो भगवांस्तेन प्रसर्पति दिवाकरः । सूर्य्यादीनां स्यन्दनानां ध्रुवादेव प्रवर्तनम् ॥
कल्पितःशिशुमारश्च यस्यपुच्छेध्रुवः स्थितः । सम्भवान्ते च संहारःसंहारान्ते च सम्भवः
देवतानामृषीणाञ्च मनोः पितृगणस्य च । न शक्यं विस्तराद्वक्तुमित्युक्तञ्च समासतः ॥२७
अतीतानागतानां वै समं स्वायम्भुवेन तु । मन्वन्तरेषु देवानां प्रजेशानाञ्च कीर्तनम् ॥
नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिकः स्मृतः । त्रिविधः सर्वभूतानां कल्पितः प्रतिसञ्चरः ॥
अनावृष्टिर्भास्कराच्च घोरः संवर्तकानलः । मेघाश्चैकार्णवा ये तु तथारात्रिर्महात्मनः ॥
सन्ध्यालक्षणमुद्दिष्टं तथा ब्राह्मं विशेषतः । भूतानाञ्चापि लोकानां सप्तानामनुवर्णनम् ॥
सङ्कीर्त्यन्ते मया चात्र पापानां रौरवादयः । सर्वेषामेव सत्वानां परिणामविनिर्णयः ॥
ब्रह्मणः प्रतिसर्गश्च सर्वसंहारवर्णनम् । कल्पे कल्पे च भूतानां महतामपि संक्षयः ॥
सुसंख्याय च बुद्ध्वावै ब्रह्मणश्चाप्यनित्यताम् । दौरात्म्यञ्चैवभोगानांसंसारस्यचकष्टताम्
दुर्लभत्वञ्चमोक्षस्य वैराग्याद्दोषदर्शनम् । व्यक्ताव्यक्तं परित्यज्यसत्वंब्रह्मणिसंस्थितम्
नानात्वदर्शनात् सुस्थस्ततस्तदभिवर्तते । ततस्तापत्रयातीतो विरूपाख्यो निरञ्जनः ॥
आनन्दं ब्रह्मणः प्राप्तो न बिभेति कुतश्चन । इतिकृत्यसमुद्देशः प्रमाणस्योपवर्णितः ॥३६॥
कीर्त्यन्ते जगतो यत्र सर्गप्रलयविक्रियाः । प्रवृत्तिश्चापि भूतानां निवृत्तीनांफलानिच ॥
प्रादुर्भावो वसिष्ठस्य शक्तेर्जन्म तथैव च । सौदासान्निग्रहस्तस्य विश्वामित्रकृतेन च ॥

पराशरस्यचोत्पत्तिरदृश्यन्त्यां यथा विभोः ।
अज्ञे पितॄणां कन्यायां व्यासश्चापि यथा मुनिः ॥ ३९ ॥

शुकस्य च यथा जन्म पुत्रस्य सह धीमतः । पराशरस्य विद्वेषो विश्वामित्रकृतोयथा ॥
वसिष्ठसंभूतश्चाग्निर्विश्वामित्रजिघांसया । सन्धानहेतोर्विभुना जीर्णःकण्वेन धीमता ॥
देवेन विप्रा विप्राणां विश्वामित्रहितैषिणा । एकं वेदं चतुष्पादं चतुर्धा पुनरीश्वरः ॥
यथाविभेद भगवान् व्यासः सर्वेष्वनुग्रहात् । तस्यशिष्यप्रशिष्यैश्च शाखाभेदाःपुनःकृताः
प्रयागे मुनिवर्यैश्च यथापृष्टः स्वयम्प्रभुः । कृष्णेन चानुशिष्टास्ते मुनयो धर्मकाङ्क्षिणः
एतत्सर्वं यथातत्वमाख्यातं द्विजसत्तमाः । मुनीनां धर्मनित्यानां लोकतन्त्रमनुत्तमम् ॥
ब्रह्मणा यत्पुराप्रोक्तं पुलस्त्याय महात्मने । पुलस्त्येनाथ भीष्माय गङ्गाद्वारे प्रभाषितम् ॥
धन्यं यशस्यमायुष्यं सर्वपापप्रणाशनम् । कीर्तनं श्रवणञ्चास्य धारणञ्च विशेषतः ॥
सूतेनानुक्रमेणेदं पुराणं सम्प्रकाशितम् । ब्राह्मणेषु पुरा यच्च ब्रह्मणोक्तं सविस्तरम् ॥

पादमस्य विदन् सम्यग्योऽधीयीत जितेन्द्रियः ।
तेनाधीतं पुराणं स्यात् सर्वं नास्त्यत्र संशयः ॥ ५० ॥

यो विद्याच्चतुरोवेदान् साङ्गोपनिषदो द्विजः । पुराणञ्चविजानाति यः स तस्माद्विचक्षणः
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रह (त) रिष्यति ॥
अधीत्यचैकमध्यायंस्वयंप्रोक्तं स्वयम्भुवा । आपदः प्राप्य मुच्येत यथेष्टां प्राप्नुयाद्गतिम्
पुरा परम्परांवक्ति पुराणं तेन वै स्मृतम् । निरुक्तिमस्य यो वेद सर्वपापैःप्रमुच्यते॥५४
ऋषयोह्यब्रुवन् सूतं कथं भीष्मेण सङ्गतः । ब्रह्मणो मानसःपुत्रः पुलस्त्यो भगवानृषिः ॥
दुर्लभं दर्शनं यस्य नरैः पापसमन्वितैः । अत्याश्चर्यमिदं सूत क्षत्रियेन कथं मुनिः ॥
आराधितो बृहद्भूतस्तन्नोवद महामते । कीदृशं वा तपस्तेन कोवान्यो नियमः कृतः ॥
येन तुष्टो मुनिर्ब्राह्मस्तथा तेन प्रभाषितः । पर्व वाप्यथ पर्वार्द्धं समग्रं वा प्रभाषितम् ॥

यस्मिन् स्थाने यथादृष्टः पुलस्त्यो भगवान् ऋषिः ॥
तन्नो वद महाभाग कल्याः स्म श्रवणे वयम् ॥ ५६ ॥

सूत उवाच

यत्र गङ्गा महाभागा साधूनां हितकारिणी । विभिद्य पर्वतं वेगान्निःसृता लोकपावनी ॥
गङ्गाद्वारे महातीर्थे भीष्मःपितृपरायणः । शुश्रूषुः सुचिरं कालं महतां नियमे स्थितः ॥

यावद्वर्षशतं साग्रं परमेण समाधिना। ध्यायमानः परं ब्रह्म त्रिकालं स्नानमाचरत् ॥
पितॄन् देवांस्तर्पयतः स्वाध्यायेन महात्मनः। आत्मानंकर्षतश्चास्यतुष्टोदेवःपितामहः ॥
उवाच तनयं ब्रह्मा पुलस्त्यमृषिसत्तमम्। सत्वं देवव्रतं भीष्मं वीरं कुरुकुलोद्भवम् ॥
तपसः सन्निवर्तस्व कारणंचास्यकीर्तय। पितॄन्भक्त्यामहाभागोध्यायमानःसमास्थितः
यो ह्यस्य मनसः कामस्तंसम्पादय मा चिरम्। पितामहवचःश्रुत्वापुलस्त्योमुनिसत्तमः
गङ्गाद्वारमथागत्य भीष्मं वचनमब्रवीत्। वरं वरय भद्रन्ते यत्ते मनसि वर्त्तते ॥
तुष्टस्ते तपसावीर साक्षाद्देवःपितामहः। ब्रह्मणा प्रेषितस्तेऽहंवरान्दास्यामिकांक्षितान् ॥

भीष्मोऽपि तद्वचः श्रुत्वा मनःश्रोत्रसुखावहम्।
उन्मील्य नयने दृष्ट्वा पुलस्त्यं पुरतः स्थितम् ॥ ६६ ॥

अष्टाङ्गप्रणिपातेन नत्वा तं मुनिसत्तमम्। उवाच प्रणतोभूत्वा सर्वाङ्गालिङ्गितावनिः ॥
अद्य मे सफलं जन्म दिनञ्चेदं सुशोभनम्। भवतश्चरणौ दृष्टौ जगद्वन्द्यौ मया त्विह ॥
तपसश्च फलं प्राप्तं यद्दृष्टो भगवान्मया। वरप्रदोविशेषेण सम्प्राप्तश्च नदीतटे ॥
इयं वृषी मया क्लृप्ता आस्यतां सुखदा कृता। अर्घ्यपात्रे तु पालाशे दूर्वाक्षतसुमैःकुशैः
सर्षपैश्च दधिक्षौद्रैर्यवैश्च पयसा सह। अष्टाङ्गो ह्येष निर्दिष्टोह्यर्घोहिमुनिभिःपुरा ॥
श्रुत्वैतद्वचनं तस्य भीष्मस्यामिततेजसः। उपविष्टो ब्रह्मसुतः पुलस्त्यो भगवानृषिः॥
विष्टरं सहपाद्येन अर्घ्यपात्रं मुदान्वितः। जुजोष भगवान् प्रीतः सदाचारेण तेन तु ॥

पुलस्त्य उवाच।

सत्यवान् दानशीलोऽसि सत्यसन्धिर्नरेश्वरः।
ह्रीमान् मैत्रः क्षमाशीलो विक्रान्तः शत्रुशासने ॥ ७७ ॥

धर्मज्ञस्त्वं कृतज्ञस्त्वं दयावान् प्रियभाषिता। मान्यमानयिता विज्ञो ब्रह्मण्यःसाधुवत्सलः
तुष्टस्तेऽहं सदा वत्स प्रणिपातपरस्य वै। प्रब्रूहि त्वं महाभाग कथनं ते वदाम्यहम् ॥

भीष्म उवाच।

भगवन् भगवान् ब्रह्मा कस्मिन्काले स्थितो विभुः।
सृष्टिं चकार वै पूर्वं देवादीनां वदस्व मे ॥ ८० ॥

स्थितिं वा भगवान् विष्णुःकथंरुद्रस्तु निर्मितः । कथंवा ऋषयोदेवास्सृष्टास्तेनमहात्मना
कथं पृथ्वी कथं व्योम कथंचेमे तु सागराः । कथंद्वीपा पर्वताश्चग्रामारण्यपुराणि च ॥
मुनीन् प्रजापतींश्चैव सप्तर्षीन् प्रवरानपि । वर्णान् वायुं पुरास्थानं गन्धर्वान्यक्षराक्षसान्
तीर्थानि सरितोवाथ सूर्य्यादीन् ग्रहतारकान् । यथा ससर्जभगवांस्तथा मे त्वं वदस्व ह

पुलस्त्य उवाच ।

परः पुराणां परमः परमात्मा पितामहः । रूपवर्णादिरहितो विषयेन विवर्जितः ॥
अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः । गुणैर्विवर्जितः सर्वैःस भातीतिहि केवलम् ॥
सर्वत्रासौ समश्चापि वसन्ननुपमो मतः । भावयन् ब्रह्मरूपेण विद्वद्भिः परिपठ्यते ॥
तं गुह्यं परमं नित्यमजमक्षयमव्ययम् । तथा पुरुषरूपेण कालरूपेण संस्थितम् ॥ ८८ ॥
तं नत्वाहं प्रवक्ष्यामि यथा सृष्टिं चकारह । पूर्वंतु पद्मशयनादुत्थाय जगतः प्रभुः ॥
गुणव्यञ्जनसम्भूतः सर्गकाले नराधिप । सात्विको राजसश्चैवतामसश्च त्रिधा महान् ॥
प्रधानतत्वेन समं तथा बीजादिभिर्वृतः । वैकारिकस्तैजसश्च भूतादिश्चैव तामसः ॥
त्रिविधोयमहंकारो महत्तत्वादजायत । भूतेन्द्रियाणां पञ्चानां तथाकर्मेन्द्रियैः सह ॥
पृथिव्यापस्तथा तेजो वायुराकाशमेव च । एकैकशः स्वरूपेण कथयामि यथोत्तरम् ॥
शब्दमात्रमथाकाशं भूतादिः खंसमावृणोत् । अथाकाशं विकुर्वाणं स्पर्शमात्रं ससर्जह ॥
बलवानेषवै वायुस्तस्य स्पर्शोगुणोमतः । आकाशं शब्दमात्रंतु स्पर्शमात्रं समावृणोत् ॥
ततो वायुर्विकुर्वाणो रूपमात्रं ससर्जह । ज्योतीरूपन्तु तद्वायुस्तद्रूपगुणमुच्यते ॥
स्पर्शरूपस्तु वै वायू रूपमात्रं समावृणोत् । ज्योतिश्चापि विकुर्वाणं रसमात्रं ससर्जह
सम्भवन्तिततोऽम्भसिरूपमात्रंसमावृणोत् । विकुर्वाणानिचाम्भांसि गन्धमात्रं ससर्जिरे
सङ्घातो जायते तस्मात्तस्यगन्धोमतोगुणः । तैजसानीन्द्रियाण्याहुर्देवावैकारिकादश ॥
एकादशं मनश्चात्रदेवावैकारिकाःस्मृताः । त्वक् चक्षुर्नासिका जिह्वा श्रोत्रमत्रचपंचमम् ॥
एतेषान्तु मतंकृत्यं शब्दादिग्रहणं पुनः । वाक् पाणिपादपायूनि चोपस्थं तत्र पञ्चमम्
विसर्गशिल्पगत्युक्तिर्गुणा एषांविपर्ययात् । आकाशवायुतेजांसि सलिलं पृथिवीतथा
शब्दादिभिर्गुणैर्वीर युक्तानीत्युत्तरोत्तरैः । शान्ताघोराश्चमूढाश्च विशेषास्तेनतेस्मृताः ॥

नानावीर्य्याःपृथक्भूतास्ततस्तेसंहतिंविना। नाशक्नुवन् प्रजाःस्रष्टुमसमागम्य कृत्स्नशः
समेत्यान्योन्यसंयोगात् परस्परसमाश्रयात्। एकसङ्घातलक्षाश्च सम्प्राप्यैक्यमशेषतः॥
पुरुषाधिष्ठितत्वाच्च व्यक्तानुग्रहणे तथा। महदाद्यो विशेषान्ता ह्यण्डमुत्पादयन्तिवै।
तत्क्रमेण विवृत्तंतु जलबुद्बुदवत् समम्। तत्राव्यक्तस्वरूपोऽसौ व्यक्तरूपी जनार्दनः॥
ब्रह्मा ब्रह्मस्वरूपेण स्वयमेव व्यवस्थितः। मेरुरुल्वमभूत्तस्य जरायुश्च महीधराः॥ १०८
गर्भोदकं समुद्राश्च तस्यासंश्च महात्मनः। तत्र द्वीपाः समुद्राश्च सज्योतिर्लोकसंग्रहः॥
तस्मिन्नण्डेऽभवन् वीर सदेवासुरमानुषाः। वारिवह्न्यनिलाकाशैर्वृ तैर्भूतादिना बहिः॥
वृतं दशगुणैरण्डं भूतादिर्महता तथा। अव्यक्तेनावृतो राजंस्तैः सर्वैः सहितो महान्॥
एभिरावरणैः सर्वैः सर्वभूतैश्च संयुतम्। नारिकेलफलं यद्वद्वीजं बाह्यदलैरिव॥ ११२॥
ब्रह्मास्वयञ्च जगतो विसृष्टौ सम्प्रवर्तते। सृष्टिञ्च पात्यनुयुगं यावत्कल्पविकल्पना॥
स संज्ञां याति भगवानेक एव जनार्दनः। सत्वभुग् गुणवान् देवो ह्यप्रमेयपराक्रमः॥
तमोद्रेकश्च कल्पान्ते रूपं रौद्रं करोति च। राजेन्द्राखिलभूतानि भक्षयत्यतिभीषणः॥
भक्षयित्वा च भूतानि जगत्येकार्णवीकृते। नागपर्यङ्कशयने शेते सर्वस्वरूपधृक्॥ ११६
प्रबुद्धश्च पुनः सृष्टिं प्रकरोति च रूपधृक्। सृष्टिस्थित्यन्तकरणाद् ब्रह्माविष्णुशिवात्मकः

स्रष्टा सृजति चात्मानं विष्णुः पाल्यश्च पाति च।
उपसंह्रियते चापि संहर्त्ता च स्वयं प्रभुः॥ ११८॥

पृथिव्यापस्तथा तेजो वायुराकाशमेव च। स एव सर्वभूतेशो विश्वरूपो यतोऽव्ययः
सर्गादिकं ततोऽस्यैव भूतस्थमुपकारकम्॥ ११९॥
स एव सृज्यः स च सर्गकर्त्ता स एव पाल्यं प्रतिपाल्यते यतः।
ब्रह्माद्यवस्थाभिरशेषमूर्त्तिर्ब्रह्मा वरिष्ठो वरदो वरेण्यः॥ १२०॥

इति श्रीपद्मपुराणे प्रथमे सृष्टिखण्डे पुराणावतारे द्वितीयोऽध्यायः॥ २॥

---

# तृतीयोऽध्यायः ।

## कालपरिमाणवर्णनम्

भीष्म उवाच ।

निर्गुणस्याप्रमेयस्य शुद्धस्याथ महात्मनः । कथं सर्गादिकर्तृत्वं ब्रह्मणो ह्युपपद्यते ॥ १

पुलस्त्य उवाच ।

शक्तयः सर्वभावानामचिन्त्याज्ञानगोचराः । यत्ततो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः
उत्पन्नः प्रोच्यते विद्वान्नित्य एवोपचारतः । निजेन तस्य मानेन आयुर्वर्षशतं स्मृतम् ॥
तत्पराख्यं परार्द्धञ्च तदर्द्धं परिकीर्तितम् । काष्ठा पञ्चदशाख्याता निमेषो नृपसत्तम ॥४
काष्ठास्त्रिंशत्कलास्त्रिंशत्कला मौहूर्तिको विधिः । तावत्संख्यैरहोरात्रं मुहूर्तैर्मानुषंस्मृतम्
अहोरात्राणि तावन्ति मासः पक्षद्वयात्मकः । तैः षड्भिरयनं वर्षमयने दक्षिणोत्तरे ॥६
अयनं दक्षिणं रात्रिर्देवानामुत्तरं दिनम् । दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम् ॥ ७ ॥
चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे । चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम्
दिव्याब्दानां सहस्राणि युगेष्वाहुः पुराविदः । तत्प्रमाणैः शतैः सन्ध्या पूर्वातत्राभिधीयते

सन्ध्यांशकश्च तत्तुल्यो युगस्यानन्तरो हि यः ।
सन्ध्या सन्ध्यांशयोरन्तः कालो यो नृपसत्तम ॥ १० ॥

युगाख्यः स तु विज्ञेयः कृतत्रेतादिसंज्ञितः । कृतं त्रेता द्वापरञ्च कलिश्चैव चतुर्युगम् ॥
प्रोच्यते तत्सहस्रन्तु ब्रह्मणो दिवसं नृप । ब्रह्मणो दिवसे राजन् मनवश्च चतुर्दश ॥
भवन्ति परिमाणञ्च तेषां कालकृतं शृणु । सप्तर्षयः सुराः शक्रो मनुस्तत्सूनवोनृप ॥
एककाले हि सृज्यन्ते संह्रियन्ते स्वपूर्ववत् । चतुर्युगानांसंख्यातासाधिकाह्येकसप्ततिः
मन्वन्तरं मनोः कालः सुरादीनाञ्च पार्थिव । अष्टौ शतसहस्राणिदिव्यया संख्ययास्मृतः

द्विपञ्चाशत्तथान्यानिसहस्राण्यधिकानि च ।
त्रिंशत्कोट्यस्तुसम्पूर्णाः संख्याताःसंख्यया नृप ॥ १६ ॥

सप्तषष्टिस्तथान्यानि नियुतानि महामते । विंशतिश्च सहस्राणि कालोऽयमधिकं विना

मन्वंतरस्य संख्येयं मानुषैरिह वत्सरैः । चतुर्दश गुणो ह्येषः कालो ब्राह्ममहःस्मृतम् ॥
ब्राह्मो नैमित्तिको नाम तस्यान्ते प्रतिसञ्चरः ।
तदा हि दह्यते सर्वं त्रैलोक्यं भूर्भुवादिकम् ॥ १९ ॥
जनंप्रयान्ति तापार्त्ता महर्लोकनिवासिनः । एकार्णवे तु त्रैलोक्ये ब्रह्मा ब्रह्मविदांवर ॥
भोगिशय्यागतःशेतेत्रैलोक्यग्रासबृंहितः । जनस्थैर्योगिभिर्देवश्चिन्त्यमानो जगद्विभुः ॥
तत्प्रमाणां हि तां रात्रिं तदन्ते सृजते पुनः । एवन्तु ब्रह्मणो वर्षमेवं वर्षशतं च तत् ॥
शतं हि तस्य वर्षाणां परमायुर्महात्मनः । एकमस्य व्यतीतं तु परार्द्धं ब्रह्मणोऽनघ ॥
तस्यान्तेऽभून्महाकल्पः पाद्म इत्यभिविश्रुतः । द्वितीयस्य परार्द्धस्य वर्तमानस्य वै नृप ।
वाराहइति कल्पोऽयं प्रथमः परिकल्पितः ॥

भीष्मउवाच ।

ब्रह्मा नारायणाख्योऽसौ कल्पादौ भगवान् यथा ।
ससर्ज सर्वभूतानि तदाचक्ष्व महामुने ॥२४ ॥

पुलस्त्यउवाच ।

प्रजा ससर्ज भगवाननादिः सर्वसम्भवः । अतीतकल्पावसाने निशासुप्तोत्थितः प्रभुः
सत्वोद्रिक्तस्तथा ब्रह्मा शून्यं लोकमवैक्षत । तोयान्तःसमहींज्ञात्वा निमग्नां वारिसंप्लवे
प्रविचिन्त्य तदुद्धारं कर्तुकामः प्रजापतिः ॥ २८ ॥
विष्णुरूपंतदाज्ञात्वापृथ्वीं वोढुं स्वतेजसा । मत्स्यकूर्मादिकाश्चान्यांवाराहींतनुमाविशत्
वेदयज्ञमयं रूपमाश्रित्य जगतः स्थितौ । स्थितःस्थिरात्मा सर्वात्मा परमात्मा प्रजापतिः
प्रविवेश तदा तोयं तोयाधारे धराधरः ॥ ३१ ॥
निरीक्ष्य तं तदा देवी पातालतलमागतम् । तुष्टाव प्रणता भूत्वा भक्तिनम्रा वसुन्धरा ॥

पृथिव्युवाच ।

नमस्ते सर्वभूताय नमस्ते परमात्मने ॥ ३२ ॥
मामुद्धरास्मादद्यत्वं त्वत्तोऽहं पूर्वमुत्थिता । परमात्मन् नमस्तेऽस्तु पुरुषात्मन्नमोस्तुते
प्रधानव्यक्तरूपाय कालभूताय ते नमः । त्वं कर्त्तासर्वभूतानां त्वं पाता त्वं विनाशकृत्

सर्गादौ यः परो ब्रह्मा विष्णुरुद्रात्मरूपधृक् । भक्षयित्वा च सकलं जगत्येकार्णवीकृते
शेषे त्वमेव गोविन्द चिन्त्यमानो मनीषिभिः । भवतो यत्परं रूपं तन्नजानाति कश्चन
अवतारेषु यद्रूपं तदर्चन्ति दिवौकसः । त्वामाराध्य परं ब्रह्म यातामुक्तिं मुमुक्षवः ॥
वासुदेवमनाराध्य को हि मोक्षमवाप्स्यति । यद्रूपं मनसा ग्राह्यं यद्ग्राह्यं चक्षुरादिभिः
बुद्ध्या च यत्परिच्छेद्यं तद्रूपमखिलं तव । त्वन्मय्यहंत्वदाधारात्वत्सृष्टा त्वामुपाश्रिता
माधवीमिति लोकोऽयमभिधत्तेततोहिमाम् । एवं संस्तूयमानस्तु पृथिव्या पृथिवीधरः
सामस्वरध्वनिः श्रीमान् जगर्ज्ज परिघर्घरम् ।

ततः समुत्क्षिप्य धरां स्वदंष्ट्रया महावराहः स्फुटपद्मलोचनः ।
रसातलादुत्पलपत्रसन्निभः समुत्थितो नील इवाचलो महान् ॥ ४१ ॥
उत्तिष्ठता तेन मुखानिलाहतं तदाप्लवाम्भो जनलोकसंश्रयान् ।
सनन्दनादीनपकल्मषान्मुनींश्चकार भूयोऽपिपवित्रतास्पदम् ॥ ४२ ॥
प्रयान्ति तोयानि खुराग्रवीक्षते रसातलेऽधः कृतशब्दसन्ततिः ।
बलाहकानाञ्च ततिस्तुतस्य श्वासानिलास्तेपरितः प्रयान्ति ॥ ४३ ॥
उत्तिष्ठतस्तस्य जलार्द्रकुक्षेर्महावराहस्य महीं विदार्य ।
विधुन्वतो वेदमयं शरीरं रोमान्तरस्था मुनयो जुषन्ति ॥ ४४ ॥
जनेश्वराणांपरमेश केशव प्रभुर्गदासङ्खदरासिचक्रधृक् ।
प्रभूतिनाशस्थितिहेतुरीश्वरस्त्वमेव नान्यत् परमं च यत्पदम् ॥ ४५ ॥
पादेषु वेदास्तव यूपदंष्ट्रादन्तेषुयज्ञाः श्रुतयश्चवक्त्रे ।
हुताशजिह्वोऽसितनूरुहाणि दर्भाः प्रभोयज्ञपुमांस्त्वमेव ॥ ४६ ॥
द्यावापृथिव्योरतुलप्रभाव यदन्तरं तद्वपुषा तवैव ।
व्याप्तंजगद्व्यापिसमस्तमेतद्धितायविश्वस्यविभोभवत्वम् ॥ ४७ ॥
परमात्मात्वमेवैकोनान्योऽस्तिजगतःपते । तवैषमहिमायेनव्याप्तमेतच्चराचरम् ॥
ज्ञानस्वरूपमखिलंजगदेतदबुद्धयः ॥ ४८ ॥
अर्थस्वरूपंपश्यन्तोभ्राम्यन्तेतमसः प्लवे । येतुज्ञानविदः शुद्धचेतसस्तेऽखिलंजगत् ॥

ज्ञानात्मकंप्रपश्यन्तित्वद्रूपंपरमेश्वर। प्रसीद सर्व भूतात्मन् भवायजगतस्त्विमाम्॥
उद्धरोर्वीममेयात्मन्निमग्नामम्जलोचन। सत्वोद्रिक्तोऽसिभगवन्गोविन्दपृथिवीमिमाम्
समुद्धर भवायेश कुरु सर्वजगद्धितम्। एवं संस्तूयमानश्च परमात्मा महीधरः॥५३॥
उज्जहार क्षितिंक्षिप्रं न्यस्तवान्समहार्णवे। तस्योपरिजलौघेऽस्य महति नौरिवस्थिता॥
ततः क्षितिं समाकृत्वा पृथिव्यामचिनोद्गिरीन्। यथाविभागंभगवाननादिःपुरुषोत्तमः॥
भूविभागं ततः कृत्वा सप्तद्वीपांयथातथम्। भूराद्यांश्चतुरोलोकान्पूर्ववत् समकल्पयत्॥
ब्रह्मणे विष्णुना पूर्वमेतदेव प्रदर्शितम्। तुष्टेन देवदेवेन त्वं देवः पुरुषोत्तमः॥५७॥
त्वयामयाजगच्चेदं धार्य्यंपाल्यञ्चयत्नतः। येषान्त्वसुरमुख्यानांवरोदत्तोमयाधुना॥
देवानां हितकामेन हन्तव्यास्तेत्वयाविभो। अहंसृष्टिं करिष्यामिसाचपाल्यात्वयाविभो
एवमुक्तोगतोविष्णुर्देवादीनसृजद्विभुः। अबुद्धिपूर्वकस्तस्य प्रादुर्भूतस्तमोमयः॥६०॥
तमोमोहोमहामोहस्तामिस्रोह्यन्धसंज्ञकः। पञ्चधावस्थितःसर्गोध्यायतस्तुमहात्मनः॥
बहिरन्तश्चाप्रकाशः संवृतात्मानगात्मकः। मुख्यानागायतश्चोक्ता मुख्यसर्गस्ततस्त्वयम्
तं दृष्ट्वासाधकं सर्गममन्यदपरंप्रभुः। तस्याभिध्यायतः सर्गस्तिर्य्यक्स्रोतोऽभ्यवर्तत

यस्मात्तिर्य्यक् प्रवृत्तिःस्यात्तिर्य्यक्स्रोतस्ततःस्मृतः।
पश्वादयस्तेविख्यातास्तमःप्राया ह्यवेदिनः॥६४॥
उत्पथग्राहिणश्चैव तेऽज्ञाने ज्ञानमानिनः।

अहंकृतास्त्वहंमाना अष्टाविंशतिधात्मकाः। अन्तःप्रकाशास्ते सर्व आवृतास्ते परस्परम्
तमप्यसाधकंमत्वाध्यायतोऽन्यस्ततोऽभवत्।ऊर्ध्वस्रोतस्तृतीयस्तु सात्विकोर्ध्वमवर्तत
ते सुखप्रीतिबहुला बहिरन्तरनावृताः। प्रकाशा बहिरन्तश्च ऊर्ध्वस्रोतास्ततः स्मृताः॥६७
तुष्टात्मनस्तृतीयस्तु देवसर्गस्तु संस्मृतः। तस्मिन् सर्गेऽभवत् प्रीतिर्निष्पन्ने ब्रह्मणस्तदा

ततोऽन्यं स तदा दध्यौ साधकंसर्गमुत्तमम्।
असाधकांस्तु तान् ज्ञात्वा मुख्यसर्गादिसम्भवान्॥६९॥

तथाभिध्यायतस्तस्य सत्याभिध्यायिनस्ततः। प्रादुर्भूतस्तदाव्यक्तादर्वाक्स्रोतस्तुसाधकः
यस्मादर्वाक् प्रवर्तन्ते ततोऽर्वाक्स्रोतसस्तु ते। ते च प्रकाशबहुलास्तमोद्रिक्तारजोधिकाः

तस्मात्ते दुःखबहुला भूयोभूयश्चकारिणः। प्रकाशा बहिरन्तश्च मनुष्याः साधकाश्च ते
पञ्चमोऽनुग्रहः सर्गः स चतुर्धा व्यवस्थितः।
विपर्य्ययेण सिद्धया च शक्त्या तुष्ट्या तथैव च ॥ ७३ ॥
विवृत्तं वर्तमानञ्च ते न जानन्ति वै पुनः। भूतादिकानां भूतानां षष्ठः सर्गः स उच्यते
ते परिग्राहिणः सर्वे सविभागतरास्तु ते। चोदनाजाप्यशीलाश्च ज्ञेया भूतादिकास्तु ते
इत्येते कथिताः सर्गाः षडत्र नृपसत्तम। प्रथमो महतः सर्गो द्वितीयो ब्रह्मणस्तु यः॥
तन्मात्राणां द्वितीयस्तु भूतसर्गो हि स स्मृतः। वैकारिकस्तृतीयस्तु सर्गश्चैन्द्रियकःस्मृतः
इत्येष प्राकृतः सर्गः सम्भूतो बुद्धिपूर्वकः। मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराःस्मृताः
तिर्यक्स्रोतश्च यः प्रोक्तस्तिर्यग्योऽन्यः स उच्यते।
ततोर्द्ध्वस्रोतसां षष्ठो देवसर्गस्तु स स्मृतः ॥ ७६ ॥
ततोऽर्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः।
अष्टमोऽनुग्रहः सर्गः सात्विकस्तामसस्तु सः ॥८०
[पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः। प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः
एते तव समाख्याता नव सर्गाः प्रजापतेः। प्राकृता वैकृताश्चैव जगतो मूलहेतवः॥
सृजतो जगदीशस्य किमन्यच्छ्रोतुमर्हसि ॥ ८२ ॥

भीष्म उवाच।

संक्षेपात् कथिताः सर्गा देवादीनां गुरो त्वया।
विस्तरात् श्रोतुमिच्छामि त्वत्तो मुनिवरोत्तम ॥ ८३ ॥

पुलस्त्य उवाच।

कर्मभिर्भाविताः सर्वे कुशलाकुशलैस्तु ते ॥ ८४ ॥
ख्यात्या तया ह्यनिर्मुक्ताः संहारे ह्युपसंहृताः। स्थावरान्ताः सुराद्यास्तु प्रजा राजंश्चतुर्विधाः
ब्रह्मणः कुर्वतः सृष्टिं जज्ञिरे मानसाः स्मृताः। ततो देवासुरपितॄन् मानुषांस्तु चतुष्टयम्
सिसृक्षुरम्भांस्येतानि स्वमात्मानमयूयुजत्। मुक्तात्मनस्ततो जाता दुरात्मानः प्रजापतेः
सिसृक्षोर्जघनात् पूर्वं जज्ञिरे त्वसुरास्ततः। तत्याज तां ततो दुष्टान्तमोमात्रात्मिकांतनुम्

सा तु त्यक्ता तनुस्तेन राजेन्द्राभूद्विभावरी । सिसृक्षुरन्यदेहस्थः प्रीतिमाप ततः सुराः ॥
सत्वोद्रिक्ताः समुद्भूता मुखतो ब्रह्मणो नृप । त्यक्ता सापि तनुस्तेन सत्वप्रायमभूद्दिनम्
ततो हि बलिनो रात्रावसुरा देवता दिवा । सत्वमात्रात्मिकां चैव ततोऽन्यांजगृहेतनुम्
पितृवन्मन्यमानस्य पितरस्तस्य जज्ञिरे । उत्ससर्ज पितॄन् कृत्वा ततस्तामपि स प्रभुः ॥
सा चोत्सृष्टाभवत् सन्ध्या दिननक्तान्तरास्थितिः । रजोमात्रात्मिकामन्यां जगृहेसतनुन्ततः
रजोमात्रोत्कटा जाता मनुष्याः कुरुसत्तम । तामप्याशु स तत्याज तनुमाद्यां प्रजापतिः

ज्योत्स्ना समभवच्चापि प्राक्सन्ध्या याभिधीयते ।
ज्योत्स्नागमे तु बलिनो मनुष्याः पितरस्तथा ॥ ९५ ॥
राजेन्द्र सन्ध्यासमये तस्मात्ते प्रभवन्ति वै ।
ज्योत्स्ना रात्र्यहनी सन्ध्या चत्वार्येतानि वै विभोः ॥ ९६ ॥

ब्रह्मणस्तु शरीराणि त्रिगुणोपाश्रयाणि च । रजोमात्रात्मिकामेव ततोऽन्यां जगृहेतनुम्
ततः क्षुद्ब्रह्मणो जाता जज्ञे कोपस्तया कृतः। क्षुत्क्षामो ह्यन्धकारे तु सोऽसृजद्भगवांस्ततः
विरूपा अत्तुकामास्ते समधावन्त तं प्रभुम् । रक्षतामेष यैरुक्तं राक्षसास्ते ततोऽभवन्

ऊचुर्यक्षाम (खादाम) इत्यन्ये ये च यक्षास्तु तेऽभवन् ।
अतिभीतस्य तान् दृष्ट्वा केशाः शीर्यन्ति वेधसः ॥ १०० ॥

हीनाश्च शिरसो भूयः समारोहन्ति ते शिरः । सर्पणात्तेऽभवन् सर्पा हीनत्वादहयः स्मृताः ॥

ततः क्रुद्धेन वै स्रष्ट्रा क्रोधात्मानो विनिर्मिताः ।
वर्णेन कपिशेनोग्रा भूतास्ते पिशिताशिनः ॥ १०२ ॥
धयतो गां समुद्भूता गन्धर्वास्तस्य तत्क्षणात् ।
पिबन्तो जज्ञिरे वाचंगन्धर्वास्तेनतेऽभवन् ॥ १०३ ॥
एतानि सृष्ट्वा भगवान् ब्रह्मा तच्छक्तिचोदितः ।
ततःस्वच्छन्दतोऽन्यानि वयांसि वयसोऽसृजत् ॥ १०४ ॥

अवयो वक्षसश्चक्रे मुखतोऽजांश्च सृष्टवान् । सृष्टवानुदराद्गाश्च महिषांश्च प्रजापतिः ॥

पद्भ्याञ्चाश्वान् स मातङ्गान् रासभान् गवयान् मृगान् ।
उष्ट्रानश्वतरांश्चैव न्यङ्कूनन्याश्च जातयः ॥ १०६ ॥

औषध्यः फलमूलिन्यो रोमभ्यस्तस्य जज्ञिरे। त्रेतायुगमुखे ब्रह्मा कल्पस्यादौ नृपोत्तम
सृष्ट्वा पश्वोषधीः सम्यक् युयोज स तदाध्वरे। गामजं महिषं मेषमश्वाश्वतरगर्दभान्
एतान् ग्राम्यपशूनाहुरारण्यांश्च निबोध मे। श्वापदो द्विखुरो हस्ती वानरः पञ्चमः खगः
ऊर्णकाः पशवः षष्ठाः सप्तमास्तु सरीसृपाः। गायत्रञ्च ऋचश्चैव त्रिवृत्सोमं रथन्तरम्॥
अग्निष्टोमञ्च यज्ञानां निर्ममे प्रथमान्मुखात्। यजूंषि त्रैष्टुभं छन्दः स्तोमं पञ्चदशं तथा
बृहत्साम तथोक्थञ्च दक्षिणादसृजन्मुखात्। सामानि जगतीच्छन्दःस्तोमंसप्तदशं तथा
वैरूपमतिरात्रञ्च पश्चिमादसृजन्मुखात्। एकविंशमथर्वाणमप्तोर्यामाणमेव च॥ ११३॥
आनुष्टुभं स वैराजमुत्तरादसृजन्मुखात्। उच्चावचानि भूतानि गात्रेभ्यस्तस्य जज्ञिरे॥
सुरासुरपितॄन् सृष्ट्वा मनुष्यांश्च प्रजापतिः। ततः पुनः ससर्जासौ स कल्पादौपितामहः

यक्षान् पिशाचान् गन्धर्वांस्तथैवाप्सरसां गणान्।
सिद्धकिन्नररक्षांसि सिंहान् पक्षिमृगोरगान्॥ ११६॥

अव्ययञ्चव्ययञ्चैव यदिदं स्थाणु जङ्गमम्। तत् ससर्ज तदा ब्रह्मा भगवानादिकृद्विभुः॥
तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे। तान्येव प्रतिपद्यन्ते सृज्यमाना पुनःपुनः
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते। तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते॥११६
इन्द्रियार्थेषु भूतेषु शरीरेषु च स प्रभुः। नानात्वं विनियोगञ्च धातैव व्यसृजत्स्वयम्
नाम रूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम्। वेदशब्देभ्य एवादौ देवादीनां चकार सः॥
ऋषीणांनामधेयानियथावेदेश्रुतानिवै। यथानियोगं योग्यानिअन्येषामपिसोऽकरोत्॥
यथर्त्तावृतुलिङ्गानिनानारूपाणिपर्य्यये। दृश्यन्ते तानितान्येव तथा भावा युगादिषु॥
करोत्येवंविधांसृष्टिं कल्पादौसपुनःपुनः। सिसृक्षुश्शक्तियुक्तोऽसौसृज्यशक्तिप्रचोदितः

भीष्मउवाच।

अर्वाक्स्रोतास्तुकथितो भवतायस्तु मानुषः। ब्रह्मन्विस्तरतोब्रूहि ब्रह्मातमसृजद्यथा॥
यथा सवर्णानसृजद् गुणांश्च स महामुने। यच्चतेषांस्मृतंकर्म विप्रादीनां तदुच्यताम्॥

पुलस्त्यउवाच।

सत्वाभिध्यायिनः पूर्वं सिसृक्षोर्ब्रह्मणः प्रजाः। अजायन्तकुरुश्रेष्ठसत्वोद्रिक्तामुखात्प्रजाः

वक्षसो रजसोद्रिक्तास्तथान्याब्रह्मणोऽभवन् । रजसस्तमलश्चैव समुद्रिकास्तथोरुतः ॥
पद्भ्यामन्याः प्रजा ब्रह्मा ससर्ज कुरुसत्तम । तमःप्रधानास्ताः सर्वाश्चातुर्वर्ण्यमिदं ततः
ब्राह्मणा क्षत्रिया वैश्याः शूद्राश्च नृपसत्तम । पादोरुवक्षस्थलतो मुखतश्च समुद्गताः ॥
यज्ञनिष्पत्तये सर्वमेतद् ब्रह्मा चकारह । चातुर्वर्ण्यं महाराज यज्ञसाधनमुत्तमम् ॥
यज्ञेनाप्यायिता देवा वृष्ट्युत्सर्गेण मानवा । आप्यायन्ते धर्मयज्ञा यतः कल्याणहेतवः
निष्पद्यन्ते नरैस्ते तु सुकर्मनिरतैः सदा । विरुद्धाचरणापेतैः सद्भिः सन्मार्गगामिभिः ॥
स्वर्गापवर्गमानुष्यात् प्राप्नुवन्ति नरा नृप । यच्चाभिरुचितंस्थानंतद्यान्ति मनुजाविभो
प्रजास्ता ब्रह्मणासृष्टाश्चातुर्वर्ण्यव्यवस्थितौ । सम्यक् शुद्धाः समाचाराचरणा नृपसत्तम
यथेच्छावासनिरताः सर्वबाधाविवर्जिताः । शुद्धान्तकरणाः शुद्धाधर्मानुष्ठाननिर्मलाः
शुद्धे च तासां मनसि शुद्धान्तः संस्थिते हरौ । शुद्धज्ञानं प्रपश्यन्ति ब्रह्माख्यंयेनतत्पदम्
ततःकालात्मकोयोऽसौ विरिंचावास उच्यते । संसारपातमत्यर्थं घोरमल्पाल्पसारवत्
अधर्मवीजभूतं तत्तमोलोभसमुद्गतम् । प्रजासु तासु राजेन्द्र रागादिक्रमसाधनम् ॥
ततः सा सहजा सिद्धिस्तेषां नातीव जायते ।
राजन् वश्यादयश्चान्याः सिद्धयोऽष्टौ भवन्ति याः ॥ १४० ॥
तासु क्षीणाश्वशेषासु वर्द्धमाने च पातके । द्वन्द्वाभिभवदुःखार्त्तास्ता भवन्ति ततःप्रजाः
ततोदुर्गाणि ताश्चक्रुर्वार्क्षं पार्वतमौदकम् । धान्वनंच तथा दुर्गं पुरंखार्वटकादियत् ॥
गृहाणि च यथान्यायं तेषुचक्रुः पुरादिषु । शीततापादिबाधानां प्रशमाय महामते ॥
प्रतिहारमिमंकृत्वा शीतादेस्ताः प्रजाः पुनः । वार्त्तोपायंततःश्चक्रुर्हस्तसिद्धिंचकर्मजाम्
व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः । प्रियंगूकोविदाराश्च कोरदूषाः सचीनकाः
माषा मुद्गा मसूराश्च निष्पावाः सकुलुत्थकाः ।
अढकाश्चणकाश्चैव शणाः सप्तदश स्मृताः ॥ १४६ ॥
इत्येता ओषधीनान्तु ग्राम्याणां जातयो नृप । ओषध्यो यज्ञियाश्चैवग्राम्यावन्याश्चतुर्दश
व्रीहयः सयवा माषा गोधूमा अणवस्तिलाः । प्रियंगू सप्तमाह्येता अष्टमास्तुकुलुत्थकाः
श्यामाकस्त्वथ नीवारो वर्तुलः सगवेधुकः । अथ वेणुयवा प्रोक्ता स्तद्वन्मर्कटकानृप ॥

ग्राम्या वन्याः स्मृता ह्येता ओषध्यश्च चतुर्दश । यज्ञनिष्पत्तये तद्वत्तथासां हेतुरुत्तमः ।
एताश्च सहयज्ञेन प्रजानां कारणं परम् । परापरविदः प्राज्ञास्ततो यज्ञान् वितन्वते ॥
अहन्यहन्यनुष्ठानं यज्ञानां पार्थिवोत्तम । उपकारकरं पुंसां क्रियमाणं फलार्थिनाम् ॥
येषाञ्च कालसृष्टौऽसौपपाविन्दुर्महामते । मर्यादां स्थापयामास यथास्थानं यथागुणम्
वर्णानामाश्रमानाञ्च धर्मान् धर्मभृतांवर । लोकांश्चसर्ववर्णानां सम्यग्धर्मानुपालिनाम्
प्राजापत्यं ब्राह्मणानां स्मृतंस्थानन्तु पार्थिव । स्थानमैन्द्रं क्षत्रियाणांसंग्रामेष्वनिवर्त्तिनाम्
वैश्यानां मारुतंस्थानं स्वधर्ममनुवर्त्तिनाम् । गान्धर्वं शूद्रजातीनां परिचर्यासु वर्त्तिनाम्
अष्टाशीति सहस्राणां यतीनामूर्ध्वरेतसाम् । स्मृतं तेषान्तु यत्स्थानंतदेव गुरुवासिनाम्
सप्तर्षीणाञ्चयत्स्थानंस्मृतंतद्वै वनौकसाम् । प्राजापत्यंगृहस्थानांन्यासिनां ब्राह्मसंज्ञितम्
योगिनामसृतस्थानं ब्रह्मणः परमं पदम् । एकान्तिनःसदोद्युक्ता ध्यायिनो योगिनोहिये
तेषां तत्परमं स्थानं यत्तत् पश्यन्ति सूरयः । गतागता निवर्तन्ते चन्द्रादित्यादयोग्रहाः ॥
अद्यापि न निवर्त्तन्ते नारायणपरायणाः । तामिस्रमन्धतामिस्रं महारौरवरौरवम् ॥
असिपत्रवनं घोरं कालसूत्रमवीचिमत् । विनिन्दकानां वेदस्य यज्ञव्याघातकारिणाम्
स्थानमेतत् समाख्यातंस्वधर्मत्यागिनश्चये । ततोऽभिध्यायतस्तस्य जज्ञिरेमानसाः प्रजाः
तच्छरीरसमुत्पन्नैः कायस्थैः करणैः सह । क्षेत्रज्ञाः समवर्त्तन्त गात्रेभ्यस्तस्य धीमतः
ते सर्वे समवर्त्तन्त ये मया प्रागुदाहृताः । देवाद्याःस्थावरान्ताश्च त्रैगुण्यविषयेस्थिताः
एवम्भूतानि सृष्टानि स्थावराणि चराणि च । यदास्य ताः प्रजाःसर्वानव्यवर्द्धन्तधीमतः
अथान्यान्मानसान् पुत्रान् सदृशानात्मनोऽसृजत् । भृगुंमांपुलहञ्चैवक्रतुमङ्गिरसं तथा
मरीचिं दक्षमत्रिञ्च वसिष्ठञ्चैव मानसान् । नव ब्रह्माण इत्येते पुराणेनिश्चयं गताः ॥
सनन्दनादयो ये च पूर्वं सृष्टास्तु वेधसा । न ते लोकेष्वसज्जन्त निरपेक्षाः प्रजासु ते
सर्वे ह्यागतविज्ञाना वीतरागा विमत्सराः । तेष्वेवं निरपेक्षेषु लोकसृष्टौ महात्मनः ॥
ब्रह्मणोऽभून्महान् क्रोधस्त्रैलोक्यदहनक्षमः । तस्य क्रोधात् समुद्भूतंजालामालावदीपितं
ब्रह्मणस्तु तदा ज्योति त्रैलोक्यमखिलंदहत् । भ्रुकुटीकुटिलातस्यललाटात्क्रोधदीपितात्
समुत्पन्नस्तदा रुद्रो मध्याह्नार्कसमप्रभः । अर्द्धनारीनरवपुः प्रचण्डोऽति शरीरवान् ॥

विभजात्मानमित्युक्त्वातंब्रह्मान्तर्दधेततः । तथोक्तोऽसौद्विधास्त्रीत्वंपुरुषत्वंतथाकरोत्
बिभेद पुरुषत्वञ्च दशधा चैकधा च सा । सौम्यासौम्यैस्तथारूपैःशान्तैःस्त्रीत्वंचसप्रभुः
बिभेद बहुधा चैव स्वरूपैरसितैः सितैः । ततो ब्रह्मा स्वयम्भूतं पूर्वं स्वायम्भुवंप्रभुम् ॥
आत्मानमेव कृतवान् प्राजापत्येमनुं नृप । शतरूपाञ्च तां नारींतपोनिर्धूतकल्मषाम् ॥
स्वायम्भुवो मनुर्नाम पत्नीत्वे जगृहे प्रभुः । तस्माच्च पुरुषाद् देवी शतरूपा व्यजायत ॥
प्रियव्रतोत्तानपादप्रसूत्याकूतिसंज्ञितम् । ददौ प्रसूतिं दक्षाय आकूतिं रुचयेपुरा ॥
प्रजापतिः स जग्राह तयोर्जज्ञे स दक्षिणः । पुत्रो यज्ञो महाभाग दम्पत्योर्मिथुनं ततः ॥
यज्ञस्य दक्षिणायान्तु पुत्रा द्वादश जज्ञिरे । यामाइतिसमाख्यातादेवाःस्वायम्भुवेमनौ
प्रसूत्याञ्च तथा दक्षश्चतस्रोविंशतिं तथा । ससर्ज कन्यास्तासान्तु सम्यङ्नामानिमेशृणु

श्रद्धा लक्ष्मी धृतिः पुष्टिस्तुष्टि र्मेधा क्रिया तथा।
बुद्धि र्लज्जा वपुः शान्ति र्ऋद्धिः कीर्त्तिस्त्रयोदशी ॥ १८३ ॥

पत्न्यर्थं प्रतिजग्राह धर्म्मो दाक्षायणी प्रभुः । ताभ्यःशिष्टायवीयस्यएकादश सुलोचनाः
ख्यातिःसत्यथसम्भूतिःस्मृतिःप्रीतिःक्षमातथा । सन्नतिश्चानसूयाचऊर्ज्जास्वाहास्वधातथा
भृगुर्भवोमरीचिश्चतथाचैवांगिरामुनिः । अहंचपुलहश्चैवक्रतुर्मुनिवरस्तथा ॥ १८६ ॥
अत्रिर्वसिष्ठोवह्निश्चपितरश्चयथाक्रमम् । ख्यात्याद्याजगृहुःकन्या मुनयोराजसत्तम ॥१८७
श्रद्धाकामंवलंलक्ष्मीर्नियमंधृतिरात्मजम् । संतोषंचतथातुष्टिर्लोभंपुष्टिरसूयत ॥ १८८ ॥
मेधाश्रुतंक्रियादण्डंनयंविनयमेवचं । वोधंवुद्धिस्तथालज्जाविनयंवपुरात्मजम् ॥१८९॥
व्यवसायंप्रजज्ञेवैक्षेमंशान्तिरसूयत । सुखमृद्धिर्यशःकीर्तिरित्येतेधर्मसूनवः ॥ १९० ॥
कामान्नंदीसुतंहर्षंधर्मपौत्रमसूयत । हिंसाभार्यात्वधर्मस्यतस्यजज्ञेतदानृतम् ॥ १९१ ॥
कन्याचनिकृतिस्ताभ्यांभयंनरकएवच । मायाञ्चवेदनाचैवमिथुनंद्वंद्वमेवच ॥ १९२ ॥
तयोर्जज्ञेऽथवैमायामृत्युंभूतापहारिणम् । वेदनायास्ततश्चापिदुःखंजज्ञेऽथरौरवात् ॥ १९३
मृत्योर्व्याधिजराशोकतृष्णाक्रोधाश्चजज्ञिरे । दुःखोत्तराः स्मृताह्येतेसर्वेचाधर्मलक्षणाः
नैषांभार्यास्तिपुत्रोवातेसर्वेह्यूर्ध्वरेतसः । रौद्राण्येतानिरूपाणिब्रह्मणोनृवरात्मज ॥१९५॥
नित्यंप्रलयहेतुत्वंजगतोऽस्यप्रयांतिवै । रुद्रसर्गंप्रवक्ष्यामियथाब्रह्माचकारह ॥ १९६ ॥

कल्पादावात्मनस्तुल्यंसुतंप्रध्यायतस्ततः । प्रादुरासीत्प्रभोरंकेकुमारोनीललोहितः ॥१९७
रुदन्वैसुस्वरंसोऽथद्रवंश्चनृपसत्तम । किं रोदिषीति तं देवोरुदंतं प्रत्युवाचह ॥ १९८ ॥
नामधेहीतितंसोऽथप्रत्युवाचप्रजापतिम् । रोदनाद्रुद्रनामासिमारोदीर्धैर्यमावह ॥ १९९ ॥
एवमुक्तःपुनस्सोऽथसप्तकृत्वो रुरोदह । ततोऽन्यानिददौतस्मैसप्तनामानिवैप्रभुः ॥२००॥
मूर्तीनांचैवमष्टानांस्थानान्यष्टौचकारह । भवंशर्वमथेशानंतथापशुपतिंनृप ॥ २०१ ॥
भीममुग्रंमहादेवमुवाचसपितामहः । सूर्योजलंमहीवह्निर्वायुराकाशमेवच ॥ १०२ ॥
दीक्षितोब्राह्मणः सोमइत्येतातनवः क्रमात् । एवंप्रकारोरुद्रोऽसौसतींभार्यामविंदत ।२०३
दक्षकोपाच्चतत्याजसासतीस्वंकलेवरम् । हिमवद्दुहितासाभून्मेनायांनृपसत्तम ॥२०४॥
उपयेमेपुनश्चैवयाचित्वाभगवान्भवः । दाक्षीधातृविधातारौभृगोःख्यातिरसूयत ॥२०५॥
श्रियं च देवदेवस्य पत्नी नारायणस्य या ॥ २०६ ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखंडे तृतीयोऽध्यायः ॥ ३ ॥

---

## चतुर्थोऽध्यायः ।

### समुद्र मन्थन प्रस्तावे दुर्वासस इन्द्राय शापदान वर्णनम् ।

भीष्म उवाच ॥

क्षीराब्धौ तु तथा लक्ष्मीः किलोत्पन्ना मया श्रुता ।
ख्यात्यां भृगोः समुत्पन्ना एतदाह कथं भवान् ॥ १ ।
कथंचदक्षदुहितादेहंत्यक्तवतीशुभा । मेनायांगर्भसंभूतिमुमायाजन्मएवच ॥ २ ॥
किमर्थंदेवदेवेनपत्नीहैमवतीकृता । विरोधंचाथदक्षेणभगवांस्तुब्रवीतुमे ॥ ३ ॥

पुलस्त्य उवाच ।

इदं च शृणुभूपालयत्पृष्टोऽहमिहत्वया । श्रीसंबंधोमयाप्येषश्रुतआसीत्पितामहात् ॥४॥
अत्रिपुत्रस्तुदुर्वासाःपरिभ्राम्यन्महीमिमाम् । विद्याधरीकरेमालांदृष्ट्वासागन्धकींशुभाम् ॥
याचयामाससमेदेहिजटाजूटेकरोम्यहम् । इतिविद्याधरीतेनपृष्टासाऋषिणातथा ॥ ६ ॥

ददौतस्मैमुदायुक्ता तां मालांसतदानृप । गृहीत्वासुचिरंकालंशिरोमालांबवंधह ॥ ७ ॥
उन्मत्तप्रेतवद्विप्रः शोभमानोऽब्रवीदिदम् । इयंविद्याधरीकन्या पीनोन्नतपयोधरा ॥ ८ ॥
शोभालंकारसौभाग्यैर्युक्ताद्दृष्टाततोमनः । क्षोभमायातिमेचाद्यनाहंकामेविचक्षणः ॥ ९ ॥
व्रजामितावदन्यत्रसौभाग्यं स्वंप्रदर्शयन् । एवमुक्त्वासराजेंद्रपरिबभ्राममेदिनीम् ॥ १०
ऐरावतंसमारूढंराजानंत्रिदिवौकसाम् । त्रैलोक्याधिपतिंशक्रंभ्राजमानंशचीपतिम् ॥ ११
तामात्मशिरसोमालांभ्रमदुन्मत्तषट्पदाम् । आदायामरराजायचिक्षेपोन्मत्तवन्मुनिः ॥१२
गृहीत्वादेवराजेनमालासागजमूर्द्धनि । मुक्तारराजसामालाकैलासेजाह्नवीयथा ॥ १३ ॥
मदांधकारिताक्षोऽसौगंधाघ्राणेनवारणः । करेणादायचिक्षेपतांमालांपृथिवीतले ॥ १४ ॥
ततश्चुक्रोधभगवान् दुर्वासामुनिपुङ्गवः । राजेन्द्र देवराजानं क्रुद्धश्चेदमुवाचह ॥ १५ ॥
ऐश्वर्यमददुष्टात्मन्नतिस्तब्धोऽसिवासव । श्रियोधामस्रजंयस्मान्मद्दत्तान्नाभिनंदसि ॥
त्रैलोक्यश्रीरतोमूढविनाशमुपयास्यति । मद्दत्ताभवतामालाक्षिप्तायस्मान्महीतले ॥ १७॥
तस्मात्प्रणष्टलक्ष्मीकं त्रैलोक्यंतेभविष्यति । यस्यसंजातकोपस्यभयमेतिचराचरम् ॥१८
तंमांत्वमतिगर्वेणदेवराजावमन्यसे । महेंद्रोवारणस्कंधादवतीर्यत्वरान्वितः ॥ १९ ॥
प्रसादयामासमुनिंदुर्वाससमकल्मषम् । प्रसाद्यमानः सतदाप्रणिपातपुरःसरम् ॥ २० ॥
नाहंक्षमिष्येवहुनाकिमुक्तेनशतक्रतो । इत्युक्त्वाप्रययौविप्रोदेवराजोऽपितंपुनः ॥ २१ ॥
आरुह्यैरावतंनागंप्रययावमरावतीम् । ततः प्रभृतिनिश्रीकंसशक्रंभुवनत्रयम् ॥ २२ ॥
नयज्ञाः संप्रवर्त्तंतेनतपस्यंतितापसाः । नचदानानिदीयंतेनष्टप्रायमभूज्जगत् ॥ २३ ॥
एवमत्यंतनिश्रीकेत्रैलोक्येसत्ववर्जिते । देवान्प्रतिवलोद्योगंचक्रुर्दैतेयदानवाः ॥ २४ ॥
विजितास्त्रिदशादैत्यैरिंद्राद्याः शरणंययुः । पितामहंमहाभागंहुताशनपुरोगमाः ॥२५ ॥
यथावत्कथितेदेवैर्ब्रह्माप्राहतथासुरान् । क्षीरोदस्योत्तरंकूलंजगामसहितःसुरैः ॥ २६ ॥
गत्वाजगादभगवान्वासुदेवंपितामहः । उत्तिष्ठविष्णोशीघ्रंत्वंदेवतानांहितंकुरु ॥ २७ ॥
त्वयाविनादानवैस्तुजिताःसर्वेपुनःपुनः । इत्युक्तःपुंडरीकाक्षःपुरुषःपुरुषोत्तमः ॥ २८ ॥
अपूर्वरूपसंस्थानान्दृष्ट्वादेवानुवाचह । तेजसोभवतांदेवाः करिष्याम्युपबृंहणम् ॥ २९ ॥
वदाम्यहंयत्क्रियतांभवद्भिस्तदिदंसुराः । आनीयसहितादैत्यैः क्षीराब्धौसकलौषधीः ॥

पुलस्त्य उवाच ।

श्रीनिधानं पुरं मेरोःशिखरे रत्नचित्रितम् ॥ ३ ॥

अनेकाश्चर्यनिलयं बहुपादपसंकुलम् । विचित्रधातुभिश्चित्रं स्वच्छस्फटिकनिर्मलम् ॥
लतावितानशोभाढ्यं शिखिशब्दविनादितम् । मृगेन्द्ररववित्रस्तगजयूथसमाकुलम् ॥५॥
निर्झरांबुप्रपातोत्थशीकरासारशीतलम् । वाताहततरुव्रातप्रसन्नापानचित्रितम् ॥ ६ ॥
मृगनाभिवरामोदवासिताशेषकाननम् । लतागृहरतिश्रान्तसुप्तविद्याधराध्वगम् ॥ ७ ॥
प्रगीतकिन्नरव्रातमधुरध्वनिनादितम् । तस्मिन्ननेकविन्यासशोभिताशेषभूमिकम् ॥८॥
वैराजं नाम भवनं ब्रह्मणः परमेष्ठिनः । तत्र दिव्यांगनोद्गीतमधुरध्वनिनादिता ॥ ९ ॥
पारिजाततरूत्पन्नमंजरीदाममालिनी । रत्नरश्मिसमूहोत्थबहुवर्णविचित्रिता ॥ १० ॥

विन्यस्तस्तंभकोटिस्तु निर्मलादर्शशोभिता ।
अप्सरोनृत्यविन्यासविलासोल्लासलासिता । ॥ ११ ॥

बह्वातोद्यसमुत्पन्नसमूहस्वननादिता । लयतालयुतानेकगीतवादित्रशोभिता ॥ १२ ॥
सभा कांतिमतीनाम देवानां शर्मदायिका । ऋषिसंघसमायुक्ता मुनिवृन्दनिषेविता ॥
द्विजातिसामशब्देन नादितानंददायिनी । तस्यां निविष्टो देवेशःसंध्यासक्तःपितामहः ॥
ध्यायतिस्म परं देवं येनेदं निर्मितंजगत् । ध्यायतो बुद्धिरुत्पन्ना कथं यज्ञं करोम्यहम्
कस्मिन्स्थाने मया यज्ञः कार्यः कुत्रधरातले । काशीप्रयागस्तुंगा च नैमिषं शृंखलं तथा
कांची भद्रा देविका च कुरुक्षेत्रं सरस्वती । प्रभासादीनि तीर्थानि पृथिव्यामिहमध्यतः
क्षेत्राणि पुण्यतीर्थानि संति यानीह सर्वशः । मदादेशाच्च रुद्रेण कृतान्यन्यानिभूतले ॥
यथाहं सर्वदेवेषु आदिदेवो व्यवस्थितः । तथाचैकं परं तीर्थमादिभूतं करोम्यहम् ॥
अहं यत्र समुत्पन्नः पद्मं तद्विष्णुनाभिजम् । पुष्करं प्रोच्यते तीर्थमृषिभिर्वेदपाठकैः ॥
एवं चिंतयतस्तस्य ब्रह्मणस्तु प्रजापतेः । मतिरेषा समुत्पन्ना व्रजाम्येषधरातले ॥२१॥
प्राक्स्थानं स समासाद्य प्रविष्टस्तद्वनोत्तमम् । नानाद्रुमलताकीर्णंनानापुष्पोपशोभितम्
नानापक्षिरवाकीर्णं नानामृगगणाकुलम् । द्रुमपुष्पभरामोदैर्वासयद्यत्सुरासुरान् ॥२३॥
बुद्धिपूर्वमिवन्यस्तैः पुष्पैर्भूषितभूतलम् । नानागंधरसैः पक्वैः पक्वैश्च षड्तू द्भवैः ॥ २४ ॥

फलैः सुवर्णरूपाढ्यैर्घ्राणदृष्टिमनोहरैः । जीर्णं पत्रं तृणं यत्र शुष्ककाष्ठफलानि च ॥
बहिः क्षिपति जातानि मारुतोऽनुग्रहादिव । नानापुष्पसमूहानां गंधमादाय मारुतः ॥
शीतलो वाति खं भूमिं दिशो यत्राभिवासयन् । हरितस्निग्धनिश्छिद्रैरकीटकवनोत्कटैः
वृक्षैरनेकसंज्ञैर्यद्भूषितं शिखरान्वितैः । अरोगैर्दर्शनीयैश्च सुवृत्तैः कैश्चिदुज्ज्वलैः ।२८।
कुटुंबमिव विप्राणामृत्विग्भिर्भाति सर्वतः । शोभंते धातुसंकाशैरंकुरैःप्रावृता द्रुमाः ॥
कुलीनैरिवनिश्छिद्रैः स्वगुणैः प्रावृतानराः । पवनाविद्धशिखरैः स्पृशन्तीवपरस्परम् ॥
आजिघ्रंतीवचान्योन्यं पुष्पशाखावतंसकाः । नागवृक्षाः क्वचित्पुष्पैर्द्रुमवानीरकेसरैः ॥
नयनैरिव शोभंते चंचलैः कृष्णतारकैः । पुष्प संपन्न शिखराः कर्णिकारद्रुमाःक्वचित् ।
युग्मयुग्माद्विधाचेह शोभन्त इवदंपती । सुपुष्पप्रभवाटोपैस्सिंदुवारद्रु पंक्तयः॥ ३३ ॥
मूर्तिमत्य इवाभांति पूजिता वनदेवताः । क्वचित्क्वचित्कुंदलताः सपुष्पाभरणोज्ज्वलाः
दिक्षु वृक्षेषु शोभंते वालचन्द्राइवोच्छ्रिताः । सर्जार्जुनाः क्वचिद्भान्ति वनोद्देशेषु पुष्पिताः
धौतकौशेयवासोभिः प्रावृताः पुरुषाइव । अतिमुक्तकवल्लीभिः पुष्पिताभिस्तथाद्रुमाः ॥
उपगूढा विराजन्ते स्वनारीभिरिवप्रियाः । अपरस्परसंसक्तैः सालाशोकाश्च पल्लवैः ॥
हस्तैर्हतान्स्पृशंतीव सुहृदश्चिरसंगताः । फलपुष्पभरा नम्राः पनसाः सरलार्जुनाः ॥
अन्योन्यमर्चयन्तीव पुष्पैश्चैवफलैस्तथा । मारुतावेगसंश्लिष्टैःपादपास्सालवाहुभिः ॥
अभ्याशमागतं लोकं प्रतिभावैरिवोत्थिताः । पुष्पाणामवरोधेन सुशोभार्थं निवेशिताः
वसन्तमहमासाद्य पुरुषान्स्पर्धयंति हि । पुष्प शोभाभरनुतैः शिखरैर्वायुकम्पितैः ।४१।
नृत्यंतीव नराः प्रीताः स्रगलंकृतशेखराः । शृंगाग्रपवनक्षिप्ताः पुष्पावलियुताद्रुमाः ।४२
सवल्लीकाः प्रनृत्यंति मानवा इव सप्रियाः । स्वपुष्पनतवल्लीभिः पादपाः क्वचिदावृताः ॥
भांति तारागणैश्चित्रैः शरदीवनभस्तलम् । द्रुमाणामथ वाग्रेषु पुष्पिता मालती लताः ॥
शेखराइव शोभंते रचिता बुद्धिपूर्वकम् । हरिताःकांचनच्छायाःफलिताःपुष्पिताद्रुमाः
सौहृदं दर्शयंतीव नराः साधुसमागमे । पुष्पकिंजल्ककपिलागताः सर्वदिशासु च ।४६॥
कदंबपुष्पस्य जयं घोषयंतीव षट्पदाः । क्वचित्पुष्पासवक्षीबाः संपतंति ततस्ततः ॥
पुंस्कोकिलगणा वृक्षगहनेष्विवसप्रियाः । शिरीषपुष्पसंकाशाः शुकामिथुनशःक्वचित् ।

कीर्तयंति गिरश्चित्राः पूजिता ब्राह्मणा यथा । सहचारिसुसंयुक्ता मयूराश्चित्रबर्हिणः ॥
वनांतेष्वपि नृत्यंति शोभंतइव नर्त्तकाः । कूजन्तः पक्षिसंघातानानारुतविराविणः ॥
कुर्वंति रमणीयं वै रमणीयतरं वनम् । नानामृगगणाकीर्णं नित्यं प्रमुदितांडजम् ।५१॥
तद्वनं नन्दनसमं मनोदृष्टिविवर्धनम् । पद्मयोनिस्तु भगवांस्तथा रूपं वनोत्तमम् ॥५२॥
ददर्शादर्शवद्दृष्ट्या सौम्यया पाययन्निव । तान्वृक्षपंक्तयः सर्वा दृष्ट्वा देवं तथागतम् ।५३॥
निवेद्य ब्रह्मणे भक्त्या मुमुचुः पुष्पसंपदः । पुष्पप्रतिग्रहं कृत्वा पादपानां पितामहः ॥
वरं वृणीध्वं भद्रं वः पादपानित्युवाच सः । एवमुक्ता भगवता तरवो निरवग्रहाः ॥५५॥
ऊचुः प्रांजलयः सर्वे नमस्कृत्वा विरिंचिनम् । वरं ददासि चेद्देव प्रपन्नजनवत्सल ॥५६॥
इहैव भगवन्नित्यं वने संनिहितोभव । एष नः परमः कामः पितामह नमोऽस्तु ते ॥५७॥
त्वंचेद्वससि देवेश वनेऽस्मिन्विश्वभावन । सर्वात्मना प्रपन्नानां वांछितमुत्तमं वरम् ॥
वरकोटिभिरन्याभिरलंनो दीयतां वरम् । सन्निधानेन तीर्थेभ्य इदं स्यात्प्रवरं महत् ॥

ब्रह्मोवाच ।

उत्तमं सर्वक्षेत्राणां पुण्यमेतद्भविष्यति । नित्यं पुष्पफलोपेता नित्यं सुस्थिरयौवनाः ॥
कामगाः कामरूपाश्च कामरूपफलप्रदाः । कामसंदर्शनाःपुंसां तपःसिद्ध्युज्ज्वलानृणाम्
श्रिया परमया युक्ता मत्प्रसादाद्भविष्यथ । एवं स वरदो ब्रह्मा अनुजग्राहपादपान् ॥
स्थित्वा वर्षसहस्रंतु पुष्करंप्राक्षिपद्भुवि । क्षितिर्निपतितातेन व्यकंपत रसातलम् ॥६३॥
विवशास्तत्यजुर्वेलां सागराः क्षुभितोर्मयः । शक्राशनिहतानीवव्याघ्रव्यालावृतानि च ॥
शिखराण्यप्यशीर्यंत पर्वतानां सहस्रशः । देवसिद्धविमानानि गंधर्वनगराणि च ॥६५॥
प्रचेलुर्बभ्रमुःपेतुर्विविशुश्च धरातलम् । कपोतमेघाःखात्पेतुः पुटसंवातदर्शिनः ॥६६ ॥
ज्योतिर्गणांश्छादयंतो बभूवुस्तीव्रभास्कराः । महता तस्य शब्देन मूकान्धबधिरीकृतम्
बभूव व्याकुलं सर्वं त्रैलोक्यं स चराचरम् । सुरासुराणांसर्वेषां शरीराणिमनांसि च ॥
अवसेदुश्चकिमितिकिमित्येतन्नजज्ञिरे । धैर्यमालंव्य सर्वेऽथ ब्रह्माणं चाप्यलोकयन् ॥
न च ते तमपश्यंतकुत्र ब्रह्मा गतोह्यभूत् । किमर्थं कंपिता भूमि र्निमित्तोत्पातदर्शनम् ॥
तावद्विष्णुर्गतस्तत्र यत्र देवा व्यवस्थिताः । प्रणिपत्य इदं वाक्यमुक्तवंतोदिवौकसः ॥

किमेतद्भगवन्ब्रूहि निमित्तोत्पातदर्शनम्। त्रैलोक्यं कंपितं येन संयुक्तं कालधर्मणा॥
जातकल्पावसानंतु भिन्नमर्यादसागरम्। चत्वारो दिग्गजाःकिंतु बभूवुरचलाश्चलाः॥
समावृता धरा कस्मात्सप्तसागरवारिणा। उत्पत्तिर्नास्ति शब्दस्य भगवन्निष्प्रयोजना
यादृशोवास्मृतः शब्दो न भूतो न भविष्यति। त्रैलोक्यमाकुलंयेन चक्रेरौद्रेण चोद्यता
शुभोऽशुभोवाशब्दोऽयंत्रैलोक्यस्यदिवौकसाम्। भगवन्यदिजानासिकिमेतत्कथयस्वनः
एवमुक्तोऽब्रवीद्विष्णुः परमेणानुभावितः। माभैष्टमरुतःसर्वे शृणुध्वंचात्र कारणम् ७७॥
निश्चयेनानुविज्ञाय वक्ष्याम्येषयथाविधम्। पद्महस्तोहिभगवान्ब्रह्मा लोकपितामहः॥
भूप्रदेशेपुण्यराशौ यज्ञं कर्त्तुं व्यवस्थितः। अवरोहे पर्वतानां वने चातीवशोभने॥७६॥
कमलंतस्य हस्तात्तु पतितं धरणीतले। तस्यशब्दोमहानेष येन यूयं प्रकंपिताः॥ ८०॥
तत्रासौ तरुवृंदेन पुष्पामोदाभिनंदितः। अनुगृह्याथभगवान्वनंतत्समृगांडजम्॥८१॥
जगतोऽनुग्रहार्थाय वासं तत्रान्वरोचयत्। पुष्करं नाम तत्तीर्थं क्षेत्रं वृषभमेव च॥८२॥
जनितं तद्भगवता लोकानां हितकारिणा। ब्रह्माणंतत्रवैगत्वा तोषयध्वं मया सह।८३।
आराध्यमानो भगवान्प्रदास्यतिवरान्वरान्। इत्युक्त्वाभगवान्विष्णुः सहतैर्दैवदानवैः॥
जगामतद्वनोद्देशं यत्रास्ते स तु कंजजः। प्रहृष्टास्तुष्टमनसः कोकिलालापलापिताः॥
पुष्पोच्चयोज्ज्वलं शस्तं विविशुर्ब्रह्मणोवनम्। संप्राप्तंसर्वदेवैस्तु वनंनंदनसंमितम् ८६॥
पद्मिनीमृगपुष्पाढ्यं सुद्रुढं शुशुभे तदा। प्रविश्याथ वनंदेवाः सर्वपुष्पोपशोभितम्॥
इहदेवोऽस्तीतिदेवा बभ्रमुश्चदिदृक्षवः। मृगयं तस्ततस्ते तु सर्वदेवाः सवासवाः॥८८॥
अद्भुतस्यवनस्यांतं न ते ददृशुराशुगाः। विचिन्वद्भिस्तदादेवं दैवैर्वायुर्विलोकितः॥८६॥
स तानुवाच ब्रह्माणं न द्रक्ष्यथ तपोविना। तदाखिन्नाविचिन्वंतस्तस्मिन्पर्वतरोधसि॥
दक्षिणेचोत्तरेचैव अंतरालेपुनःपुनः। वायूक्तं हृदये कृत्वा वायुस्तानब्रवीत्पुनः॥ ६१॥
त्रिविधो दर्शनोपायो विरिंचेरस्य सर्वदा। श्रद्धाज्ञानेन तपसा योगेन च निगद्यते।६२।
सकलंनिष्कलं चैव देवं पश्यंतियोगिनः। तपस्विनस्तु सकलं ज्ञानिनोनिष्कलं परम्॥
समुत्पन्ने तु विज्ञाने मंदश्रद्धो न पश्यति। भक्त्या परमयाक्षिप्रं ब्रह्मपश्यंतियोगिनः॥
द्रष्टव्योनिर्विकारोऽसौप्रधानपुरुषेश्वरः। कर्मणा मनसा वाचा नित्ययुक्ताःपितामहम्॥

तपश्चरतभद्रं वो ब्रह्माराधनतत्पराः । ब्राह्मींदीक्षां प्रपन्नानां भक्तानां च द्विजन्मनाम् ॥
सर्वकालंसजानाति दातव्यं दर्शनं मया । वायोस्तुवचनं श्रुत्वा हितमेतद्वेत्य च ॥९७॥
ब्रह्मेच्छाविष्टमतयो वाक्पतिं च ततोऽब्रुवन् । प्रज्ञानविबुधास्माकंब्राह्मींदीक्षांविधत्स्वनः
सदिदीक्षयिषुः क्षिप्रममरान्ब्रह्मदीक्षया । वेदोक्तेन विधानेन दीक्षयामासतान्गुरुः ॥९९॥
विनीतवेषाःप्रणता अंतेवासित्वमाययुः । ब्रह्मप्रसादंसंप्राप्ताः पौष्करंज्ञानमीरितम् १००।
यज्ञंचकारविधिनाधिषणोऽध्वर्युसत्तमः । पद्मं कृत्वा मृणालाढ्यं पद्मदीक्षाप्रयोगतः॥
अनुजग्राहदेवांस्तान्सुरेच्छाप्रेरितोमुनिः । तेभ्यो ददौ विवेकिभ्यः सवेदोक्तावधानवित्
दीक्षांवैविस्मयंत्यक्त्वा बृहस्पतिरुदारधीः । एकमग्निंचसंस्कृत्य महात्मानिदिवौकसाम्
प्रादादांगिरसंस्तुष्टोजाप्यंवेदोदितंतुयत् । त्रिसुपर्णंत्रिमधुच पावमानींचपावनीम् १०४।
स हि जाप्यादिकं सर्वमशिक्षयदुदारधीः । आपोहिष्ठेति यत्स्नानं ब्राह्मं तत्परिपठ्यते ।
पापघ्नं दुष्टशमनं पुष्टिश्रीबलवर्धनम् । सिद्धिदं कीर्तिदंचैव कलिकल्मषनाशनम् ॥१०६॥

तस्मात्सर्वप्रयत्नेन ब्राह्मं स्नानं समाचरेत् ।
कुर्वंतो मौनिनो दांता दीक्षिताःक्षपितेंद्रियाः ॥ १०७ ॥

सर्वे कमंडलुयुता मुक्तकक्षाक्षमालिनः । दंडिनश्चीरवस्त्राश्च जटाभिरतिशोभिताः ॥
स्नानाचारासनरताः प्रयत्नध्यानधारिणः । मनोब्रह्मणिसंयोज्य नियताहारकांक्षिणः ॥
अतिष्ठन्दर्शनालापसंगध्यानविवर्जिताः । एवं व्रतधराःसर्वे त्रिकालं स्नानकारिणः।११०
भक्त्या परमयायुक्ता विधिनापरमेण च । कालेन महताध्यानाद्देवज्ञानमनोगताः ॥१११॥
ब्रह्मध्यानाग्निनिर्दग्धा यदा शुद्धैकमानसाः । आविर्बभूवभगवान्सर्वेषां दृष्टिगोचरः ॥
तेजसाप्यायितास्तस्य बभूवुर्भ्रांतचेतसः । ततोऽवलंब्य ते धैर्यमिष्टं देवं यथाविधि ॥
षडंगवेदयोगेन हृष्टचित्तास्तुतत्पराः । शिरोगतैरंजलिभिः शिरोभिश्च महींगता ॥११४॥

तुष्टुवुः सृष्टिकर्त्तारं स्थितिकर्तारमीश्वरम् ।

देवाऊचुः ।

ब्रह्मणे ब्रह्मदेहाय ब्रह्मण्यायाजिताय च ॥ ११५ ॥

नमस्कुर्मः सुनियताः क्रतुवेदप्रदायिने । लोकानुकंपिने देव सृष्टिरूपाय वै नमः ॥११६॥

भक्तानुकंपिनेऽत्यर्थं वेदजाप्यस्तुताय च। बहुरूपस्वरूपाय रूपाणां शतधारिणे ।११७।
सावित्रिपतये देव गायत्रीपतयेनमः। पद्मासनाय पद्माय पद्मवक्त्राय ते नमः ॥११८॥
वरदाय वराहाय कूर्माय च मृगाय च। जटामुकुटयुक्ताय स्रुवस्रुचनिधारिणे ॥११९॥
मृगांकमृगधर्माय धर्मनेत्राय ते नमः। विश्वनाम्नेऽथविश्वाय विश्वेशाय नमोनमः॥
धर्मनेत्रत्राणमस्मादधिकं कर्तुमर्हसि। वाङ्मनःकायभावैस्त्वां प्रपन्नास्स्मः पितामह॥
एवंस्तुतस्तदादेवैर्ब्रह्मा ब्रह्मविदां वरः। प्रदास्यामि स्मृतोवाढममोघं दर्शनं हि वः ।१२२।
ब्रुवंतुवांछितंपुत्राः प्रदास्यामि वरान्वरान्। एवमुक्ता भगवतादेवा वचनमब्रुवन् ॥१२३॥
एषएवाद्य भगवन्सु पर्याप्तोमहान्वरः। जनितोनः सुशब्दोऽयंकमलंक्षिपतात्वया ।१२४।
किमर्थंकंपिताभूमिर्लोकाश्चाकुलिताःकृताः। नैतन्निरर्थकं देव उच्यतामत्रकारणम् ।१२५।

ब्रह्मोवाच।

युष्मद्धितार्थमेतद्वै पद्मंविनिहितंमया। देवतानां च रक्षार्थं श्रूयतामत्रकारणम् ॥१२६॥
असुरोवज्रनाभोऽयं बालजीवापहारकः। अवस्थितस्त्ववष्टभ्यरसातलतलाश्रयम् ॥१२७॥
युष्मदागमनं ज्ञात्वा तपस्थान्निहितायुधान्। हंतुकामोदुराचारःसेंद्रानपि दिवौकसः॥
घातःकमलपातेन मयातस्यविनिर्मितः। स राज्येश्वर्यदर्पिष्ठस्तेनासौनिहतोमया।१२९।
लोकेऽस्मिन्समये भक्ताब्राह्मणा वेदपारगाः। मैव ते दुर्गतिं यांतुलभंतांसुगतिंपुनः।१३०।
देवानां दानवानांच मनुष्योरगरक्षसाम्। भूतग्रामस्यसर्वस्य समोऽस्मित्रिदिवौकसः॥
युष्मद्धितार्थंपापोऽसौमयामंत्रेणघातितः। प्राप्तःपुण्यकृतांल्लोकान्कमलस्यास्यदर्शनात्॥
यन्मयापद्ममुक्तंतु तेनेदंपुष्करं भुवि। ख्यातंभविष्यते तीर्थं पावनं पुण्यदंमहत् ॥१३३॥
पृथिव्यां सर्वजंतूनाम्पुण्यदं परिपठ्यते। कृतोह्यनुग्रहोदेवा भक्तानां भक्तिमिच्छताम्॥
वनेऽस्मिन्नित्यवासेन वृक्षैरभ्यर्थितेनच। महाकालोवनेऽत्रागादागतस्य ममानघाः १३५
तपस्यतांच भवतांमहज्ज्ञानं प्रदर्शितम्। कुरुध्वं हृदयेदेवाः स्वार्थंचैव परार्थकम् ॥१३६॥
भवद्भिर्दर्शनीयं तु नानारूपधरैर्भुवि। द्विषन्वैज्ञानिनंविप्रं पापेनैवार्दितोनरः ॥ १३७॥
नविमुच्येत पापेन जन्मकोटिशतैरपि। वेदांगपारगं विप्रं नहन्यान्नचदूषयेत् ॥१३८॥
एकस्मिन्निहते यस्मात्कोटिर्भवतिघातिता। एकंवेदांतगं विप्रंभोजयेच्छ्रद्धयान्वितः॥

तस्यभुक्ताभवेत्कोटिर्विप्राणां नात्रसंशयः । यःपात्रपूरणीं भिक्षांयतीनांतुप्रयच्छति ॥
विमुक्तःसर्वपापेभ्योनासौदुर्गतिमाप्नुयात् । यथाहंसर्वदेवानांज्येष्ठःश्रेष्ठः पितामहः १४१
तथाज्ञानीसदापूज्यो निर्ममो निष्परिग्रहः । संसारबंधमोक्षार्थं ब्रह्मगुप्तमिदं व्रतम् ।१४२।
मयाप्रणीतं विप्राणामपुनर्भवकारणम् । अग्निहोत्रमुपादाय यस्त्यजेदजितेंद्रियः ॥१४३॥
रौरवंसप्रयात्याशु प्रणीतोयमकिंकरैः । लोकयात्रावितंडश्चक्षुद्रं कर्मकरोति यः ॥१४४॥
सरागचित्तः शृंगारी नारीजनधनप्रियः । एकभोजीक्षुमीष्टाशी कृषिवाणिज्यसेवकः ॥
अवेदो वेदनिन्दीच परभार्यां च सेवते । इत्यादिदोषदुष्टो यस्तस्यसंभाषणादपि ॥१४६॥
नरो नरकगामीस्याद्यश्चसद्व्रतदूषकः । असंतुष्टंभिन्नचित्तं दुर्मतिंपापकारिणम् ॥१४७॥
नस्पृशेदंगसंगेनस्पृष्ट्वास्नानेनशुद्ध्यति । एवमुक्त्वा स भगवान्ब्रह्मा तैरमरैःसह ॥१४८॥
क्षेत्रंनिवेशया मासयथावत्कथयामिते । उत्तरे चंद्रनद्यास्तु प्राची यावत्सरस्वती ।१४६।
पूर्वंतुनंदनात्कृत्स्नंयावत्कल्पंसपुष्करम् । वेदीह्येषाकृतायज्ञे ब्रह्मणालोककारिणा ॥१५०
ज्येष्ठंतुप्रथमंज्ञेयंतीर्थं त्रैलोक्यपावनम् । ख्यातंतद्ब्रह्मदैवत्यं मध्यमं वैष्णवं तथा ।१५१।
कनिष्ठं रुद्रदैवत्यं ब्रह्मा पूर्वमकारयत् । आद्यमेतत्परं क्षेत्रं गुह्यं वेदेषु पठ्यते ॥ १५२ ॥
अरण्यं पुष्कराख्यं तु ब्रह्मासन्निहितःप्रभुः । अनुग्रहोभूमिभागेकृतोवैब्रह्मणास्वयम् ।१५३॥
अनुग्रहार्थं विप्राणां सर्वेषांभूमिचारिणाम् । सुवर्णवज्रपर्यंता वेदिकांका महीकृता ॥
विचित्रकुट्टिमारत्नैः कारितासर्वशोभना । रमतेतत्र भगवान्ब्रह्मालोकपितामहः ॥१५५॥
विष्णुरुद्रौतथादेवौवसवोऽप्यश्विनावपि । मरुतश्चमहेंद्रेण रमंतेचदिवौकसः ॥ १५६ ॥
एतत्तेतथ्यमाख्यातंलोकानुग्रहकारणम् । संहितानुक्रमेणात्रमंत्रैश्चविधिपूर्वकम् ॥१५७॥
वेदान्पठंतियेविप्रा गुरुशुश्रूषणेरताः । वसंति ब्रह्मसामीप्येसर्वेतेनानुभाविताः ॥१५८॥

भीष्म उवाच ।

भगवन्केनविधिनाअरण्येपुष्करेनरैः । ब्रह्मलोकमभीप्सद्भिर्वस्तव्यंक्षेत्रवासिभिः ॥१५६॥
किंमनुष्यैस्तस्त्रीभिस्तवर्णाश्रमान्वितैः । वसद्भिः किमनुष्ठेयमेतत्सर्वं ब्रवीहिमे ॥१६० ॥

पुलस्त्य उवाच ।

नरैःस्त्रीभिश्चवस्तव्यंवर्णाश्रमनिवासिभिः । स्वधर्माचारनिरतैर्दंभमोहविवर्जितैः ।१६१।

कर्मणामनसा वाचाब्रह्मभक्तैर्जितेंद्रियैः । अनसूयुभिरक्षुद्रैः सर्वभूतहितेरतैः ॥१६२॥

भीष्म उवाच ।

किंकुर्वाणोनरःकर्मब्रह्मभक्तस्त्विहोच्यते । कीदृशाब्रह्मभक्ताश्चस्मृतान्नृणांवदस्वमे ।१६३।

पुलस्त्य उवाच ।

त्रिविधाभक्तिरुद्दिष्टामनोवाक्कायसंभवा । लौकिकीवैदिकीचापिभवेदाध्यात्मिकीतथा ॥
ध्यानधारणमावुद्ध्यावेदार्थस्मरणेहियत् । ब्रह्मप्रीतिकरीचैषामानसी भक्तिरुच्यते ।१६५।
मंत्रवेदनमस्कारैरग्निश्राद्धादिचिंतनैः । जाप्यैश्चावश्यकैश्चैववाचिकीभक्तिरिष्यते॥१६६॥
व्रतोपवासनियतैश्चित्तेंद्रियनिरोधिभिः । कृच्छ्रैःसांतपनैश्चान्यैस्तथाचांद्रायणदिभिः ॥
ब्रह्मकृच्छ्रोपवासैश्चतथाचान्यैःशुभव्रतैः । कायिकीभक्तिराख्यातात्रिविधातुद्विजन्मनाम्
गोघृतक्षीरदधिभिःरत्नदीपकुशोदकैः । गंधैर्माल्यैश्चविविधैर्धातुभिश्चोपपादितैः ॥१६९॥
घृतगुग्गुलुधूपैश्चकृष्णागरुसुगंधिभिः । भूषणैर्हैमरत्नाढ्यैश्चित्राभिः स्रग्भिरेवच ॥१७०
नृत्यवादित्रगीतैश्चसर्वरत्नोपहारकैः । भक्ष्यभोज्यान्नपानैश्चयापूजाक्रियतेनरैः ॥१७१॥
पितामहंसमुद्दिश्यभक्तिस्सालौकिकीमता । वेदमंत्रहविर्योगैर्भक्तिर्यावैदिकीमता॥१७२॥
दर्शेवापौर्णमास्यांवाकर्तव्यमग्निहोत्रकम् । प्रशस्तंदक्षिणादानंपुरोडाशंचरुक्रिया ।१७३।
इष्टिर्धृतिःसोमपानांयज्ञीयंकर्मसर्वशः । ऋग्यजुःसामजाप्यानिसंहिताध्ययनानिच ।१७४।
क्रियंतेविधिमुद्दिश्यसाभक्तिर्वैदिकीष्यते । अग्निभूम्यनिलाकाशांबुनिशाकरभास्करम् ॥
समुद्दिश्यकृतंकर्मतत्सर्वंब्रह्मदैवतम् । आध्यात्मिकीतुद्विविधाब्रह्मभक्तिःस्थितानृप ।१७६।
संख्याख्यायोगजाचान्याविभागंतत्रमेश्रृणु । चतुर्विंशतितत्त्वानिप्रधानादीनिसंख्यया ॥
अचेतनानिभोग्यानिपुरुषःपञ्चविंशकः । चेतनःपुरुषोभोक्ता न कर्त्ता तस्यकर्मणः ।१७८।
आत्मानित्योऽव्ययश्चैवअधिष्ठाताप्रयोजकः । अव्यक्तःपुरुषोनित्यःकारणंचपितामहः ॥
तत्त्वसर्गोभावसर्गोभूतसर्गश्चतत्त्वतः । संख्ययापरिसंख्यायप्रधानंचगुणात्मकम् ॥१८०
साधर्म्यमानमैश्वर्यंप्रधानंचविधर्मिच । कारणत्वंचब्रह्मत्वंकाम्यत्वमिदमुच्यते ॥ १८१ ॥
प्रयोज्यत्वंप्रधानस्यवैधर्म्यमिदमुच्यते । सर्वत्रकर्तृस्याद्ब्रह्मपुरुषस्याप्यकर्तृता॥१८२॥
चेतनत्वं प्रधाने च साधर्म्यमिदमुच्यते । तत्त्वांतरं च तत्वानांकर्मकारणमेवच ॥१८३॥

प्रयोजनंचवैयोज्यमैश्वर्यंतत्त्वसंख्यया। संख्यास्तीत्युच्यतेप्राज्ञैर्विनिश्चित्यार्थचिंतकः॥
इतितत्त्वस्यलंभारंतत्वसंख्याचतत्त्वतः। ब्रह्मतत्त्वाधिकंचापिश्रुत्वातत्त्वंविदुर्बुधाः १८५
सांख्यकृद्भक्तिरेषाचसद्भिराध्यात्मिकीकृता। योगजामपिभक्तानांशृणुभक्तिंपितामहे १८६
प्राणायामपरोनित्यंध्यानवान्नियतेन्द्रियः। भैक्ष्यभक्षीव्रतीचापिसर्वंप्रत्याहृतेंद्रियः।१८७।
धारणं हृदये कुर्याद्ध्यायमानः प्रजेश्वरम्। हृत्पद्मकर्णिकासीनंरक्तवक्त्रंसुलोचनम्॥
परितोद्योतितमुखंब्रह्मसूत्रकटीतटम्। चतुर्वक्त्रंचतुर्बाहुंवरदाभयहस्तकम्॥ १८९॥
योगजामानसीसिद्धिर्ब्रह्मभक्तिःपरास्मृता। यएवंभक्तिमान्देवेब्रह्मभक्तः सउच्यते।१९०।
वृत्तिंचशृणुराजेंद्रयास्मृताक्षेत्रवासिनाम्। स्वयंदेवेनविप्राणांविष्ण्वादीनांसमागमे १९१
कथिताविस्तरात्पूर्वंसर्वेषांतत्रसन्निधौ।ःनिर्ममानिरहंकारानिःसंगानिष्परिग्रहाः।१९२।
बंधुवर्गेचनिःस्नेहास्समलोष्टाश्मकांचनाः। भूतानांकर्मभिर्नित्यैर्विविधैरभयप्रदाः।१९३।
प्राणायामपरानित्यंपरध्यानपरायणाः। याजिनःशुचयोनित्यंयतिधर्मपरायणाः॥ १९४॥
सांख्ययोगविधिज्ञाश्चधर्मज्ञाश्छिन्नसंशयाः। यजंतेविधिनायेनयेविप्राः क्षेत्रवासिनः॥
अरण्येपौष्करेतेषांमृतानांसत्फलंशृणु। व्रजंतितेसुदुष्प्रापंब्रह्मसायुज्यमक्षयम्॥१९६॥
यत्प्राप्यनपुनर्जन्मलभन्तेमृत्युदायकम्। पुनरावर्तनंहित्वाब्राह्मींविद्यांसमास्थितः॥१९७॥
पुनरावृत्तिरन्येषांप्रपंचाश्रमवासिनाम्। गार्हस्थ्यविधिमाश्रित्यषट्कर्मनिरतःसदा १९८।
जुहोतिविधिनासम्यङ्मन्त्रैर्यज्ञेनिमंत्रितः। अधिकंफलमाप्नोतिसर्वदुःखविवर्जितः।१९९।
सर्वलोकेषुचाप्यस्यगतिर्नप्रतिहन्यते। दिव्येनैश्वर्ययोगेन स्वारूढःसपरिग्रहः॥ २००॥
बालसूर्यप्रकाशेन विमानेन सुवर्चसा। वृतः स्त्रीणांसहस्रैस्तुस्वच्छंदगमनालयः॥२०१॥
विचरत्यानिवार्येणसर्वलोकान्यदृच्छया। स्पृहणीयतमः पुंसांसर्वधर्मोत्तमोधनी।२०२॥
स्वर्गच्युतः प्रजायेत कुले महति रूपवान्। धर्मज्ञो धर्मभक्तश्च सर्वविद्यार्थपारगः॥
तथैवब्रह्मचर्येण गुरुशुश्रूषणेनच। वेदाध्यनसंयुक्तो भैक्ष्यवृत्तिर्जितेन्द्रियः॥ २०४॥
नित्यंसत्यव्रतेयुक्तः स्वधर्मेष्वप्रमादवान्। सर्वकामसमृद्धेनसर्वकामावलंबिना॥२०५॥
सूर्येणैवद्वितीयेनविमानेनानिवारितः। गुह्यका नाम ब्रह्माख्यगणाः परमसंमताः॥२०६॥
अप्रमेयबलैश्वर्या देवदानवपूजिताः। तेषां स समतां यातितुल्यैश्वर्यसमन्वितः॥२०७॥

देवदानवमर्त्येषु भवत्यनियतायुधः । वर्षकोटिसहस्राणि वर्षकोटिशतानि च ॥२०८॥
एवमैश्वर्यसंयुक्तो विष्णुलोकेमहीयते । उषित्वासौविभूत्यैवंयदाप्रच्यवतेपुनः ॥२०९॥
विष्णुलोकात्स्वकृत्येन स्वर्गस्थानेषु जायते ॥२१०॥
पुष्करारण्यमासाद्यब्रह्मचर्याश्रमेस्थितः । अभ्यासेनतुवेदानांवसतेम्रियतेऽपिवा ॥२११॥
मृतोऽसौयातिदिव्येनविमानेनस्वतेजसा । पूर्णचंद्रप्रकाशेनशशिवत्प्रियदर्शनः ॥२१२॥
रुद्रलोकं समासाद्यगुह्यकैः सहमोदते । ऐश्वर्यं महदाप्नोति सर्वस्यजगतः प्रभुः ॥२१३॥
भुक्त्वा युगसहस्राणि रुद्रलोकेमहीयते । प्रच्युतस्तुपुनस्तस्माद्रुद्रलोकात्क्रमेणतु॥२१४॥
नित्यंप्रमुदितस्तत्रभुक्त्वा सुखमनायम् । द्विजानां सदने दिव्ये कुलेमहतिजायते ॥२१५॥
मानुषेषुसधर्म्मात्मासुरूपोवाक्पतिर्भवेत् । स्पृहणीयवपुःस्त्रीणाम्महाभोगपतिर्बली २१६
वानप्रस्थसमाचारोग्राम्योपाधिविवर्जितः । सर्वलोकेषुचाप्यस्यगतिर्नप्रतिहन्यते ।२१७।
शीर्णपर्णफलाहारःपुष्पमूलांबुभोजनः । कपोतेनाश्मकुट्टेन दंतोलूखलिकेन च ॥२१८॥
वृत्त्युपायेनजीवेतचीरवल्कलवाससा । जटीत्रिषवणस्नायीत्यक्तदोषस्तुदंडवान् ॥२१९॥
कृच्छ्रव्रतपरोयस्तुश्वपचोयदिवापरः । जलशायीपंचतपावर्षास्वभ्रावगाहकः ॥२२०॥
कीटकंटकपाषाणभूम्यांतुशयनंतथा । स्थानवीरासनरतः संविभागीदृढव्रतः ॥ २२१ ॥
अरण्यौषधिभोक्ताचसर्वभूताभयप्रदः । नित्यंधर्मार्जनरतोजितक्रोधोजितेंद्रियः ॥२२२॥
ब्रह्मभक्तःक्षेत्रवासीपुष्करेवसतेमुनिः । सर्वसंगपरित्यागीस्वारामोविगतस्पृहः ॥२२३॥
यश्चात्रवसतेभीष्मशृणुतस्यापियागतिः । तरुणार्कप्रकाशेनवेदिकास्तंभशोभिना ।२२४।
ब्रह्मभक्तोविमानेनयातिकामप्रचारिणा । विराजमानोनभसिद्वितीयइवचंद्रमाः ॥ २२५ ॥
गीतवादित्रनृत्यज्ञैर्गंधर्वाप्सरसांगणैः । अप्सरोभिःसमायुक्तोवर्षकोटिशतान्यसौ २२६
यस्यकस्यापिदेवस्यलोकंयात्यनिवारितः । ब्रह्मणोऽनुग्रहेणैव तत्र तत्र विराजते ॥२२७॥
ब्रह्मलोकाच्च्युतश्चापिविष्णुलोकंसगच्छति । विष्णुलोकात्परिभ्रष्टोरुद्रलोकंसगच्छति
तस्मादपिच्युतः स्थानाद्द्वीपेषुसहिजायते । स्वर्गेषुचतथान्येषुभोगान्भुक्त्वायथेप्सितान्
भुक्त्वैश्वर्यंततस्तेषुपुनर्मर्त्येषुजायते । राजावाराजपुत्रोवाजायतेधनवान्सुखी ॥२३०॥
सुरूपःसुभगःकांतःकीर्तिमान्भक्तिभावितः । ब्राह्मणाःक्षत्रियावैश्याःशूद्रावाक्षेत्रवासिनः ।

स्वधर्मनिरताराजन्सुवृत्ताश्चिरजीविनः । सर्वात्मनाब्रह्मभक्ताभूतानुग्रहकारिणः ॥२३२॥
पुष्करेतुमहाक्षेत्रेयेवसंतिमुमुक्षवः । मृतास्ते ब्रह्मभवनंविमानैर्यान्तिशोभनैः ॥ २३३ ॥
अप्सरोगणसंघुष्टैःकामगैःकामरूपिभिः । अथवासंप्रदीप्ताग्नौस्वशरीरंजुहोतियः ॥२३४॥
ब्रह्माध्यायीमहासत्वःसब्रह्मभवनंव्रजेत् । ब्रह्मलोकोऽक्षयस्तस्य शाश्वतो विभवैःसह॥

सर्वलोकोत्तमो रम्यो भवतीष्टार्थसाधकः ।
पुष्करे तु महापुण्ये प्राणान्येसलिलेऽत्यजन् ॥ २३६ ॥

तेषामप्यक्षयोभीष्मब्रह्मलोकोमहात्मनाम् । साक्षात्पश्यंति ते देवंसर्वदुःखविनाशनम् ।
सर्वामरयुतं देवं रुद्रविष्णुगणैर्युतम् । अनाशकेमृताश्शूद्राः पुष्करे तु वने नराः ॥२३८॥
हंसयुक्तैस्ततोयांति विमानैरर्कसप्रभैः । नानरत्नसुवर्णाढ्यैर्दूढैर्गन्धाधिवासितैः ।२३६।
अनौपम्यगुणैरन्यैरप्सरोगीतनादितैः । पताकाध्वजविन्यस्तैर्नानाघण्टानिनादितैः॥
बह्वाश्चर्यसमोपेतैः क्रीडाविज्ञानशालिभिः । सुप्रभैर्गुणसंपन्नैर्मयूरवरवाहिभिः ॥२४१॥
ब्रह्मलोकेनराधाधीरारमंतेऽनाशकेमृताः। तत्रोषित्वाचिरंकालंभुक्त्वाभोगान्यथेप्सितान्।
धनीविप्रकुलेभोगी जायतेमर्त्यमागतः । कारीषीं साधयेद्यस्तुपुष्करेतु वनेनरः ॥२४३॥
सर्वलोकान्परित्यज्य ब्रह्मलोकंसगच्छति । ब्रह्मलोकेवसेत्तावद्यावत्कल्पक्षयो भवेत् ॥
नवैपश्यतिमर्त्यंहिक्लिश्यमानंस्वकर्मभिः । गतिस्तस्याप्रतिहता तिर्यगूर्ध्वमधस्तथा ॥
स पूज्यः सर्वलोकेषु यशोविस्तारयन्वशी । सदाचारविधिप्रज्ञः सर्वेन्द्रियमनोहरः॥
नृत्यवादित्रगीतज्ञःसुभगः प्रियदर्शनः । नित्यमम्लानकुसुमो दिव्याभरणभूषितः ॥२४७॥
नीलोत्पलदलश्यामो नीलकुञ्चितमूर्द्धजः । अजघन्याः सुमध्याश्च सर्वसौभाग्यपूरिताः।
सर्वैश्वर्यगुणोपेता यौवनेनातिगर्विताः । स्त्रियः सेवन्ति तत्रस्थाः शयनेरमयंतिच ।२४६।
वीणावेणुनिनादैश्चसुप्तःसंप्रतिबुध्यते । महोत्सवसुखंभुंक्तेदुष्प्राप्यमकृतात्मभिः ।२५०॥

प्रसादाद्देवदेवस्य ब्रह्मणः शुभकारिणः ।

भीष्म उवाच ।

आचाराः परमा धर्माः क्षेत्रधर्मपरायणाः ॥ २५१ ॥

स्वधर्माचारनिरता जितक्रोधाजितेंद्रियाः । ब्रह्मलोकं व्रजंतीतिनैतच्चित्रं मतं मम ।२५२

असंशयंचगच्छंति लोकानन्यानपिद्विजाः । विना पद्मोपवासेन तथैवनियमेन च॥२५३॥
स्त्रियोम्लेच्छाश्च शूद्राश्चपक्षिणः पशवोमृगाः। मूकाजडान्धवधिरास्तपोनियमवर्जिताः।
तेषां वद गतिं विप्र पुष्करे ये त्ववस्थिताः ।

पुलस्त्य उवाच ।

स्त्रियोम्लेच्छाश्च शूद्राश्च पशवः पक्षिणोमृगाः ॥२५५॥
पुष्करे तु मृता भीष्म ब्रह्मलोकंव्रजंतिते । शरीरैर्दिव्यरूपैस्तु विमानैरविसप्रभः ॥२५६ ॥
दिव्यव्यूहसमायुक्तैः सुवर्णवरकेतनैः । सुवर्णवज्रसोपानमणिस्तंभविभूषितैः ॥ २५७ ॥
सर्वकामोपभोगाढ्यै:कामगैःकामरूपिभिः।नानारसाढ्यंगच्छंतिस्त्रीसहस्रसमाकुलाः।
ब्रह्मलोकंमहात्मानोलोकान्यान्यथेप्सितान्।ब्रह्मलोकाच्च्युताश्चापिक्रमाद्द्वीपेषुयांतिते
कुलेमहति विस्तीर्णे धनीभवतिसद्विजः । तिर्यग्योनिगतायेतु सर्पकीटपिपीलिकाः ॥
स्थलजाजलजाश्चैव स्वेदांडोद्भिज्जरायुजाः । सकामावाप्यकामावा पुष्करेतुवनेमृताः ।
सूर्यप्रभविमानस्था ब्रह्मलोकं प्रयांतिते । कलौयुगे महाघोरे प्रजाः पापसमीरिताः ॥
नान्येनास्मिन्नुपायेन धर्मः स्वर्गश्चलभ्यते। वसंति पुष्करे ये तु ब्रह्मार्चनरतानराः ॥
कलौयुगेकृतार्थास्ते क्लिश्यंत्यन्येनिरर्थकाः । रात्रौकरोति यत्पापंनरः पंचभिरिंद्रियैः ॥
कर्मणामनसावाचा कामक्रोधवशानुगः । प्रातः सवनमासाद्य पुष्करेतु पितामहम् ॥
अभिगम्यशुचिर्भूत्वा तस्मात्पापात्प्रमुच्यते । अर्कस्योदयमारभ्य यावद्दर्शनमूर्ध्वगम् ॥
मानसाख्येप्रसंचिंत्य ब्रह्मयोगे हरेदघम् । दृष्ट्वा विरिंचिं मध्याह्ने नरः पापात्प्रमुच्यते ॥
मध्याह्नास्तमयान्तं यदिंद्रियैः पापमाचरेत् । पितामहस्य संध्यायां दर्शनादेवमुच्यते ॥
शब्दादीन्विषयान्सर्वान्भुंजानोऽपिसकामतः । यःपुष्करेब्रह्मभक्तोनिवसेत्तपसिस्थितः ॥
शीर्णपर्णाशनोपायः फलमूलाम्बुभोजनः । वृक्षमूलेऽश्मकूटे वा सर्वदा तपते तपः।२७०।
पुष्करारण्यमध्यस्थोमिष्टान्नास्वादभोजनः । त्रिकालमपिभुंजानो वायुभक्षसमोमतः ॥
वसंतिपुष्करेयेतुनराः सुकृतकर्मिणः । ते लभंते महाभोगान्क्षेत्रस्यास्य प्रभावतः ॥२७२ ॥
यथामहोदधेस्तुल्योनचान्योऽस्तिजलाशयः । तथा वै पुष्करस्यापि समं तीर्थं न विद्यते ॥
देवाधिकोयथाब्रह्मायथानान्योऽधिकोभवेत् । पुष्करारण्यसदृशंतीर्थंनास्त्यधिकंगुणैः ॥

अथ तेऽन्यान्प्रवक्ष्यामि येऽस्मिन्क्षेत्रे व्यवस्थिताः ॥ २७५ ॥
विष्णुना सहिताः सर्व इंद्राद्याश्चदिवौकसः । गजवक्त्रः कुमारश्चरैवंतः सदिवाकरः ॥
शिवदूती तथादेवी कन्या क्षेमंकरीवरा । स्थिताहितार्थं जगतो ब्रह्मणो निलये सदा ॥
अलंतपोभिर्नियमैः सुक्रियार्चनकारिणाम् । व्रतोपवासकर्माणि कृत्वान्त्यत्र महान्त्यपि ।
ज्येष्ठेतुपुष्करारण्ये यस्तिष्ठति निरुद्यमः । लभतेसर्वकामित्वं योऽत्रैवास्तेद्विजः सदा ॥
पितामहसमं याति स्थानं परममव्ययम् । कृतेद्वादशभिर्वर्षैस्त्रेतायांहायनेन तु ॥ १७९ ॥
मासेन द्वापरे भीष्म अहोरात्रेण तत्कलौ ॥ २८० ॥
फलंसंप्राप्यतेलोकैः क्षेत्रेऽस्मिंस्तीर्थवासिभिः । इत्येवं देवदेवेन पुरोक्तं ब्रह्मणामम ॥
नातःपरतरं किंचित्क्षेत्रमस्तीहभूतले । तस्मात्सर्वप्रयत्नेनारण्यमेतत्समाश्रयेत् ॥२८२॥
गृहस्थोब्रह्मचारीच वानप्रस्थोऽथभिक्षुकः । यथोक्तकारिणः सर्वेगच्छंतिपरमांगतिम् ॥
एकस्मिन्नाश्रमेधर्मं योऽनुतिष्ठेद्यथाविधि । अकामद्वेषसंयुक्तः स परत्रमहीयते ॥२८४॥
चतुष्पदाहिनिःश्रेणीब्रह्मणैषाप्रतिष्ठिता । एतामाश्रित्यनिःश्रेणीं ब्रह्मलोके महीयते ।२८५।
आयुषोऽपिचतुर्भागं ब्रह्मचार्यनसूयकः । गुरौवा गुरुपुत्रेवावसेद्धर्मार्थकोविदः ॥२८६॥
कर्मातिरेकेणगुरोरध्येतव्यं बुभूषता । दक्षिणानां प्रदायीस्यादाहूतोगुरुमाश्रयेत् ॥२८७॥
जघन्यशायीपूर्वंस्यादुत्थायीगुरुवेश्मनि । यच्च शिष्येण कर्त्तव्यं कार्यमासेवनादिकम् ॥
कृतमित्येवतत्सर्वंकृत्वातिष्ठेत्तुपार्श्वतः । किंकरःसर्वकारीच सर्वकर्मसुकोविदः ॥२८९॥
शुचिर्दक्षोगुणोपेतोब्रूयादिष्टमथोत्तरम् । चक्षुषागुरुमव्यग्रो निरीक्षेत जितेंद्रियः ॥ २९०॥
नाभुक्तवतिचाश्नीयादपीतवतिनोपिवेत् । नतिष्ठतितथासीत न सुप्तेनैवसंविशेत् ॥२९१॥
उत्तानाभ्यां च पाणिभ्यां पादावस्य मृदु स्पृशेत् ।
दक्षिणं दक्षिणेनैव सव्यं सव्येन पीडयेत् ॥ २९२ ॥
अभिवाद्यगुरुंब्रूयादभिधांस्वांब्रुवन्निति । इदं करिष्ये भगवन्निदं चापिमयाकृतम् ॥
इति सर्वं च विज्ञाप्य निवेद्यगुरवेधनम् । कुर्यात्कृतं च तत्सर्वमाख्येयं गुरवेपुनः ॥
यांस्तुगंधान्रसान्वापि ब्रह्मचारी न सेवते । सेवेततान्समावृत्य इतिधर्मेषुनिश्चयः ॥
येकेचिद्विस्तरेणोक्ता नियमा ब्रह्मचारिणः । तान्सर्वाननुगृह्णीयाद्भक्तशिष्यश्चवै गुरोः ॥

स एवं गुरवे प्रीतिमुपहृत्य यथाबलम् । अग्राम्येष्वाश्रमेष्वेवं शिष्यो वर्तेत कर्मणा ॥
वेदंवेदौ तथा वेदान्वेदार्थांश्चतथाद्विजः । भिक्षाभुगप्यधःशायीसमधीत्यगुरोर्मुखात् ॥
वेदव्रतोपयोगी च चतुर्थांशेन योगतः । गुरवे दक्षिणांदत्वा समावर्तेद्यथाविधि ॥
धर्मान्वितैर्युतोदारैरग्नीनावाह्य पूजयेत् । द्वितीयमायुषोभागं गृहमेधी समाचरेत् ।३०० ।
गृहस्थवृत्तयःपूर्वं चतस्रोमुनिभिः कृताः । कुशूलधान्याप्रथमा कुंभीधान्या द्वितीयका ।
अश्वस्तनी तृतीयोक्ता कापोत्यथ चतुर्थिका । तासांपरापराश्रेष्ठा धर्मतोलोकजित्तमा ॥
षट्कर्मवर्त्तकस्त्वेकस्त्रिभिरन्यःप्रवर्तते । द्वाभ्यांचैव चतुर्थस्तु द्विजःसब्रह्मणिस्थितः ।
गृहमेधिव्रतादन्यन्महत्तीर्थं न चक्षते । नात्मार्थे पाचयेदन्नं न वृथाघातयेत्पशुम् ॥
प्राणी वा यदि वा प्राणी संस्काराद्यज्ञ मर्हति । न दिवा प्रस्वपेज्जातुनपूर्वापररात्रयोः ।
न भुंजीतांतराकाले नानृतं तु वदेदिह । नास्यानश्नन्वसेद्विप्रो गृहेकश्चिदपूजितः ॥
तथास्या तिथयः पूज्याहव्यकव्यवहाःस्मृताः । वेदविद्यव्रतस्नाताः श्रोत्रियावेदपारगाः
स्वकर्मजीविनोदांताःक्रियावंतस्तपस्विनः । तेषां हव्यं च कव्यं चाप्यर्हणार्थंविधीयते
नश्वरैस्संप्रयातस्य स्वधर्मापगतस्य च । अपविद्धाग्निहोत्रस्य गुरोर्वालीककारिणः ।
असत्याभिनिवेशस्यनाधिकारोऽस्तिकव्ययोः । संविभागोऽत्रभूतानांसर्वेषामेवशिष्यते
तथैवापचमानेभ्यः प्रदेयंगृहमेधिना । विघसाशी भवेन्नित्यं नित्यं चामृतभोजनः ॥
अमृतं यज्ञशेषः स्याद्भोजनं हविषासमम् । संभुक्तशेषं योऽश्नातितमाहुर्विघसाशिनम् ॥
स्वदारनिरतोदांतोदक्षोऽत्यर्थंजितेन्द्रियः । ऋत्विक्पुरोहिताचार्यमातुलातिथिसंहृतः ॥
वृद्धवालातुरैर्वैद्यैर्ज्ञातिसंबंधिबांधवैः । मात्रा पित्रा च जामात्रा भ्रात्रापुत्रेण भार्यया ॥
दुहित्रा दासवर्गेण विवादं न समाचरेत् । एतान्विमुच्यसंवादान्सर्वपापैःप्रमुच्यते ॥
एतैर्जितैस्तु जयति सर्वलोकान्नसंशयः । आचार्यो ब्रह्मलोकेशः प्राजापत्यप्रभुः पिता ॥
अतिथिःसर्वलोकेश ऋत्विग्वेदाश्रयः प्रभुः । जामाताप्सरसांलोकेज्ञातयोवैश्वदेविकाः ।
संबंधिबांधवादिक्षुपृथिव्यां मातृमातुलौ । वृद्धवालातुराश्चैव आकाशेप्रभविष्णवः ॥
पुरोधाऋषिलोकेशःसंश्रितास्साध्यलोकपाः । अश्विलोकपतिर्वैद्योभ्राताातुवसुलोकपः ।
चन्द्रलोकेश्वरीभार्या दुहिताप्सरसांगृहे । भ्राता ज्येष्ठः समःपित्रा भार्यापुत्रःस्वकातनुः

कायस्थादासवर्गाश्च दुहिताकृपणंपरम् । तस्मादेतैरधिक्षिप्तः सहेन्नित्यमसंज्वरः ॥
गृहधर्मरतोविद्वान्धर्मनिष्ठो जितक्रमः । नारभेद्बहुकार्याणि धर्मवान्किंचिदारभेत् ॥
गृहस्थवृत्तयस्तिस्रस्तासांनिःश्रेयसंपरम् । परस्परं तथैवाहुश्चातुराश्रम्यमेव च ॥
येचोक्तानियमास्तेषां सर्वंकार्यंबुभूषुणा । कुंभधान्यैरुञ्छशिलैःकापोतींवृत्तिमाश्रिताः ।
यस्मिंश्च तव संत्यर्थास्तद्राष्ट्रमभिवर्धते । पूर्वापरान्दशपरान्पुनाति च पितामहान् ॥
गृहस्थवृत्तिमप्येतां वर्तते यो गतव्यथः । स चक्रधरलोकानां समानाप्नुयाद्गतिम् ।
जितेन्द्रियाणामथवा गतिरेषाविधीयते । स्वर्गलोको गृहस्थानां प्रतिष्ठानियतात्मनाम् ।
ब्रह्मणाभिहिता श्रेणीह्येषायस्याःप्रमुच्यते । द्वितीयां क्रमशः प्राप्य स्वर्गलोके महीयते ।
तृतीयामपि वक्ष्यामि वानप्रस्थाश्रमंशृणु । गृहस्थस्तुयदापश्येद्वलीपलितमात्मनः ॥
अपत्यस्यैवचापत्यं वनमेव तदाश्रयेत् । गृहस्थव्रतखिन्नानां वानप्रस्थाश्रमौकसाम् ॥

श्रूयतां भीष्म भद्रं ते सर्वलोकाश्रयात्मनाम् ।
दीक्षापूर्वं निवृत्तानां पुण्यदेशनिवासिनाम् ॥ ३३१ ॥

प्रज्ञाबलयुजांपुंसां सत्यशौचक्षमावताम् । तृतीयमायुषोभागं वानप्रस्थाश्रमे वसन् ॥
तानेवाग्नीन्परिचरैद्यजमानो दिवौकसः । नियतो नियताहारो विष्णुभक्तिप्रसक्तिमान् ।
तदाग्निहोत्रमात्राणि यज्ञांगानि च सर्वशः । अकृष्टं च व्रीहियवंनीवारं विघसानि च
ग्रीष्मेहविष्यं प्रायच्छेत्समखेष्वपि पंचसु । वानप्रस्थाश्रमेऽप्येताश्चतस्रोवृत्तयःस्मृताः ।

सद्यःप्रभक्षकाः केचित्केचिन्मासिकसंचयान् ।
वार्षिकान्संचयान्केचित्केचिद् द्वादशवार्षिकान् ॥ ३३६ ॥

कुर्वन्त्यतिथिपूजार्थं यज्ञतन्त्रार्थमेव च । अभ्रावकाशा वर्षासु हेमंते जलसंश्रयाः ।
ग्रीष्मे पंचाग्नितपसः शश्वमृतभोजनाः । भूमौविपरिवर्तंते तिष्ठन्तिप्रपदैरपि ॥ ३३८ ॥
स्थानासने च वर्तन्ते वसनेष्वपि संस्थिते । दंतोलूखलिनः केचिदश्मकुट्टास्तथापरे ॥
शुक्लपक्षेपिबन्त्येके यवागूंकथितां क्वचित् । कृष्णपक्षेपिबन्त्येके भुंजते च यथागमम् ॥
मूलैरेके फलैरेके जलैरेके दृढव्रताः । वर्त्तयंति यथान्यायं वैखानसधृतव्रताः ॥ ३४१ ॥
एताश्चान्याश्च विविधादीक्षास्तेषांमनस्विनाम् । चतुर्थश्चौपनिषदोधर्मः साधारणोमतः ।

वानप्रस्थोगृहस्थश्च स ततोऽन्यः प्रवर्त्तते । तस्मिन्नेवयुगे तात विप्रैःसर्वार्थदर्शिभिः ॥
अगस्त्यश्चसप्तर्षयोमधुच्छंदोगवेषणः । सांकृतिः सदिवोभांडिर्यवप्रोथोह्यथर्वणः ।४४।
अहोवीर्यस्तथाकाम्यःस्थाणुर्मेधातिथिर्बुधः। मनोवाकःशिनीवाकःशून्यपालोऽकृतव्रणः

एते कर्मसु विद्वांसस्ततः स्वर्गमुपागमन् ।

एते प्रत्यक्षधर्माणस्तथा यायावरा गणाः ॥ ३४६ ॥

ऋषीणामुग्रतपसां धर्मनैपुण्यदर्शिनाम् । सुरेश्वरं समाराध्य ब्राह्मणा वनमाश्रिताः ॥
अपास्योपरतामायांब्राह्मणावनमाश्रिताः । अनक्षत्रास्तथाऽधृष्याद्दृश्यन्तेज्योतिषांगणाः।
जरया तु परिद्यूनाव्याधिना परिपीडिताः । चतुर्थं त्वाश्रमं शेषं वानप्रस्थाश्रमाद्ययुः ॥
सद्यस्कारीसुनिर्वाप्यसर्वंवेदसदक्षिणान् । आत्मयाजीसौम्यमतिरात्मक्रीडात्मसंश्रयः ॥
आत्मन्यग्निं समाधाय त्यक्त्वासर्वपरिग्रहम् । सद्यस्कश्चयजेद्यज्ञानिष्टिं चैवेह सर्वदा ॥
सदैवयाजिनां यज्ञमात्मनीज्याप्रवर्त्तते । त्रींश्चैवाग्नीन्यजेत्सम्यगात्मन्येवात्मनाक्षणात् ।
प्राप्नुयाद्येन वा यच्च तत्प्राश्नीयादकुत्सयन् । केशलोमनखान्यस्येद्वानप्रस्थाश्रमे रतः ॥
आश्रमादाश्रमं सद्यः पूतोगच्छतिकर्मभिः । अभयंसर्वभूतेभ्यो यो दत्वाप्रव्रजेद्द्विजः ॥

लोकास्तेजोमयास्तस्य प्रेत्य चानन्त्यमश्नुते ॥ ३५४ ॥

सुशीलवृत्तो व्यपनीतकल्मषो न चेह नामुत्र चरन्त्यमीहते ।

अशेषमोहो गतसंधिविग्रहः स चेदुदासीनवदात्मचिंतया ॥ ३५५ ॥

यमेषु चैवान्यगतेषु न व्यथः स्वशास्त्रशून्यो हृदि नात्मविभ्रमः ।

भवेद्यथेष्टागतिरात्मयाजिनि निस्संशये धर्मपरे जितेन्द्रिये ॥ ३५६ ॥

अतःपरं श्रेष्ठमतीवसद्गुणैरधिष्ठितं त्रीनतिवर्त्य चाश्रमान् ।

चतुर्थमुक्तं परमाश्रमं शृणु प्रकीर्त्यमानं परमं परायणम् ॥ ३५७ ॥

प्राप्य संस्कारमेताभ्यामाश्रमाभ्यांततःपरम् । यत्कार्यंपरमात्मार्थंतत्त्वमेकमनाः शृणु ॥
काषायंधारयित्वातुश्रेणीस्थाने तु च त्रिषु । योव्रजेच्चपरंस्थानं पारिव्राज्यमनुत्तमम् ॥

तद्भावेन न संन्यस्य वर्तनं श्रूयतां तथा ॥ ३६० ॥

एकएवचरेद्धर्मसिध्यर्थमसहायवान् । एकश्चरतियः पश्यन्नजहाति न हीयते ॥ ३६१ ॥

अनग्निरनिकेतस्तु ग्रामं भिक्षार्थमाश्रयेत् । अश्वस्तनविधानःस्यान्मुनिर्भावसमन्वितः ॥
लब्धाशीनियताहारः सकृदन्नं निषेवयेत् । कपालं वृक्षमूलानि कुचैलमसहायता ॥
उपेक्षा सर्वभूतानामेतावद्भिक्षुलक्षणम् ॥ ३६३ ॥
यस्मिन्वाचः प्रविशंति कूपेप्राप्तामृताइव । न वक्तारं पुनर्यांति सकैवल्याश्रमेवसेत् १६४
नैवपश्येन्नश्रृणुयादवाच्यं जातु कस्यचित् । ब्राह्मणानां विशेषेण नैतद्‌भूयात्कथंचन ॥
यद्ब्राह्मणस्यानुकूलं तदेव सततंवदेत् । तूष्णीमासीत निंदायां कुर्वन्भैषज्यमात्मनः ॥
येनपूर्णमिवाकाशं भवत्येकेन सर्वदा । शून्यं येन समाकीर्णं तं देवा ब्राह्मणं विदुः ॥
येनकेनचिदाच्छन्नो येनकेनचिदाशितः । यत्र क्वचनशायी च तं देवा ब्राह्मणं विदुः ॥
अहेरिव जनाद्भीतः सुहृदोनरकादिव । कृपणादिव नारीभ्यस्तं देवा ब्राह्मणं विदुः ॥
नहृष्येतविषीदेत मानितोऽमानितस्तथा । सर्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः ।३७०।
नाभिनंदेत मरणं नाभिनंदेत जीवितम् । कालमेव निरीक्षेत निर्देशं कृषको यथा ३७१॥
अनभ्याहतचित्तश्च दांतश्चाहतधीस्तथा । विमुक्तः सर्वपापेभ्यो नरोगच्छेत्ततोदिवम् ॥
अभयं सर्वभूतेभ्यो भूतानामभयंयतः । तस्य देहविमुक्तस्य भयं नास्ति कुतश्चन ।३७३।
यथानागपदेऽन्यानि पदानि पदगामिनाम् । सर्वाण्येवावलीयंते तथा ज्ञानानिचेतसि ॥
एवं सर्वमहिंसायां धर्मोऽर्थश्चमहीयते । मृतः स नित्यं भवति यो हिंसां प्रतिपद्यते ॥
अहिंसकस्ततः सम्यग्धृतिमान्नियतेंद्रियः । शरण्यस्सर्वभूतानां गतिमाप्नोत्यनुत्तमाम् ॥
एवं प्रज्ञानतृप्तस्य निर्भयस्य मनीषिणः । न मृत्युरधिकोभावः सोऽमृतत्वंचगच्छति ॥
विमुक्तः सर्वसंगेभ्योमुनिराकाशवत्स्थितः । विष्णुप्रियकरःशांतस्तं देवाब्राह्मणंविदुः॥
जीवितं यस्य धर्मार्थं धर्मोरत्यर्थमेव च । अहोरात्रादि पुण्यार्थं तं देवा ब्राह्मणं विदुः
निवारितसमारंभं निर्नमस्कारमस्तुतिम् । अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥
सर्वाणि भूतानि सुखं रमंते सर्वाणि दुःखानि भृशं भवन्ति ।
तेषां भवोत्पादनजातखेदः कुर्यात्तु कर्माणि च श्रद्दधानः ॥ ३८१ ॥
दानं हि भूताभयदक्षिणाया सर्वाणि दानान्यधितिष्ठतीह ।
तीक्ष्णं तनुं यः प्रथमंजुहोति सोऽनंतमाप्नोत्यभयं प्रजाभ्यः ॥ ३८२ ॥

उत्तानमास्येन हविर्जुहोति अनंतप्राप्नोत्यभितः प्रतिष्ठाम् ।
तस्यांगसंगादभिनिष्कृतं च वैश्वानरं सर्वमिदं प्रपेदे ॥ ३८३ ॥
प्रादेशमात्रे हृदिनिस्सृतं यत्तस्मिन्प्राणेनात्मयाजी जुहोति ।
तस्याग्निहोत्रं हुतमात्मसंस्थं सर्वेषु लोकेषु सदैवतेषु ॥ ३८४ ॥
देवं विधातुं त्रिवृतं सुवर्णं ये वै विदुस्तं परमार्थभूतम् ।
ते सर्वभूतेषु महीयमाना देवाः समर्था अमृतं व्रजंति ॥ ३८५ ॥
वेदांश्च वेद्यं च विधिंच कृत्स्नमथोनिरुक्तं परमार्थताञ्च ।
सर्वं शरीरात्मनि यः प्रवेद तस्याभिसर्वे प्रचरंति नित्यम् ॥३८६॥
भूमावसक्तं दिवि चाप्रमेयं हिरण्मयं तं च स मंडलांते ।
प्रदक्षिणं दक्षिणमंतरिक्षे यो वेदनाप्यात्मनि दीप्तरश्मिः ॥ ३८७ ॥
आवर्तमानं च विवर्तमानं षण्नेमि यद्द्वादशारं त्रिपर्व ।
यस्येदमास्यं परिपाति विश्वं तत्कालचक्रं निहितं गुहायाम् ॥३८८ ॥
यतःप्रसादं जगतःशरीरं सर्वांश्चलोकानधिगच्छतीह ।
तस्मिन्हिसंतर्पयतीह देवान्सर्वैर्विमुक्तो भवतीह नित्यम् ॥ ३८९ ॥
तेजोमयो नित्यमतःपुराणो लोके भवत्यर्थभयादुपैति ।
भूतानि यस्मान्न भयं व्रजंति भूतेभ्यो यो नोद्विजते कदाचित् ॥ ३९० ॥
अगर्हणीयो नच गर्हतेऽन्यान्सर्वैर्विप्रः प्रवरं स्वात्मनीक्षेत् ।
विनीतमोहोऽप्यपनीतकल्मषो न चेह नामुत्र च योऽर्थमृच्छति ॥३९१॥
अरोषमोहः समलोष्टकांचनः प्रहीणशोको गतसंधिविग्रहः ।
अपेतनिंदास्तुतिरप्रियाप्रियश्चरन्नुदासीनवदेव भिक्षुः ॥ ३९२ ॥ 02

इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे क्षेत्रवासमाहात्म्यं नाम पंचदशोऽध्यायः ।

---

# षोडशोऽध्यायः

## ब्रह्मदेवकृतयज्ञवर्णनम् ।

भीष्म उवाच ।

यदेतत्कथितं ब्रह्मंस्तीर्थमाहात्म्यमुत्तमम् । कमलस्याभिपातेन तीर्थजातं धरातले ॥१ ॥
तत्रस्थेन भगवता विष्णुना शंकरेण च । यत्कृतं मुनिशार्दूल तत्सर्वं परिकीर्त्तय ॥२ ॥
कथं यज्ञोहिदेवेन विभुना तत्र कारितः । केसदस्याऋत्विजश्च ब्राह्मणाः केसमागताः ॥
के भागास्तस्य यज्ञस्य किंद्रव्यं काचदक्षिणा । कावेदीकिंप्रमाणंचकृतं तत्र विरिंचिना
योयाज्यः सर्वदेवानां वेदैःसर्वत्र पठ्यते । कंचकाममभिध्यायन्वेधायज्ञंचकार ह ॥५॥
यथासौदेवदेवेशो ह्यजरश्चामरश्चह । तथाचैवाक्षयः स्वर्गस्तस्य देवस्य दृश्यते ॥ ६ ॥
अन्येषांचैवदेवानांदत्तःस्वर्गोमहात्मना । अग्निहोत्रार्थमुत्पन्नावेदाओषधयस्तथा ॥७॥
येचान्येपशवोभूमौसर्वेतेयज्ञकारणात् । सृष्टा भगवतानेनइत्येषा वैदिकीश्रुतिः ॥ ८ ॥
तदत्रकौतुकंमह्यंश्रुत्वेदंतवभाषितम् । यंकाममधिकृत्यैकं यत्फलं यां च भावनाम् ॥९॥
कृतश्चानेनवैयज्ञःसर्वंशंसितुमर्हसि । शतरूपा च यानारीसावित्रीसात्विहोच्यते ॥१०॥
भार्यासाब्रह्मणःप्रोक्ताऋषीणांजननीचसा । पुलस्त्याद्यान्मुनीन्सप्तदक्षाद्यांस्तुप्रजापतीन् ।
स्वायंभुवादींश्चमनून्सावित्रीसमजीजनत् । धर्मपत्नींतुतांब्रह्मापुत्रिणीमात्मनःप्रियाम् ॥
पतिव्रतांमहाभागांसुव्रतांचारुहासिनीम् । कथंसतींपरित्यज्यभार्यामन्यामविंदत ॥१३॥
किंनाम्नीकिंसमाचाराकस्यसातनयाविभोः । क्वसादृष्टाहिदेवेनकेनचास्यप्रदर्शिता ॥१४
किंरूपासातुदेवेशीदृष्टाचित्तविमोहिनी । यांतुदृष्ट्वासदेवेशःकामस्यवशमेयिवान् ॥१५॥
वर्णतोरूपतश्चैवसाविच्यास्त्वधिकामुने । यामोहितवतीदेवंसर्वलोकेश्वरंविभुम् ॥१६॥
यथागृहीतवान्देवोनारींतांलोकसुन्दरीम् । यथाप्रवृत्तोयज्ञोऽसौतथासर्वंप्रकीर्तय ॥१७॥
तांदृष्ट्वाब्रह्मणःपार्श्वेसावित्रीकिंचकारह । साविच्यांतुतदाब्रह्माकांतुवृत्तिमवर्त्तत ॥१८॥
सन्निधौकानिवाक्यानिसावित्रीब्रह्मणातदा । उक्ताप्युक्तवतीभूयःसर्वंशंसितुमर्हसि ॥१९

किंकृतंतत्रयुष्माभिःकोपोवाथक्षमापिवा। यत्कृतंतत्रयद्दृष्टंयत्तवोक्तंमयात्विह ॥ २० ॥
विस्तरेणेहसर्वाणिकर्माणिपरमेष्ठिनः। श्रोतुमिच्छाम्यशेषेणविधेर्यज्ञविधिंपरम् ॥२१॥
कर्मणामानुपूर्व्यंचप्रारंभोहोत्रमेवच। होतुर्भक्षोयथार्चापिप्रथमाकस्यकारिता ॥ २२ ॥
कथंचभगवान्विष्णुःसाहाय्यंकेनकीदृशम्। अमरैर्वाकृतंयच्चतद्भवान्वक्तुमर्हति ॥ २३ ॥
देवलोकंपरित्यज्यकथंमर्त्यमुपागतः। गार्हपत्यंचविधिनाअन्वाहार्यंचदक्षिणम् ॥ २४ ॥
अग्निमाहवनीयंचवेदींचैवतथास्रुवम्। प्रोक्षणीयंस्रुचंचैव आवभृथ्यं तथैवच ॥ २५ ॥
अग्नींस्त्रींश्चयथाचक्रेहव्यभागवहान्हि वै। हव्यादांश्चसुरांश्चक्रेकव्यादांश्चपितॄनपि ॥ २६
भागार्थं यज्ञविधिना ये यज्ञायज्ञकर्मणि। यूपान्समित्कुशं सोमं पवित्रं परिधीनपि॥२७
यज्ञियानिचद्रव्याणि यथा ब्रह्माचकारह। विवभ्राजपुरायश्चपारमेष्ठ्येन कर्मणा ॥ २८॥
क्षणानिमेषाः काष्ठाश्चकलास्त्रैकाल्यमेव च। मुहूर्तास्तिथयो मासा दिनंसंवत्सरस्तथा।
ऋतवः कालयोगाश्च प्रमाणं त्रिविधंपुरा। आयुःक्षेत्राण्यपचयंलक्षणं रूपसौष्ठवम् ।३०।
त्रयोवर्णास्त्रयोलोकास्त्रैविद्यंपावकास्त्रयः। त्रैकाल्यंत्रीणिकर्माणित्रयोवर्णास्त्रयोगुणाः
सृष्टालोकाः पराःस्रष्ट्रायेचान्येऽनल्पचेतसा। यागतिर्धर्मयुक्तानां या गतिःपापकर्मणाम्
चातुर्वर्ण्यस्य प्रभवश्चातुर्वर्ण्यस्य रक्षिता। चातुर्विद्यस्ययोवेत्ता चतुराश्रमसंश्रयः ॥३३
यः परंश्रूयतेज्योतिर्यः परं श्रूयतेतपः। यः परंपरतःप्राह परं यः परमात्मवान् ॥ ३४ ॥
सेतुर्योलोकसेतूनां मेध्योयोमेध्यकर्मणाम्। वेद्योयोवेदविदुषांयःप्रभुःप्रभवात्मनाम् ॥
असुभूतश्चभूतानामग्निभूतोऽग्निवर्चसाम्। मनुष्याणांमनोभूतस्तपोभूतस्तपस्विनाम् ॥
विनयोनयवृत्तीनां तेजस्तेजस्विनामपि। इत्येतत्सर्वमखिलान्सृजन्लोकपितामहः ॥
यज्ञाद्गतिंकामन्वैच्छत्कथंयज्ञेमतिःकृता। एष मे संशयोब्रह्मन्नेषमे संशयः परः ॥ ३८ ॥
आश्चर्यः परमोब्रह्मा देवैर्दैत्यैश्च पठ्यते। कर्मणाश्चर्यभूतोऽपितत्त्वतः स इहोच्यते ॥

पुलस्त्य उवाच।

प्रश्नभारोमहानेष त्वयोक्तो ब्रह्मणश्चयः। यथाशक्तितु वक्ष्यामि श्रूयतांतत्परं यशः ॥
सहस्रास्यं सहस्राक्षं सहस्रचरणंचयम्। सहस्रश्रवणं चैव सहस्रकरमव्ययम् ॥ ४१ ॥
सहस्रजिह्वं साहस्रं सहस्रपरमंप्रभुम्। सहस्रदं सहस्रादिं सहस्रभुजमव्ययम् ॥

हवनं सवनं चैव हव्यंहोतारमेव च। पात्राणि च पवित्राणि वेदीं दीक्षां चरुंस्रुवम् ॥
स्रुक्सोममवभृच्चैव प्रोक्षणी दक्षिणाधनम्। अद्ध्वर्युं सामगं विप्रं सदस्यान्सदनंसदः ॥
यूपं समित्कुशं दर्वीं चमसोलूखलानि च। प्राग्वंशं यज्ञभूमिं च होतारं बन्धनंचयत् ॥
ह्रस्वान्यतिप्रमाणानिप्रमाणस्थावराणिच। प्रायश्चित्तानिवाजाश्चस्थंडिलानिकुशास्तथा
मंत्रंयज्ञंच हवनं वह्निभागं भवंचमम्। अग्रेभुजं होमभुजं शुभार्चिषमुदायुधम् ॥ ४७ ॥
आहुर्वेदविदोविप्रा योयज्ञःशाश्वतःप्रभु। यां पृच्छसि महाराजपुण्यांदिव्यामिमांकथाम्
यदर्थंभगवान्ब्रह्माभूमौ यज्ञमथाकरोत्। हितार्थंसुरमर्त्यानांलोकानांप्रभवायच ॥ ४९ ॥
ब्रह्माथ कपिलश्चैव परमेष्ठी तथैव च। देवाःसप्तर्षयश्चैव त्र्यंबकश्च महायशाः ॥

सनत्कुमारश्च महानुभावो मनुर्महात्मा भगवान्प्रजापतिः।
पुराणदेवोऽथ तथा प्रचक्रे प्रदीप्तवैश्वानरतुल्यतेजाः ॥ ५१ ॥

पुरा कमलजातस्य स्वपतस्तस्यकोटरे। पुष्करे यत्र संभूतादेवाऋषिगणास्तथा ॥५२॥
एषपौष्करकोनामप्रादुर्भावोमहात्मनः। पुराणं कथ्यतेयत्र वेदस्मृतिसुसंहितम् ॥५३॥
वराहस्तुश्रुतिमुखः प्रादुर्भूतोविरिंचिनः। सहायार्थं सुरश्रेष्ठो वाराहं रूपमास्थितः ॥
विस्तीर्णं पुष्करे कृत्वा तीर्थं कोकामुखं हि तु। वेदपादोयूपदंष्ट्रःक्रतुहस्तश्चितीमुखः ॥
अग्निजिह्वोदर्भरोमाब्रह्मशीर्षोमहातपाः। अहोरात्रेक्षणोदिव्योवेदांगःश्रुतिभूषणः ॥ ५६॥
आज्यनासः स्रुवतुंडःसामघोषस्वनोमहान्। सत्यधर्ममयः श्रीमान्कर्मविक्रमसत्कृतः॥
प्रायश्चित्तनखोधीरः पशुजानुर्मखाकृतिः। उद्गात्रंत्रो होमलिंगो फलबीजमहौषधिः ॥

वाय्वंतरात्मा मंत्रास्थिरापः स्फिक् सोमशोणितः।
वेदस्कन्धो हविर्गंधो हव्यकव्यातिवेगवान् ॥ ५९ ॥

प्राग्वंशकायोद्युतिमान्नानादीक्षाभिरर्चितः। दक्षिणाहृदयोयोगीमहासत्रमयोमहान् ।६०
उपाकर्मेष्टिरुचिरःप्रवर्ग्यावर्तभूषणः। छायापत्निसहायोवैमणिशृंगमिवोच्छ्रितः ॥६१॥
सर्वलोकहितात्मायोदंष्ट्रयाभ्युज्जहारगाम्। ततःस्वस्थानमानीयपृथिवींपृथिवीधरः ॥
ततोजगामपृथिवी निर्वाणंधारणाद्धरेः। एवमादिवराहेण धृत्वाब्रह्महितार्थिना ॥६३ ॥
उद्धृता पुष्करैपृथ्वीसागरांबुगतापुरा। वृतः शमदमाभ्यांयोदिव्येकोकामुखेस्थितः ।६४।

आदित्यैर्वसुभिःसाध्यैर्मरुद्भिर्दैवतैःसह । रुद्रैर्विश्वसहायैश्च यक्षराक्षसकिन्नरैः ॥ ६५ ॥
दिग्भिर्विदिग्भिः पृथिवीनदीभिः सह सागरैः । चराचरगुरुःश्रीमान्ब्रह्माब्रह्मविदांवरः ॥
उवाचवचनंकोकामुखंतीर्थंत्वयाविभो । पालनीयंसदागोप्यंरक्षाकार्यामखेत्विह ॥ ६७ ॥
एवंकरिष्येभगवंस्तदाब्रह्माणमुक्तवान् । उवाचतंपुनर्ब्रह्माविष्णुंदेवंपुरः स्थितम् ॥ ६८ ॥

ब्रह्मोवाच ।

त्वं हि मे परमोदेवस्त्वंहि मे परमोगुरुः । त्वं हि मेपरमंधामशक्रादीनां सुरोत्तम ॥ ६९ ॥
उत्फुल्लामलपद्माक्ष शत्रुपक्षक्षयावह । यथायज्ञेन मेध्वंसोदानवैश्चविधीयते ॥ ७० ॥
तथात्वयाविधातव्यंप्रणतस्यनमोऽस्तुते । भयंत्यजस्वदेवेशक्षयंनेष्यामिदानवान् ॥ ७२ ॥
येचान्येविघ्नकर्तारोयातुधानास्तथासुराः । घातयिष्याम्यहंसर्वान्स्वस्तितेस्तुपितामह ॥
एवमुक्त्वास्थितस्तत्रसाहाय्येन कृतक्षणः । प्रववुश्चशिवावाताः प्रसन्नाश्चदिशोदश ॥ ७३
सुप्रभाणिचज्योतींषिचंद्रंचक्रुः प्रदक्षिणम् । नविग्रहंग्रहाश्चक्रुः प्रसेदुश्चापि सिंधवः ॥
नीरजस्काभूमिरासीत्सकलाह्लादयस्त्रयः । जग्मुः स्वमार्गंसरितोनापिचुक्षुभुरर्णवाः ॥
आसञ्छुभानींद्रियाणिनराणामंतरात्मनाम् । महर्षयोवीतशोकावेदानुच्चैरवाचयन् ॥ ७६ ॥
यज्ञेतस्मिन्हविः पाकेशिवआसंश्चपावकाः । प्रवृत्तधर्मसद्वृत्तलोकामुदितमानसाः ॥ ७७ ॥
विष्णोःसत्यप्रतिज्ञस्यश्रुत्वाऽरिनिधनागिरः । ततोदेवाःसमायातादानवाराक्षसैस्सह ॥
भूतप्रेतपिशाचाश्चसर्वेतत्रागताःक्रमात् । गन्धर्वाप्सरसश्चैवनागाविद्याधरागणाः ॥ ७९ ॥
वानस्पत्याश्चौषधयोयच्चेहयच्चनेहति । ब्रह्मादेशान्मारुतेनआनीताः सर्वतोदिशः ॥ ८० ॥
यज्ञपर्वतमासाद्यदक्षिणामभितोदिशम् । सुराउत्तरतः सर्वे मर्यादापर्वते स्थिताः ॥ ८१ ॥
गंधर्वाप्सरसश्चैवमुनयो वेदपारगाः । पश्चिमांदिशमास्थायस्थितास्तत्रमहाक्रतौ ॥ ८२ ॥
सर्वदेवनिकायाश्चदानवाश्चासुरागणाः । अमर्षंपृष्ठतःकृत्वासुप्रीतास्तेपरस्परम् ॥ ८३ ॥
ऋषीन्पर्यचरन्सर्वेशुश्रूषन्ब्राह्मणांस्तथा । ऋषयो ब्रह्मर्षयश्चैव द्विजादेवर्षयस्तथा ॥ ८४ ॥

राजर्षयो मुख्यतमास्समायातास्समं ततः ।
कतमश्च सरोऽप्यत्र क्रतौ याज्यो भविष्यति ॥ ८५ ॥

पशवः पक्षिणश्चैवतत्रायातादिदृक्षवः । ब्राह्मणाभोक्तुकामाश्चसर्वेवर्णानुपूर्वशः ॥ ८६ ॥

स्वयंचवरुणोरत्नंदक्षश्चान्नंस्वयंददौ । आगत्यवरुणोलोकात्पक्वंचान्नंस्वतोऽपचत् ॥८७॥
वायुर्भक्षविकारांश्चरसपाचीदिवाकरः । अन्नपाचनकृत्सोमोमतिदातावृहस्पतिः ॥ ८८ ॥
धनदानं धनाध्यक्षोवस्त्राणिविविधानिच । सरस्वती नदाध्यक्षोगंगादेवीसनर्मदा ॥८९॥
याश्चान्याःसरितःपुण्याःकूपाश्चैवजलाशयाः । पल्वलानितटाकानिकुंडानिविविधानिच ।
प्रस्रवणानिमुख्यानिदेवखातान्यनेकशः । जलाशयानिसर्वाणिसमुद्राःसप्तसंख्यकाः ।९१।
लवणेक्षुसुरासर्पिर्दधिदुग्जलैःसमम् ।सप्तलोकाःसपातालाःसप्तद्वीपाःसपत्तनाः ॥ ९२ ॥
वृक्षवल्ल्यःसतृणानिशाकानिचफलानिच । पृथिवीवायुराकाशमापोज्योतिश्चपंचमम् ॥
सविग्रहाणिभूतानिधर्मशस्त्राणियानि च । वेदभाष्याणिसूत्राणिब्रह्मणानिर्मितंचयत् ॥
अमूर्तंमूर्तमत्यन्तं मूर्तंदृश्यंतथाखिलम् । एवं कृते तथातस्मिन्यज्ञे पैतामहेतदा ॥ ९५ ॥
देवानांसंनिधौतत्रऋषिभिश्चसमागमे । ब्रह्मणोदक्षिणेपार्श्वेस्थितोविष्णुःसनातनः ।९६।
वामपार्श्वेस्थितोरुद्रःपिनाकीवरदःप्रभुः । ऋत्विजांचापिवरणंकृतंतत्रमहात्मना ॥ ९७॥
भृगुर्होतावृतस्तत्रपुलस्त्योऽध्वर्युसत्तमः । तत्रोद्गातामरीचिस्तुब्रह्मावैनारदःकृतः ॥९८॥
सनत्कुमाराद्यो ये सदस्यास्तत्रतेऽभवन् । प्रजापतयो दक्षाद्या वर्णा ब्राह्मणपूर्वकाः ॥
ब्रह्मणश्चसमीपेतु कृता ऋत्विग्विकल्पना । वस्त्रैराभरणैर्युक्ताः कृता वैश्रवणेन ते ।१००
अंगुलीयैः सकटकै मुकुटैर्भूषिताद्विजाः । चत्वारो द्वौ दशान्येच ततस्ते षोडशर्त्विजः
ब्रह्मणा पूजिताःसर्वे प्रणिपातपुरःसरम् । अनुग्राह्यो भवद्भिस्तु सर्वैरस्मिन्क्रताविह ॥
पत्नीममैषा सावित्री यूयं मे शरणंद्विजाः । विश्वकर्माणमाहूय ब्रह्मणः शीर्षमुंडनम् ॥
यज्ञेतुविहितं तस्य कारितं द्विजसत्तमैः । आतसेयानिवस्त्राणि दंपत्यर्थे तथाद्विजैः ॥
ब्रह्मघोषेणतेविप्रा नादयन्तस्त्रिविष्टपम् । पालयंतो जगच्चेदं क्षत्रियाःसायुधाःस्थिताः
भक्ष्यप्रकारान्विविधान्वैश्यास्तत्रप्रचक्रिरे । रसवाहुल्ययुक्तं च भक्ष्यं भोज्यं कृतं ततः
अश्रुतं प्रागदृष्टंच दृष्ट्वा तुष्टः प्रजापतिः । प्राग्वाटेति ददौनाम वैश्यानां सृष्टिकृद्विभुः ॥
द्विजानां पादशुश्रूषा शूद्रैः कार्यासदात्विह । पादप्रक्षालनं भोज्यमुच्छिष्टस्यप्रमार्जनम्
तेऽपि चक्रुस्तदा तत्र तेभ्योभूयःपितामहः । शुश्रूषार्थं मयायूयं तुरीयेतु पदे कृताः ॥
द्विजानां क्षत्रबन्धूनां वैश्यानांचभवद्विधैः । त्रिभ्यश्शुश्रूषणाकार्येत्युक्त्वाब्रह्मातथाकरोत्

द्वाराध्यक्षं तथा शक्रं वरुणं रसदायकम् ॥ वित्तप्रदं वैश्रवणं पवनं गंधदायिनम् ॥१११
उद्योतकारिणंसूर्यंप्रभुत्वे माधवःस्थितः । सोमःसोमप्रदस्तेषांवामपक्षपथाश्रितः ॥११२
सुसत्कृताचपत्नी सा सावित्री च वरांगना । अध्वर्युणासमाहूता एहि देवि त्वरान्विता
उत्थिताश्चाग्नयः सर्वे दीक्षाकालउपागतः । व्यग्रासाकार्यकरणेस्त्रीस्वभावेन नागता ॥
इहवेनकृतंकिंचिद्द्वारेवैमंडनंमया । भित्त्यां वैचित्र्यकर्माणि स्वस्तिकप्रांगणेनतु ॥११५
प्रक्षालनंचभांडानांनकृतंकिमपित्विह । लक्ष्मीरद्यापिनायातापत्नीनारायणस्यया॥११६॥
अग्नेःपत्नीतथास्वाहाधूम्रोर्णातुयमस्यतु । वारुणीवैतथागौरीवायोर्वैसुप्रभातथा॥११७
ऋद्धिर्वैश्रवणीभार्याशम्भोर्गौरीजगत्प्रिया । मेधाश्रद्धाविभूतिश्च अनसूयाधृतिःक्षमा ॥
गंगासरस्वतीचैवनाद्यायाताश्चकन्यकाः । इन्द्राणीचंद्रपत्नीतुरोहिणीशशिनःप्रिया ११६
अरुंधतीवसिष्ठस्यसप्तर्षीणांचयाःस्त्रियः । अनसूया त्रिपत्नी च तथान्याःप्रमदा इह ॥
वध्वोदुहितरश्चैवसख्योभगिनिकास्तथा । नाद्यागतास्तुताःसर्वाअहंतावत्स्थिता चिरम्
नाहमेकाकिनीयास्येयावन्नायांतिताःस्त्रियः । ब्रूहिगत्वाविरंचितुतिष्ठतावन्मुहूर्तकम् ॥
सर्वाभिःसहिताचाहमागच्छामित्वरान्विता । सर्वैःपरिवृतःशोभांदेवैःसहमहामते ॥१२३
भवान्प्राप्नोति परमां तथाहंतुनसंशयः । वदमानांतथाध्वर्युस्त्यक्त्वा ब्रह्माणमागतः ॥
सावित्रीव्याकुलादेवप्रसक्तागृहकर्मणि । सख्योनाभ्यागतायावत्तावन्नागमनं मम ॥१२५
एवमुक्तोऽस्मि वै देव कालश्चाप्यतिवर्त्तते । यत्तेऽद्य रुचितं तावत्तत्कुरुष्व पितामह ॥
एवमुक्तस्तदा ब्रह्मा किंचित्कोपसमन्वितः । पत्नीं चान्यां मदर्थे वै शीघ्रं शक्र इहानय॥
यथा प्रवर्तते यज्ञःकालहीनो नजायते । तथाशीघ्रं विधत्स्वत्वं नारींकांचिदुपानय ॥
यावद्यज्ञसमाप्तिर्मेवर्णत्वंमाकृथामनः । भूयोऽपि तां प्रमोक्ष्यामि समाप्तौतुक्रतोरिह॥१२६
एवमुक्तस्तदाशक्रोगत्वासर्वंधरातलम् । स्त्रियोदृष्टास्तुयास्तेनसर्वास्तास्सपरिग्रहाः ॥
आभीरकन्या रूपाढ्या सुनासा चारुलोचना । नदेवीनचगन्धर्वीनासुरीनचपन्नगी॥१३१
नचास्ति तादृशी कन्या यादृशीसा वरांगना । ददर्शतांसुचार्वंगींश्रियंदेवीमिवापराम् ॥
संक्षिपन्तींमनोवृत्तिविभवं रूपसंपदा । यद्यत्तुवस्तुसौंदर्याद्विशिष्टं लभ्यते क्वचित्॥१३३
तत्तच्छरीरसंलग्नंतन्वंग्या ददृशे वरम् । तां दृष्ट्वा चिंतयामास यद्येषा कन्यका भवेत् ॥

तन्मत्तः कृतपुण्योऽन्योन देवोभुविविद्यते । योषिद्रत्नमिदंसेयंसद्भाग्यायां पितामहः ॥
स रागो यदि वा स्यात्तु सफलस्त्वेषमेश्रमः । नीलाभ्रकनकांभोजविद्रुमाभांसदर्शताम्
त्विषंसंबिभ्रतीमंगैःकेशगंडेक्षणाधरैः । मन्मथाशोकवृक्षस्य प्रोद्भिन्नांकलिकामिव॥१३७
प्रदग्धहृच्छयेनैव नेत्रवह्निशिखोत्करैः । धात्रा कथं हि सासृष्टाप्रतिरूपमपश्यता ॥१३८॥
कल्पिताचेत्स्वयं बुद्ध्यानैपुण्यस्यगतिःपरा । उत्तुंगाग्राविमौसृष्टौयन्मेसंपश्यतःसुखम्
पयोधरौनातिचित्रंकस्यसंजायतेहृदि । रागोपहतदेहोऽयमधरो यद्यपि स्फुटम् ॥१४०॥
तथापि सेवमानस्य निर्वाणं संप्रयच्छति । वहद्भिरपि कौटिल्यमलकैः सुखमर्प्यते॥१४१
दोषोऽपिगुणवद्भातिभूरिसौंदर्यमाश्रितः । नेत्रयोर्भूषितावंतावाकर्णाभ्याशमागतौ ॥१४२
कारणाद्भावचैतन्यं प्रवदंति हि तद्विदः । कर्णयोर्भूषणे नेत्रे नेत्रयोः श्रवणाविमौ ॥१४३
कुंडलांजनयोरत्रनावकाशोऽस्ति कश्चन । नतद्युक्तंकटाक्षाणांयद्विधाकरणं हृदि॥१४४
तव संबंधिनो येऽत्रकथंतेदुःखभागिनः । सर्वसुन्दरतामेतिविकारःप्राकृतैर्गुणैः ॥१४५॥
वृद्धक्षणशतानां तु दृष्टमेषां मया फलम् । धात्रा कौशल्यसीमेयं रूपोत्पत्तौ सुदर्शिता ॥
करोत्येषा मनो नृणां सस्नेहं कृतिविभ्रमैः । एवं विमृशतस्तस्यतद्रूपापहृतत्विषः॥१४७
निरंतरोद्गतैश्छन्नमभवत्पुलकैर्वपुः । तां वीक्ष्य तप्तहेमाभां पद्मपत्रायतेक्षणाम् ॥ १४८॥
देवानामथ यक्षाणां गन्धर्वोरगरक्षसाम् । नाना दृष्टा मया नार्यो नेदृशी रूपसंपदा ॥
त्रैलोक्यांतर्गतं यद्यद्वस्तु तत्तत्प्रधानतः । समादाय विधात्रास्याः कृता रूपस्यसंस्थितिः

इन्द्र उवाच ।

कासि कस्य कुतश्चत्वमागतासुभ्रुकथ्यताम् । एकाकिनी किमर्थंचवीथीमध्येतुतिष्ठसि
यान्येतान्यंगसंस्थानि भूषणानि बिभर्षि च । नैतानि तव भूषायैत्वमेतेषांहिभूषणम् ॥
नदेवी नचगन्धर्वी नासुरी नचपन्नगी । किन्नरी दृष्टपूर्वा वा यादृशी त्वं सुलोचने ॥
उक्ता मयाऽपि बहुशःकस्माद्दत्से हि नोत्तरम् । त्रपान्विता तुसाकन्याशक्रंप्रोवाचवेपती

कन्योवाच ।

गोपकन्यात्वहं वीर विक्रीणामीह गोरसम् । नवनीतमिदं शुद्धं दधि चेदं विमण्डकम्
दध्ना चैवात्र तक्रेण रसेनापि परंतप । अर्थी येनासि तद्ब्रूहि प्रगृह्णीष्व यथेप्सितम् ॥

एवमुक्तस्तदा शक्रो गृहीत्वा तां करे दृढम् । अनयत्तां विशालाक्षीं यत्र ब्रह्माव्यवस्थितः
नीयमाना तु सा तेन क्रोशन्ती पितृमातरौ । हातातमातर्हाभ्रातर्नयत्येष नरो बलात् ॥
यदि तेऽस्ति मया कार्यं पितरं मे प्रयाचय । स दास्यति हि मां नूनंभवतःसत्यमुच्यते॥
का हि नाभिलषेत्कन्याभर्तारं भक्तिवत्सलम् । नादेयमस्ति ते किंचित्पितुर्मेधर्मवत्सल
प्रसादये त्वां शिरसा मां स तुष्टःप्रदास्यति । पितुश्चित्तमविज्ञाययद्यात्मानंददामिते ॥
धर्मोहिविपुलोनश्येत्तेनत्वांनप्रसादये । भविष्यामि वशे तुभ्यं यदि तातः प्रदास्यति ॥
इत्थमाभाष्यमाणस्तु तया शक्रोऽनयच्च ताम् । ब्रह्मणःपुरतःस्थाप्यप्राहास्यार्थेमयाऽबले
आनीतासि विशालाक्षि माशुचोवरवर्णिनि । गोपकन्याचतंदृष्ट्वागौरवर्णंमहाद्युतिम् ॥
कमलाक्षंसुबाहुंसं पुंडरीकनिभेक्षणम् । तप्तकांचनसद्भित्तिसदृशापीनवक्षसम् ॥ १६५ ॥
मत्तेभहस्तवृत्तोरुंरक्तोत्तुंगनखत्विषम् । प्राप्तंसाऽमन्यतात्मानंमन्मथस्येषुगोचरे ॥१६६॥
तत्प्राप्तिहेतुकधिया गतचित्तेवलक्ष्यते । प्रभुत्वमात्मनोदानेगोपकन्याऽप्यमन्यत॥१६७
यद्येषमांसुरूपत्वादिच्छत्यादातुमाग्रहात् । नास्तिसीमंतिनीकाचिन्मत्तोधन्यतराभुवि ॥
अनेनाहंसमानीतायच्चक्षुर्गोचरंगता । अस्यत्यागेभवेन्मृत्युरत्यागेजीवितंसुखम् ॥१६६ ॥
भवेयमपमानाच्च धिग्रूपादुःखदायिनी । दृश्यतेचक्षुषानेनयाऽपियोषित्प्रसादतः ॥१७० ॥
साऽपिधन्यानसन्देहः किंपुनर्यां परिष्वजेत् । जगद्रूपमशेषंहिपृथक्संचारमाश्रितम्॥१७१
लावण्यंतदिहैकस्थंदर्शितंविश्वयोनिना । अस्योपमास्मरः साध्वीमन्मथस्योपमात्वयम्
तिरस्कृतस्तुशोकोऽयंपितामातानकारणम् । यदिमांनैषआदत्तेस्वल्पंमयिनभाषते ॥१७३
अस्यानुस्मरणान्मृत्युःप्रभविष्यतिशोकजः । अनागसिचपत्न्यांतुक्षिप्रंयातयमीदृशी ॥
कुचयोर्मणिशोभायैशुद्धाम्बुजसमद्युतिः । मुखमस्यप्रपश्यंत्या मनो मे ध्यानमागतम् ॥
अस्यांगस्पर्शसंयोगं न वायो बहुमन्यसे । स्पृशन्नटसि येन त्वं शरीरंप्राणिनांवरम् ॥
अथवास्यनदोषोऽस्तियद्वच्छाचारकोह्यसि । मुषितःस्मरनूनंत्वंसंरक्षस्वांप्रियांरतिम् ॥
त्वत्तोऽपिदृश्यतेयेनरूपेणायंस्मराधिकः । ममानेन मनोरत्नसर्वस्वं च हृतंदृढम् ॥१७८॥
शोभायादृश्यतेवक्त्रेसाकुतःशशलक्ष्मणि । नोपमा सकलंकस्य निष्कलंकेन शस्यते ॥
समानभावतां याति पंकजंनास्यनेत्रयोः । कोपमाजलशंखेन प्राप्ताश्रवणशङ्खयोः॥१८०॥

विद्रुमोऽप्यधरस्त्यास्यलभतेनोपमांध्रुवम्। आत्मस्थममृतंह्येषसंस्रवंश्रेष्टतेध्रुवम् ॥१८१॥
यदिकिंचिच्छुभंकर्मजन्मांतरशतैःकृतम्। तत्प्रसादात्पुमान्भर्ताभवत्वेषममेप्सितः ॥१८२
एवंचितापराधीना यावत्सागोपकन्यका। तावद्ब्रह्मा हरिं प्राहयज्ञार्थंसत्वरंवचः ॥१८३
देवीचैषामहाभागा गायत्रीनामतःप्रभो। एवमुक्तेतदाविष्णुर्ब्रह्माणंप्रोक्तवानिदम् ॥ १८४

विष्णुरुवाच।

तदेनामुद्वहस्वाद्यमयादत्तांजगत्प्रभो। गांधर्वेण विवाहेन विकल्पंमाकृथाश्चिरम्॥१८५॥
अमुंगृहाणदेवाद्य अस्याःपाणिमनाकुलम्। गांधर्वेण विवाहेन उपयेमेपितामहः ॥१८६॥
तामवाप्यतदाब्रह्माजगादाध्वर्युसत्तमम्। कृता पत्नी मयाह्येषा सदने मे निवेशय ॥१८७॥
मृगश्रृङ्गधराबालाक्षौमवस्त्रावगुंठिता। पत्नीशालांतदानीता ऋत्विग्भिर्वेदपारगैः॥१८८
औदुम्बरेण दंडेन प्रावृतो मृगचर्मणा। महाध्वरे तदा ब्रह्मा धाम्ना स्वेनैव शोभते ॥
प्रारब्धं च ततो होत्रं ब्राह्मणैर्वेदपारगैः। भृगुणा सहितैःकर्म वेदोक्तं तैः कृतं तदा ॥
तथा युगसहस्रं तु सयज्ञः पुष्करेऽभवत् ॥ १९० ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखंडे गायत्रीसंग्रहो नाम षोड़शोऽध्यायः।

———

## सप्तदशोऽध्यायः

### ब्रह्मदेवकृतयज्ञे शिवस्य भिक्षोद्देशेनागमनम्।

भीष्म उवाच।

तस्मिन्यज्ञेकिमाश्चर्यंतदासीद्द्विजसत्तम। कथंरुद्रःस्थितस्तत्रविष्णुश्चापिसुरोत्तमः ॥१॥
गायत्र्याकिंकृतंतत्रपत्नीत्वेस्थितयातया। आभीरैःकिंनुतत्त्वज्ञैर्ज्ञात्वातैश्चकृतंमुने ॥ २ ॥
एतद्वृत्तंसमाचक्ष्व यथावृत्तं यथाकृतम्। आभीरैर्ब्रह्मणाचापि ममैतत्कौतुकं महत्॥३॥

पुलस्त्य उवाच।

तस्मिन्यज्ञेयदाश्चर्यंवृत्तमासीन्नराधिप। कथयिष्यामितत्सर्वंश्रृणुष्वैकमना नृप ॥ ४ ॥

रुद्रस्तु महदाश्चर्यं कृतवान्वैसदोगतः । निंद्यरूपधरोदेवःस्थितोऽसौद्विजसन्निधौ ॥५॥
विष्णुना न कृतंकिंचित्प्राधान्येसयतःस्थितः । नाशंतुगोपकन्यायाज्ञात्वागोपकुमारकाः
गोप्यश्च तास्तथासर्वाआगताब्रह्मणोंऽतिकम् । दृष्ट्वातांमेखलाबद्धांयज्ञसीमव्यवस्थिताम्
हापुत्रीतितदामातापिताहापुत्रिकेतिच । स्वसेतिवांधवाःसर्वेसख्यःसख्येन हासखि ॥८॥
केन त्वमिह चानीता केनकस्माच्च वेष्टिता। मौञ्जीं तु त्रिवृतांकृत्वा केन युक्ता च कंवली
केन चेयं जटापुत्रि रक्तसूत्रावकल्पिता। एवं विधानि वाक्यानि श्रुत्वोवाच पुरंदरः ॥
प्रतिषिध्य तु तानेवं सर्वानेवप्रसादयन् ।

इन्द्र उवाच ।

इह चास्माभिरानीता पत्न्यर्थं विनियोजिता ॥ ११ ॥

ब्रह्मणालंविता वाला प्रलापंमाकृथास्त्विह । पुण्या चैषा सुभाग्या च सर्वेषांकुलनंदिनी
पुण्याचेन्नभवत्येषा कथमागच्छते सदः । एवं ज्ञात्वा महाभाग न त्वंशोचितुमर्हसि ॥
गोपांस्त्ववष्टभ्य तदा शक्रवाक्यादनन्तरम् । उवाचस्निग्धयावाचाप्रतिनन्द्यहरिःपुनः ॥

विष्णुरुवाच ।

भोभोगोपसदाचारनत्वंशोचितुमर्हसि । कन्यैषातेमहाभागाप्राप्तादेवंविरिञ्चिनम् ॥१५॥
योगिनोयोगयुक्तायेब्राह्मणावेदपारगाः । नलभन्तेप्रार्थयन्तस्तांगतिंदुहितागता ॥ १६ ॥
धर्मवन्तं सदाचारं भवन्तं धर्मवत्सलम् । मया ज्ञात्वा ततःकन्यादत्ताचैषा विरंचये ॥
अनया तारितोगच्छदिव्याँल्लोकान्महोदयान् । युष्माकं च कुलेचापिदेवकार्यार्थसिद्धये
अवतारं करिष्येऽहं सा क्रीडा तु भविष्यति । यदा नन्दप्रभृतयो ह्यवतारं धरातले ॥
करिष्यंति तदा चाहं वसिष्ये तेषु मध्यतः । युष्माकंकन्यकाःसर्वा रमिष्यंते मयासह॥
तत्र दोषो न भविता न द्वेषो न च मत्सरः । करिष्यंति तदागोपा भयं च नमनुष्यकाः॥
नचासां भविता दोषः कर्मणानेन कर्हिचित् ।
श्रुत्वा वाक्यन्तदा विष्णोरूचुर्गोपाःप्रणम्य तम् ॥ २२ ॥

गोपाऊचुः ।

एवमेष वरो देव यो दत्तो भविता हि मे । अवतारःकुलेऽस्माकंकर्तव्योधर्मसाधनः॥२३

भवतोदर्शनाद्देवभवामःस्वर्गवासिनः । शुभदा कन्यका चैषा तारिणी मे कुलैःसह ॥२४
एवं भवतु देवेश वरदानं विभो तव । अनुनीतास्तदागोपाःस्वयं देवेन विष्णुना ॥ २५॥
ब्रह्मणाप्येवमेवन्तु वामहस्तेनभाषितम् । त्रपान्विता दर्शने तु बन्धूनां वरवर्णिनी ॥२६॥
कैरहं तु समाख्याता येनेमं देशमागताः । दृष्ट्वा तु तांस्ततः प्राह गायत्री गोपकन्यका ॥
वामहस्तेनतान्सर्वान्प्रणिपातपुरःसरम् ।

गायत्र्युवाच ।

अत्र चाहं स्थिता मातर्ब्रह्माणं समुपागता ॥ २८ ॥

भर्तालब्धोमयादेवः सर्वस्याद्योजगत्पतिः । नाहं शोच्याभवत्या तु नपित्रानचबांधवैः॥
सखीगणश्चमेयातुभगिन्योदारकैःसह । सर्वेषां कुशलं वाच्यं स्थिताऽस्मि सहदैवतैः ॥
गतेषु तेषु सर्वेषु गायत्री सा सुमध्यमा । ब्रह्मणा सहिता रेजे यज्ञवाटं गता सती ॥
याचितो ब्राह्मणैर्ब्रह्मा वरान्नो देहि चेप्सितान् । यथेप्सितं वरं तेषांतदाब्रह्माऽप्ययच्छत
तया देव्या च गायत्र्या दत्तंतच्चानुमोदितम् । सातुयज्ञेस्थितासाध्वीदेवतानांसमीपगा
दिव्यंवर्षशतं साग्रं स यज्ञो ववृधे तदा । यज्ञवाटं कपर्दी तु भिक्षार्थं समुपागतः॥३४॥
बृहत्कपालं संगृह्य पंचमुण्डैरलंकृतः । ऋत्विग्भिश्च सदस्यैश्च दूरात्तिष्ठञ्जुगुप्सितः ॥
कथं त्वमिह संप्राप्तो निंदितोवेदवादिभिः । एवंप्रोत्सार्यमाणोऽपि निंद्यमानःसतैर्द्विजैः॥
उवाच तान्द्विजान्सर्वान्स्मितं कृत्वा महेश्वरः ।

महेश्वर उवाच ।

अत्र पैतामहे यज्ञे सर्वेषां तोषदायिनि ॥ ३७ ॥

कश्चिदुत्सार्यतेनैव ऋतेमां द्विजसत्तमाः । उक्तःस तैःकपर्दी तु भुक्त्वा चान्नं ततो व्रज॥
कपर्दिना च तेउक्ताभुक्त्वायास्यामिभोद्विजाः । एवमुक्त्वानिषण्णःसकपालंन्यस्यचाग्रतः
तेषांनिरीक्ष्यतत्कर्मचक्रकौटिल्यमीश्वरः । मुक्त्वा कपालं भूमौ तुतान्द्विजानवलोकयन्॥
उवाच पुष्करं यामि स्नानार्थं द्विजसत्तमाः । तूर्णं गच्छेति तैरुक्तः स गतः परमेश्वरः॥
वियत्स्थितःकौतुकेन मोहयित्वा दिवौकसः। स्नानार्थं पुष्करं याते कपर्दिनि द्विजातयः
कथं होमोऽत्र क्रियते कपालेसदसिस्थिते । कपालं तान्यशौचानि पुरा प्राह प्रजापतिः

विप्रोऽभ्यधात्सदस्यैकःकपालमुत्क्षिपाम्यहम् ।
उद्धृतं तु सदस्येन प्रक्षिप्तं पाणिना स्वयम् ॥ ४४ ॥
तावदन्यत्स्थितं तत्र पुनरेव समुद्धृतम् । एवं द्वितीयं तृतीयं विंशतिस्त्रिंशदप्यहो ॥४५
पंचाशच्च शतंचैवसहस्रमयुतंतथा । एवं नांतः कपालानां प्राप्यते द्विजसत्तमैः ॥४६ ॥
नत्वा कपर्दिनं देवं शरणं समुपागताः । पुष्करारण्यमासाद्य जप्यैश्चवैदिकैर्भृशम् ॥४७
तुष्टुवुःसहिताःसर्वे तावत्तुष्टो हरःस्वयम् । ततःस दर्शनंप्रादाद्द्विजानांभक्तितःशिवः ॥
उवाच तांस्ततो देवो भक्तिनम्रान्द्विजोत्तमान् ॥

शिव उवाच ।

पुरोडाशस्य निष्पत्तिःकपालं न विना भवेत् ॥ ४९ ॥
कुरुध्वं वचनं विप्राभागःस्विष्टकृतोमम । एवं कृते कृतं सर्वं मदीयं शासनं भवेत्॥५०॥
तथेत्यूचुर्द्विजाश्शंभुं कुर्मो वै तव शासनम् । कपालपाणिराहेशो भगवंतं पितामहम् ॥
वरं वरय भो ब्रह्मन्हृदि यत्ते प्रियंस्थितम् । सर्वं तव प्रदास्यामि अदेयंनास्ति मे प्रभो ॥

ब्रह्मोवाच ।

न ते वरं ग्रहीष्यामि दीक्षितोऽहं सदःस्थितः । सर्वकामप्रदश्चाहं यो मां प्रार्थयते त्विह
एवं वदंतं वरदं क्रतौ तस्मिन्पितामहम् । तथेति चोक्त्वा रुद्रः स वरमस्मादयाचत ॥
ततो मन्वंतरेऽतीतेपुनरेवप्रभुःस्वयम् । ब्रह्मोत्तरं कृतं स्थानं स्वयं देवेन शंभुना ॥ ५५॥
चतुर्ष्वपि हि वेदेषु परिनिष्ठां गतो हि यः । तस्मिन्काले तदा देवो नगरस्यावलोकने॥
संभाषणे द्विजानां तु कौतुकेन सदोगतः । तेनैवोन्मत्तवेषेण हुतशेषे महेश्वरः ॥ ५७ ॥
प्रविष्टो ब्रह्मणःसद्म दृष्टोदेवैर्द्विजोत्तमैः । प्रहसंति च केऽप्येनं केचिन्निर्भर्त्सयंतिच॥५८
अपरे पांसुभिःसिञ्चन्त्युन्मत्तं तं तथाद्विजाः । लोष्टैश्च लगुडैश्चान्येशुष्मिणोबलगर्विताः
प्रहरन्तिस्मोपहासंकुर्वाणाहस्तसंविदम् । ततोऽन्येवटवस्तत्रजटाःस्वा गृह्य चांतिकम्॥
पृच्छंति व्रतचर्यां तां केनैषा ते निदर्शिता। अत्र वामाः स्त्रियः संति तासामर्थेत्वमागतः
केनैषा दर्शिता चर्या गुरुणा पापदर्शिना । येन चोन्मत्तवद्वाक्यं वदन्मध्येप्रधावसि ॥६२
शिश्नं मे ब्रह्मणो रूपं भगंचापि जनार्दनः । उप्यमानमिदंबीजंलोकःक्लिश्नातिचान्यथा ॥

मयाऽयं जनितः पुत्रो जनितोऽनेन चाप्यहम् । महादेवकृते सृष्टिःसृष्टा भार्या हिमालये॥
उमा दत्ता तु रुद्रस्य कस्य सा तनया वद । मूढा यूयं न जानीथ वदतां भगवांस्तु वः॥
ब्रह्मणा न कृता चर्या दर्शिता नैव विष्णुना । गिरिशेनापि देवेन ब्रह्मवध्याकृतेन तु ॥
कथंस्विद्वर्हसे देवं वध्योऽस्माकं त्वमद्य वै । एवं तैर्हन्यमानस्तु ब्राह्मणैस्तत्र शंकरः ॥
स्मितं कृत्वाऽब्रवीत्सर्वान्ब्राह्मणान्नृपसत्तम ॥

शिव उवाच ।

किं मां न वित्थ भोविप्रा उन्मत्तं नष्टचेतनम् ॥ ६८ ॥
यूयं कारुणिकाःसर्वे मित्रभावे व्यवस्थिताः । वदमान मिदं छद्म ब्रह्मरूपधरं हरम्॥६६॥
माययातस्यदेवस्यमोहितास्तेद्विजोत्तमाः । कपर्दिनं निजघ्नुस्ते पाणिपादैश्चमुष्टिभिः
दंडैश्चापि च कीलैश्च उन्मत्तवेषधारिणम् । पीड्यमानस्ततस्तैस्तु द्विजैःकोपमथागमत्॥
ततो देवेन ते शप्ता यूयं वेदविवर्जिताः । ऊर्ध्वजटाः क्रतुभ्रष्टाः परदारोपसेविनः ॥७२ ॥
वेश्यायां तु रता द्यूते पितृमातृविवर्जिताः।न पुत्रःपैतृकं वित्तं विद्यां वापि गमिष्यति॥
सर्वे च मोहिताः संतु सर्वेन्द्रियविवर्जिताः। रौद्रीं भिक्षां समश्नंतु परपिंडोपजीविनः॥
आत्मानं वर्तयंतश्च निर्ममा धर्मवर्जिताः । कृपार्पिता तु यैर्विप्रैरुन्मत्ते मयि सांप्रतम् ॥
तेषां धनं च पुत्राश्च दासीदासमजाविकम् । कुलोत्पन्नाश्च वैनार्योमयितुष्टेभजिष्यथ ॥
एवं शापं वरंचैव दत्त्वांतर्द्धानमीश्वरः । गतो द्विजागते देवे मत्वा तं शंकरं प्रभुम् ॥७७
अन्विष्यंतोऽपि यत्नेन न चापश्यंत ते यदा। तदा नियमसंपन्नाःपुष्करारण्यमागताः ॥
स्नात्वा ज्येष्ठसरो विप्राजेपुस्तेशतरुद्रियम् । जाप्यावसाने देवस्तानशरीरगिराब्रवीत् ॥

शिव उवाच ।

अनृतं न मयाप्रोक्तं स्वैरैष्वपिकुतः पुनः । आगते निग्रहे क्षेमं भूयोऽपि करवाण्यहम् ॥
शांता दांता द्विजाये तु भक्तिमंतो मयि स्थिराः। न तेषां छिद्यते वेदो न धनंनापिसंततिः
अग्निहोत्ररता येच भक्तिमंतो जनार्दने । पूजयंति च ब्रह्माणं तेजोराशिं दिवाकरम् ॥
नाशुभं विद्यते तेषां येषांसाम्येस्थितामतिः। एतावदुक्त्वावचनंतूष्णींभूतस्तुसोऽभवत् ॥
लब्ध्वा वरं स प्रसादं देवदेवान्महेश्वरात् । आजग्मुः सहितास्सर्वे यत्र देवः पितामहः॥

विरिञ्चिसंहिताजाप्यैस्तोषयंतोऽग्रतःस्थिताः। तुष्टस्तानब्रवीद्ब्रह्मामत्तोऽपिव्रियतांवरः॥
ब्रह्मणस्तेन वाक्येन हृष्टाःसर्वे द्विजोत्तमाः । को वरो याच्यतां विप्राःपरितुष्टेपितामहे॥
एके तत्राब्रुवन्विप्रा वेदान्वैवृणवामहे। नेति चान्ये धनं चान्ये व्रियतामविशङ्कितैः ॥
किमस्माकं धनेनेह कार्यंतुष्टेपितामहे। अग्निहोत्राणि वेदाश्च शास्त्राणि विविधानिच ॥
सांतानिकाश्च ये लोका वरदानाद्भवंतु नः । एवं प्रजल्पतां तत्र विप्राणांकोपमाविशत्॥
के यूयं केऽत्रप्रवरा वयं श्रेष्ठास्तथापरे। नेति नेति तथाविप्राद्विजांस्तांस्तत्रसंस्थितान्॥

ब्रह्मोवाचाभिसंप्रेक्ष्य ब्राह्मणान्क्रोधपूरितान् ।
यस्माद्यूयंत्रिभिर्भागैःसभायां बाह्यतःस्थिताः ॥ ९१ ॥

तस्मादामूलिकोगुल्मोह्येको भवतु वोद्विजाः । उदासीनाःस्थितायेतु उदासीनाभवंतुते
सायुधा बद्धनिस्त्रिंशायोद्धुकामाव्यवस्थिताः। कौशिकीतिगणोनामतृतीयोभवतुद्विजाः
त्रिधाबद्धमिदंस्थानंसर्वंयुष्मद्भविष्यति। बाह्यतो लोकशब्देन प्रोच्यमानाःप्रजास्त्विह ॥
अविक्रेयं नास्ति वोऽत्र सर्वस्वं वःप्रणश्यति। तृणानि भूमिरुदकं तथावै दारु संचयः॥
प्रतिग्रहे चानुवृत्तिः कुपिताश्च परस्परम् । अभिप्रपन्नविप्राणां क्षमा वै नात्र काचन ॥
केवलं द्रव्यरुचयो लोभोपहतचेतसः । एवंविधा रुद्रशापाद्भवितारो न संशयः ॥९७॥
युष्माकंस्थानमेतत्तुविष्णुःपालयिताध्रुवम् । मयादत्तंचिरस्थायि अभंगं च भविष्यति ॥
एवमुक्त्वा तदा ब्रह्मा समाप्तिं तामवैक्षत । ब्राह्मणाः सहितास्तेतु यज्ञार्थे विबुधैस्सह ॥
अतिथिं भोजयानाश्च वेदाभ्यास रतास्तुते। एतच्च परमं क्षेत्रं पुष्करं ब्रह्मसंज्ञितम् ॥
तत्रस्थाये द्विजाःशांतावसंतिक्षेत्रवासिनः । न तेषां दुर्लभं किंचिद् ब्रह्मलोकेभविष्यति १०१
कोकामुखे कुरुक्षेत्रे नैमिषे ऋषिसंगमे । वाराणस्यां प्रभासे च तथा बदरिकाश्रमे ॥
गङ्गाद्वारे प्रयागे च गंगासागरसंगमे । रुद्रकोट्यांविरूपाक्षे मित्रस्यापि तथावने ॥१०३
तीर्थेष्वेतेषुसर्वेषु सिद्धिर्याद्वादशाब्दिका । प्राप्यते मानवैर्लोके षण्मासाद्राजसत्तमः ॥
पुष्करे तु न संदेहो ब्रह्मचर्यमनायदि। तीर्थानां परमंतीर्थं क्षेत्राणामपिचोत्तमम् ॥ १०५
सदा तु पूजितं पूज्यैर्भक्तियुक्तैःपितामहे। अतःपरं प्रवक्ष्यामि सावित्र्या ब्रह्मणा सह ॥
वादोयथानुभूतस्तु परिहासकृतो महान्। सावित्री गमने सर्वा आगता देवयोषितः ॥

भृगोःख्यात्यां समुत्पन्ना विष्णुपत्नी यशस्विनी ।
आमन्त्रिता तदा लक्ष्मीस्तत्रायाता त्वरान्विता ॥ १०८ ॥
मदिरा च महाभागा योगनिद्रा विभूतिदा । श्रीःकमलालयाभूतिःकीर्तिःश्रद्धामनस्विनी
पुष्टि तुष्टिप्रदाया तु देव्यएताः समागताः । सती या दक्षतनया उमेति पार्वती शुभा ॥
त्रैलोक्यसुन्दरीदेवी स्त्रीणां सौभाग्यदायिनी । जया च विजयाचैव मधुच्छंदामरावती
सुप्रिया जनकांता च साविच्यामंदिरे शुभे । गौर्या सहसमायातास्सुवेषाभरणान्विताः
पुलोमदुहिता चैव शक्राणी च सहाप्सराः ।
स्वाहा चापि स्वधायाता धूमो(म्रो)र्णा च वरानना ॥ ११३ ॥
यक्षी तु राक्षसीचैव गौरीचैव महाधना । मनोजवा वायुपत्नी ऋद्धिश्च धनदप्रिया ॥
देवकन्यास्तथायाता दानव्योदनुवल्लभाः । सप्तर्षीणां महापत्न्य ऋषीणां च वरांगनाः ॥
एवं भगिन्यो दुहिता विद्याधरीगणास्तथा । राक्षस्यःपितृकन्याश्च तथान्यालोक मातरः
वधूभिः सस्नुषाभिश्च सावित्री गंतुमिच्छति ।
आदित्याद्यास्तथा सर्वा दक्षकन्यास्समागताः ॥११७ ॥
ताभिः परिवृतासाध्वी ब्रह्माणी कमलालया । काचिन्मोदकमादाय काचिच्छूर्पंवरानना
फलपूरितमादाय प्रयाताब्रह्मणोऽतिकम् । आढकीःसहनिष्पावा गृहीत्वान्यास्तथापराः
दाडिमानि विचित्राणि मातुलिंगानि शोभना ।
करीराणि तथा चान्या गृहीत्वा कमलानि च ॥ १२० ॥
कौसुंभकंजीरकं च खर्जूरमपरातथा । उत्तमान्यपरादाय नालिकेराणि सर्वशः ॥१२१॥
द्राक्षया पूरितंकाचित्पात्रंश्शृगाटकं तथा । कर्पूराणि विचित्राणि जंबुकानि शुभानि च
अक्षोटामलकान्गृह्य जंबीराणि तथापरा । बिल्वानि परिपक्वानि चिपिटानि वरानना ॥
अतुल्यान्नविकाराणि बहूनि विविधानि च ।
कार्पासतूलिकाश्चान्या वस्त्रं कौसुंभकं तथा ॥ १२४ ॥
एवमाद्यानिचान्यानि कृत्वाशूर्पे वराननाः । साविन्यासहिताःसर्वाःसंप्राप्ताःसहसाशुभाः
सावित्रीमागतां दृष्ट्वा भीतस्तत्रपुरंदरः । अधोमुखः स्थितो ब्रह्मा किमेषा मांवदिष्यति ॥

त्रपान्वितौविष्णुरुद्रौसर्वेचान्ये द्विजातयः। सभासदस्तथाभीतास्तथा चान्ये दिवौकसः
पुत्राःपौत्रा भागिनेया मातुला भ्रातरस्तथा। ऋभवोनाम ये देवा देवानामपि देवताः॥
वैलक्ष्ये तु स्थिताःसर्वे सावित्रीकिंवदिष्यति। ब्रह्मपार्श्वेस्थितातत्रकिंतुवैगोपकन्यका
मौनीभूता तु शृण्वाना सर्वेषां वदतांगिरः। अध्वर्युणा समाहूता नागतावरवर्णिनी॥
शक्रेणान्याहृताभीरीदत्तासाविष्णुनास्वयम्। अनुमोदिताचरुद्रेणपित्राऽदत्तास्वयंतथा
कथं सा भविता यज्ञसमाप्तिं वा व्रजेत्कथम्। एवं चिंतयतां तेषां प्रविष्टाकमलालया
वृतो ब्रह्मा सदस्यैस्तु ऋत्विग्भिर्दैवतैस्तथा। हूयन्तेचाग्नयस्तत्र ब्राह्मणैर्वेदपारगैः॥
पत्नीशालास्थिता गोपी सैणशृंगासमेखला। क्षौमवस्त्रपरीधाना ध्यायंतीपरमं पदम्॥
पतिव्रतापतिप्राणा प्राधान्ये च निवेशिता। रूपान्विताविशालाक्षी तेजसाभास्करोपमा
द्योतयंती सदस्तत्र सूर्य्यस्येव यथाप्रभा। ज्वलमानं तथा वह्निं श्रयंते ऋत्विजस्तथा॥
पशूनामिह गृह्णाना भागं स्व स्वचरोर्मुदा। यज्ञभागार्थिनो देवा विलंबाद्ब्रुवते तदा॥
कालहीनं न कर्तव्यं कृतं न फलदं यतः। वेदेष्वेवमधीकारो (?) दृष्टःसर्वैर्मनीषिभिः॥
प्रावर्ग्ये क्रियमाणे तु ब्राह्मणैर्वेदपारगैः। क्षीरद्वयेन संयुक्तशृतेनाध्वर्युणा तथा॥१३९॥
उपहूते नागतेन चाहूतेषु द्विजन्मसु। क्रियमाणे तथा भक्ष्ये दृष्ट्वा देवीरुषान्विता॥१४०

उवाच देवी ब्रह्माणं सदोमध्ये तु मौनिनम्।

सावित्र्युवाच।

किमेतद्युज्यते देव कर्तुमेतद्विचेष्टितम्॥ १४१॥

मां परित्यज्य यत्कामात्कृतवानसि किल्बिषम्। न तुल्यापादरजसा ममेयंगोपकन्यका
यद्वदंतिजनास्सर्वे संगताः सदसिस्थिताः। आज्ञामीश्वर भूतानां तां कुरुष्व यदिच्छसि
भवतारूपलोभेन कृतंलोक विगर्हितम्। पुत्रेषु न कृतालज्जा पौत्रेषु च न ते प्रभो॥
कामकारकृतंमन्य एतत्कर्मविगर्हितम्। पितामहोऽसिदेवानामृषीणां प्रपितामहः॥
कथंनतेत्रपाजाता आत्मनःपश्यतस्तनुम्। लोकमध्ये कृतंहास्यमहंचापि कृताप्रभो॥
यद्येषतेस्थिरोभावस्तिष्ठदेव नमोऽस्तुते। अहं कथं सखीनां तु दर्शयिष्यामि वै मुखम्॥

भर्त्रा मे विधृता पत्नी कथमेतदहं वदे।

ब्रह्मोवाच ।

ऋत्विग्भिस्त्वरितश्चाहं दीक्षाकालादनन्तरम् ॥ १४८ ॥
पत्नींविना न होमोऽत्र शीघ्रपत्नीमिहानय । शक्रेणैषासमानीता दत्तेयं मम विष्णुना ॥
गृहीता च मयासुभ्रु क्षमस्वैतं मयाकृतम् । न चापराधं भूयोऽन्यं करिष्ये तव सुव्रते ॥
पादयोः पतितस्तेऽहं क्षमस्वेह नमोऽस्तु ते ॥

पुलस्त्य उवाच ।

एवमुक्ता तदा क्रुद्धा ब्रह्माणं शप्तुमुद्यता ॥१५१॥
यदि मेऽस्ति तपस्तप्तं गुरवो यदि तोषिताः । सर्वब्रह्मसमूहेषु स्थानेषु विविधेषु च ॥
नैवते ब्राह्मणाःपूजां करिष्यंति कर्हाचन । ऋते तु कार्तिकीयकांपूजां सांवत्सरीं तव॥
करिष्यंति द्विजाःसर्वेमर्त्यानान्यत्रभूतले । एतद्ब्रह्मणमुक्त्वाहशतक्रतुमुपस्थितम् ॥
भो भोःशक्र त्वयानीता आभीरी ब्रह्मणोंऽतिकम् ।
यस्मात्ते क्षुद्रकं कर्म तस्मात्त्वं लप्स्यसेफलम् ॥१५५॥
यदा संग्राममध्येत्वंस्थाताशक्र भवष्यसि । तदात्वं शत्रुभिर्बद्ध नीतःपरमिकांदशाम् ॥
अकिंचनोनष्टसत्त्वःशत्रूणांनगरेस्थितः । पराभवंमहत्प्राप्यनचिरादेवमोक्ष्यसे ॥१५७॥
शक्रंशप्त्वा तदा देवी विष्णुं वाक्यमथाब्रवीत् ॥
भृगुवाक्येन ते जन्म यदा मर्त्ये भविष्यति ॥१५८॥
भार्यावियोगजं दुःखं तदा त्वं तत्र भोक्ष्यसे । हृतां ते शत्रुणा पत्नी परेपारे महोदधेः ॥
न च त्वं ज्ञास्यसे नीतां शोकोपहतचेतनः । भ्रात्रा सह परांकष्टा मा पदंप्राप्यदुःखितः
यदा यदुकुलेजातः कृष्णसंज्ञो भविष्यसि। पशूनां पालकोभूत्वा चिरकालं भ्रमिष्यसि
तदाह रुद्रं कुपिता यदा दारुवनेस्थितः। तदा ते ऋषयः क्रुद्धाः शापं दास्यंति वै हर ॥
भो भोःकापालिकक्षुद्र स्त्रीरस्माकं जिहीर्षसि । तदेतद्दर्पितं तेऽद्य भूमौ लिंगं पतिष्यति
विहीनःपौरुषेणत्वंमुनिशापाच्चपीड़ितः । गंगाद्वारेस्थितापत्नी सा त्वामाश्वासयिष्यति
अग्ने त्वं सर्वभक्षोऽसि पूर्वं पुत्रेण मे कृतः । भृगुणाधर्मनित्येन कथं दग्धं दहाम्यहम्॥
जातवेदस्सरुद्रस्त्वां रेतसा प्लावयिष्यति ।

अमेध्येषु च ते जिह्वा अधिकं प्रज्वलिष्यति ॥ १६६ ॥

ब्राह्मणानृत्विजः सर्वान्सावित्रीवैशशाप ह । प्रतिग्रहार्थेऽग्निहोत्रे वृथाटव्याश्रयास्तथा
सदा तीर्थानि क्षेत्राणि लोभादेव भविष्यथ । परान्नेषु सदा तृप्ता अतृप्तास्स्वगृहेषु च॥
अयाज्ययाजनं कृत्वा कुत्सितस्यप्रतिग्रहम् । वृथा धनार्जनं कृत्वा व्ययं चैव तथा वृथा
प्रेतानां तेन प्रेतत्वं भविष्यति न संशयः । एवं शक्रं तथा विष्णुं रुद्रं वै पावकं तथा ॥
ब्रह्माणं ब्राह्मणांश्चैव सर्वांस्तानशपद्रुषा । शापंदत्त्वा तथा तेषां निष्क्रांतासदसस्तथा
ज्येष्ठंपुष्करमासाद्य तदा सा च व्यवस्थिता । लक्ष्मींप्राहसतीं तां च शक्रभार्यांवराननाम्
युवतीस्तास्तथोवाचनात्रस्थास्यामिसंसदि । तत्र चाहंगमिष्यामियत्रश्रोष्येनचध्वनिम्

पुलस्त्य उवाच ।

ततस्ताः प्रमदाःसर्वाः प्रयाताःस्वनिकेतनम् । सावित्री कुपितातासामपिशापायचोद्यता
यस्मान्मांतु परित्यज्यगतास्तादेवयोषितः । तासामपि तथाशापं प्रदास्ये कुपिताभृशम्

सावित्र्युवाच ।

नैकत्रवासोलक्ष्म्यास्तु भविष्यतिकदाचन । क्षुद्रासाचलचित्ता च मूर्खेषु च वसिष्यति
म्लेच्छेषु पार्वतीयेषु कुत्सितेऽकुत्सिते तथा । मूर्खेषु चावलिप्तेषु अभिशप्ते दुरात्मनि॥
एवंविधे नरे स्यात्तेवसतिःशापकारिता । शापं दत्त्वा ततस्तस्या इन्द्राणीमशपत्तदा ॥
ब्रह्महत्या गृहीतेन्द्र पत्यौ ते दुःखभागिनि । नहुषापहृतेराज्ये दृष्ट्वा त्वां याचयिष्यति
अहमिंद्रः कथंचैषानोपस्थास्यति बालिशा । सर्वान्देवान्हनिष्यामि नलप्स्येऽहंशचींयदि
नष्टात्वं च तदात्रस्ता वाक्पतेर्दुःखितागृहे । वसिष्यसे दुराचारे मम शापेनगर्विते ॥

देवभार्यासु सर्वासु तदा शापमयच्छत ।
न चापत्यकृतां प्रीतिमेताःसर्वा लभिष्यथ ॥ १८२ ॥

दह्यमानादिवारात्रौ वंध्याशब्देन दूषिताः । गौर्य्यप्येवं तदा शप्ता सावित्र्यावरवर्णिनी॥

रुदमानातु सा दृष्टा विष्णुना च प्रसादिता ।

विष्णुरुवाच ।

मा रोदीस्त्वं विशालाक्षि एह्यागच्छ सदा शुभे ॥ १८४ ॥

प्रविश्य च सभां देहि मेखलांक्षौमवाससी । गृहाणदीक्षां ब्रह्माणि पादौ च प्रणमामिते
एवमुक्ताऽब्रवीदेनं न करोमि वचस्तव । तत्र चाहं गमिष्यामि यत्र श्रोष्येन वै ध्वनिम्

एतावदुक्त्वा सारुह्य तस्मात्स्थानाद्गिरौ स्थिता ।
विष्णुस्तदग्रतःस्थित्वा बद्ध्वा च करसंपुटम् ॥१८७ ॥
तुष्टाव प्रणतो भूत्वा भक्त्या परमया स्थितः ।

विष्णुरुवाच ।

सर्वगा सर्वभूतेषु द्रष्टव्या सर्वतोऽद्भुता ॥१८८ ॥

सदसच्चैवयत्किंचिद्दृश्यं तन्न विना त्वया । तथापियेषुस्थानेषु द्रष्टव्यासिद्धिमीप्सुभिः
स्मर्तव्या भूमिकामैर्वा तत्प्रवक्ष्यामितेऽग्रतः । सावित्री पुष्करेनाम तीर्थानांप्रवरे शुभे॥
वाराणस्यां विशालाक्षी नैमिषे लिंगधारिणी । प्रयागे ललितादेवी कामुकागंधमादने॥
मानसे कुमुदा नाम विश्वकाया तथांबरे । गोमंते गोमतीनाम मंदरे कामचारिणी ॥
मदोत्कटा चैत्ररथे जयंती हस्तिनापुरे । कान्यकुब्जे तथा गौरी रंभा मलयपर्वते॥१९३
एकाम्रके कीर्तिमती विश्वा विश्वेश्वरी तथा । कर्णिके पुरुहस्तेति केदारे मार्गदायिका
नंदा हिमवतःपृष्ठे गोकर्णे भद्रकालिका । स्थाण्वीश्वरे भवानीतु बिल्वकेबिल्वपत्रिका
श्रीशैले माधवी देवी भद्रा भद्रेश्वरी तथा । जया वराहशैलेतु कमला कमलालये॥१९६
रुद्रकोट्यां तु रुद्राणी काली कालंजरे तथा । महालिंगेतु कपिला कर्कोटे मंगलेश्वरी
शालग्रामे महादेवी शिवलिंगे जलप्रिया । मायापुर्यां कुमारी तु संताने ललिता तथा
उत्पलाक्षी सहस्राक्षे हिरण्याक्षे महोत्पला । गयायां मंगलानाम विमला पुरुषोत्तमे ॥
विपाशायाममोघाक्षी पाटला पुण्यवर्द्धने । नारायणी सुपार्श्वेतु त्रिकूटे भद्रसुंदरी ॥
विपुले विपुला नाम कल्याणी मलयाचले । कोटवी कोटितीर्थे तु सुगंधा माधवी वने
कुब्जाम्रके त्रिसंध्या तु गंगाद्वारे हरिप्रिया । शिवकुंडे शिवानंदा नंदिनी देविकातटे ॥

रुक्मिणी द्वारवत्यां तु राधा वृन्दावने तथा ।
देवकी मथुरायां तु पाताले परमेश्वरी ॥ २०३ ॥

चित्रकूटे तथा सीता विंध्ये विंध्यनिवासिनी । सह्याद्रावेकवीरा तु हरिश्चंद्रेतु चंद्रिका

रमणा रामतीर्थे तु यमुनायां मृगावती । करवीरे महालक्ष्मीरुमादेवी विनायके ॥२०५॥
अरोगा वैद्यनाथे तु महाकाले महेश्वरी । अभया पुष्पतीर्थे तु अमृता विंध्यकंदरे ॥
मांडव्ये मांडवीदेवी स्वाहा माहेश्वरेपुरे । वेगले तु प्रचंडाथ चंडिकामरकंटके ॥२०७।
सोमेश्वरे वरारोहा प्रभासे पुष्करावती । देवमाता सरस्वत्यां पारापारतटेस्थिता ॥
महालये महापद्मा पयोष्ण्यां पिंगलेश्वरी । सिंहिकाकृतशौचे तु कार्तिकेये तु शंकरी ॥
उत्पलावर्तके लोला सुभद्रा सिंधुसंगमे । उमा सिद्धवने लक्ष्मीरनंगा भरताश्रमे॥२१०
जालंधरे विश्वमुखी तारा किष्किंधपर्वते । देवदारुवने पुष्टिर्मेधा काश्मीरमण्डले॥२११
भीमादेवी हिमाद्रौ च तुष्टिर्वस्त्रेश्वरे तथा । कपालमोचने श्रद्धा माता कायावरोहणे ॥
शंखोद्धारेध्वनिर्नाम धृतिः पिंडारके तथा । काला तु चंद्रभागायामच्छोदेसिद्धिदायिनी
वेणायाममृतादेवी बदर्यामुर्वशी तथा । औषधी चोत्तरकुरौ कुशद्वीपे कुशोदका॥२१४॥
मन्मथा हेमकूटे तु कुमुदे सत्यवादिनी । अश्वत्थे वंदनीया तु निधिर्वैश्रवणालये ॥
गायत्री वेदवदने पार्वती शिवसन्निधौ । देवलोके तथेंद्राणी ब्रह्मास्ये तु सरस्वती ॥
सूर्यबिंबे प्रभा नाम मातॄणां वैष्णवी तथा । अरुन्धती सतीनां तु रामासु च तिलोत्तमा
चित्रे ब्रह्मकला नाम शक्तिः सर्वशरीरिणाम् । एतद्भक्त्यामयाप्रोक्तंनामाष्टशतमुत्तमम् ॥
अष्टोत्तरं च तीर्थानां शतमेतदुदाहृतम् । यो जपेच्छृणुयाद्वापिसर्वपापैःप्रमुच्यते॥२१६॥
येषु तीर्थेषु यःकृत्वा स्नानं पश्येन्नरोत्तमः । सर्वपापविनिर्मुक्तः कल्पं ब्रह्मपुरे वसेत् ॥
नामाष्टकशतं यस्तु श्रावयेद्ब्रह्मसन्निधौ । पौर्णमास्याममायां वा बहुपुत्रो भवेन्नरः ॥
गोदाने श्राद्धदाने वा अहन्यहनि वा पुनः । देवार्चनविधौ शृण्वन्परं ब्रह्माधिगच्छति॥

एवं स्तुवंतं सावित्री विष्णुं प्रोवाच सुव्रता ।

सावित्र्युवाच ।

सम्यक्स्तुता त्वया पुत्र त्वमजय्यो भविष्यसि॥२२३॥

अवतारे सदारस्त्वं पितृमातृषुवल्लभः । इह चागत्य यो मां तु स्तवेनानेन संस्तुयात् ॥
सर्वपापविनिर्मुक्तःपरं स्थानं गमिष्यति । गच्छ यज्ञं विरिञ्चस्य समाप्तिं नय पुत्रक ॥
कुरुक्षेत्रे प्रयागे च भविष्ये चान्नदायिनी । समीपगास्थिताभर्त्तःकरिष्येतवभाषितम् ॥

पुलस्त्य उवाच ।

एवमुक्तोगतो विष्णुर्ब्रह्मणःसद उत्तमम् । गतायामथ सावित्र्यां गायत्री वाक्यमब्रवीत्॥

गायत्र्युवाच ।

शृण्वन्तु वाक्यमृषयो मदीयंभर्तृ सन्निधौ । यदिदं वच्म्यहं तुष्टा वरदानाय चोद्यता ।
ब्रह्माणं पूजयिष्यंति नराभक्तिसमन्विताः । तेषां वस्त्रं धनं धान्यंदाराःसौख्यंधनानिच
अविच्छिन्नं तथा सौख्यं गृहे वैपुत्रपौत्रकम् । भुक्त्वासौसुचिरंकालमंतेमोक्षंगमिष्यति

पुलस्त्य उवाच ।

ब्रह्माणं च प्रतिष्ठाप्य सर्वयत्नैर्विधानतः । यत्पुण्यफलमाप्नोति तदेकाग्रमनाःशृणु॥२३१
सर्वयज्ञतपोदानतीर्थं वेदेषु यत्फलम् । तत्फलं कोटिगुणितं लभेतैतत्प्रतिष्ठया ॥२३२॥
पौर्णमास्युपवासं तु कृत्वा भक्त्यानराधिप । अनेन विधिना यस्तु विरिंचिं पूजयेन्नरः॥
प्रतिपदि महाबाहो स यातिब्रह्मणःपदम् । विरिंचिं वासुदेवं तु ऋत्विग्भिश्चविशेषतः॥

कार्तिके मासि देवस्य रथयात्रा प्रकीर्तिता ।
यां कृत्वा मानवा भक्त्या संयांति ब्रह्मलोकताम् ॥ २३५ ॥

कार्तिकेमासि राजेंद्र पौर्णमास्यां चतुर्मुखम् । मार्गेण ब्रह्मणा सार्द्धंसावित्र्या च परंतप
भ्रामयेन्नगरं सर्वं नानावाद्यसमन्वितः । स्थापयेद्भ्रामयित्वा तु सलोकनगरं नृप ॥
ब्राह्मणान्भोजयित्वाग्रे शांडिलेयं प्रपूज्यच । आरोपयेद्रथे देवं पुण्यवादित्रनिःस्वनैः ॥
रथाग्रे शांडिलीपुत्रं पूजयित्वा विधानतः । ब्राह्मणान्वाचयित्वातुकृत्वापुण्याहमङ्गलम्
देवमारोपयित्वा च रथे कुर्यात्प्रजागरम् । नानाविधैः प्रेक्षणिकैर्ब्रह्मघोषैश्च पुष्कलः ॥
कृत्वा प्रजागरं देवं प्रभाते ब्राह्मणान्नृप । भोजयित्वा यथाशक्ति भक्ष्यभोज्यैरनेकशः॥
पूजयित्वा जनंधीरमंत्रेणविधिवन्नृप । आज्येन तु महाबाहो पयसापायसेन च॥२४२॥

ब्राह्मणान्वाचयित्वा तु स्वस्त्या तु विधिवन्नृप ।
कृत्वा पुण्याहशब्दं च तद्रथं भ्रामयेत्पुरे ॥२४३ ॥

विप्रैश्चतुर्वेदविद्भिर्भ्रामयेद्ब्रह्मणोरथम् । बह्वृचाथर्वणैर्वीरछंदोगाध्वर्युभिस्तथा ॥२४४॥

भ्रामयेद्देवदेवस्य सुरश्रेष्ठस्य तं रथम् । प्रदक्षिणं पुरं सर्वं मार्गेण सुसमेन तु ॥२४५॥
नवोढव्यो रथो वीर शूद्रेण हितमिच्छता । नचारोहेद्रथं प्राज्ञो मुक्त्वैकं भोजकं नृप ॥
ब्रह्मणो दक्षिणे पार्श्वे गायत्रीं स्थापयेन्नृप । भोजकं वामपार्श्वे तु पुरतः पङ्कजे न्यसेत्
एवं तूर्यनिनादैस्तु शंखशब्दैश्च पुष्कलैः । भ्रामयित्वा रथं वीर पुरं सर्वं प्रदक्षिणम् ॥

स्वस्थाने स्थापयेद्देवं दत्वा नीराजनं बुधः ।
य एवं कुरुते यात्रां यो वा भक्त्यापि पश्यति ॥ २४६ ॥
रथं वा कर्षयेद्यस्तु स गच्छेद् ब्रह्मणः पदम् ।
कार्तिके मास्यमावास्यां यश्च दीपप्रदीपनम् ॥ २५० ॥

शालायां ब्रह्मणः कुर्यात्स गच्छेत्परमं पदम् । गंधपुष्पैर्नवैर्वस्त्रैरात्मानं पूजयेत्तु यः ॥
तस्यां प्रतिपदायां तु स गच्छेद्ब्रह्मणः पदम् । महापुण्या तिथिरियं बलिराज्यप्रवर्तिनी
ब्रह्मणः सुप्रिया नित्यंबालेयी परिकीर्तिता । ब्रह्माणं पूजयेद्योऽस्यामात्मानं च विशेषतः
स याति परमं स्थानं विष्णोरमिततेजसः । चैत्रमासि महाबाहो पुण्या प्रतिपदांवरा ॥

तस्यां यः श्वपचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तमः ।
न तस्य दुरितं किंचिन्नाधयो व्याधयो नृप ॥२५५ ॥

भवंति कुरुशार्दूल तस्मात्स्नानं समाचरेत् । दिव्यं नीराजनं तद्धि सर्वरोगविनाशनम्

गोमहिष्यादि यत्किंचित्तत्सर्वं कर्षयेन्नृप ।
तेन वस्त्रादिभिः सर्वैस्तोरणं बाह्यतो न्यसेत् ॥ २५७॥

ब्राह्मणानां तथा भोज्यं कुर्यात्कुरुकुलोद्वह । तिस्रो ह्येताः पुरा प्रोक्तास्तिथयःकुरुनंदन
कार्तिकेऽयुजे मासि चैत्रे मासि तथा नृप । स्नानं दानं शतगुणं कार्तिके या तिथिर्नृप

बलिराज्ञस्तु शुभदा पशूनां हितकारिणी ।

गायत्र्युवाच ।

यदुक्तं तु तया वाक्यं सावित्र्या कमलोद्भवः ॥ २६० ॥

न तु ते ब्राह्मणाःपूजां करिष्यंति कदाचन । मदीयं तु वचः श्रुत्वा ये करिष्यंतिचार्चनम्
इह भुक्त्वा तु भोगांस्ते परत्र मोक्षभागिनः । एतां ज्ञात्वा परांदृष्टिं परं तुष्टःप्रयच्छति

शक्राहं ते वरं दास्ये संग्रामे शत्रुनिग्रहे। तदा ब्रह्मा मोचयिता गत्वा शत्रुनिकेतनम्॥
स्वपुरं लप्स्यसे नष्टं शत्रुनाशात्परां मुदम्। अकंटकं महद्राज्यं त्रैलोक्ये ते भविष्यति
मर्त्यलोके यदा विष्णो अवतारं करिष्यसि। भ्रात्रा सहपरं दुःखं स्वभार्याहरणादिजम्

हत्वा शत्रुं पुनर्भार्यां लप्स्यसे सुरसन्निधौ।
गृहीत्वा तां पुना राज्यं कृत्वा स्वर्गं गमिष्यसि॥२६६॥

एकादश सहस्राणि वर्षाणां च पुनर्दिवम्। ख्यातिस्ते विपुला लोके अनुरागं जनैस्सह

सांतानिका नाम तु वै लोकाः स्थास्यंति भाविताः।
त्वया ते तारिता देव रामरूपेण मानवाः॥२६८॥

गायत्री तु तदा रुद्रं वरदा प्रत्यभाषत। पतितेऽपि च ते लिंगे पूजां कुर्वंति ये नराः॥
ते पूताः पुण्यकर्माणःस्वर्गलोकस्य भागिनः। न तां गतिं चाग्निहोत्रे न क्रतौ हुतपावके
यां गतिं मनुजा यांति तव लिंगस्य पूजनात्। गंगातीरे सदा लिंगं बिल्वपत्रेण ये तव
पूजयिष्यंति सुप्रीता रुद्रलोकस्य भागिनः। प्राप्यापि सर्वभक्षत्वमग्ने त्वं भव पावनः॥

त्वयि प्रीते सुराः सर्वे प्रीता वै नात्र संशयः।
त्वन्मुखेन हविर्देवाः प्रीताः प्राप्य सदा ध्रुवम्॥२७३॥

भुंजते नात्र संदेहो वेदोक्तं वचनं यथा। गायत्री ब्राह्मणांस्तांश्च सर्वांश्चैवाब्रवीदिदम्
युष्माकं प्रीणनं कृत्वा सर्वतीर्थेषु मानवाः। पदं सर्वे गमिष्यंति वैराजाख्यं न संशयः
अन्नप्रकारान्विविधान्दत्त्वा दानान्यनेकशः। श्राद्धेषु प्रीणनं कृत्वा देव देवा भवंति ते
ये च वै ब्राह्मणश्रेष्ठास्तेषामास्ये दिवौकसः। भुंजते च हविः क्षिप्रं कव्यं चैव पितामहाः
यूयं हि धारणे शक्तास्त्रैलोक्यस्य न संशयः। प्राणायामेन चैकेन सर्वे पूता भविष्यथ॥

विशेषात्पुष्करे स्नात्वा मां जप्त्वा वेदमातरम्।
प्रतिग्रहकृतान्दोषान्न प्राप्स्यथ द्विजोत्तमाः॥७९॥
पुष्करे चान्नदानेन प्रीताः स्युः सर्वदेवताः।
एकस्मिन्भोजिते विप्रे कोट्याः फलमवाप्स्यते॥२८०॥

ब्रह्महत्यादिपापानि दुष्कृतानि कृतानि च। तरिष्यन्ति नरास्सर्वे दत्त्वा युष्मत्करेधनम्

मदीयेनतुजाप्येन जन्मभिस्तुत्रिभिःकृतम् । ब्रह्महत्यासमंपापं तत्क्षणादेव नश्यति ॥२८२
दशभिर्जन्मभिर्जातं शतेन च पुराकृतम् । त्रियुगेन सहस्रेण गायत्री हंति किल्बिषम् ॥
एवं ज्ञात्वा सदापूता जाप्ये तु मम वै कृते। भविष्यध्वं न संदेहो नात्र कार्याविचारणा
प्रणवेन त्रिमात्रेण सार्द्धं जप्त्वा विशेषतः । पूताःसर्वे न सदेहो जप्त्वा मां शिरसासह
अष्टाक्षरा स्थिता चाहं जगद्व्याप्तं मया त्विदम् । माताहं सर्ववेदानां पदैः सर्वैरलंकृता॥
जप्त्वा मां भक्तितःसिद्धिं यास्यंति द्विजसत्तमाः ।
प्राधान्यं मम जाप्येन सर्वेषां वो भविष्यति ॥ २८७ ॥
गायत्रीमात्रसारोऽपि वरं विप्रः सुसंयतः । नायं त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥
यस्माद्विप्रेषु सावित्र्या शापो दत्तःसदस्यथ । अत्र दत्तं हुतं चापि सर्वमक्षयकारकम्॥
दत्तो वरो मया तेन युष्माकं द्विजसत्तमाः । अग्निहोत्रपरा विप्रास्त्रिकालंहोमदायिनः
स्वर्गं ते तु गमिष्यंति सैकविंशतिभिःकुलैः ।

पुलस्त्य उवाच ।

एवं शक्रस्य विष्णोश्च रुद्रस्य पावकस्य च ॥ २९१ ॥
ब्रह्मणो ब्राह्मणानां च गायत्रीवरमुत्तमम् । तस्मिन्वै पुष्करे दत्त्वा ब्रह्मणःपार्श्वगाभवत्
चारणैस्तु तदाख्यातं लक्ष्म्या वै शापकारणम् ।
युवतीनां च सर्वासां शापाञ्ज्ञात्वापृथक् पृथक् ॥२९३॥
लक्ष्म्याश्चैव वरं प्रादाद्गायत्री ब्रह्मणः प्रिया ।

गायत्र्युवाच ।

अकुत्सितान्सदा सर्वान्कुर्वंती धनशोभना ॥ २९४ ॥
शोभिष्यसे न संदेहःसर्वेभ्यःप्रीतिदायिनी । येत्वया वीक्षिताःपुत्रि सर्वेते पुण्यभाजनाः
परित्यक्तास्त्वया ये तु सर्वे ते दुःखभागिनः । तेषां जातिः कुलं शीलं धर्मश्चैव वरानने
सभायां ते च शोभंते दृश्यंते चैव पार्थिवैः । अर्थित्वंचैवतेषांतु करिष्यंति द्विजोत्तमाः
सौजन्यं तेषु कुर्वंति त्वं नो भ्राता पिता गुरुः ।
बांधवोऽपि न संदेहो न जीवेयं त्वया विना ॥ २९८ ॥

त्वयि दृष्टे प्रसन्ना मे दृष्टिर्भवति शोभना । मनःप्रसीदतेऽत्यर्थं सत्यं सत्यं वदामि ते ॥

एवं विधानि वाक्यानि त्वद्दृष्ट्या ये निरीक्षिताः ।

सज्जनास्ते तु श्रोष्यंति जनानां प्रीतिदायकाः ॥ ३०० ॥

इंद्रत्वं नहुषः प्राप्य दृष्ट्वा त्वां याचयिष्यति। त्वद्दृष्ट्यातु हतःपापो ह्यगस्त्यवचनाद्ध्रुवम्

सर्पत्वं समनुप्राप्य प्रार्थयिष्यति तं तु सः । दर्पेणाहं विनष्टोऽस्मि शरणं मे मुने भव॥

वाक्येन तेन तस्यासौ नृपस्य भगवानृषिः । कृत्वा मनसि कारुण्यमिदं वाक्यं वदिष्यति

उत्पत्स्यते कुले राजा त्वदीये कुलनंदनः । सर्परूपधरं दृष्ट्वा स ते शापं हि सेत्स्यति ॥

तदा त्वं सर्पतां त्यक्त्वा पुनःस्वर्गं गमिष्यसि । अश्वमेधकृते न त्वं भर्त्रा सहपुनर्दिवम्

प्राप्स्यसे वरदानेन मदीयेन सुलोचने ।

पुलस्त्य उवाच ।

देवपत्न्यस्तदा सर्वास्तुष्ट्या परिभाषिताः ॥३०६ ॥

अपत्यैरपि हीनानां नैव दुःखं भविष्यति । गौरीचैव तु गायत्र्या तदा सापि विबोधिता

बृंहिता परितोषेण वरान्दत्त्वा मनस्विनी । समाप्तिं तस्य यज्ञस्य कांक्षंती ब्रह्मणःप्रिया

वरदां तां तथा दृष्ट्वा गायत्रीं वेदमातरम् । प्रणिपत्य तदा रुद्रःस्तुतिमेतां चकारह ॥३०९

रुद्र उवाच ।

नमोऽस्तु ते वेदमातरष्टाक्षरविशोधिते । गायत्री दुर्गतरणी वाणी सप्तविधा तथा ॥३१०

सर्वाणि स्तुतिशास्त्राणि गाथाश्च निखिलास्तथा ।

अक्षराणि च सर्वाणि लक्षणानि तथैव च ॥३११ ॥

भाष्यादिसर्वशास्त्राणि ये चान्ये नियमास्तथा ।

अक्षराणि च सर्वाणि त्वं तु देवि नमोऽस्तुते ॥ ३१२॥

श्वेता त्वं श्वेतरूपाऽसि शशांकेन समानना । बिभ्रती विपुलौ बाहू कदलीगर्भकोमलौ ॥

एणशृंगं करे गृह्य पंकजं च सुनिर्मलम् । वसानावसने क्षौमे रक्तेनोत्तरवाससा ॥३१४॥

शशिरश्मिप्रकाशेन हारेणोरसि राजिता । दिव्यकुंडलपूर्णाभ्यां कर्णाभ्यां सुविभूषिता

चन्द्रसापत्न्यभूतेन मुखेन त्वं विराजसे । मुकुटेनातिशुद्धेन केशबंधेन शोभिता ॥३१६॥

भुजगाभोगसदृशौ भुजौ ते भूषणं दिवः । स्तनौ ते रुचिरौ देवि वर्तुलौ समचूचुकौ
जघनेनातिशुभ्रेण त्रिवलीभंगदर्पिता । सुमध्यवर्त्तिनी नाभिर्गंभीरा शुभदर्शिनी ॥३१८ ॥
विस्तीर्णजघना देवी सुश्रोणी च वरानने । सुजातवृत्तोरुयुगा सुजानुचरणा तथा ॥
त्रैलोक्यधारिणी सा त्वं भुवि सत्योपयाचना । भविष्यसि महाभागे वरदा वरवर्णिनी

पुष्करे च कृता यात्रा दृष्ट्वा त्वां संभविष्यति ।
ज्येष्ठे मासे पौर्णमास्यामग्र्यां पूजां च लप्स्यसे ॥ ३२१ ॥

ये च वा त्वत्प्रभावज्ञाःपूजयिष्यंति मानवाः । न तेषां दुर्लभं किंचित्पुत्रतोधनतोऽपिवा
कांतारेषु निमग्नानामटव्यां वा महार्णवे । दस्युभिर्वानिरुद्धानां त्वं गतिःपरमा नृणाम्

त्वं सिद्धिः श्रीर्धृतिःकीर्तिर्ह्रीर्विद्यासन्नतिर्मतिः ।
संध्या रात्रिः प्रभा निद्रा कालरात्रिस्त्वमेव च ॥ ३२४ ॥

अम्बा च कमला मातर्ब्रह्माणी ब्रह्मचारिणी । जननी सर्वदेवानां गायत्री परमांगना ॥
जया च विजया चैव पुष्टिस्त्वं च क्षमा दया । सावित्र्यवरजा चासि सदा चेष्टापितुर्मम
बहुरूपा विश्वरूपा सुनेत्रा ब्रह्मचारिणी । सुरूपा त्वं विशालाक्षी भक्तानां परिरक्षिणी ।
नगरेषु च पुण्येषु आश्रमेषु वरानने । वासस्तव महादेवि वनेषूपवनेषु च ॥ ३२८ ॥
ब्रह्मस्थानेषु सर्वेषु ब्रह्मणो वामतःस्थिता । दक्षिणेन तु सावित्री मध्ये ब्रह्मा पितामहः ॥

अन्तर्वेदी च यज्ञानामृत्विजां चापि दक्षिणा ।
सिद्धिस्त्वं हि नृपाणां च वेला सागरजा मता ॥ ३३० ॥
ब्रह्मचारिणि या दीक्षा शोभा च परमा मता ।
ज्योतिषां च प्रभा देवी लक्ष्मीर्नारायणे स्थिता ॥ ३३१ ॥

क्षमासिद्धिर्मुनीनां च नक्षत्राणां च रोहिणी । राजद्वारेषु तीर्थेषु नदीनां संगमेषु च ॥
पूर्णमापूर्णचन्द्रे च बुद्धिर्नीत्यां क्षमा धृतिः । उमा देवी च नारीणां श्रूयसे वरवर्णिनी
इन्द्रस्य चारुदृष्टिस्त्वं सहस्रनयनोपगा । ऋषीणां धर्मबुद्धिस्त्वं देवानां च परायणा
कर्षकाणां च सीता त्वं भूतानां धरणी तथा । स्त्रीणामवैधव्यकरी धनधान्यप्रदा सदा

व्याधिं मृत्युं भयं चैव पूजिता शमयिष्यसि ।

तथा तु कार्तिके मासि पौर्णमास्यां सुपूजिता ॥ ३३६ ॥
सर्वकामप्रदा देवी भविष्यसि शुभप्रदे । यश्चेदं पठते स्तोत्रं शृणुयाद्वाप्यभीक्ष्णशः ॥
सर्वार्थसिद्धिं लभते नरो नास्त्यत्र संशयः ।

गायत्र्युवाच ।

भविष्यत्येवमेवं तु यत्त्वया पुत्र भाषितम् ॥ ३३८ ॥
विष्णुना सहितः सर्वस्थानेष्वेव भविष्यसि ॥ ३३९ ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखंडे सावित्रीविवादगायत्रीवरप्रदानंनाम सप्तदशोऽध्यायः

---

## अष्टादशोऽध्यायः

### ब्रह्मदेवकृतयज्ञस्य विस्तरेण वर्णनम्

भीष्म उवाच ।

अत्यद्भुतमिदं ब्रह्मञ्छ्रुतवानस्मि तत्त्वतः । अभिषेकं तु गायत्र्याःसदस्यत्र तथा कृतम् ॥
विरोधश्चैव सावित्र्या शापदानं तथा कृतम् । विष्णुना च यथादेवी सर्वस्थानेषु कीर्तिता
गायत्री चापि रुद्रेण स्तुता च वरवर्णिनी । श्रुत्वेदं पूतमात्मानं मन्येऽहं तु महामुने ॥
प्रहृष्टानि च रोमाणि प्रशांतं च मनो मम । श्रुत्वा मे परमा प्रीतिःकौतूहलमथैव हि ॥
नारायणस्तु भगवान्कृत्वा तां परमां च वै ।
ब्रह्मपत्न्याः स्तुतिं भक्त्या न्यस्य तां पर्वतोपरि ॥ ५ ॥
उवाच वचनं विष्णुस्तुष्टिपुष्टिप्रदायकम् । श्रीमती ह्रीमती चैव या च देवीश्वरी तथा ॥
एतदेव श्रुतं ब्रह्मंस्तव वक्त्राद्विनिःसृतम् । उत्तरं तत्र यद्भूतं यच्च तस्मिन्स्थले कृतम् ॥
आनुपूर्व्या च तत्सर्वं भगवान्वक्तुमर्हति । श्रुतेन मे देहशुद्धिर्भविष्यति न संशयः ॥८॥

पुलस्त्य उवाच ।

यजतः पुष्करे तस्य देवस्य परमेष्ठिनः । शृणु राजन्निदं चित्रं पूर्वमेव यथा कृतम् ॥९॥

आदौ कृतयुगे तस्मिन्यजमाने पितामहे। मरीचिरंगिराश्चैव पुलस्त्यः पुलहः क्रतुः॥
दक्षः प्रजापतिश्चैव नमस्कारं प्रचक्षिरे। विद्योतमानाः पुरुषाः सर्वाभरणभूषिताः॥
उपनृत्यंति देवेशं विष्णुमप्सरसांगणाः। ततो गंधर्वतूर्यैस्तु प्रतिनंद्य विहायसि ॥१२॥
बहुभिः सह गंधर्वैःप्रगायति च तुंबुरुः। महाश्रुतिश्चित्रसेन ऊर्णायुरनघस्तथा ॥ १३ ॥

गोमायुस्सूर्यवर्चाश्च सोमवर्चाश्च कौरव।
युगपच्च तृणायुश्च नंदिश्चित्ररथस्तथा ॥ १४ ॥

त्रयोदशः शालिशिराः पर्जन्यश्च चतुर्दशः। कलिः पंचदशश्चात्र तारकश्चात्र षोड़शः॥
हाहाहूहूश्चगन्धर्वौ हंसश्चैव महाद्युतिः इत्येते देवगन्धर्वा उपगायंति ते विभुम् ॥१६॥
तथैवाप्सरसो दिव्याउपनृत्यंति तं विभुम्। धाताऽर्यमा च सविताबरुणोंऽशोभगस्तथा
इन्द्रो विवस्वान्पूषा च त्वष्टा पर्जन्य एवच। इत्येते द्वादशादित्या ज्वलंतो दीप्ततेजसः
चक्रुरस्मिन्सुरेशाश्च नमस्कारं पितामहे। मृगव्याधश्च शर्वश्च निर्ऋतिश्च महायशाः॥
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः। भवो विश्वेश्वरश्चैव कपर्दी च विशांपते॥
स्थाणुर्भगश्च भगवान्रुद्रास्तत्रावतस्थिरे। अश्विनौ वसवश्चाष्टौ मरुतश्च महाबलाः॥

विश्वेदेवाश्च साध्याश्च तस्मै प्रांजलयःस्थिताः।
शेषाद्यास्तु महानागा वासुकिप्रमुखास्स्थिताः ॥ २२ ॥

काश्यपःकंबलश्चापि तक्षकश्च महाबलः। अधृष्यास्तेजसा दीप्ता महाक्रोधा महाबलाः
एते नागा महात्मानस्तस्मै प्रांजलयःस्थिताः। तार्क्ष्यश्चारिष्टनेमिश्च गरुड़श्च महाबलः
वारुणिश्चैवारुणिश्च वैनतेयाव्यवस्थिताः। नारायणश्च भगवान्स्वयमागत्य लोकवान्
प्राह लोकगुरुं श्रीमान्सह सर्वैर्महर्षिभिः। त्वया ततमिदं सर्वं त्वया सृष्टं जगत्पते॥

तस्माल्लोकेश्वरश्चासि पद्मयोने नमोऽस्तु ते।
यदत्र ते मया कार्यं कर्तव्यं च तदा दिश ॥ २७ ॥

एवं प्रोवाच भगवान्सार्धं देवर्षिभिः प्रभुः। नमस्कृत्य सुरेशाय ब्रह्मणेऽव्यक्तजन्मने॥
स च तत्र स्थितो ब्रह्मा तेजसा भासयन्दिशः। श्रीवत्सलोमसंच्छन्नो हेमसूत्रेण राजता
सुरर्षिप्रतिमः श्रीमान्स्वयंभूर्भूतभावनः। शुचिरोमा महावक्षाः सर्वतेजोमयःप्रभुः ॥३०॥

या गतिः पुण्यशीलानामगतिःपापकर्मणाम् । योगसिद्धमहात्मानो यं विदुर्लोकमुत्तमम्
यस्याष्टगुणमैश्वर्यं यमाहुर्देवसत्तमम् ।
यं प्राप्य शाश्वतं विप्रा नियता मोक्षकांक्षिणः ॥ ३२ ॥
जन्मनो मरणाच्चैव मुच्यंते योगभाविताः । यदेतत्तप इत्याहुः सर्वाश्रमनिवासिनः ॥
सेवंसेवं यताहारादुश्चरं व्रतमास्थिताः । योऽनंत इति नागेषु प्रोच्यते सर्वयोगिभिः ॥
सहस्रमूर्द्धा रक्ताक्षः शेषादिभिरनुत्तमैः । यो यज्ञ इति विप्रेंद्रैरिज्यते स्वर्गलिप्सुभिः ॥
नानास्थानगतिः श्रीमानेकः कविरनुत्तमः । यं देवं वेत्ति वेत्तारं यज्ञभागप्रदायिनम् ॥
वृषाग्निसूर्यचंद्राक्षं देवमाकाशविग्रहम् । तं प्रपद्यामहे देवं भगवच्छरणार्थिनः ॥ ३७ ॥
शरण्यं शरणं देवं सर्वदेवभवोद्भवम् ।
ऋषीणां चैव स्रष्टारं लोकानां च सुरेश्वरम् ॥ ३८ ॥
प्रियार्थं चैव देवानां सर्वस्य जगतःस्थितौ । कव्यं पितॄणामुचितं सुराणांहव्यमुत्तमम्
येन प्रवर्तितंसर्वं तं नताःस्मस्सुरोत्तमम् । त्रेताग्निना तु यजता देवेन परमेष्ठिना ॥ ४० ॥
यथा सृष्टिःकृता पूर्वं यज्ञसृष्टिस्तथा पुनः । तथाब्रह्माप्यनंतेन लोकानां स्थितिकारिणा
अन्वास्यमानो भगवान्वृद्धोऽप्यथ च बुद्धिमान् ।
यज्ञवाटमचिंत्यात्मा गतस्तत्र पितामहः ॥ ४२ ॥
धनाढ्यैर्ऋत्विजैः पूर्णं सदस्यैः परिपालितम् । गृहीतचापेन तदा विष्णुना प्रभविष्णुना
दैत्यदानवराजानो राक्षसानांगणाःस्थिताः । आत्मानमात्मना चैव चिंतयामास वै द्रुतम्
चिंतयित्वा यथा तत्त्वं यज्ञं यज्ञःसनातनः । वरणं तत्र भगवान्कारयामास ऋत्विजाम्
भृग्वाद्याऋत्विजश्चापि यज्ञकर्मविचक्षणाः । चक्रुर्ब्रह्म चमुख्यैश्च प्रोक्तं पुण्यं यदक्षरम् ।
शुश्रुवुस्ते मुनिश्रेष्ठा वितते तत्र कर्मणि । यज्ञविद्या वेदविद्या पदक्रमविदां तथा ॥४७॥
घोषेण परमर्षीणां सा बभूव निनादिता । यज्ञसंस्तरविद्भिश्च शिक्षाविद्भिस्तथाद्विजैः ॥
शब्दनिर्वचनार्थज्ञैःसर्वविद्याविशारदैः । मीमांसाहेतुवाक्यज्ञैर्नानाविद्याविशारदैः ॥४९॥
लोकायतिकमुख्यैश्च शुश्रुवुश्शब्दमीरितम् । इतिहासपुराणज्ञैर्नैकविज्ञानवेदिभिः ॥५०॥
तत्र तत्र च राजेंद्र नियतान्संशितव्रतान् । जपहोमपरान्मुख्यान्ददृशुस्तत्रवै द्विजान् ॥

यज्ञभूमौ स्थितस्तस्यां ब्रह्मा लोकपितामहः ।
सुरासुरगुरुः श्रीमान्सेव्यमानः सुरासुरैः ॥५२ ॥

उपासते च तत्रैनं प्रजानांपतयःप्रभुम् । दक्षो वसिष्ठःपुलहो मरीचिश्च द्विजोत्तमः॥५३॥
अंगिरा भृगुरत्रिश्च गौतमो नारदस्तथा । विद्यमानं चांतरिक्षं वायुस्तेजो जलं मही ॥
शब्दःस्पर्शश्च रूपं च रसो गंधस्तथैव च । विकृतश्च विकारश्च यच्चान्यत्कारणं महत्

ऋग्यजुःसामाथर्वाख्या वेदाश्चत्वार एव च ।
शब्दःशिक्षा निरुक्तं च कल्पश्छंदःसमन्विताः ॥ ५६ ॥

आयुर्वेदधनुर्वेदौ मीमांसा गणितं तथा । हस्त्यश्वज्ञानसहिता इतिहाससमन्विताः ॥
एतैरंगैरुपांगैश्च वेदाः सर्वे विभूषिताः । उपासते महात्मानं सहोंकारं पितामहम्
तपश्च क्रतवश्चैव संकल्पःप्राणएव च । एतेचान्ये च बहवःपितामहमुपस्थिताः ॥ ५९ ॥
अर्थोधर्मश्च कामश्च द्वेषोहर्षश्च सर्वदा । शुक्रो बृहस्पतिश्चैव संवर्तो बुध एव च ॥६०॥
शनैश्चरश्चराहुश्च ग्रहाःसर्वे तथैव च । मरुतो विश्वकर्मा च पितरश्चापि भारत ॥ ६१ ॥
दिवाकरश्च सोमश्च ब्रह्माणं पर्युपासते । गायत्रीदुर्गतरणी वाणी सप्तविधा तथा ॥

सर्वाणि श्रुतिशास्त्राणि यमाश्च नियमास्तथा ।
अक्षराणि च सर्वाणि नक्षत्राणि तथैव च ॥ ६३ ॥

भाष्याणि सर्वशास्त्राणि देहवंति विशांपते । क्षणालवा मुहूर्ताश्च दिनंरात्रिस्तथैव च
अर्द्धमासाश्च मासाश्च ऋतवःसर्वएव च । उपासते महात्मानं ब्रह्माणं दैवतैःसह ॥
अन्याश्च देव्यःप्रवरा ह्रीःकीर्तिर्द्युतिरेव च । प्रभा धृतिःक्षमा भूतिर्नीतिर्विद्यामतिस्तथा॥

श्रुतिःस्मृतिस्तथा क्षांतिःशांतिःपुष्टिस्तथा क्रिया ।
सर्वाश्चाप्सरसो दिव्या नृत्यगीतविशारदाः ॥ ६७ ॥

उपतिष्ठंति ब्रह्माणं सर्वास्ता देवमातरः । विप्रचित्तिःशिविःशंकुरयःशंकुस्तथैव च ॥
वेगवान्केतुमानुग्रःसोऽग्रोव्यग्रो महासुरः । परिघःपुष्करश्चैव सांबोऽश्वपतिरेव च ॥

प्रह्लादोऽथ बलिः कुंभः संह्लादो गगनप्रियः ।
अनुह्लादो हरिहरौ वराहश्च कुशोरजः ॥ ७० ॥

योनिभक्षो वृषपर्वा लिंगभक्षोऽथ वै कुरुः । निष्प्रभःसप्रभःश्रीमांस्तथैव च निरूदरः ॥
एकचक्रो महाचक्रो द्विचक्रः कुलसंभवः । शरभःशलभश्चैव क्रपथःक्रापथःक्रथः ॥७२॥
वृहद्ग्रांतिर्महाजिह्वः शंकुकर्णो महाध्वनिः ।
दीर्घजिह्वोऽर्कनयनो मृदुकायो मृडप्रियः ॥ ७३ ॥
वायुर्गरिष्ठो नमुचिश्शम्बरो विज्वरो विभुः । विष्वक्सेनश्चंद्रहंता क्रोधवर्द्धन एवच
कालकःकलकांतश्च कुण्डदःसमरप्रियः । गरिष्ठश्च वरिष्ठश्च प्रलंबो नरकःपृथुः ॥ ७५ ॥
इंद्रतापन वातापी केतुमान्वलदर्पितः । असिलोमा सुलोमा च बाष्कलिःप्रमदो मदः ॥
श्रृगालवदनश्चैव केशी च शरदस्तथा । एकाक्षश्चैव राहुश्च वृत्रःक्रोधविमोक्षणः ॥७७॥
एते चान्ये च बहवो दानवा बलदर्पिताः। ब्रह्माणं पर्युपासंत वाक्यं चेदमथोचिरे ॥७८॥
त्वया सृष्टाःस्म भगवंस्त्रैलोक्यं भवता हि नः। दत्तं सुरवरश्रेष्ठ देवेभ्यश्चाधिकाःकृताः ॥
भगवन्निह किं कुर्मो यज्ञे तव पितामह । यद्धितं तद्वदास्माकं समर्थाःकार्यनिर्णये ॥८०
किमेभिस्ते वराकैश्च अदितेर्गर्भसंभवैः । दैवतैर्निहतैःसर्वैःपराभूतैश्च सर्वदा ॥ ८१ ॥
पितामहोऽसि सर्वेषामस्माकं दैवतैःसह । तव यज्ञसमाप्तौ च पुनरस्मासु दैवतैः ॥८२॥
श्रियं प्रतिविरोधश्च भविष्यति न संशयः । इदानीं प्रेक्षणं कुर्मःसहिताःसर्वदानवैः ॥८३

पुलस्त्य उवाच ।

सगर्वं तु वचस्तेषां श्रुत्वा देवो जनार्दनः । शक्रेण सहितःशंभुमिदमाह महायशाः ॥
यज्ञे पैतामहे ये तु सम्प्राप्ता दनुपुङ्गवाः । ब्रह्मणा मंत्रिताश्चेह विघ्नार्थं प्रयतंति ते ॥८५
अस्माभिस्तु क्षमा कार्या यावद्यज्ञः समाप्यते ।
समाप्ते तु क्रतावस्मिन्युद्धं कार्यं दिवौकसाम् ॥ ८६ ॥
यथा निर्दानवा भूमिस्तथा कार्यं त्वया विभो ।
जयार्थं चेह शक्रस्य भवता च मया सह ॥ ८७ ॥
द्विजानां परिवेष्टारो मरुतःपरिकल्पिताः । दानवानां धनं यच्च गृहीत्वा तद्यजामहे ॥
अत्रागतेषु विप्रेषु दुःखितेषु जनेष्विह । व्ययं तस्य करिष्यामो दासभावे निवेशिताः॥
वदंतमेवं तं विष्णुं ब्रह्मा वचनमब्रवीत् । एते दनुसुताःक्रुद्धा युष्माकमपि नेप्सिताः ॥

भवता च क्षमा कार्या रुद्रेण सह दैवतैः। कृतेयुगावसाने तु समाप्तिं च क्रतौगते ॥
मया च प्रेषिता यूयमेते च दनुपुंगवाः। संधिर्वा विग्रहोवापि सर्वैःकार्यस्तदैव हि ॥

पुलस्त्य उवाच।

पुनस्तान्दानवान्ब्रह्मा वाक्यमाह स्वयं प्रभुः।
दानवैर्न विरोधोऽत्र यज्ञे मम कथंचन ॥ ६३ ॥
मैत्रभावस्थिता यूयमस्मत्कार्यपरायणाः।

दानवा ऊचुः।

सर्वमेतत्करिष्यामः शासनं ते पितामह ॥ ६४ ॥
अस्माकमनुजा देवा भयं तेषां न विद्यते ॥

पुलस्त्य उवाच।

एतच्छ्रुत्वा तदा तेषां परितुष्टःपितामहः ॥ ६५ ॥
मुहूर्तं तिष्ठतां तेषामृषिकोटिरुपागता। श्रुत्वा पैतामहं यज्ञं तेषां पूजां तु केशवः ॥
आसनानि ददौ तेषां तदा देवःपिनाकधृक्। वसिष्ठोऽर्घं ददौ तेषां ब्रह्मणा परिचोदितः
गामर्घं च ततो दत्वा पृष्ट्वा कुशलमव्ययम्।
निवेशं पुष्करे दत्वा स्थीयतामिति चाब्रवीत् ॥ ६८ ॥
ततस्त ऋषयःसर्वे जटाजिनधरास्तथा। शोभयंतःसरःश्रेष्ठं गङ्गामिव दिवौकसः ॥
मुंडाःकाषायिणश्चैके दीर्घश्मश्रुधराः परे। विरलैर्दशनैःकेचिच्चिपिटाक्षास्तथापरे ॥
बृहत्तनूदराःकेऽपि केकराक्षास्तथापरे। दीर्घकर्णा विकर्णाश्च कर्णैश्च त्रुटितास्तथा ॥१॥
दीर्घफाला विफालाश्च स्नायुचर्मावगुंठिताः।
निर्गतं चोदरं तेषां मुनीनां भावितात्मनाम् ॥ २ ॥
दृष्ट्वा ते पुष्करं तीर्थं दीप्यमानंसमंततः। तीर्थलोभान्नरव्याघ्र तस्य तीरे व्यवस्थिताः ॥
वालखिल्या महात्मानो ह्यश्मकुट्टास्तथापरे। दंतोलूखलिनश्चान्ये संप्रक्षालास्तथापरे
वायुभक्षा जलाहाराः पर्णाहारास्तथापरे।
नानानियमयुक्ताश्च तथा स्थंडिलशायिनः ॥ ५ ॥

सरस्यस्मिन्मुखं दृष्ट्वा सुरूपास्याःक्षणादनु। किमेतदितिचित्याथ निरीक्ष्य च परस्परम्
अस्मिंस्तीर्थे दर्शनेन मुखस्येह सुरूपता। मुखदर्शनमित्येव नाम कृत्वा तु तापसाः॥
स्नाता नियमयुक्ताश्च सुरूपास्ते तदा भवन्। देवपुत्रोपमा जाता अनौपम्यगुणान्विताः
शोभमाना नरश्रेष्ठ स्थिताःसर्वे वनौकसः। यज्ञोपवीतमात्रेण व्यभजंस्तीर्थमंजसा॥

जुह्वतश्चाग्निहोत्राणि चक्रुश्च विविधाः क्रियाः।
चिंतयंतो हि राजेंद्र तपसा दग्धकिल्विषाः॥ १०॥

न यास्यामो परं तीर्थं ज्येष्ठभावो त्विदं सरः। ज्येष्ठपुष्करमित्येवनाम चक्रुर्द्विजातयः
तत्र कुब्जान्बहून्दृष्ट्वा स्थितांस्तीर्थसमीपतः। बभूवु विंस्मितास्तत्र जना ये च समागताः

दत्वा दानं द्विजातिभ्यो भांडानि विविधानि च।
श्रुत्वा सरस्वतीं प्राचीं स्नातुकामां द्विजागताः॥ १३॥

सरस्वती तीर्थवरा नानाद्विजगणैर्युता। बदरेंगुदकाश्मर्यप्लक्षाश्वत्थविभीतकैः॥ १४॥
पौलोमैश्च पलाशैश्च करीरैःपीलुभिस्तथा। सरस्वतीतीर्थरुहैर्धन्वनैःस्यंदनैस्तथा॥
कपित्थैःकरवीरैश्च विल्वैराम्रातकैस्तथा। अतिमुक्तकषंडैश्च पारिजातैश्च शोभिता॥
कदंबवनभूयिष्ठा सर्वसत्वमनोरमा। वाय्वंबुफलपर्णादैर्दंतोलूखलिकैरपि॥ १७॥
तथाश्मकुट्टमुख्यैश्च वरिष्ठैर्मुनिभिर्वृता। स्वाध्यायघोषसंघुष्टा मृगयूथशताकुला॥
अहिंसैर्धर्मपरमैस्तथा चातीव शोभिता। सुप्रभा कांचनाख्या च प्राची नंदाविशालका
स्रोतोभिःपंचभिस्तत्र वर्तते पुष्करे नदी। पितामहस्य सदसि वर्त्तमाने महीतले॥२०
वितते यज्ञवाटे तु स्वागतेषु द्विजादिषु। पुण्याहघोषैर्विततैर्देवानां नियमैस्तथा॥२१॥
देवेषु चैव व्यग्रेषु तस्मिन्यज्ञविधौ तथा। तत्र चैव महाराज दीक्षिते च पितामहे॥
यजतस्तस्य सूत्रेण सर्वकामसमृद्धिना। मनसा चिंतिता ह्यर्था धर्मार्थकुशलास्तथा॥
उपतिष्ठंति राजेंद्र द्विजातींस्तत्र तत्र ह। जगुश्च देवगंधर्वा ननृतुश्चाप्सरोगणाः॥२४

वादित्राणि च दिव्यानि वादयामासुरंजसा।
तस्य यज्ञस्य संपत्त्या तुतुषुर्देवता अपि॥ २५॥

विस्मयं परमं जग्मुः किमु मानुषयोनयः। वर्तमाने तथा यज्ञे पुष्करस्थे पितामहे॥

अब्रुवन्नृषयो भीष्म तदा तुष्टास्सरस्वतीम् । सुप्रभां नाम राजेंद्र नाम्ना चैव सरस्वतीम्
ते दृष्ट्वा मुनयःसर्वे वेगयुक्तां सरस्वतीम् । पितामहं भासयंतीं क्रतुं ते बहुमेनिरे ॥२८॥
एवमेषा सरिच्छ्रेष्ठा पुष्करेषु सरस्वती । पितामहार्थं सम्भूता तुष्ट्यर्थं च मनीषिणाम्

पुण्यस्य पुण्यताकारि पंचस्रोतास्सरस्वती ।
सुप्रभा नाम राजेंद्र नाम्नचैव सरस्वती ॥ ३० ॥

यत्र ते मुनयश्शान्ता नानास्वाध्यायवादिनः । ते समागत्य ऋषयस्ससमरुर्वैसरस्वतीम्
साभिध्याता महाभागा ऋषिभिःसत्रयाजिभिः। समास्थितादिशंपूर्वांभक्तिप्रीतामहानदी
प्राची पूर्ववहानाम्ना मुनिवंद्या सरस्वती । इदमन्यन्महाराज ! शृण्वाश्चर्यवरं भुवि ॥
क्षतो मंकणको विप्रःकुशाग्रेणेतिनः श्रुतम् । क्षतात्किलकरेतस्य राजञ्शाकरसोऽस्रवत्
स वै शाकरसंदृष्ट्वा हर्षाविष्टःप्रनृत्तवान् । ततस्तस्मिन्प्रनृत्ते तु स्थावरं जंगमं च यत् ॥
प्रानृत्यत जगत्सर्वं तेजसा तस्य मोहितम् । शक्रादिभिस्सुरै राजन्नृषिभिश्च तपोधनैः
विज्ञप्तस्तत्र वै ब्रह्मा नायं नृत्येत्तथा कुरु । आदिष्टो ब्रह्मणा रुद्र ऋषेरर्थे नराधिप ॥
नायं नृत्येद्यथा भीम तथा त्वं वक्तुमर्हसि । गत्वा रुद्रो मुनिं दृष्ट्वा हर्षाविष्टमतीव हि
भो भो विप्रर्षभ त्वं हि नृत्यसे केन हेतुना । नृत्यमानेन भवता जगत्सर्वं च नृत्यति

तेनायं वारितः प्राह नृत्यन्वै मुनिसत्तमः॥

मुनिरुवाच ।

किं न पश्यसि मे देव कराच्छाकरसोऽस्रवत् ॥ ४० ॥

तं तु दृष्ट्वा प्रनृत्तोऽहं हर्षेण महतावृतः । तं प्रहस्याब्रवीद्देवो मुनिं रागेण मोहितम् ॥
अहं न विस्मयं विप्र गच्छामीह प्रपश्य माम् । एवमुक्तो मुनिश्रेष्ठो महादेवेन कौरव ॥

ध्यायमानस्तदा कोऽयं प्रतिषिद्धोऽस्मि येन हि।
अंगुल्यग्रेण राजेन्द्र स्वांगुष्ठस्ताडितस्तथा ॥ ४३ ॥

ततो भस्मक्षताद्राजन्निर्गतं हिमपांडुरम् । तद्दृष्ट्वा व्रीडितश्चासौ प्राह तत्पादयोःपतन्
नान्यद्देवादहं मन्ये रुद्रात्परतरंमहत् । चराचरस्य जगतो गतिस्त्वमसिशूलधृत् ॥४५ ॥
त्वया सृष्टमिदं सर्वं वदंतीह मनीषिणः । त्वामेव सर्वं विशति पुनरेव युगक्षये ॥४६॥

देवैरपि न शक्यस्त्वं परिज्ञातुं मया कुतः ॥ त्वयि सर्वे च दृश्यंते सुरा ब्रह्मादयोऽपि ये
सर्वस्त्वमसि देवानां कर्ता कारयिता च यः । त्वत्प्रसादात्सुराःसर्वेभवंतीहाकुतोभयाः
एवंस्तुत्वा महादेवमृषिश्च प्रणतोऽब्रवीत् । भगवंस्त्वत्प्रसादेन तपो न क्षीयतेत्विह ॥
ततो देवःप्रीतमनास्तमृषिं पुनरब्रवीत् । तपस्ते वर्द्धतां विप्र मत्प्रसादात्सहस्रधा ॥५०॥
प्राचीमेवेह वत्स्यामि त्वया सार्द्धमहंसदा । सरस्वती महापुण्या क्षेत्रेचास्मिन्विशेषतः
न तस्य दुर्लभं किंचिदिहलोके परत्र च ।सरस्वत्युत्तरे तीरे यस्त्यजेदात्मनस्तनुम्॥५२
प्राचीतटे जाप्यपरो न चेह म्रियते पुनः । अल्पतो वाजिमेधस्य फलमाप्स्यति पुष्कलम्
नियमैश्चोपवासैश्च कर्शयन्देहमात्मनः । जलाहारो वायुभक्षः पर्णाहारश्च तापसः ॥

तथा स्थंडिलशायी च ये चान्ये नियमाःपृथक् ।
करोति यो द्विजश्रेष्ठो नियमांस्तान्व्रतानि च ॥ ५५ ॥

स याति शुद्धदेहश्च ब्रह्मणःपरमं पदम् । तस्मिंस्तीर्थे तु यैर्दत्तं तिलमात्रं तु कांचनम् ॥
मेरुदानसमं तत्स्यात्पुरा प्राह प्रजापतिः। तस्मिंस्तीर्थे तु ये श्राद्धं करिष्यंति हिमानवाः
एकविंशकुलोपेताःस्वर्गं यास्यंति ते नराः । पितॄणां च शुभं तीर्थं पिंडेनैकेन तर्पिताः ॥
ब्रह्मलोकं गमिष्यंति स्वपुत्रेणेह तारिताः। भूयश्चान्नं न चेच्छंति मोक्षमार्गं व्रजंति ते ॥
प्राचीनत्वं सरस्वत्या यथाभूतं शृणुष्व तत् । सरस्वती पुरा प्रोक्ता देवैःसर्वैः सवासवैः
तटे त्वया प्रयातव्यं प्रतीच्यां लवणोदधेः । वडवाग्निमिमं नीत्वा समुद्रे निक्षिपस्व ह
एवं कृते सुराः सर्वे भवन्ति भयवर्जिताः । अन्यथा वडवाग्निस्तु दहते स्वेन तेजसा ॥
तस्माद्रक्षस्व विबुधा नेतस्मादचिराद्भयात् । मातेव भव सुश्रोणि सुराणामभयप्रदा ॥

एवमुक्ता तु सा देवी विष्णुना प्रभविष्णुना ।
आह नाहं स्वतंत्रास्मि पिता मे व्रियतां स्वराट् ॥ ६४ ॥

तदाज्ञाकारिणी नित्यं कुमारीह धृतव्रत । पित्रादेशाद्विना नाहं पदमेकमपि क्वचित् ॥

गच्छामि तस्मात्कोऽप्यन्य उपायश्चिंत्यतामहो ।
तदाशयं विदित्वाहुस्ते समेत्य पितामहम् ॥ ६६ ॥

नान्येन शक्यते नेतुं वडवाग्निः पितामहः । अदृष्टदोषामुक्त्वैकां कुमारीं तनयां तव ॥

सरस्वतीं समानीय कृत्वांके वरवर्णिनी । शिरस्याघ्राय सस्नेहमुवाचाथ सरस्वतीम् ॥
मां च देवासुराः प्राहुः सत्वं ब्रूहि यशस्विनीम् ।
नीत्वा विनिक्षिपेदेनं वाडवं लवणांवुनि ॥ ६९ ॥
पितुर्वाक्यं हि तच्छ्रुत्वा वियुक्ता कुररी यथा । पित्रा तदैव सा कन्या रुरुदे दीनमानसा
शोभते तन्मुखंतस्याःशोकवाष्पाविलेक्षणम् । सितंविकसितं तद्वत्पद्मं तोयकणोक्षितम्
तत्तथाविधमालोक्य पितामहपुरस्सराः । विवुधाः शोकभावस्य सर्वेवंशमुपागताः ॥
संस्तभ्य हृदयं तस्याःशोकसंतापितं तदा । पितामहस्तामुवाच मारोदीर्नास्ति ते भयम्
मानलाभश्च भविता तव देवानुभावतः । नीत्वा क्षारोदमध्ये तु क्षिपस्व ज्वलनं सुते ॥
एवमुक्ता तु सा वाला वाष्पाकुलितलोचना ।
प्रणम्य पद्मजन्मानं गच्छाम्युक्तव्रती तु सा ॥ ७५ ॥
माभैरुक्ता पुनस्तैस्तु पित्रा चापि तथैव सा । त्यक्त्वा भयं हृष्टमनाः प्रयातुं समवस्थिता
तस्याःप्रयाणसमये शंखदुंदुभिनिस्वनैः । मंगलानां च निर्घोषैर्जगदापूरितं शुभैः ॥७७॥
सितांवरधरा धन्या सितचंदनमंडिता । शरदंवुजसच्छायतारहारविभूषिता ॥ ७८ ॥
सम्पूर्णचंद्रवदना पद्मपत्रायतेक्षणा । शुभां कीर्तिं सुरेशस्य पूरयन्ती दिशोदश ॥ ७९ ॥
स्वतेजसा तद्धृदयान्निःसृता भासयज्जगत् । अनुव्रजन्ती तां गंगा तयोक्ता वरर्णिनी ॥
द्रक्ष्यामि त्वां पुनरहं कुत्र यातासि मे सखि । एवमुक्ता तया गंगा प्रोवाच मधुरांगिरम्
यदैवायास्यसि प्राचीं दिशं मां पश्यसे शुभे । विवुधैस्त्वं परिवृता दर्शनं स्तव संश्रये
उदङ्मुखी तदा भूत्वा त्यज शोकं शुचिस्मिते ।
अहं चोदङ्मुखी पुण्या त्वं तु प्राची सरस्वती ॥ ८३ ॥
तत्र क्रतुशतं पुण्यं स्नानदानेन सुव्रते । श्राद्धदाने तथा नित्यं पितॄणां दत्तमक्षयम् ॥ ८४
ये करिष्यंति मनुजा विमुक्तास्त ऋणैस्त्रिभिः। मोक्षमार्गंगमिष्यन्तिविचारोनात्रविद्यते
तामुवाच ततो गङ्गा पुनर्दर्शननमस्तु ते । गच्छ स्वमालयं भद्रे स्मर्तव्याहं त्वयानघे ॥
यमुनापि तथैवं सा गायत्री च मनोरमा ।
सावित्र्या सहिताः सर्वाः सखीं संप्रेषयंस्तथा ॥ ८७ ॥

ततो विसृज्य तान्देवान्नदीभूता सरस्वती । उत्तंकस्याश्रमपद उद्भूता सा मनस्विनी॥
अधस्तात्प्लक्षवृक्षस्य अवरोप्य च तां तनुम् । अवतीर्णामहाभागा देवानां पश्यतां तदा
विष्णुरूपस्तरुः सोऽत्र सर्वदेवैस्तु वन्दितः । संसेव्यश्च द्विजैर्नित्यं फलहेतोर्महोदयः ॥
अनेकशाखाविततश्चतुर्मुख इवापरः । तत्कोटरकुटीकोटिप्रविष्टानां द्विजन्मनाम् ॥ ६१॥
श्रूयंते विविधा वाचः सुराणां रक्तचेतसाम् । वनस्पतिरपुष्पोऽपि पुष्पितश्चोपलक्ष्यते
जातीचम्पकवत्पुष्पैः शाखालग्नैः शुकैः शुभैः । केतकीव बलाकाभिरशोभत सरिद्वरा ॥
कोकिलाभिस्समालेव फेनकैःपुष्पितेव सा । हरेणेव यथा गङ्गा प्लक्षेणैव हि सा तथा
तत्रांभस्था तदा देवं प्रोवाचाथ जनार्दनम् । समर्पयस्व तं वह्निं देवादेशं करोम्यहम् ॥

एवमुक्तेन सा तेन प्रत्युक्ता विष्णुना तदा ।
न ते दाहभयं त्याज्यस्त्वया यं वह्निराट् स्वयम् ॥ ६६ ॥

पश्चिमं सागरं नेतुं वाडवज्वलनं शुभे । एवं क्रमेण गच्छंत्या तदापः प्राप्स्यते शुभे ॥
ततस्तं शातकुंभस्थं कृत्वाऽसौ वडवानलम् । समर्पयत गोविन्दः सरस्वत्या महोदरे ॥
सा तं गृहीत्वा सुश्रोणी प्रतीच्यभिमुखी ययौ । अंतर्द्धानेन संप्राप्ता पुष्करं सा महानदी
मर्यादापर्वते तस्मिन्सम्भूता विमला सरित् । पुष्करारण्यं विपुलं सुरसिद्धनिषेवितम्
पितामहेन यत्रासीद्यज्ञसत्रं निषेवितम् । सिद्ध्यर्थं मुनिमुख्यानामागताऽसौ महानदी ॥

येषु यत्र कृतो होमः कुंडेष्वासीद्विरिंचिना ।
तानि सर्वाणि संप्लाव्य तोयेनाप्युद्गता हि सा ॥ २०२ ॥

तत्र क्षेत्रे महापुण्या पुष्करे सा तथोत्थिता । तेन तत्पूरणं प्रोक्तं वायुनाजगदायुषा ॥
सापि तत्क्षेत्रमासाद्य पुण्यंपुण्या महानदी । सरस्वतीस्थितादेवी मर्त्यानां पापनाशिनी
तत्र ये शुभकर्माणःपुष्करस्थां सरस्वतीम् । पश्यंति ते न पश्यंति सुघोरांतामधोगतिम्
यः पुनस्तत्र भावेन नरःस्नानं समाचरेत् । स ब्रह्मलोकमासाद्य ब्रह्मणा सह मोदते ॥
यस्तुदद्यात्तत्र दधिब्राह्मणाय मनोरमम् । सोऽप्यग्निलोकमासाद्यभुंक्तेभोगान्सुशोभनान्
वरं प्रावरणं योऽपि भक्त्यादद्याद्द्विजातये । सोऽपि सद्वस्त्रदानस्य फलं दशगुणंलभेत्

ज्येष्ठं कुंडे नरःस्नात्वा यःसंतर्पयते पितॄन् ।

स तानुद्धरते सर्वान्नरकादपि शुद्धधीः ॥ २०९ ॥

क्षेत्रे पैतामहे पूते पुण्यां प्राप्य सरस्वतीम् । नरःकिं प्रार्थयेदन्यत्तीर्थं ब्रह्मसुतोऽब्रवीत्

तस्मात्सर्वेषु तीर्थेषु स्नातः प्राप्नोति यत्फलम् ।

तत्सर्वं प्राप्नुयान्मर्त्यो ज्येष्ठकुंडे सकृत्प्लुतः ॥ २११ ॥

किमत्र बहुनोक्तेन क्षेत्रं तीर्थं गतिश्शुभा । येनैतत्त्रितयं प्राप्तं प्राप्ता तेन गतिःपरा ॥

काले क्षेत्रे तथा तीर्थेस्नात्वाहुत्वापि तत्र यः । प्रयच्छते द्विजायार्थं सोऽनन्तंसुखमश्नुते

कार्त्तिके मासि शुक्ले च वैशाखे शशिभूषणे । चंद्रसूर्योपरागे च काले च कुरुजांगले ॥

क्षेत्रेष्वेतेषु तीर्थानि यान्युक्तानिमुनीश्वरैः । तेषां पुण्यतमं तीर्थमिदमाह पितामहः ॥

कुण्डे तु मध्यमे स्नात्वा कार्तिक्यां यः पुमान्द्विजे ।

प्रयच्छते चापि द्रव्यं सोऽश्वमेधमवाप्नुयात् ॥ २१६ ॥

एवं कनिष्ठकेऽप्यत्र कुंडे स्नात्वा समाधिना ।

यः प्रयच्छति विप्राय सुरूपामपि शालिकाम् ॥ २१७ ॥

स प्रयाति नरः क्षिप्रमग्निलोकं मनोरमम् । त्रिःसप्तकुलसंयुक्तो भुंक्ते तत्र महाफलम् ॥

तस्मात्सर्वप्रयत्नेन गमनाय मतिःस्थिरा । पुरुषेण तु कर्तव्या पुष्करावाप्तये शुभा ॥

पुष्करारण्यमासाद्य प्राची यत्र सरस्वती । मतिः स्मृतिःशुभा प्रज्ञा मेधाबुद्धिर्दया परा

सरस्वत्यास्तु पर्यायाष्षडेते संप्रकीर्तिताः । ततःप्रभृति यत्रासौ प्राचीभूता सरस्वती ॥

तत्रस्थं तज्जलं येऽपि पश्यंति तटसंस्थिताः । तेऽप्यश्वमेधस्य फलंलभंते नात्रसंशयः ॥

योऽवतीर्य पुनस्तत्र कश्चित्स्नानं समाचरेत् ।

नरः समाधियुक्तो वै ब्रह्मणोऽनुचरो भवेत् ॥ २२३ ॥

शाकादिनापि हि पितॄन्यस्तत्रार्चयतेनरः । सोऽप्येति विपुलान्भोगांस्तेषामेवानुभावतः

येपुनर्विधिना तत्र श्राद्धंकुर्वंति मानवाः । ते नयंति पितॄन्स्वर्गं नरकादपि दुःखदात् ॥

तृप्यंति पितरस्तस्य यस्तत्रकुशमिश्रितम् । स्नात्वाप्रयच्छते तोयं पूतंतेषांतिलान्वितम्

तेऽपि तुष्टाः पुनस्तस्य प्रयच्छन्त्यमितं फलम् ।

सर्वेषामेवतीर्थानामिदमेवाधिकं स्मृतम् ॥ २२७ ॥

आदितीर्थमिदं तस्मात्तीर्थानां भुवि विश्रुतम् ।
धर्मापवर्गयोः क्रीड़ानिधिभूतमवस्थितम् ॥ २२८ ॥
सरस्वत्या पुनश्चैव समेतं गुणवत्तरम् । धर्मार्थकाममोक्षाणां चतुर्णामपि दायकम् ॥
येऽप्यत्र मलनाशाय पुमांसो विविशुर्जलम् । गोप्रदानसमं तेषां सुखेनैव फलं भवेत् ॥
सुवर्णदानेन सममेवमाहुर्मनीषिणः । तर्पणात्पिण्डदानाच्च नरकेष्वपि संस्थिताः ॥
स्वर्गं प्रयान्ति पितरस्तत्र पुत्रेण तारिताः । पुष्करेऽपि सरस्वत्यां ये पिबंति जलंजनाः
ते लभन्तेऽक्षयाँल्लोकान्ब्रह्मविश्वेशवंदितान् ।
स्वर्गनिश्रेणिका भूता पुष्करे च सरस्वती ॥२३३ ॥
सा पुण्यवद्भिस्संप्राप्तुं पुंभिश्शक्या महानदी । मुनिभिर्धर्मतत्त्वज्ञैस्तत्र तत्र निषेविता
तस्मात्सर्वत्र सा देवी पवित्रासर्वतःस्थिता । पुष्करे तु विशेषेण पूतात्पूततमा हि सा
नदी सरस्वती पुण्या सुलभा जगति स्थिता । दुर्लभा सा कुरुक्षेत्रे प्रभासे पुष्करे तथा
तत्तीर्थं सर्वतीर्थानां प्रवरं विहितं भुवि । धर्मार्थकाममोक्षाणां चतुर्णामपि साधकम्
प्राचींसरस्वतीं प्राप्ययोऽन्यत्तीर्थं हि मार्गते । स करस्थं समुत्सृज्यह्यमृतंविषमिच्छति
ज्येष्ठे ज्येष्ठा प्रयागस्य मध्यमे मध्यमा स्मृता ।
प्रदक्षिणं ततो गच्छेत्कनीयांसं विचक्षणः ॥ २३९ ॥
त्रिष्वप्येतेषु स्नायीत कुर्याच्चापि प्रदक्षिणम् ।
प्रयच्छति पितृभ्यो यस्तोयं तेषां तिलान्वितम् ॥ २४० ॥
तेऽपितुष्टाःपुनस्तस्य प्रयच्छंत्यमितंफलम् । यःस्नात्वाप्रयतोनित्यंततः पश्येत्पितामहम्
अनुलोमविलोमाभ्यां तथाव्यस्तसमस्तयोः । स्नातव्यंपुष्करेनित्यंब्रह्मलोकमभीप्सिता
त्रीणिशृङ्गाणिशुभ्राणित्रीणिप्रस्रवणानि च । पुष्कराणिप्रसिद्धानि नविद्मस्तत्रकारणम्
कनीयांसं मध्यमं च तृतीयं ज्येष्ठपुष्करम् ।
शृंगशब्दाभिधानानि शुभप्रस्रवणानि च ॥ २४४ ॥
धर्मार्थकाममोक्षाणां संकल्पैरफलं नरः ।
यस्तत्र संत्यजेद्देहं मोक्षं प्राप्नोत्यसंशयम् ॥ २४५ ॥

प्रयतः संयतस्तस्यां स्नात्वा दद्याद्द्विजे शुभाम् ।
गामेकां मन्त्रपूतां च लोकानाप्नोति सोऽक्षयान् ॥ २४६ ॥

किमत्र बहुनोक्तेन रात्रावपि हि योऽर्थिने । अर्थं प्रयच्छते स्नात्वासोऽनन्तं सुखमश्नुते
तत्र दानं प्रशंसंति तिलानां मुनिसत्तमाः । कृष्णपक्षे चतुर्दश्यां स्नानं च विहितं सदा

पिण्याकेन गुडेनापि पिण्डं योऽत्र प्रयच्छति ।
पितॄणां प्रयतो भूत्वा पितृलोकं स यच्छति ॥ २४९ ॥
पुष्करारण्यमासाद्य पुनस्तस्मात्सरस्वती ।
अन्तर्धानं गता गन्तुं प्रवृत्ता पश्चिमामुखी ॥ २५० ॥

नातिदूरे ततस्तस्य पुष्करस्य सुशोभना । खर्जूरवनमासाद्य फलपुष्पोपशोभितम् ॥
तत्रोषित्वा पुनर्देवी वने मुनिमनोरमे । सर्वर्तुकुसुमाकीर्णे सिद्धचारणसेविते ॥ २५२॥
नंदानामसरिच्छ्रेष्ठा त्रिषु लोकेषु विश्रुता । मीननक्रकच्छपोपेता विमलोदकपूरिता ॥

सूत उवाच ।

अथ देवव्रतःप्राह किमन्यासा सरिद्वरा । एतन्मे कौतुकं ब्रह्मन्नंदाशब्दा सरस्वती ॥
यथाभूता येन कृता कारणेन सरिद्वरा । एवमुक्ते पुलस्त्यःस भीष्मायैतत्पुरातनम् ॥
आख्यातुमुपचक्राम नन्दा नाम यतस्स्मृता । क्षत्त्रव्रतधरो नित्यमासीद्राजा प्रभंजनः ॥
प्रवृत्तोऽऽसौ मृगान्हंतुं वने तस्मिन्महाबलः । स ददर्श ततस्तस्मिन्मृगींगुल्मांतरेस्थिताम्

मार्गणेन सुतीक्ष्णेन तां विव्याध पुरोगताम् ।
सा विलोक्य दिशः सर्वास्तं दृष्ट्वा शरपाणिनम् ॥ २५८ ॥
आह किं ते कृतं मूढ त्वयैतत्कर्म दुष्करम् ।
स्तनं तावत्प्रयच्छामि सुतस्याधोमुखी स्थिता ॥ २५९ ॥

मांसलोभेन विद्धाहं तरसा ह्यकुतोभया । पिवंतं गुप्तवत्सं च गूढमैथुनमागतम् ॥२६०
एवंविधं मृगं राजन्नहन्यात्प्राङ्मया श्रुतम् । स्तनं तु तनयस्यास्य प्रयच्छंती त्वयाहता

बाणेनाशनिकल्पेन निर्दोषा वनमागता ।
तस्मात्त्वमपि दुर्बुद्धे क्रव्यादत्वमवाप्स्यसि ॥ २६२ ॥

वनेऽस्मिन्कंटकाकीर्णे व्याघ्ररूपं त्वमाप्नुहि। शापप्रदानं श्रुत्वैवं स राजा पुरतःस्थितः
प्रोवाच प्रांजलिर्भूत्वा तां मृगीं व्यथितेंद्रियः। स्तनं तु तनयस्येह प्रयच्छंती न मे मता॥
अज्ञानेन हता भद्रे प्रसीद सुसमाधिना। व्याघ्ररूपमहं त्यक्त्वाप्राप्स्यामि मानुषं कदा
एवंविधस्य शापस्य विमोक्षं शंस मे मृगि। एवमुक्ते मृगी तस्य प्रोवाच वचनं शुभम्॥
राजन्नब्दशतांते तु शापस्यागतया गवा। नंदया सह संवादमासाद्यांतो भविष्यति॥
मृग्योक्ते वचने राजा व्याघ्र एवाभवत्तदा। नखदंष्ट्रायुधोपेतो व्याघ्ररूपोऽतिभीषणः॥
तत्रासौ भक्षयन्नास्तेमृगान्हत्वा चतुष्पदः। द्विपदानपि तत्रस्थान्कालेन क्रमयोजितान्
एवं तत्र वने तस्य संवत्सरशतं गतम्। आत्मानं निंदमानस्य मृगमांसानि खादतः॥
कदाहं मानुषं भावं गमिष्यामीदृशं पुनः। कुत्सितं न करिष्यामि वियोनिकरणं महत्
कुर्वता मांसलोभेन मृगयां परिधावता। आपदासहितं प्राप्तं मानुषाणां भयावहम्॥
दर्शनं दुःखदं मह्यं मृगाणां मानुषैः सह। पापेन पापतां नीतो ह्यपापेऽपि सतांकुले॥

उत्पन्नो विकृतिं नीतः पश्य कालस्य पर्ययम्।
तस्मान्मे सुकृतं नास्ति हिंसाप्येकं विगर्हिता॥ २७४॥
तया तु प्राप्यते दुःखं न च मोक्षो भविष्यति।
कथं मे भविता मोक्षः कथं सत्या मृगी भवेत्॥ २७५॥

गते वर्षशते तस्य वसतस्तद्वने तदा। आयातं गोकुलं काले यवसोदककारणात्॥
गोवाटवाटीसंस्थानं तत्तत्र समवस्थितम्। वनोपकण्ठे मंथानरवेणापूरितं च यत्॥
क्षीवैर्गोपैःसमाकीर्णं पादपैरपि तद्वनम्। निशि वंशरवोपेतं गोपीनां च शुभप्रदम्॥
एवं तु वसतस्तस्य खर्जूरवनसंसदि। हृष्टा तुष्टा च पुष्टा च नंदा वै नाम नामतः॥

गोमण्डलस्य सा मुख्या हंसवर्णा घटस्रवा।
दीर्घघोणा विभक्तांगी वंधुरांगी तनुत्वचा॥ २८०॥

नीलकण्ठा शुभग्रीवा घण्टाली मधुरस्वना। सा च यूथस्य सर्वस्य पुरश्चरति निर्भया॥
घासस्थानं चरेच्छन्नं गत्वैका च यथासुखम्। यथेष्टकामा सुरभिश्छन्नं चरति वै तृणम्
रोहितो नाम तत्रान्यः पर्वतः सरितस्तटे। अनेककन्दरदरीगुहासत्त्वनिषेवितः॥२८३॥

तस्य पूर्वोत्तरे भागे घोरे तृणसमाकुले । संकटे विषमे दुर्गे भैरवे लोमहर्षणे ॥ २८४॥
मृगसिंहसमाकीर्णे बहुश्वापदसेविते । वल्लीवृक्षादिगहने शिवाशतनिनादिते ॥२८५ ॥
दुर्गेऽस्मिन्वसते रौद्रः कामरूपी भयंकरः। द्वीपी शोणितदिग्धांसो घोरदंष्ट्रो नखायुधः
नंदो नाम स धर्मात्मा स च गोपीहिते रतः । अच्छिन्नाग्रैस्तृणैर्दीर्घैर्गोधनं परिरक्षति
तस्य यूथपरिभ्रष्टा सा नंदा तृणलिप्सया । चरंती व्याघ्रपुरतः सा धेनुः प्रत्युपस्थिता

अभ्यद्रवच्च तां द्वीपी तिष्ठ तिष्ठेति चाब्रवीत् ।
त्वमद्य विहितो भक्षः स्वयं प्राप्तासि धेनुके ॥ २८६ ॥

द्वीपिनश्च वचः श्रुत्वा निष्ठुरं रोमहर्षणम् । शुक्लरूपान्वितं बालं भद्रमिंदुसमप्रभम् ॥
वत्सं स्मरति सा धेनुः स्नेहाक्ता गद्गदाक्षरम् । दह्यंती पुत्रशोकेन नंदा सा पुत्रवत्सला
रुदंती करुणं चैव निराशा पुत्रदर्शने । द्वीपी दृष्ट्वा तु तां धेनुं क्रंदमानां सुदुःखिताम् ।
उवाच वचनं घोरं धेनुके किं प्ररुद्यते । दैवात्सुखोपपन्नासि भक्षस्त्वं मे यदृच्छया ॥

रुदंत्या वा हसंत्या वा तवात्तं जीवितं भवेत् ।
विहितं भुज्यते लोके स्वयं प्राप्तासि धेनुके ॥ २६४ ॥
मृत्युस्ते विहितोऽद्यैव वृथा किमनुशोचसि ।
पप्रच्छ तां पुनर्द्वीपी किमर्थं रुदितं त्वया ॥ २६५ ॥

कौतुकं चात्र मे जातं महन्मे कथयस्व वै। व्याघ्रस्य वचनं श्रुत्वा नंदावाक्यमथाब्रवीत्
क्षंतुमर्हसि मे नाथ कामरूपिन्नमोऽस्तु ते। त्वां समासाद्य लोकस्य परित्राणं न विद्यते
जीवितार्थं न शोचामि प्राप्तव्यं मरणं मया। जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्ममृतस्यच
तस्मादपरिहार्येऽर्थे न शोचामि मृगाधिप । देवैरपि यथा सर्वैर्मर्तव्यमवशैर्ध्रुवम् ॥२६६

तस्मात्तु नाहमेवैका व्याघ्र शोचामि जीवितम् ।
किंतु स्नेहेन वै साधो दुःखेन रुदितं मया ॥ ३०० ॥

अस्ति मे हृदि संतापस्तं च त्वं श्रोतुमर्हसि । प्रथमे वयसि प्राप्ते प्रसूताऽहं मृगाधिप ॥
इष्टः प्रथमजातश्च सुतस्तु मम बालकः । क्षीरपायी च मे वत्सस्तृणं नाद्यापि जिघ्रति
स च गोपकुले बद्धः क्षुधार्तो मामवेक्षते । तमहं चानुशोचामि कथं जीविष्यते सुतः ॥

तस्येच्छामि स्तनं दातुं पुत्रस्नेहवशं गता। पाययित्वा स्तनं वत्समवलिह्य च मूर्द्धनि
सखीनामर्पयित्वा तु संदिश्य च हिताहितम्।
पुनः प्रत्यागमिष्यामि यथेष्टं भक्षयिष्यसि॥ ३०५॥
स नंदाया वचः श्रुत्वा मृगेंद्रः पुनरब्रवीत्। किंते पुत्रेण कर्तव्यं मरणं किं न बुध्यसे॥
त्रस्यंति सर्वभूतानि म्रियंते मां निरीक्ष्य च। त्वं पुनः कृपयाविष्टा पुत्र पुत्रेति भाषसे
न पुत्रा न तपोदानं न माता नपिता गुरुः। शक्नुवंति परित्रातुं नरं कालप्रपीडितम्॥
कथं त्वं गोकुलं गत्वा गोपीजनसमाकुलम्। वृषभैर्नादितं दिव्यं वालवत्सविभूषितम्
भूषणं देवलोकस्य स्वर्गं तुल्यं न संशयः। नित्यं प्रमुदितं दिव्यं सर्वदेवप्रपूजितम्॥
यत्पवित्रं पवित्राणां मंगलानां च मंगलम्।
यत्तीर्थं सर्वतीर्थानां धन्यानां धन्यमुत्तमम्॥ ३११॥
समस्तगुणसंपन्नमीश्वरायतनं महत्। यत्ख्यातं सर्वतीर्थानां भूमिस्वर्गमनुत्तमम्॥
गोपीमंथनशब्देन वालवत्सरवेण च। गवां हुंकारशब्देन अलक्ष्मीः प्रतिहन्यते॥३१३॥
यत्र वत्साश्च हुंकारं करुणं मातृकांक्षया। यद्गोपैः पालितं शूरैर्बाहुयुद्धकृतश्रमैः॥
प्रगीतनृत्यसंलापं नंदितास्फोटनादितम्। इतस्ततः स्थितैर्वत्सैर्नर्द्यमानं समंततः॥३१५
सरोवद्राजते गोष्ठं चलद्भिरिव पंकजैः। तं श्रीनिकेतनं सौम्यं हृष्टपुष्टजनाकुलम्॥
गोलोक प्रतिमं दृष्ट्वा कथं प्रत्यागमिष्यसि।
पंचभूतानि मे भद्रे पिवंतु रुधिरं तव॥ ३१७॥
न निर्विण्णानि भूतानि वाङ्मात्रेण करोम्यहम्।

नंदोवाच।

एवं प्रथमवत्साया मृगेंद्र श्रृणु मे वचः॥ ३१८॥
दृष्ट्वा सखीं सुतं वालं गोपांश्च प्रतिपालकान्। गोपीजनमुपामन्त्र्य जननीं च विशेषतः
शपथैरागमिष्यामि मन्यसे यदि मुञ्चमाम्। यत्पापं ब्रह्मवध्यायां मातापितृवधेषुच॥
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः। यत्पापं लुब्धकानां तु म्लेच्छानां गरदायिनाम्
तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः। गोषु विघ्नांश्च ये कुर्युः स्वपंतीं ताडयंति च॥

तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः । सकृद्दत्त्वा तु यः कन्यां द्वितीये दातुमिच्छति
तस्य पापेन लिप्येऽहं यद्यहं नागमे पुनः । यस्त्वनर्हान्वलीवर्दान्विषमे वाहयेत्पुमान् ॥
कथायां कथ्यमानायां विघ्नं कारयते तु यः । तेन पापेन लिप्येऽहं यद्यहं नागमे पुनः
गृहे यस्यागतं मित्रं निराशं प्रतिगच्छति । तस्य पापेन लिप्येऽहं यद्यहं नागमे पुनः ॥
इत्येतैः पातकैर्घोरैरागमिष्याम्यहं पुनः । बुद्ध्वा संप्रत्ययं द्वीपी पुनर्वचनमब्रवीत् ॥

व्याघ्र उवाच ।

संजातः प्रत्ययोऽस्माकं शपथैर्धेनुके तव । कदाचिन्मन्यसे गत्वा मूर्खोऽयं वञ्चितो मया
अत्रापि केचिद्वक्ष्यंति शपथे नास्ति पातकम् । कामिनीषु विवाहेषु गवांमुक्तौ तथैव च
प्राणत्यागे समुत्पन्ने श्रद्धातव्यं न च त्वया ।
लोकेऽस्मिन्नास्तिकाः केचिन्मूर्खाः पंडितमानिनः ॥ ३३० ॥
भ्रामयिष्यंति तं चित्रं चक्रारूढमिव क्षणात् । कुतर्कहेतुवृत्तांतैरज्ञानावृतचेतसः ॥३३१॥
मोहयंति नराः क्षुद्रा आगमार्थविशारदाः । अतथ्यान्यपि तथ्यानि दर्शयंत्यतिपेशलाः ॥
स मे निम्नोन्नतानीवचित्रकर्मविदोजनाः । प्रायःकृतार्थो लोकोऽयं मन्यतेनोपकारिणम्
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजतिमातरम् । न तं पश्यामि लोकेऽस्मिन्कृते प्रतिकरोति यः
सर्वस्य हि कृतार्थस्य मतिरन्या प्रवर्तते ।
ऋषिदेवासुरनरैः शपथाः कार्यसिद्धये ॥ ३३५ ॥
कृताः परस्परं पूर्वं तान्न मन्यामहे वयम् । सत्येनापि शपेद्यस्तु देवाग्निगुरुसन्निधौ ॥
तस्य वैवस्वतो राजा धर्मस्यार्द्धं निकृन्तति । मा ते बुद्धिर्भवेदेवं शपथैरेष वंचितः ॥
त्वयैव दर्शितं सर्वं यथेष्टं कुरु सांप्रतम् ।

नंदोवाच ।

एवमेव महासाधो कस्त्वां वञ्चयितुं क्षमः ॥ ३३८ ॥
आत्मैव वंचितस्तेन यः परं वञ्चयिष्यति ।

द्वीप्युवाच ।

धेनुके पश्य गच्छ त्वं पुत्रकं पुत्रवत्सले ॥ ३३९ ॥

पाययित्वा स्तनं वत्समवलिह्य च मूर्द्धनि । मातरं भ्रातरं दृष्ट्वा सखीस्वजनबांधवान् ॥
सत्यमेवाग्रतः कृत्वा शीघ्रमागमनं कुरु । एवं सा शपथं कृत्वा धेनुर्वै सत्यवादिनी ॥
अनुज्ञाता मृगेंद्रेण प्रयाता पुत्रवत्सला । अश्रुपूर्णमुखी दीना वेपमाना सुदुःखिता ॥
हुंभारवं प्रमुंचंती पतिता शोकसागरे । करीव चरणग्राहं गृहीतः सलिलाशये ॥३४३॥

अशक्ता स्वपरित्राणे विलपंती मुहुर्मुहुः ।
सा तत्र गोकुलं प्राप्ता हरिन्नद्यास्तटे स्थितम् ॥ ३४४ ॥

श्रुत्वा वत्सं तु क्रोशंतं पर्यधावत संमुखी । उपसृप्य च तं बालं बाष्पपर्याकुलेक्षणम्
संप्राप्य मातरं वत्सःशंकितःपरिपृच्छति । न ते पश्याम्यहं स्वास्थ्यं धैर्यं नैवाद्य लक्षये

उद्विग्ना चापि ते दृष्टिर्भीता चातीव लक्ष्यसे ।

नन्दोवाच ।

पिब पुत्र स्तनं मेऽद्य कारणं यदि पृच्छसि ॥ ३४७ ॥

अशक्ताहं तवाख्यातुं कुरु तृप्तिं यथेप्सिताम् । अपश्चिमं तु ते पुत्र दुर्लभं मातृदर्शनम् ॥
एकाहमद्य मे पीत्वा प्रभाते कस्य पास्यसि। त्वां त्यक्त्वा पुत्रगंतव्यं शपथैरागता ह्यहम्

क्षुत्क्षामस्य च व्याघ्रस्य दातव्यमात्मजीवितम् ।
नंदायाश्च वचः श्रुत्वा वत्सो वचनमब्रवीत् ॥ ३५० ॥

वत्स उवाच ।

अहं तत्र गमिष्यामि यत्र त्वं गंतुमिच्छसि। श्लाघ्यंममापि मरणं त्वया सह न संशयः
एकाकिनापि मर्तव्यंमयार्तेन त्वया विना । यदि मांसंहितं मातर्वने व्याघ्रो हनिष्यति
यागतिर्मातृभक्तानां ध्रुवं सा मे भविष्यति। तस्मादवश्यंयास्यामि त्वया सह न संशयः
अथवा तिष्ठ मातस्त्वं शपथाः संतु ते मम। जनन्या च वियुक्तस्यजीवितेकिं प्रयोजनम्
अनाथस्यवनेनित्यं कोमे नाथोभविष्यति । नास्तिमातृसमोबन्धुर्बालानांक्षीरजीविनाम्

नास्ति मातृसमो नाथो नास्ति मातृसमा गतिः ।
नास्ति मातृसमः स्नेहो नास्ति मातृसमंसुखम् ॥ ३५६ ॥

नास्ति मातृसमो देव इह लोके परत्र च । एवं वै परमोधर्मः प्रजापतिविनिर्मितः ॥

ये तिष्ठंति सदा पुत्रास्ते यांति परमां गतिम् ।

नंदोवाच ।

ममैव विहितो मृत्युर्नत्वं पुत्रागमिष्यसि ॥ ३५८ ॥

न चायमन्यजीवानां मृत्युः स्यादन्यमृत्युना । अपश्चिममिमम्पुत्र मातृसंदेशमुत्तमम् ॥

अत्रातिष्ठस्व मद्वाक्यात्ततःशुश्रूषणं पुनः । जले स्थले च विचरन्प्रमादं तात मा कुरु ॥

प्रमादात्सर्वभूतानि विनश्यंति न संशयः । न च लोभेनचर्तव्यंविषमस्थं तृणं क्वचित् ॥

लोभाद्विनाशः सर्वेषामिहलोके परत्र च । समुद्रमटवीं पुत्र विशंति लोभमोहिताः ॥

लोभादकार्यमत्युग्रं विद्वानपि समाचरेत् ।

लोभात्प्रमादाद्विस्रंभात्त्रिभिर्नाशोभवेन्नृणाम् ॥ ३६३॥

तस्माल्लोभं न कुर्वीत न प्रमादं न विश्वसेत् । आत्मा हि सततं पुत्र रक्षितव्यः प्रयत्नतः

सर्वेभ्यः श्वापदेभ्यश्च म्लेच्छचोरादिसंकटात् । तिरश्चां पापयोनीनामेकत्र वसतामपि

विपरीतानि चित्तानि विज्ञायंते न पुत्रक । नखीनां च नदीनां च शृङ्गिणां शस्त्रधारिणाम्

न विश्वासस्त्वया कार्यः स्त्रीणां प्रेष्यजनस्य च ।

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ॥ ३६७ ॥

विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ।

न विश्वसेत्स्वदेहेऽपि बलिष्ठे भीतचेतसि ॥ ३६८ ॥

वक्ष्यंति गूढमत्यर्थं सुप्तं मत्तं प्रमादतः । गंधः सर्वत्र सततमाघ्रातव्यः प्रयत्नतः ॥३६६॥

गावः पश्यंति गंधेन राजानश्चारचक्षुषा । नैकस्तिष्ठेद्वने घोरे धर्ममेकं च चिंतयेत् ॥

न चोद्वेगस्त्वयाकार्यःसर्वस्य मरणंध्रुवम् । यथाहिपथिकःकश्चिच्छायामाश्रित्य तिष्ठति

विश्रम्य च पुनर्याति तद्वद्भूतसमागमः । पुत्र नित्यं जगत्सर्वं तत्रैकः शोचसे कथम् ॥

तावत्त्वं शोकमुत्सृज्य मद्वाक्यमनुपालय ।

शिरस्याघ्राय तं पुत्रमवलिह्य च मूर्द्धनि ॥ ३७३ ॥

शोकेन महताविष्टा बाष्पव्याकुललोचना । विनिःश्वसंती नागीव दीर्घमुष्णं मुहुर्मुहुः ॥

पुत्रहीनं जगच्छून्यं प्रपश्यंतीव साऽभवत् । महापंकनिमग्नेव तिष्ठन्ती चावसीदती ॥

विलप्य नंदिनीपुत्रमुवाचेदं पुनर्वचः । नास्ति पुत्रसमः स्नेहो नास्ति पुत्रसमं सुखम् ॥
नास्ति पुत्रसमा प्रीतिर्नास्ति पुत्रसमागतिः । अपुत्रस्य जगच्छून्यमपुत्रस्य गृहेऽसुखम्
पुत्रेण लभते लोकमपुत्रो नरकं व्रजेत् । लोको वदति वाक्यानि चंदनं किल शीतलम्
पुत्रगात्रपरिष्वंगश्चंदनाददतिशीतलः । इति पुत्रगुणानुक्त्वा निरीक्ष्य च पुनः पुनः॥३७९

स्वमातरं सखीर्गोपीस्त्वरमाणा च पृच्छति ।
यूथस्याग्रे चरंतीं मामाससाद मृगाधिपः ॥ ३८० ॥

मुक्ताऽहं तेन शपथैः पुनर्यास्यामि त त्रवै । सुतं च मातरं चैव सखीर्द्रष्टुं च गोकुलम्
आगता सत्यवाकेन पुनर्यास्यामि तत्र वै । मातः क्षमस्व तत्सर्वं दौःशील्यादि कृतं मम
बालस्तवायं दौहित्रः किमत्रान्यद्ब्रवीम्यहम् । विपुले चंपके मातर्भद्रे सुरभि मानिनि ॥
वसुधारे प्रियानंदे महानंदे घटस्रवे । आज्ञानाज्ज्ञानतो वापि यदुक्तं किंचिदप्रियम् ॥

तत्क्षमध्वममहाभागा यच्चान्यच्च कृतं मया ।
सर्वाःसर्वगुणोपेताः सर्वा लोकस्य मातरः ॥ ३८५ ॥

सर्वाःसर्वप्रदा नित्यं रक्षध्वं मम बालकम् । अनाथं विकलं दीनं रक्षध्वं मम पुत्रकम्
मातृशोकाभिसंतप्तं भगिन्यःपालयिष्यथ । भगिनीनामयं पुत्रो ह्यर्पितस्स्वसुतो मया ॥

पाल्यो बालश्च सर्वाभिः पोष्यः पाल्यश्च पुत्रवत् ।
तस्मादनाथमबलं पुत्रवत्पालयिष्यथ ॥ ३८८ ॥

क्षमध्वं च महाभागा यास्येऽहं सत्यसंश्रया । न चिंतामहती कार्या सखीभिश्चकथंचन
प्रथमस्यास्य जातस्य स्थितं मरणमग्रतः । श्रुत्वा तु नंदावचनं माता सख्यश्चदुःखिताः
विषादं परमं जग्मुरिदमूचुश्च विस्मिताः । अहोऽत्र महदाश्चर्यं यद्व्याघ्रवचनं त्वया ॥
प्रकर्तुमुद्यतं भीमं नंदा त्वं सत्यवादिनी । शपथैः सत्यवाक्येन वंचयित्वा महाभयम् ॥
नाशनीयं प्रयत्नेन न गंतव्यं कथंचन । नंदे न चैव गंतव्यमधर्मं क्रियते त्वया ॥३९३ ॥

यद्बालं स्वसुतं त्यक्त्वा सत्यलोभेन गम्यते ।
अत्र गाथा पुरा:प्रोक्ता ऋषिभिर्ब्रह्मवादिभिः ॥ ३९४ ॥

प्राणत्यागे समुत्पन्ने शपथैर्नास्ति पातकम् । उक्त्वाऽनृतं भवेद्यत्र प्राणिनां प्राणरक्षणम्

अनृतं तत्र सत्यं स्यात्सत्यमप्यनृतं भवेत्। कामिनीषु विवाहेषु गवां मुक्तौ तथैव च
ब्राह्मणानां विपत्तौ च शपथैर्नास्ति पातकम्।

नंदोवाच।

परेषां प्राणरक्षार्थं वदाम्येवानृतं वचः॥ ३६७॥

नात्मार्थमुत्सहे वक्तुं जीवितार्थे कथंचन। एकः संश्लिष्यते गर्भे मरणे भरणे तथा॥
भुंक्ते चैकः सुखंदुःखमतः सत्यं वदाम्यहम्। सत्येप्रतिष्ठिता लोका धर्मः सत्येप्रतिष्ठितः
उदधिस्सत्यवाक्येन मर्यादां न विलंघते। विष्णवे पृथिवीं दत्त्वाबलिः पातालमाश्रितः
छद्मनापिबलिर्बद्धः सत्यवाक्यं न चात्यजत्। प्रवर्धमानः शैलेन्द्रः शतःशृङ्गः समुत्थितः
सत्येन संस्थितो विंध्यः प्रबन्धं नातिवर्तते।
स्वर्गापवर्गनरकाः सत्यवाचि प्रतिष्ठिताः॥ ४०२॥

यस्तु लोपयते वाचमशेषं तेन लोपितम्। योऽन्यथा संतमात्मानमन्यथा प्रतिपद्यते॥
किंतेन न कृतं पापं चोरेणात्मापहारिणा। यास्यामिनरकं घोरंविलोप्यात्मानमात्मना
तस्य वैवस्वतो राजा धर्मस्यार्धं निकृंतति। अगाधे सलिले शुद्धे सत्यतीर्थे क्षमाह्रदे॥
स्नात्वा पापविनिर्मुक्तः प्रयाति परमां गतिम्।
अश्वमेधसहस्रं च सत्यं च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते॥ ४०६॥
सत्यं साधुफलं श्रुतं च परमं क्लेशादिभिर्वर्जितं,
साधूनां निकटं सतां कुलधनं सर्वाश्रमाणां फलम्।
स्वाधीनं च सुदुर्लभं च जगतस्साधारणं भूषणं;
यन्म्लेच्छोऽप्यभिधार्य गच्छति दिवं तत्त्यज्यते वा कथम्॥ ४०७॥

सख्य ऊचुः।

नंदे सा त्वं नमस्कार्यासर्वैरपिसुरासुरैः। यात्वं परमसत्त्वेन प्राणांस्त्यजसिदुस्त्यजान्
ब्रूमःकिं तत्र कल्याणि या त्वंधर्मधुरंधरा। त्यागेनानेन न प्राप्यं त्रैलोक्येवस्तुकिंचन
अवियोगश्चपश्यामस्त्यागादस्मात्सुतेनहि। नार्याःकल्याणचित्तायानापदःसंतिकुत्रचित्

दृष्ट्वागोपीजनं सर्वं परिक्रम्य च गोकुलम् । नन्दा संप्रस्थिता देवान्वृक्षांश्चापृछ्यसापुनः
क्षितिं वरुणमग्निं च वायुं चापि निशाकरम् । दश दिग्देवता वृक्षान्नक्षत्राणि ग्रहैः सह
सर्वान्विज्ञापयामास प्रणिपत्य मुहुर्मुहुः । ये संश्रिता वने सिद्धाः सर्वाश्च वनदेवताः ॥

वने चरंतं च तृणं ते रक्षंतु सुतं मम ।

चंपकाशोकपुन्नागास्सरलार्जुनकिंशुकाः ॥ ४१४ ॥

शृण्वंतु पादपाः सर्वे संदेशं मम विक्लवम् । वत्समेकाकिनं दीनं चरंतं विषमे वने ॥
रक्षध्वं वत्सकं बालं स्नेहात्पुत्रमिवौरसम् । मात्रापित्राविहीनं च अनाथं दीनमानसम्
विचरंतमिमां भूमिं क्रंदमानं सुदुःखितम् । तस्येह क्रंदमानस्य मत्पुत्रस्य महावने ॥
महाशोकाभिभूतस्य क्षुत्पिपासातुरस्य च । शून्यस्यैकाकिनः सर्वं जगच्छून्यं प्रपश्यतः
चरमाणस्य कर्तव्यं सानुक्रोशैस्तु रक्षणम् । संदिश्य नंदा प्रीत्यैवं पुत्रस्नेहवशं गता ॥
शोकाग्निना च सन्दीप्ता विच्छिन्ना पुत्रदर्शने । वियुक्ता चक्रवाकीव लतेव पतिता तरोः
अन्धेव दृष्टिरहिता प्रस्खलंती पदे पदे । अगच्छत्सापुनस्तत्र यत्रासौ पिशिताशनः ॥

आस्ते विस्फूर्जितमुखस्तीक्ष्णदंष्ट्रो भयावहः।

तावत्तस्याःसुतो वत्स ऊर्द्ध्वपुच्छोऽतिवेगवान् ॥ ४२२ ॥

आगत्यमातुरग्रेऽसौ मृगेंद्रस्याग्रतोऽभवत् । आगतं तु सुतं दृष्ट्वा मृत्युं तमग्रतः स्थितम्
व्याघ्रं दृष्ट्वा तु सा धेनुरिदं वचनमब्रवीत् । भो भो मृगेंद्रागताहं सत्यधर्मव्रते स्थिता
कुरु तृप्तिं यथाकाममस्मन्मांसेन सांप्रतम् । संतर्पयस्व भूतानि पिब त्वं शोणितं मम

मृतायां तु मयि त्वं भो भक्षयेमं तु बालकम् ।

द्वीप्युवाच ।

स्वागतं तव कल्याणि धेनुके सत्यवादिनि ॥ ४२६ ॥

न हि सत्यवतां किंचिदशुभं भवति क्वचित् । त्वयोक्तं धेनुके पूर्वं सत्यं प्रत्यागमे पुनः
तेन मे कौतुकं प्राप्तं प्राप्तागच्छेत्कथंपुनः । तव सत्यपरीक्षार्थं प्रेषितासि मया पुनः ॥

अन्यथा मां समासाद्य जीवंती यास्यसे कथम् ।

यच्च नः कौतुकं जातं सत्यस्यान्वेषणं मम ॥ ४२६ ॥

तस्मादनेन सत्येन मुक्ताऽसि च मयाधुना। भगिनी भवती मह्यं भागिनेयः सुतस्तव॥
दत्तोपदेशस्य शुभे मम पापिष्ठकर्मणः। सत्ये प्रतिष्ठिता लोका धर्मः सत्ये प्रतिष्ठितः

सत्येन गौः क्षीरधारां प्रमुंचति हविः प्रियाम्।
स वै धन्यतमो गोपो यस्त्वत्क्षीरेण जीवति ॥ ४३२ ॥

भूमिप्रदेशा धन्यास्ते सतृणावीरुधः शुभे। ते धन्याश्च कृतार्थाश्च तैरेव सुकृतं कृतम्॥
तैराप्तं जन्मनः सारं ये पिबंति पयस्तव। मृगेंद्रः प्रत्ययं गत्वा विस्मयं परमं गतः॥

प्रत्यादेशोऽयमस्माकं सत्यं देवैःप्रदर्शितः।
सत्यमिष्टं गवां दृष्ट्वा न मे वाञ्छास्ति जीवितम् ॥ ४३५ ॥

तत्करिष्याम्यहं कर्म येन मुच्येय किल्बिषात्। मया जीवसहस्राणि भक्षितानि शतानिच
गतिं कामिहगच्छामि दृष्ट्वा गोःसत्यमीदृशम्। अहं पापो दुराचारो नृशंसोजीवघातकः

कांस्तुलोकान्गमिष्यामि कृत्वा कर्म सुदारुणम्।
गमिष्ये पुण्यतीर्थानि करिष्ये पापशोधनम् ॥ ४३८ ॥

पतिष्ये गिरिमारुह्य प्रवेक्ष्ये वा हुताशनम्। धेनोऽद्य यन्मया कार्यं तपः पापाद्विशुद्धये

तदा दिशस्व संक्षेपान्न कालो विस्तरस्य तु।

धेनुरुवाच।

तपः कृते प्रशंसंति त्रेतायां ज्ञानमेव च ॥ ४४० ॥

द्वापरे यज्ञमित्याहुर्दानमेकं कलौ युगे। सर्वेषामेव दानानामिदमेवैकमुत्तमम् ॥ ४४१ ॥
अभयं सर्वभूतानां नास्ति दानमतः परम्। चराचराणां भूतानामभयं यः प्रयच्छति॥
स च सर्वभयान्मुक्तः परं ब्रह्माधिगच्छिति। नास्त्यहिंसासमंदानं नास्त्यहिंसासमं तपः
यथा हस्तिपदेष्वन्यत्पदं सर्वं प्रलीयते। सर्वे धर्मास्तथा व्याघ्रे प्रलीयंते ह्यहिंसया॥
योगवृक्षस्य छाया या तापत्रयविनाशिनी। धर्मज्ञाने च पुष्पाणि स्वर्गमोक्षौ फलानि च
दुःखत्रयाभितप्तस्य छाया योगतरोःस्मृता। न बाध्यते पुनर्दुःखैः प्राप्य निर्वाणमुत्तमम्

इत्येतत्परमं श्रेयः कीर्तितं ते समासतः।
ज्ञातं चैव त्वया सर्वं केवलं मां तु पृच्छसि ॥ ४४७ ॥

द्वीप्युवाच ।

अहं मृग्या पुरा शप्तो व्याघ्ररूपेणसंस्थितः । ततःप्राणिवधात्सर्वमशेषंममविस्मृतम् ॥
त्वत्संपर्कोपदेशाभ्यां संजातंस्मरणंमम । त्वंचाप्यनेनसत्येनगमिष्यसिपरां गतिम् ॥
तदहं त्वां पुनः पृच्छे प्रश्नमेकं हृदि स्थितम् । साग्रं वर्षशतं जातं चिंतयानस्य मे शुभे
भवत्या भाग्ययोगेन कदाचित्स्वर्गशोभने । कृतंधर्मस्य संस्थानं सतां मार्गे प्रतिष्ठितम्
किंतेऽभिधानं कल्याणि ब्रूहि मेऽज्ञस्य सुव्रते ।

नंदोवाच ।

मम नंदेति संज्ञा तु कृता नंदेन स्वामिना ॥ ४५२ ॥
सांप्रतं भक्षयामीति ह्यतिष्ठः केन हेतुना । नंदेति श्रुत्वा तन्नाममुक्तशापप्रभंजनः ॥४५३
पुनर्नृपत्वमापन्नो वलरूपसमन्वितः । एतस्मिन्नंतरे धर्मस्तां ज्ञात्वा सत्यवादिनीम् ॥
द्रष्टुं समागतस्तत्र प्राब्रवीच्च पयस्विनीम् । तव सत्यव्रताद्धृष्टो धर्मोऽहमिह चागतः ॥
नंदे वृणीष्व भद्रं ते वरं वरतमं हि यत् । एवमुक्ता हि सा देवी नंदा तं प्रार्थयद्वरम् ॥
तवानुभावात्ससुता गच्छामि पदमुत्तमम् । भवेदिदंशुभं तीर्थं मुनीनां धर्मदायकम् ॥
मन्नाम्ना च सरिदियं नंदा नाम सरस्वती । वरप्रदानाद्देवेश तदेतत्प्रार्थितं मया ॥४५८

पुलस्त्य उवाच ।

सातत्क्षणाद्गता देवी स्थानं सत्यवतां शुभम् ।
प्रभंजनोऽपि तद्राज्यं संप्राप्तः प्रागुपार्जितम् ॥ ४५९ ॥
नंदा येन गता स्वर्गं नंदां प्राप्य सरस्वतीम् ।
तेनाख्यया बुधैस्तस्याः प्रोक्ता नंदा सरस्वती ॥ ४६० ॥
सरस्वतीपुनस्तस्माद्वनात्खर्जूरसंज्ञितात् । दक्षिणेन पुनर्याता प्लावयंती धरातलम् ॥
आगच्छन्नपि यस्तस्या नाम गृह्णाति मानवः । जीवन्सुखं स आप्नोति मृतो भवतिखेचरः
तत्र ये शुभकर्माणस्त्यजंति स्वां तनुं नराः ॥ ते विद्याधरराजानो भवंति सुखिनोजनाः
नराणां स्वर्गनिःश्रेणीस्नानात्पानात्सरस्वती ।
तत्र स्नानं प्रकुर्वन्ति येऽष्टम्यां सुसमाहिताः ॥ ४६४ ॥

ते मृताः स्वर्गमासाद्य मोदंते सुमनोरमाः । सरस्वती सदा स्त्रीणां तत्र सौभाग्यदायिका
उपोषिता तृतीयायामपि सौभाग्यभाजना । तत्र तद्दर्शनेनापि मुच्यते पापसंचयात् ॥
स्पृशंति ये नराः केचित्तेऽपिज्ञेया मुनीश्वराः । रजतस्य प्रदानेन रूपवाञ्जायते नरः ॥
पुण्यापुण्यजलोपेता नदीयं ब्रह्मणःसुता । नंदानामेति विपुला प्रवृत्ता दक्षिणामुखी ॥
गत्वा ततो नातिदूरं पुनर्याता पराङ्मुखी । ततःप्रभृति सादेवी प्रसभप्रकटास्थिता ॥
तस्यास्तटेषु पुण्येषु तीर्थान्यायतनानि च । संसेवितानि मुनिभिः सिद्धैश्चापि समंततः ॥
तेषु सर्वेषु भवति धर्मे हेतुस्सरस्वती । स्नानात्पानात्प्रदानाद्वा हिरण्यस्य महानदी ॥
हाटकक्षितिगौरीणां नंदातीर्थे महोदयम् । दानं दत्तं नरैः स्नातैर्जनयत्यक्षयं फलम् ॥

धान्यप्रदानं प्रवदंति शस्तं वसुप्रदानं च तथा मुनींद्राः ।
यैस्तेषु तीर्थेषु नरैः प्रदत्तं तद्धर्महेतुः प्रवरं प्रदिष्टम् ॥ ४७३ ॥
प्रायोपवेशं प्रयतःप्रयत्नाद्यस्तत्र कुर्यात्प्रमदा पुमान्वा ।
तीर्थेषु सायुज्यमवाप्य सोऽयं भुङ्क्ते फलं ब्रह्मगृहे यथेष्टम् ॥ ४७४ ॥
तस्योपकण्ठे तु मृतास्तु ये वै कर्मक्षयात्स्थावरजंगमाश्च ।
तैश्चापि सर्वैः सहसा प्रसह्य लभ्येत यज्ञस्य फलं दुरापम् ॥ ४७५ ॥
ततस्तु सा धर्मफलप्रदा भवेज्जन्मादिदुःखार्दितचेतसां नृणाम् ।
सर्वात्मना पुण्यफला सरस्वती सेव्या प्रयत्नात्पुरुषैर्महानदी ॥ ४७६ ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखंडे नंदाप्राचीमाहात्म्येऽष्टादशोऽध्यायः । १८

---

## एकोनविंशोऽध्यायः

### ऋषिभिर्यज्ञोपवीतैः पुष्करस्य तीर्थविभागकरणम् ।

भीष्म उवाच ।

पुष्करस्य च नंदायाः श्रुतं माहात्म्यमुत्तमम् । ऋषिकोटिर्यदायाता पुष्करे मुखदर्शनात्

सर्वैस्सुरूपता लब्धा सर्वमेतन्मया श्रुतम्। यज्ञोपवीतैर्भक्तानि यानि तानि वदस्व मे॥
कथं तीर्थविभागस्तु कृतस्तैः सुमहात्मभिः। आश्रमे यानि तीर्थानि कृतान्यपि महर्षिभिः
पदन्यासःकृतःपूर्वं विष्णुना यज्ञपर्वते। नागैस्तत्र पञ्चतीर्थं कृतं तैस्तु महाविषैः॥४॥
पिंडप्रदानवापी च केन पूर्वं विनिर्मिता। उदङ्मुखी भूमिगता कथं गङ्गा सरस्वती॥
ब्राह्मणैर्वेदविद्वद्भिः कथं यात्रा त्रिपुष्करे। कर्तव्या यत्फलं तस्या जायते तद्वदस्व मे॥

पुलस्त्य उवाच।

प्रश्नभारो महानेष भवता परिकल्पितः। तदेकाग्रमना भूत्वा शृणु तीर्थमहाफलम्॥७॥
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्। विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते
प्रतिग्रहादुपावृत्तः संतुष्टो येन केनचित्। अहङ्कारनिवृत्तश्च स तीर्थफलमश्नुते॥ ९॥

अक्रोधनश्च राजेन्द्र सत्यशीले दृढव्रतः।
आत्मोपमश्च भूतेषु स तीर्थफलंमश्नुते॥ १०॥

ऋषीणां परमं गुह्यमिदं भरतसत्तम। पूर्वं यत्र महाराज सत्रे पैतामहे तथा॥११॥
यतीनामुग्रतपसां येषां कोटिः समागता। मुखदर्शनमाश्रित्य स्थितास्ते ज्येष्ठपुष्करे॥
सुरूपतां परां लब्ध्वा प्रीतास्ते मुनिसत्तमाः। हर्षेण महताविष्टा ब्रह्मदर्शनकांक्षिणः॥
यज्ञोपवीतैस्ते भूमिमाप्य सर्वे चतुर्दिशम्। कृत्वा तीर्थविभागं च स्थिताभक्तिपरायणाः
आसन्नश्च ततस्तेषां तदा तुष्टःपितामहः। कोटिं कृत्वा तदा तेषां मानं दृष्ट्वा मनीषिणाम्
अद्यप्रभृति युष्माकं धर्मवृद्धिर्भविष्यति। इहागत्य नरो यो वै यदंगं प्रथमं जले॥
प्लावयिष्यति रूपार्थं रूपिता तीर्थकारिता। भविष्यति न संदेहो योजनायतमंडले॥
अर्धयोजनविस्तारं दीर्घं सार्धं हि योजनम्। एतत्प्रमाणं तीर्थस्य ऋषिकोटिप्रवर्त्तितम्
गमनादेव राजेंद्र पुष्करस्य त्वरिंदम। राजसूयाश्वमेधाभ्यां फलमाप्नोति मानव॥१९॥

सरस्वती महापुण्या प्रविष्टा ज्येष्ठपुष्करे।
तत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः॥ २०॥
अभिगच्छंति राजेंद्र चैत्रशुक्लचतुर्दशीम्।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः॥ २१॥

गोमेधं च तदाप्नोति कुलं चैव समुद्धरैत् । एवं तीर्थविभागस्तु कृतस्तैस्तु महर्षिभिः ॥
पितृन्देवांश्च सन्तर्प्य विष्णुलोके महीयते। तत्र स्नात्वा भवेन्मर्त्यो विमलश्चन्द्रमा यथा
ब्रह्मलोकमवाप्नोति गतिं च परमां व्रजेत् । नृलोके देवदेवस्य तीर्थं त्रैलोक्यविश्रुतम् ॥
पुष्करं नाम विख्यातं महापातकनाशनम् । दशकोटि सहस्राणि तीर्थानां वै महीपते ॥

सान्निध्यं पुष्करे येषां त्रिसन्ध्यं कुलनन्दन ।
आदित्या वसवो रुद्रास्साध्याश्च समरुद्गणाः ॥ २६ ॥
गन्धर्वाप्सरसश्चैव नित्यं सन्निहिता विभोः ।
यत्र देवास्तपस्तप्त्वा दैत्या ब्रह्मर्षयस्तथा ॥ २७ ॥

दिव्ययोगा महाराज पुण्येन महतान्विताः । मनसाप्यभिकामस्य पुष्कराणि मनस्विनः
पूयन्ते सर्वपापानि नाकपृष्ठे स मोदते । तस्मिंस्तीर्थे महाराज नित्यमेव पितामहः ॥
उवास परमप्रीतो देवदानवसम्मतः । पुष्करेषु महाराज देवाः सर्षिपुरोगमाः ॥ ३० ॥
सिद्धिं च समनुप्राप्ता पुण्येन महतान्विताः । तत्राभिषेकं यः कुर्यात्पितृदेवार्चने रतः ॥
अश्वमेधाद्दशगुणं प्रवदंति मनीषिणः । अप्येकं भोजयेद्विप्रं पुष्करारण्यमाश्रितः ॥३२॥
अन्नेन तेन संप्रीता कोटिर्भवति पूजिता ।तेनासौ कर्मणा भीष्म प्रेत्य चेह च मोदते॥
शाकैर्मूलैः फलैर्वापि येन वा वर्तयेत्स्वयम् । तद्वै दद्याद्ब्राह्मणाय श्रद्धावाननसूयकः ॥
तेनैव प्राप्नुयात्प्राज्ञो हयमेधफलंनरः । ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा राजसत्तम ॥
पैतामहं सरःपुण्यं पुष्करं नाम नामतः । वैखानसानां सिद्धानां मुनीनां पुण्यदं हि यत्

सरस्वती पुण्यतमा यस्माद्यातामहार्णवम् ।
आदिदेवो महायोगी यत्रास्ते मधुसूदनः ॥ ३७ ॥

ख्यात आदिवराहेति नाम्ना त्रिदशपूजितः । हीनवर्णाश्च ये वर्णास्तीर्थे पैतामहे गताः

न वियोनिं व्रजंत्येते स्नात्वा तीर्थे महात्मनः ।
कार्तिक्यां च विशेषेण योऽभिगच्छेत्तु पुष्करम् ॥ ३९ ॥
फलं तत्राक्षयं तस्य भवतीत्यनुशुश्रुम ।
सायं प्रातः स्मरेद्यस्तु पुष्कराणि कृतांजलिः ॥ ४० ॥

उपस्पृष्टं भवेत्तेन सर्वतीर्थे तु कौरव। जन्मप्रभृति यत्पापं स्त्रियो वा पुरुषस्य वा॥
पुष्करे स्नानमात्रेण सर्वमेतत्प्रणश्यति। यथा सुराणां प्रवरः सर्वेषां तु पितामहः॥
तथैव पुष्करं तीर्थं तीर्थानामादि रुच्यते। तद्वद्दष्ट्वा दशवर्षाणि पुष्करे नियतः शुचिः॥
क्रतून्सर्वानवाप्नोति ब्रह्मलोकं स गच्छति। यस्तु वर्षशतं पूर्णमग्निहोत्रमुपासते॥४४॥
कार्तिकीं वा वसेदेकां पुष्करे सममेव तु। पुष्करे दुष्करो होमः पुष्करे दुष्करं तपः
पुष्करे दुष्करं दानं वासश्चैव सुदुष्करः। ब्राह्मणो वेदविद्वांस्तु गत्वा वै ज्येष्ठपुष्करम्

स्नानाद्भवेन्मोक्षभागी श्राद्धेन पितृतारकाः।
नाममात्रोऽपि यो विप्रो गत्वा संध्यामुपासते॥ ४७॥

वर्षाणि द्वादशैवेह तेन संध्या ह्युपासिता। भवेत्तु नात्र संदेहः पुरा प्रोक्तं स्वयंभुवा॥

सावित्रीकथितो दोषः कुले तस्य न जायते।
या पत्नी ददते भर्तुः संध्योपास्तिं करिष्यतः॥ ४९॥

करकेणतु ताम्रेण तोयं मुक्ता दिवं व्रजेत्। ब्रह्मलोकमनुप्राप्य तिष्ठति ब्रह्मणो दिनम्

एकाकिना गतेनापि संध्या वंद्या यथाक्रमम्।
पौष्करेणाथ तोयेन श्रृंगारे निहिते न तु॥ ५१॥
तेनापि द्वादशाब्दानि संध्योपास्ता न संशयः।
भवेत्समीपगा पत्नी कुर्वतः पितृतर्पणम्॥ ५२॥

दक्षिणां दिशमास्थाय गायत्र्या राजसत्तम। पितॄणां परमा तृप्तिः क्रियते द्वादशाब्दिकी
युगसहस्रपिण्डेन श्राद्धेनानन्त्यमश्नुते। एतदर्थं हि विद्वांसः कुर्वते दारसंग्रहम्॥५४॥

तीर्थे गत्वा प्रदास्यामःपिंडान्वै श्राद्धपूर्वकम्।
तेषां पुत्रा धनं धान्यमविच्छिन्ना च संततिः॥ ५५॥

भवेद्वै नात्र संदेह एतदाह पितामहः। तर्पयित्वा पितॄन्देवानग्निष्टोमफलं लभेत्॥५६॥
आश्रमानपि ते वच्मि श्रृणुष्वैकमना नृप। अगस्त्येन कृतश्चात्र आश्रमो देवसंमितः॥
सप्तर्षीणां पुरा चात्र आश्रमो देवसम्मतः। ब्रह्मर्षीणां तथा चात्र मनूनां परमस्तथा॥
नागानां च पुरी रम्या यज्ञपर्वतरोधसि। अगस्त्यस्य महाराज प्रभावममितात्मनः॥

कथयामि समासेन शृणु त्वं सुसमाहितः। पूर्वं कृतयुगे भीष्म दानवा युद्धदुर्मदाः॥
कालेया इति विख्याता गणाः परमदारुणाः। ते तु वृत्रं समाश्रित्य नानाप्रहरणोद्यताः
समन्तात्पर्यधावन्त महेन्द्रप्रमुखान्सुरान्। ततो वृत्रवधे यत्नमकुर्वंस्त्रिदशाः पुरा॥६२॥
पुरन्दरं पुरस्कृत्य ब्रह्माणमुपतस्थिरे। कृताञ्जलींस्तु तान्सर्वान्परमेष्ठीत्युवाच ह॥६३॥
विदितं मे सुराःसर्वं यद्वःकार्यं चिकीर्षितम्। तमुपायं प्रवक्ष्यामि यथा वृत्रं वधिष्यथ
दधीचिरिति विख्यातो महानृषिरुदारधीः। तं गत्वासहितास्सर्वे वरं च प्रतियाचत॥
स वो दास्यतिधर्मात्मा सुप्रीतेनान्तरात्मना। स वाच्यःसहितैःसर्वैर्भवद्भिर्जयकांक्षिभिः
स्वान्यस्थीनि प्रयच्छस्व त्रैलोक्यहितकांक्षया।
स शरीरं समुत्सृज्य स्वान्यस्थीनि प्रदास्यति॥ ६७॥
तस्यास्थिभिर्महाघोरं वज्रं संक्रियतां दृढम्। महच्छत्रुहनं दिव्यं तदस्त्रमशनिः स्मृतम्
तेन वज्रेण वै वृत्रं वधिष्यति शतक्रतुः। एतद्वः सर्वमाख्यातं तस्मात्सर्वं विधीयताम्
एवमुक्तास्ततो देवा अनुज्ञाप्य पितामहम्। शतक्रतुं पुरस्कृत्य दधीचेराश्रमं ययुः॥
सरस्वत्याः परेपारे नानाद्रुमलतावृतम्। षट्पदोद्गीतनिनदैरुद्घुष्टं सामगैरिव॥ ७१॥
पुंस्कोकिलरवोन्मिश्रं जीवं जीवकनादितम्। महिषैश्च वराहैश्च सृमरैश्चमरैरपि॥७२॥
तत्र तत्रानुचरितैः शार्दूलभयवर्जितैः। करेणुभिर्वारणैश्च प्रभिन्नकरटामुखैः॥ ७३॥
स्वरोद्गारैश्च क्रीडद्भिः समंतादनुनादितम्। सिंहव्याघ्रैर्महानादं नदद्भिरनुनादितम्॥
मयूरैश्चापि संलीनैर्गुहाकंदरवासिभिः। तेषु तेषु च कुञ्जेषु नादितं सुमनोरमम्॥७५॥
त्रिविष्टपसमप्रख्यं दधीच्याश्रममागमन्। तत्रापश्यन्दधीचिं तं दिवाकरसमप्रभम्॥
जाज्वल्यमानंवपुषा यथा लक्ष्म्या चतुर्भुजम्। तस्य पादौ सुरा राजन्नभिवंद्य प्रणम्यच
अयाचंत वरं सर्वे यथोक्तं परमेष्ठिना। ततो दधीचिः परमप्रीतश्च सुरोत्तमान्॥७८॥
उवाच प्रणतो भूत्वा त्विदं कार्यकरं वचः।
[दधीचिरुवाच।
इन्द्राद्यास्त्वागता देवाः किमर्थं तद्वदन्तु मे॥ ७९॥
पीड्यमानानहं मन्ये हतप्रभसुरोत्तमाः। यदर्थं पीडितात्मानस्तद्वदन्तु निराकुलम्॥८०॥

देवा ऊचुः ।

त्वदस्थिकृतशस्त्रेण देवास्सन्तु निरामयाः ॥ ८१ ॥

दधीचिरुवाच ।

करोमि यद्वो हितमद्य देवाः स्वं चापि देहं त्वहमुत्सृजामि ।

पुलस्त्य उवाच ।

तानेवमुक्त्वा द्विपदांवरिष्ठः प्राणांस्ततोऽसौ सहसोत्ससर्ज ॥८२ ॥

सुरास्तदस्थीनि सवासवास्ते यथोपयोगं जगृहुःस्म तस्य ।

प्रहृष्टरूपाश्च जयाय देवास्त्वष्टारमासाद्य तमर्थमूचुः ॥ ८३ ॥

त्वष्टा तु तेषां वचनं निशम्य प्रहृष्टरूपः प्रयतः प्रयत्नात् ।

चकार वज्रं भृशमुग्रवीर्यं कृत्वा च शस्त्रं तमुवाच हृष्टः ॥ ८४ ॥

अनेन शस्त्र प्रवरेण देव भस्मीकुरुष्वाद्य सुरारिमुग्रम् ।

ततो हतारिः सगणः सुखं त्वं प्रशाधि कृत्स्नं त्रिदिवं दिविष्ठः ।

त्वष्ट्रा तथोक्तस्तु पुरंदरश्च वज्रं प्रहृष्टः प्रयतो ह्यगृह्णात् ॥ ८५ ॥

ततःसवज्रेण युतो दैवतैरभिपूजितः । आससाद ततो वृत्रं स्थितमावृत्य रोदसी ॥

कालकेयैर्महाकायैस्समन्तादपि रक्षितम् । समुद्यतप्रहरणैः सशृंगैरिव पर्वतैः ॥ ८७ ॥

ततो युद्धं समभवद्देवानां सह दानवैः । मुहूर्तं भरतश्रेष्ठं लोकत्रासकरं महत् ॥ ८८ ॥

उद्यतैःप्रतिसृष्टानां खड्गानां वीरबाहुभिः । आसीत्सुतुमुलःशब्दः शरीरैरभिपातितः ॥

शिरोभिःप्रपतद्भिश्चाप्यंतरिक्षान्महीतलम् । तालैरिव महीपाल वृतं तैरेव दृश्यते ॥ ९० ॥

ते हेमकवचा भूत्वा कालेयाः परिघायुधाः । त्रिदशानभ्यवर्तन्त दावदग्धा इव द्रुमाः

तेषां वेगवतां वेगं सहितानां प्रधावताम् ।

न शेकुः सहिताः सोढुं भग्नास्ते प्राद्रवन्भयात् ॥ ९२ ॥

तान्दृष्ट्वा द्रवतो भीतान्सहस्राक्षः पुरन्दरः । पुत्रं च वर्द्धमानं तु कश्मलं महदाविशत् ॥

तं शक्रं कश्मलाविष्टं दृष्ट्वा विष्णुःसनातनः । स्वतेजो व्यदधाच्छक्रे बलमस्य विवर्धयन्

विष्णुनाप्यायितं शक्रं दृष्ट्वा देवगणास्तदा । सर्वंतेजस्समादध्युस्तथा ब्रह्मर्षयोऽमलाः

स समाप्यायितः शक्रो विष्णुना दैवतैः सह ।
ऋषिभिश्च महाभागैर्बलवान्समपद्यत ॥ ९६ ॥
ज्ञात्वा बलस्थं त्रिदशाधिपं तं ननाद वृत्रस्सुमहानिनादम् ।
तस्य प्रणादेन धरादिशश्च खं द्यौर्नगाश्चेति चचाल सर्वम् ॥ ९७ ॥
ततो महेंद्रः परमाभितप्तः श्रुत्वा रवं घोरतरं महान्तम् ।
भयेन मग्नस्त्वरितं मुमोच वज्रं महान्तं खलुतस्य शीर्षे ॥ ९८ ॥
स शक्रवज्राभिहतः पपात महास्वनः काञ्चनमाल्यधारी ।
यथा महाशैलवरः पुरस्तात्समन्दरो विष्णुकरात्प्रमुक्तः ॥ ९९ ॥
तस्मिन्हते दैत्यवरे भयार्तः शक्रः प्रदुद्राव सरः प्रवेष्टुम् ।
वज्रं च मेने स्वकरात्प्रमुक्तं वृत्रं भयाच्चैव हतं न पश्यति ॥ १०० ॥
सर्वे च देवा मुदिताः प्रहृष्टाः महर्षयश्चैनमथो स्तुवन्ति ।
शेषांश्च दैत्यांस्त्वरितं समेत्य जघ्नुः सुरा वृत्रवधाभितप्तान् ॥ १०१ ॥
ते वध्यमानास्त्रिदशैस्तदानीं महासुरा वायुसमानवेगाः ।
समुद्रमेवाविविशुर्भयार्ताः प्रविश्य चैवोदधिमप्रमेयम् ॥ १०२ ॥
झषाकुलं रत्नसमाकुलं च तदास्म मन्त्रं सहिताः प्रचक्रुः ।
तत्रस्म केचिन्मतिनिश्चयज्ञास्तांस्तानुपायान्परिचिन्तयन्तः ॥ १०३ ॥
भयार्दिता देवनिकायतप्तास्त्रैलोक्यनाशाय मतिंप्रचक्रुः ।
तेषां तु तत्र क्षयकालयोगाद्घोरामतिश्चिन्तयतां बभूव ॥ १०४ ॥
ये सन्ति विद्या तपसोपपन्नास्तेषां विनाशः प्रथमं च कार्यः ।
लोकाश्च सर्वे तपसा ध्रियन्ते तस्मात्त्वरध्वं तपसा क्षयाय ॥ १०५ ॥
ये सन्ति केचिद्धि वसुन्धरायां तपस्विनो धर्मविदश्च तज्ज्ञाः ।
तेषां वधश्च क्रियतां हि क्षिप्रं तेषु प्रनष्टेषु जगद्विनष्टम् ॥ १०६ ॥
एवं हि सर्वे गतबुद्धिभावा जगद्विनाशे परमप्रहृष्टाः ।
दुर्गं समाश्रित्य महोर्मिमन्तं रत्नाकरं वारुणमालयं स्म ॥ १०७ ॥

समुद्रं ते समासाद्य वारुणं त्वम्भसांनिधिम् । कालेयास्समपद्यन्त त्रैलोक्यस्य विनाशने ॥
ते रात्रौ समभिक्रुद्धा बभक्षुस्तांस्तदा मुनीन् । आश्रमेषुच ये सन्ति पुण्येष्वायतनेषु च
वसिष्ठस्याश्रमे विप्रा भक्षितास्तैर्दुरात्मभिः । अशीतिःशतमष्टौ च वनेचान्ये तपस्विनः
च्यवनस्याश्रमं गत्वा पुण्यं द्विजनिषेवितम् । फलमूलाशनानां हि मुनीनां भक्षितंशतम्
एवं रात्रौस्म कुर्वन्तो विविशुश्चार्णवं दिवा । भरद्वाजाश्रमंगत्वा नियता ब्रह्मचारिणः
वाताहाराम्बुभक्षाश्च विंशतिश्च निषूदिताः । एवं क्रमेण भिक्षार्थं मुनीनां दानवास्तदा
निशायां पर्यधावन्त शक्ता भुजबलाश्रयात् । कालेन महता तेवै जघ्नुर्मुनिगणान्बहून् ॥
नचैतानवबुध्यन्त मनुजामनुजाधिपः । निःस्वाध्यायवषट्कारं नष्टयज्ञोत्सवक्रियम् ॥
जगदासीन्निरुत्साहं कालेयभयपीड़ितम् । एवं प्रक्षीयमाणास्ते मानवा मनुजेश्वर ॥
आत्मत्राणपरा भीताःप्राद्रवन्तु दिशोदश । केचिद्गुहां प्रविविशुर्विकीर्णाश्चापरे द्विजाः
अपरे च भयोद्विग्ना भयात्प्राणान्समत्यजन् । केचित्तत्र महेष्वासाः शूराः परमदर्पिता
मार्गमाणाः परं यत्नं दानवानां प्रचक्रिरे । नचैताननुजग्मुस्ते समुद्रं समुपाश्रितान् ॥
शमं न जग्मुः परममाजग्मुः क्षयमेव च । जगत्प्रशमने जाते नष्टयज्ञोत्सवक्रिये ॥१२०॥

आजग्मुः परमोद्विग्नास्त्रिदशा मनुजेश्वर ।
समेत्य समहेन्द्रास्तु भयान्मंत्रं प्रचक्रिरे ॥ १२१ ॥

नारायणं पुरस्कृत्य वैकुण्ठमपराजितम् । ततो देवास्समेतास्ते तदोचुर्मधुसूदनम् ॥१२२
त्वं नः स्रष्टाच गोप्ता च भर्ता च जगतः प्रभोः । त्वयासृष्टं जगत्सर्वं यच्चेङ्गं यच्चनेङ्गति
त्वया भूमिः पुरा नष्टा समुद्रात्पुष्करेक्षण । वाराहं रूपमास्थाय जगदर्थे समुद्धृता ॥
आदिदैत्यो महावीर्यो हिरण्यकशिपुःपुरा । नारसिंहं वपुः कृत्वा सूदितः पुरुषोत्तम ॥
अवध्यः सर्वभूतानां बलिश्चापि महासुरः । वामनं वपुरास्थाय त्रैलोक्याद्भ्रंशितस्त्वया
असुरःसुमहेष्वासो जंभ इत्यभिविश्रुतः । यज्ञक्षोभकरः क्रूरस्त्वया सर्वनिपातितः ॥
एवमादीनि कर्माणि येषां संख्या न विद्यते । अस्माकं भयभीतानां त्वं गतिर्मधुसूदन
तस्मात्त्वां देवदेवेश लोकार्थं ज्ञापयामहे । रक्ष लोकांश्च देवांश्च शक्रं च महतो भयात
भवत्प्रसादाद्वर्तन्ते प्रजाःसर्वाश्चतुर्विधाः । स्वस्था भवन्ति मनुजा हव्यकव्यैर्दिवौकसः

लोकाह्येवं प्रवर्तन्ते अन्योन्यं च समाश्रिताः ।
त्वत्प्रभावान्निरुद्विग्नास्त्वयैव परिरक्षिताः ॥ १३१ ॥
इदं च समनुप्राप्तं लोकानां भयमुत्तमम् । जानीमो न च केनैते वध्यन्ते ब्राह्मणानिशि
ब्राह्मणेषु च क्षीणेषु पृथिवीक्षयमेष्यति । त्वत्प्रसादान्महाबाहो लोकास्सर्वे जगत्पते ॥
विनाशं नाधिगच्छेयुस्त्वया वै परिरक्षिताः ।

विष्णुरुवाच ।

विदितं मे सुरास्सर्वे प्रजायाः क्षयकारणम् ॥ १३४ ॥
भवतां चापि वक्ष्यामि शृणुध्वं विगतज्वराः । कालकेया इतिख्याता गणापरमदारुणाः
ते वृत्रं निहतं दृष्ट्वा सहस्राक्षेण धीमता ।
जीवितं परिरक्षन्तःप्रविष्टा वरुणालयम् ॥ १३६ ॥
ते प्रविश्योदधिं घोरं नानाग्राहसमाकुलम् ।
उत्सादनार्थं लोकस्य रात्रौ घ्नन्ति मुनीनिह ॥ १३७ ॥
न तु शक्याःक्षयं नेतुं समुद्रान्तर्हिता हि ते ।
समुद्रस्य क्षये बुद्धिर्भवद्भिःपरिचिन्त्यताम् ॥ १३८ ॥
एतच्छ्रुत्वा वचो देवा विष्णुना समुदाहृतम् ।
परमेष्ठिनमासाद्य अगस्त्यस्याश्रमं ययुः ॥ १३९ ॥
तत्रापश्यन्महात्मानं वारुणं दीप्ततेजसम् । उपास्यमानमृषिभिर्देवैरिव पितामहम् ॥
तेऽभिगम्य महात्मानं मैत्रावरुणिमुत्तमम् । अप्रमत्तं तपोराशिं कर्मभिःस्वैरनुष्ठितैः ॥

देवाऊचुः ।

नहुषेणाभितप्तानां लोकानां त्वं गतिः पुरा । भ्रंशितश्च सुरैश्वर्याल्लोकार्थं लोककण्टकः
क्रोधात्प्रवृद्धःसमहान्भास्करस्य नगोत्तमः । वचस्तवानतिक्रामन्विन्ध्यःशैलो न वर्धते
तमसाच्छादिते लोके मृत्युनाभ्यर्दिताःप्रजाः । त्वामेव नाथमागम्य निर्वृतिं परमांगताः
अस्माकं भयभीतानां नित्यमेव भवान्गतिः ।
ततस्त्वद्य प्रयाचामस्त्वां वरं वरदो ह्यसि ॥ १४५ ॥

भीष्म उवाच ।

किमर्थं सहसाविन्ध्यःप्रवृद्धःक्रोधमूर्छितः । एतदिच्छाम्यहं श्रोतुं विस्तरेण महामुने ॥

पुलस्त्य उवाच ।

अद्रिराजं महाशैलं मेरुं कनकपर्वतम् । उदयेऽस्तमये भानुः प्रदक्षिणमवर्तत ॥१४७॥
ते दृष्ट्वा तु तदाविन्ध्यःशैलसूर्यमथाब्रवीत् । यथा हि मेरुर्भवता नित्यशः परिगम्यते ॥
प्रदक्षिणं च क्रियते मामेवं कुरु भास्कर । एवमुक्तस्ततःसूर्यःशैलेन्द्रं प्रत्यभाषत ॥१४९
नाहमात्मेच्छया शैलं करोम्येनं प्रदक्षिणम् । एषमार्गःप्रदिष्टो मे येनेदं निर्मितं जगत् ॥
एवमुक्तस्तदाक्रोधात्प्रवृद्धःसहसाचलः । सूर्याचन्द्रमसोर्मार्गंरोद्धुमिच्छन्परंतप ॥ १५१

ततो हि देवाः सहितास्तु सर्वे सेंद्राःसमागम्य महाद्रिराजम् ।
निवारयामासुरथोत्पतन्तं न वै स तेषां वचनं चकार ॥ १५२ ॥
ततो हि जग्मुर्मुनिमाश्रमस्थं तपस्विनां धर्मवतां वरिष्ठम् ।
अगस्त्यमत्यद्भुतदीप्तवीर्यं तं चार्यमूचुः सहिताः सुरास्ते ॥ १५३ ॥

देवा ऊचुः ।

सूर्याचन्द्रमसोर्मार्गं नक्षत्राणां गतिं तथा । शैलराडावृणोत्येष विन्ध्यःक्रोधवशानुगः ॥
तं निवारयितुंशक्तोनान्यःकश्चिन्मुनीश्वर । तच्छ्रुत्वा वचनंविप्रःसुराणां शैलमभ्यगात्

सोऽभिगम्याब्रवीद्विन्ध्यं सादरं समुपस्थितम् ।
मार्गमिच्छाम्यहं दत्तं भवता पर्वतोत्तम ॥ १५६ ॥
दक्षिणामभिगन्तास्मि दिशं कार्येण केनचित् ।
यावदागमनं मे स्यात्तावत्त्वं प्रतिपालय ॥ १५७ ॥
निवृत्ते मयि शैलेन्द्र ततो वर्धस्व कामतः ।

पुलस्त्य उवाच ।

अद्यापि दक्षिणाद्देशाद्वारुणिर्न निवर्तते ॥ १५८ ॥

एतत्ते सर्वमाख्यातं यथाविन्ध्यो न वर्धते । अगस्त्यस्य प्रभावेणयन्मां त्वं परिपृच्छसि
कालेयास्तु यथाराजन्सुरैःसर्वेनिषूदिताः । अगस्त्यद्वारमासाद्य तन्मे निगदतःशृणु ॥

त्रिदशानांवचःश्रुत्वा मैत्रावरुणिरब्रवीत् । किमर्थं समुपायाता वरंमत्तःकिमिच्छथ ॥

एवंमुक्तास्तदा तेन देवास्तं मुनिमब्रुवन् ।

इच्छाम एकं वरमद्भुतं वयं पिवार्णवं देवमुने महात्मन् ॥ १६२॥

एवं त्वयेच्छेमकृते महर्षे महार्णवं पीयमानं समग्रम् ।

ततो विहन्याम च सानुबन्धं कालेयसंज्ञं सुरविद्विषां वलम् ॥ १६३ ॥

त्रिदशानांवचःश्रुत्वा तथेति मुनिरब्रवीत् । करिष्ये भवतां कामंलोकानांसुखकारकम् ॥

एवमुक्त्वा ततोऽगच्छत्समुद्रं निधिमम्भसाम् । तपःसिद्धैश्च मुनिभिःसार्धंदेवैश्च सुव्रत

मनुष्योरगगंधर्वा यक्षाःकिंपुरुषास्तथा । अनुजग्मुर्महात्मानं द्रष्टुकामास्तदद्भुतम् ॥१६६

ततोऽभ्यपश्यत्सहितःसमुद्रं भीमनिःस्वनम् । नृत्यन्तमिवचोर्मीभिर्वल्गन्तमिव वायुना

हसंतमिव फेनौघैःस्खलन्तं कन्दरेषु च । नानाग्राहसमाकीर्णं नानाद्विजगणैर्युतम् ॥

अगस्त्यसहितादेवाःसगंधर्वमहोरगाः । ऋषयश्च महाभागाःसमासेदुर्महोदधिम् ॥१६९

समुद्रं स समासाद्य वारुणिर्भगवानृषिः । उवाच सहितान्देवानृषींस्तांस्तु समागतान्

पातुकामः समुद्रं च अगस्त्यऋषिसत्तमः । एष लोकहितार्थाय पिबामि वरुणालयम् ॥

भवतां यदनुष्ठेयंतच्छीघ्रं संविधीयताम् । एतावदुक्त्वा वचनं मैत्रावरुणिरग्रतः ॥१७२॥

समुद्रमपिवत्क्रुद्धःसर्वलोकस्य पश्यतः । पीयमानं समुद्रं तु दृष्ट्वा देवाःसवासवाः ॥

विस्मयं परमंजग्मुस्स्तुतिभिश्चाप्यपूजयन् ।

त्वं नस्त्राता विधाता च लोकानां लोकभावनः ।

त्वत्प्रसादात्समुत्सेधमुपगच्छेत्समं जगत् ॥ १७४ ॥

संपूज्यमानस्त्रिदशैर्महात्मा गन्धर्वमुख्येषु नदत्सु चैव ।

दिव्यैश्च पुष्पैरवकीर्यमाणो महार्णवं निःसलिलं चकार ॥ १७५ ॥

दृष्ट्वा कृतं निःसलिलं महार्णवं सुराःसमस्ताःपरमप्रहृष्टाः ।

प्रगृह्य दिव्यानि वरायुधानि तान्दानवाञ्जघ्नुरदीनसत्त्वाः ॥ १७६ ॥

ते वध्यमानास्त्रिदशैर्महात्मभिर्महाबलैर्वेगयुतैर्नदद्भिः ।

न सेहिरे वेगवतां महात्मनां वेगं तदाधारयितुं दिवौकसाम् ॥ १७७ ॥

ते वध्यमानास्त्रिदशैर्दानवा भीमनिःस्वनाः । चक्रुःसुतुमुलंयुद्धं मुहूर्त्तमिव भारत ॥
ते पूर्वं तपसादग्धा मुनिभिर्भावितात्मभिः। यतमानाःपरं शक्त्या त्रिदशैर्विनिषूदिताः ॥
ते हेमनिष्काभरणाःकुण्डलाङ्गदधारिणः । निहता बह्वशोभंत पुष्पिताइव किंशुकाः ॥
हतशिष्टास्ततःकेचित्कालेयदनुजोत्तमाः । विदार्य वसुधां देवीं पातालतलमाश्रिता ॥
निहतान्दानवान्दृष्ट्वा त्रिदशा मुनिपुङ्गवम् । तुष्टुवुर्विविधैर्वाक्यैरिदंचैवाब्रुवन्वचः ॥१८२
त्वत्प्रसादान्महाभाग लोकैःप्राप्तंमहत्सुखम् । त्वत्तेजसा च निहताःकालेयाभीमविक्रमाः
पूरयस्व महाविप्र समुद्रं लोकभावनम् । यत्त्वया सलिलंपीतंतदस्मिन्पुनरुत्सृज ॥८४॥
एवमुक्त प्रत्युवाच भगवान्मुनिपुङ्गवः । जीर्णंतद्धि मया तोयमुपायोऽन्यःप्रचिन्त्यताम्
पूरणार्थं समुद्रस्य भवद्भिर्यत्नमास्थितैः । एवं श्रुत्वा तु वचनं महर्षेर्भावितात्मनः ॥

विस्मिताश्च विषण्णाश्च बभूवुःसहितास्सुराः ।
परस्परमनुज्ञाप्य प्रणम्य मुनिपुङ्गवम् ॥ १८७ ॥
प्रजाःसर्वामहाराज विप्राजग्मुर्यथागतम् ।
त्रिदशा विष्णुनासार्द्धमनुजग्मुःपितामहम् ॥ १८८ ॥
पूरणार्थं समुद्रस्य मन्त्रयन्तःपरस्परम् ।
ऊचुःप्राञ्जलयस्सर्वे सागरस्य हि पूरणम् ॥ १८९ ॥

तानुवाच समेतांस्तु ब्रह्मा लोकपितामहः ।गच्छध्वं विबुधास्सर्वेयथाकामं यथेप्सितम्
महताकालयोगेन प्रकृतिं यास्यतेऽर्णवः ॥ ज्ञातींस्तु कारणं कृत्वा महाराजोभगीरथः ॥
गंगौघेन समुद्रं च पुनःसंपूरयिष्यति । एवं ते ब्रह्मणा देवाःप्रेषिता ऋषिसत्तमाः ॥
उवाच भगवांस्तुष्टस्त्वगस्त्यमृषिसत्तमम् ॥ देवकार्यं तु भवता दानवानां विनाशनम्
यतस्संतारिता देवास्तेनतुष्टोऽस्मि वै मुने । अभिप्रेतो वरो यस्ते याचयस्व ददामितम्
एवमुक्तस्तदागस्त्यःप्रणिपातपुरःसरम् । इहस्थेन मया देव देवकार्यमिदं कृतम् ॥१९५
सर्वाश्रमाणां प्रवरो भवत्वेष ममाश्रमः । त्वया चोक्तस्तु भगवन्भविता नात्र संशयः॥

ब्रह्मोवाच ।

यात्रां तु पुष्करे कृत्वा इहागत्य नरास्तु ये ।

इह कुण्डेषु ये स्नानं तर्पणं पितृदेवयोः ॥ १९७ ॥
अर्चनं चैव देवेषु सर्वमक्षयकारकम्। अर्घ्यं चोच्चावचं गृह्य शष्कुलापूपकांस्ततः ॥
दास्यन्ति द्विजमुख्येभ्यस्तेषांवासस्त्रिविष्टपे। श्राद्धेन पितरस्तृप्ता यावदाभूतसंप्लवम् ॥
कन्दमूलफलैर्वापि तर्पयिष्यति यो मुनिम्।
सप्तर्षिस्थानमासाद्य मोदते शाश्वतीःसमाः ॥ २०० ॥
यज्ञपर्वतमारूढो दृष्ट्वा गंगाविनिर्गमम्। उदङ्मुखी देवनदी निर्गता पुष्करं प्रति ॥२०१
अत्राभिषेकं यःकुर्यात्पितृदेवार्चने रतः। अश्वमेधफलं तस्य भवत्येव न संशयः ॥२०२
यस्त्वेकं भोजयेद्विप्रं कोटिर्भवति भोजिता। अक्षयं त्वन्नपानं च अत्र दत्तं मुनीश्वर ॥
योऽयमिच्छति कामं तु सर्वं तस्य भविष्यति।
न वियोनिं व्रजत्यत्र स्नातमात्रो नरो भुवि ॥ २०४ ॥
स्थानानां परमं स्थानं तीर्थानां तीर्थमुत्तमम्।
मया दत्तं मुनिश्रेष्ठ भविष्यति न संशयः ॥ २०५ ॥
जन्मप्रभृति यत्पापं स्त्रिया वा पुरुषस्य वा। अत्रैव स्नातमात्रस्य सर्वमेतत्प्रणश्यति
एवमुक्त्वा तु भगवान्ब्रह्मालोकपितामहः। जगामामन्त्र्य स मुनिमगस्त्यं मुनिसत्तमम्
अगस्त्योऽपि स्थितस्तत्र आश्रमे स्वे परंतप।
अगस्त्यस्याश्रमोत्पत्तिरेषा ते परिकीर्तिता ॥ २०८ ॥
सप्तर्षीणामाश्रमांश्च कीर्तयिष्ये कुरूद्वह। अत्रिश्चैव वसिष्ठोऽथ पुलस्त्यःपुलहःक्रतुः ॥
अंगिरा गौतमश्चैव सुमतिःसुमुखस्तथा। विश्वामित्रःस्थूलशिराःसंवर्तश्चप्रतर्दनः ॥
रैभ्योवृहस्पतिश्चैव च्यवनःकश्यपो भृगुः। दुर्वासा जमदग्निश्च मार्कण्डेयोऽथ गालवः
उशनाथ भरद्वाजो यवक्रीतस्तथामुनिः।
स्थूलाक्षःसकलाक्षश्च कण्वो मेधातिथिःक्रतुः ॥ २१२ ॥
नारदःपर्वतश्चैव स्वगन्धी च्यवनो द्विजः। तृणाम्बुःशबलोधौम्यःशतानन्दोऽकृतव्रणः
जमदग्निस्तथा रामो ह्यष्टकश्चैवमादयः। कृष्णद्वैपायनश्चैव पुत्रशिष्यैःसमन्वितः ॥
एते तु पुष्करं प्राप्य सप्तर्षीणामथाश्रमे। वेष्टिता नियमैश्चापि दयायुक्तास्तपस्विनः ॥

आनृशंस्यं जयो धैर्यं तपःसत्यं क्षमार्जवम् ।
दया दानं जपश्चैव सर्वेषां तत्प्रतिष्ठितम् ॥ २१६ ॥
इहयत्क्रियतेकर्म तत्परत्रोपभुज्यते । ज्ञात्वा तदित्थं मुनयःपरमार्थपरायणाः ॥ २१७ ॥
न तत्र नास्तिका यान्ति न स्तेना नाजितेन्द्रियाः ।
न नृशंसा न पिशुना न कृतघ्ना न मानिनः ॥ २१८ ॥
सत्यतेजस्विनःशूरा दयावंतःक्षमापराः । यज्वानो यज्ञशीलाश्च निरीहा निरुपद्रवाः ॥
निर्ममा निरहङ्कारास्तत्र गच्छन्ति पुष्करे ।
न रोगो न जरामृत्युर्भविताऽत्र महात्मनाम् ॥ २२० ॥
न तत्र मूढा विशन्ति पुरुषा विषयात्मकाः । कामलोभमदद्रोहक्रोधमोहैरुपद्रुताः ॥
तुल्यमानापमानाश्च निर्द्वन्द्वास्संयतेन्द्रियाः ।
ध्यानयोगपराश्चैव ते तु गच्छन्ति पुष्करम् ॥ २२२ ॥
आश्रमेषु यथोक्तेषु यथोक्तं वै द्विजातयः । ये वर्तन्ते समन्त्रास्तु तेषां लोकामहो दयाः
ये न हिंसन्ति भूतानि कर्मणा मनसा गिरा । अनृशंसतराःसन्तःसर्वदा च प्रियंवदाः ॥
अग्निहोत्ररतानित्यं नित्यं चातिथिपूजकाः। नित्यं स्वाध्यायवन्तश्च नित्यं स्नानपरायणाः
मातृवत्स्वसृवच्चैव तथा दुहितृवच्च ह । परदारान्प्रपश्यन्ति सततं विगतस्पृहाः ॥२२६॥
येऽधिक्षिप्ता न कुप्यन्ति न हिंसन्ति च हिंसिताः ।
समदुःखसुखाःसन्तो महात्मानो जितेन्द्रियाः ॥ २२७ ॥
ते हि सर्वे प्रपश्यन्ति पुरा चेरुर्महीमिमाम् ।
समाधिना चिन्तयन्तो ब्रह्मलोकं सनातनम् ॥ २२८ ॥
अथाभवदनावृष्टिःकदाचिन्महती तदा । कृच्छ्रं प्रायोह्यभूत्तत्र सर्वलोकःक्षुधार्दितः ॥
ततो निरन्नेलोकेऽस्मिंश्चात्मानं ते परीप्सवः । मृतं कुमारमादाय कृच्छ्रप्रायास्तदापचन्
अथ पर्यचरत्तत्र क्लिश्यमानान्हि तानृषीन् । दृष्ट्वा राजा विषादार्त्तःप्रोवाचेदं वचस्तदा ॥

राजोवाच ।

प्रतिग्रहो ब्राह्मणानां दृष्ट्वा वृत्तिरनिन्दिता । तस्मात्प्रतिग्रहान्मत्तो गृह्णीध्वंमुनिसत्तमाः

वरान्ग्रामान्व्रीहियवान्रसान्रत्नानि काञ्चनम् ।
गाश्च धेनूश्च तत्सर्वं मा मांसं पचत द्विजाः ॥ २३३ ॥

ऋषय ऊचुः ।

राजन्प्रतिग्रहो घोरो मध्वास्वादो विषोपमः ।
तज्जानतां नःकस्मात्त्वं कुरुषे सम्प्रलोभनम् ॥ २३४ ॥

दशसूनासमश्चक्री दशचक्रिसमो ध्वजी । दशध्वजिसमा वेश्या दशवेश्यासमो नृपः ॥
दशसूना सहस्राणि यो वाहयति शौण्डिकः । तेन तुल्यस्ततोराजा घोरस्तस्य प्रतिग्रहः
यो राज्ञःप्रतिगृह्णाति ब्राह्मणो लोभमोहितः । तामिस्रादिषु घोरेषु नरकेषु सपच्यते ॥

गच्छ कुशलं तेऽस्तु सहदानेन पार्थिव ।
अन्येषां दीयतामेतदित्युक्त्वा ते वनं ययुः ॥ २३८ ॥

अथराज्ञःसमादेशात्तत्र गत्वाथ मन्त्रिणः । उदुम्बराणि व्यकिरन्हेमगर्भाणि भूतले ॥

ततो ह्यन्नं विचिन्वन्तो गृह्णंश्चोदुम्बराण्यपि ।
गुरूणि हि विदित्वा तु न ग्राह्याण्यत्रिरब्रवीत् ॥ २४० ॥

अत्रिरुवाच ।

नास्महे मूढविज्ञाना नास्महे मन्दबुद्धयः । हैमानीमानि जानीमःप्रतिबुद्धाःस्मज्ञानिनः ॥
इहैवेदं वसुप्रीत्यै प्रेत्य वेकुण्ठितोदयम् । तस्मान्न ग्राह्यमेवैतत्सुखमानन्त्यमिच्छता ॥
शतेन गुणितं निष्कं सहस्रेण समन्वितम् । यश्चान्यतःप्रतोच्छेत्स पापिष्ठां लभतेगतिम्
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवःस्त्रियः । नूनं नैकस्य पर्याप्तमिति मत्वा शमंव्रजेत्

वसिष्ठ उवाच ।

तपसा संचयो यस्य द्रव्याणां यस्य संचयः ।
तपःसंचय एवेह विशिष्टो धनसंचयात् ॥ २४५ ॥

त्यजत संचयान्सर्वान्यान्ति नाशमुपद्रवाः । न हि संचयवान्कश्चिद्दृश्यते निरुपद्रवः ॥
यथायथा न गृह्णातिब्राह्मणोऽसत्प्रतिग्रहम् । तथातस्य हि संतोषाद् ब्राह्मं तेजोविवर्द्धते

अकिञ्चनत्वं राज्यं च तुलया समतोलयत् ।

अकिञ्चनत्वमधिकं राज्यादपि हितात्मनः ॥ २४८ ॥

कश्यप उवाच ।

अनर्थो ब्राह्मणस्यैष यस्त्वर्थ निचयो महान् ॥ २४६ ॥

अर्थैश्वर्यविमूढो हि श्रेयसो भ्रश्यते द्विजः । अर्थसंपद्विमोहाय विमोहो नरकाय च ॥
तस्मादर्थमनर्थाख्यं श्रेयोऽर्थीदूरतस्त्यजेत् । यस्य धर्मार्थमर्थेहा तस्यानीहा गरीयसी ॥
प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरम् । योऽर्थेन साध्यते धर्मःक्षयिष्णुःस प्रकीर्तितः
यः परार्थेपरित्यागःसोऽक्षयो मुक्तिलक्षणः ॥

भरद्वाज उवाच ।

जीर्यंति जीर्यतःकेशा दंता जीर्यन्ति जीर्यतः ॥ २५३ ॥

धनाशा जीविताशा च जीर्यतोऽपि न जीर्यति । चक्षुःश्रोत्रे च जीर्यंते तृष्णैका निरुपद्रवा
सूच्यासूत्रं यथावस्त्रे समानयति सूचकः । तद्वत्संसारसूत्रं हि तृष्णासूच्योपनीयते ॥
यथा शृंगं रुरोःकाये वर्द्धमाने च वर्द्धते । अनन्तपारा दुष्पूरा तृष्णादुःखशतावहा ॥
अधर्मबहुला चैव तस्मात्तां परिवर्जयेत् ॥

गौतम उवाच ।

संतुष्टः को न शक्नोति फलैश्चाप्यतिवर्तितुम् ॥ २५७ ॥

लुब्ध इन्द्रियलौल्येन संकटान्यवगाहते । सर्वत्र संपदस्तस्य संतुष्टं यस्य मानसम् ॥
उपानद् गूढपादस्य तस्य चर्मावृतेव भूः । संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम् ॥
कुतस्तद्धनलुब्धानामितश्चेतश्चधावताम् । असंतोषःपरंदुखं सन्तोषःपरमंसुखम् ॥२६०
सुखार्थी पुरुषस्तस्मात्संतुष्टःसंततं भवेत् ॥

विश्वामित्र उवाच ।

कामं कामयमानस्य यदि कामःसमृद्धयति ॥ २६१ ॥

अथैनमपरःकामो भूयो विध्यति बाणवत् । न जातुकामःकामानामुपभोगेन शाम्यति ॥
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते । कामानभिलषन्मोहान्न नरःसुखमेधते ॥६३॥
श्येनालयतरुच्छायां व्रजन्निव कपिञ्जलः । चतुस्सागरपर्यन्तां यो भुंक्ते पृथिवीमिमाम् ॥

तुल्याश्मकाञ्चनो यश्च स कृतार्थो न पार्थिवः ॥

जमदग्निरुवाच ।

प्रतिग्रहसमर्थोऽपि नादत्ते यःप्रतिग्रहम् ॥ २६५ ॥

ये लोका दानशीलानां स तानाप्नोति शाश्वतान् ।

योऽर्थानिच्छेन्नृपाद्विप्रःशोचितव्यो महर्षिभिः ॥ २६६ ॥

न स पश्यति मूढात्मा नरके यातनाभयम् । प्रतिग्रहसमर्थोऽपि न प्रसज्येत्प्रतिग्रहे ॥

प्रतिग्रहेण विप्राणां ब्राह्मं तेजःप्रशाम्यति । प्रतिग्रहसमर्थानां निवृत्तानां प्रतिग्रहात् ॥

य एवं ददतां लोकास्त एवाप्रतिगृह्णताम् ॥

अरुन्धत्युवाच ।

बिसतंतुर्यथानित्यमम्भस्थस्सततं विशेत् ॥ २६९ ॥

तृष्णा चैवमनाद्यंतां तथा देहगतासदा । या दुस्त्यजा दुर्मतिभिर्या न जीर्यतिजीर्यतः ॥

योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतःसुखम् ॥

चाण्डाल उवाच ।

उग्राद्यतो भयाद्यस्माद् बिभ्यतीमे महेश्वराः ॥ २७१ ॥

बलीयसां दुर्बलवत्तस्माच्चैव बिभेम्यहम् ॥

पशुसख उवाच ।

यदा चरन्ति विद्वांसःसदा धर्मपरायणाः ॥ २७२ ॥

तदेव विदुषा कार्यमात्मनो हितमिच्छता ।

इत्युक्त्वा हेमगर्भाणि त्यक्त्वा तानि फलानि वै ॥ २७३ ॥

ऋषयोजग्मुरन्यत्र सर्व एव दृढव्रताः । ततस्ते विचरन्तो वै मध्यमं पुष्करं गताः ॥

ददृशुःसहसा प्राप्तं परिव्राजंशुनःसखम् । तेनेह सहितास्तत्र गत्वा किञ्चिद्वनान्तरम् ॥

सरःपरमपश्यन्त वृतं पद्मैर्जलाशयम् । निविष्टाःसरसस्तीरे चिन्तयन्तो गतिंशुभाम् ॥

शुनःसखो मुनीन्सर्वानुवाच क्षुधितांस्तदा । सर्वे वदन्तु सहिताःकीदृशी क्षुत्प्रवेदना ॥

तमूचुः सहितास्ते तु परिव्राजंशुनः सखम् ॥

ऋषय ऊचुः ।

शक्तिखड्गगदाभिश्च चक्रतोमरसायकैः ॥ ७८ ॥

बाधितेवेदना या तु क्षुधयासापि निर्जिता । श्वासकुष्ठक्षयाष्ठीली ज्वरापस्मारशूलकैः
व्याधिभिर्जनितासापि क्षुधायानाधिकाभवेत् । हिरण्याङ्गदकेयूरमुकुटोज्ज्वलकुण्डलाः
क्षुधायां न विराजन्ते तत्रये संस्थिता नराः । यथा भूमिगतं तोयं रविरश्मिर्विकर्षति
तद्वच्छरीरजानाड्यःशोष्यन्ते जठराग्निना । न शृणोति न चाघ्राति चक्षुषा नैव पश्यति
दह्यते क्षीयते मूढः शुष्यते क्षुधयार्दितः । न पूर्वां दक्षिणां चापि पश्चिमां नोत्तरामपि
नचाधो नैव चोदूर्ध्वं च क्षुधाविष्टो हि विन्दति । मूकत्वं बधिरत्वं च जडत्वमथपङ्गुता
भैरवत्वममर्यादं क्षुधायां संप्रवर्द्धते । जनकं जननीं पुत्रान्भार्यां दुहितरं तथा ॥ २८५॥
भ्रातरं स्वजनं वापि त्यजति क्षुधयार्दितः । न पितॄन्पूजयेत्सम्यग्देवं चापि गुरुं तथा ॥
ऋषीनुपगतांश्चापि क्षुधाविष्टो न विन्दति । एवमन्नविहीनस्य भवन्त्येतानि देहिनाम्
अन्नात्परमतो लोके न भूतं न भविष्यति । अन्नमूलं जगत्सर्वमन्ने चैव प्रतिष्ठितम् ॥
पितरो देवदैत्याश्च यक्षराक्षसकिन्नराः । मनुष्याश्च पिशाचाश्च सर्वे चान्नमयाःस्मृताः

कुक्कुटा वायसाःश्वान आखुर्बिलेशयास्तथा ।
मत्स्याः कीटाः पिपीलाश्च सर्वे चान्नाशयाःस्मृता ॥ २९० ॥
तस्मात्सर्वप्रयत्नेन अन्नं दद जुषस्व च ।
अन्नदस्तृप्तिमाप्नोति शाश्वतीं स्थितिमक्षयाम् ॥ २९१ ॥

तपः सत्यं जपो होमोध्यानं योगःपरागतिः । स्वर्गश्चैव सुखप्राप्तिः सर्वमन्नात्प्रवर्तते

चान्द्रो वारुणलोकश्च याम्यः कौवेरकस्तथा ।
गोलोको ब्रह्मलोको वा सर्वे चान्ने प्रतिष्ठिताः ॥ २९३ ॥

चन्दनागरुधूपानि शिशिरेष्विन्धनानि च । अन्नदानस्य वै राजन्कलांनार्हन्तिषोड़शीम्
कूपारामवृषोत्सर्गवाप्यश्चायतनानि च । अन्नदानस्य चैतानि कलां नार्हन्ति षोड़शीम्
पानीयं भूमिगावश्च अन्नं च तुलया धृतम् । देवैरपि पुरा तात तेषामन्नं विशिष्यते ॥
अन्नं प्राणो बलं तेजो ह्यन्नं चैव पराक्रमः । अन्नात्संभवते तेजो ह्यन्नेनैव विवर्धते ॥

पौण्डरीकोऽश्वमेधश्च उक्थ षोड़शिकःक्रतुः। अग्निष्टोमस्त्रिरात्रश्चराजसूयोमहाधनः
सौत्रामणिर्वाजपेयो मानुषोऽथपशुस्तथा। अन्नमूलात्प्रवर्तन्ते सर्वे यज्ञाःसविस्तराः॥
सपर्वतनदीचापि पृथिवी सर्वकानना। विधिना तेन सा दत्ता योऽन्नं ददाति सर्वदा
क्षुधिते नित्यमन्नं वै ददच्छ्रद्धासमन्वितः। ब्रह्महत्यादिकं पापं अन्नदश्चापकर्षति॥
किमज्ञानं तु ते सौम्ययेनास्मान्परिपृच्छसि। ब्राह्मणेभ्योमहाभागक्षुधितेभ्योविशेषतः

सर्वदानानि दत्तानि सर्वे यज्ञाः सदक्षिणाः।
देवताः पूजिताः सर्वायोऽन्नं ददाति नित्यशः॥ ३०३॥

स स्नातः सर्वतीर्थेषु स सर्वव्रतपारगः। तदेवं संप्रयच्छेत अन्नं श्रद्धासमन्वितः॥
ब्रह्मभूतस्ततः सोऽथ ब्रह्मणा सह मोदते। सुसंस्कृतं च योऽप्यन्नं दद्यादहरहर्द्विजे॥
यःपठेदन्नदानं तु श्राद्धे चैव विशेषतः। एकाग्रमानसो भूत्वा अमावस्येन्दुसंक्षये॥
भूतोपघातसंपूर्णे श्राद्धे श्रावयते सदा। पितरस्तस्य तुष्यन्ति यावज्जीवं न संशयः॥

देवद्विजसमीपस्थोऽन्नस्य दाता विमुच्यते।
प्रबुद्धो वा प्रमत्तो वा प्रसंगादागतोऽपि वा॥ ३०८॥

भक्त्याविरहितो वापि शृण्वन्पापाद्विमुच्यते। दानेनसंयुता विप्राः सुखिनोधर्मभागिनः
यमो दमो वै नियमः प्रोक्तस्तत्त्वार्थदर्शिभिः। ब्राह्मणानां विशेषेण दमो धर्मःसनातनः
दमस्तेजो वर्द्धयति पवित्रो दम उत्तमः। विपाप्मा चैव तेजस्वी पुरुषो दमतो भवेत्॥
ये केचिन्नियमालोके ये च धर्माश्शुभान्वयाः। सर्वयज्ञफलं चापि दमस्तेभ्योविशिष्यते

तपो यज्ञस्तथा दानं दमादेव प्रवर्तते।
किमरण्ये त्वदान्तस्य दान्तस्यापि किमाश्रमे॥ ३१३॥

यत्र यत्र वसेद्दान्तस्तदरण्यं महाश्रमः। शीलवृत्तसमेतस्य निगृहीतेन्द्रियस्य च।

आर्जवे वर्तमानस्य आश्रमैः किं प्रयोजनम्॥ ३१४
वनेऽपि दोषाः प्रभवन्ति रागिणां गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः।
अकुत्सिते कर्मणि यः प्रवर्तते निवृत्तरागस्य गृहं तपोवनम्॥ ३१५॥
सुकर्मधर्मार्जितजीवितानां सदा च सन्तुष्य गृहे रतानाम्।

जितेन्द्रियाणामतिथिप्रियाणां गृहेऽपि धर्मो नियमस्थितानाम् ॥ ३१६ ॥
न शब्दशास्त्रे निरतस्य मोक्षो न चैव रम्यावसथप्रियस्य ।
न भोजनाच्छादनतत्परस्य न लोकचित्तग्रहणे रतस्य ॥ ३१७ ॥
एकांतशीलस्य दृढव्रतस्य सर्वेन्द्रियप्रीतिनिवर्तकस्य ।
अध्यात्मयोगे गतमानसस्य मोक्षो ध्रुवं नित्यमहिंसकस्य ॥ ३१८ ॥

सुखं च दान्तः स्वपिति सुखेन प्रतिबुध्यते । समः सर्वेषु भूतेषु मनो यस्य प्रबुध्यते ॥
न रथेन सुखं याति न हयेन न दन्तिना । यथात्मना विनीतेन सुखं याति महापथे ॥
न तु कुर्याद्धरिः स्पृष्टः सर्पोवाप्यतिरोषितः । अरिर्वानित्यसंक्रुद्धो यथात्मा दमवर्जितः
न यमं यममित्याहुरात्मा वै यमउच्यते । आत्मा वै यमितो येन स यमस्तु विशिष्यते

यमो यम इति प्रोक्तो वृथा तूद्विजते जनः ।
आत्मा वै यमितो येन यमस्तस्य करोति किम् ॥ ३२३ ॥

क्रव्यादेभ्यश्चभूतेभ्योऽदान्तेभ्यश्च सदाभयम् । तेषांविप्रतिषेधार्थं दण्डः सृष्टःस्वयंभुवा
दण्डो रक्षति भूतानि दण्डःपालयते प्रजाः । निवारयति पापिष्ठान्दण्डो दुर्जय एव वा
श्यामोयुवा लोहिताक्षःसर्वभूतभयावहः । दण्डःशास्ता मनुष्याणांयस्मिन्धर्म प्रतिष्ठितः
अथाश्रमेषु सर्वेषु दम एवोत्तमव्रतम् । तानि लिंगानि वक्ष्यामि यैर्दान्त इति कीर्त्यते

अकार्पण्यमपारुष्यं संतोषः सुविधानता ।
अनसूया गुरोः पूजा दया भूतेष्वपैशुनम् ॥ ३२८ ॥
षड्भिरेव दमः प्रोक्त ऋषिभिः शांतबुद्धिभिः ।
दयाधीनौ धर्ममोक्षौ तथा स्वर्गश्च पार्थिव ॥ ३२९ ॥

अपमाने न कुप्येत संमाने न प्रहृष्यति । समदुःखसुखोधीरः स शांत इति कीर्त्यते ॥
शेते सुखं हि शान्तस्तु सुखं हि प्रतिबुध्यते । श्रेयस्तरमतस्तिष्ठेदवमन्ता विनश्यति ॥
अपमानितस्तु न ध्यायेत्तस्य पापं कदाचन । स्वधर्मपि चावेक्ष्य परधर्मं न दूषयेत् ॥
आत्मानमपि जानीयात्परं दोषैस्तुनाक्षिपेत् । मन्त्रैर्हीनं क्रियाभिर्वा जन्मनाप्यथवापुनः
दमश्छादयते सर्वं हीनमंगं पटो यथा । अधीयते निरर्थं ते नाभिजानन्ति ये दमम् ॥

श्रुतस्य हि दमो मूलं दमो धर्मः सनातनः। यो ह्यात्मनस्तुलयते सुवर्णं तुलया दमम्
स तेन धृतिमान्ख्यातो न तु द्रव्येण मोहितः। व्रतानामपि सर्वेषां दम एव परायणम्
यद्यधीते षडङ्गानि वेदतत्त्वार्थविद्द्विजः। दमेन तु विहीनश्च पूज्यत्वं नेह गच्छति॥

दमेन हीनं न पुनंति वेदा यद्यप्यधीताः सह षड्भिरंगैः।

साङ्ख्यं च योगश्च कुलं च जन्म तीर्थाभिषेकश्च निरर्थकानि॥ ३३८॥

अमृतस्येव तृप्येत अपमानस्य योगवित्। विषवच्च जुगुप्सेत संमानस्य सदा द्विजः॥
अपमानात्तपो वृद्धिः संमानाच्च तपःक्षयः। अर्चितःपूजितो विप्रो दुग्धा गौरिव गच्छति
पुनराप्यायते धेनुः सतृणैः सलिलैर्यथा। एवं जपैश्च होमैश्च पुनराप्यायते द्विजः॥
आक्रोशकसमो लोके सुहृदन्यो न विद्यते। यस्तु दुष्कृतमादाय सुकृतं स्वं प्रयच्छति
आक्रोशमानानाक्रोशेन्मन्युं स्वं विनिवर्तयेत्। सन्नियम्य तदात्मानममृतेनाभिषिञ्चति
कपालं वृक्षमूलानि कुचैलमसहायता। अनपेक्षा ब्रह्मचर्यं नयन्ति परमांगतिम्॥३४४॥
कामक्रोधौ विनिर्जित्य किमरण्येकरिष्यति। अभ्यासेन तु वै शास्त्रंकुलंशीले न धार्यते
गुणैर्मन्त्रा विधार्यन्ते क्रोधससत्त्वेन धार्यते। यस्तुक्रोधं समुत्पन्नं संधारयतिचात्मनः
अक्रोधेन जयेद्धीरः कस्तेन सदृशो भुवि। यस्तु क्रोधं समुत्पन्नं सन्तं संयम्य तिष्ठति
तं सत्सारतमस्मन्ये नास्मिन्सीदति यः पुमान्। एष पैतामहो गुह्योब्रह्मराशिस्सनातनः

धर्मस्यनियमो यो हि मया ते कथितोभृशम्।

अन्ये च यज्वनां लोका अन्येचापि तपस्विनाम्॥ ३४६॥

अन्ये दमवतां लोकास्ते वै परमपूजिताः। एकः क्षमावतां दोषो द्वितीयो नोपपद्यते॥
यदिदं क्षमयायुक्तमशक्तम्मन्यते जनः। न चैष दोषो मन्तव्यः क्षमा प्रज्ञावतां बलम्॥
प्रशमं योऽभिजानाति इष्टापूर्तं महीयते। यत्क्रोधयुक्तो जपति जुहोति च यदर्चति॥
सर्वं क्षरति तत्तस्य भिन्नकुम्भादिवोदकम्। दमाध्यायमिमं पुण्यं प्रातरुत्थाय यः पठेत्
स धर्मनावमारुह्य दुर्गाण्यतितरिष्यति। दमाध्यायमिमं पुण्यं सततं श्रावयेद्द्विजः॥
स ब्रह्मलोकमाप्नोति तस्मान्न च्यवते पुनः। श्रूयतां धर्मसर्वस्वं श्रुत्वा चैतत्प्रधार्यताम्
आत्मनः प्रतिकूलानि परेषां न समाचरेत्। मातृवत्परदारांश्च परद्रव्याणि लोष्टवत्॥

आत्मवत्सर्वभूतानि यः पश्यति स पश्यति। पचनं वैश्वदेवार्थं परार्थं यच्च जीवितम्
पुत्रार्थं मैथुनं यस्य स्वर्गार्थं तस्य जीवितम्। एतद्भवेच्च सर्वस्वं धातूनामिव काञ्चनम्
सर्वभूतहितं राजन्नधीत्यामृतमश्नुते।
एवं वै धर्मसर्वस्वमुक्त्वा ते तु शुनःसखम्॥ ३५६॥
तेनैव सहिताः सर्वे निविष्टास्सरसस्तटे। सरोऽपश्यन्सुविस्तीर्णं पद्मोत्पलजलावृतम्
तत्रावतारंकृत्वा ते बिसानि च कलापशः। तीरेनिक्षिप्य सरसश्चक्रुः पुण्यां जलक्रियाम्
अथोत्तीर्यजलात्तस्मात्ते समेत्य परस्परम्। बिसान्येतान्यपश्यन्त इदं वचनमब्रुवन्॥

ऋषय ऊचुः।

केन क्षुधाभितप्तानामस्माकं पापकर्मणाम्। नृशंसेनापनीतानि बिसान्याहारकाङ्क्षिणा
ते शङ्कमानास्त्वन्योन्यं पर्यपृच्छन्द्विजोत्तमाः। चक्रुश्च निश्चयं सर्वे शपथं प्रति पार्थिव

कश्यप उवाच।

सर्वत्र सर्वं हरतु न्यासलोपं करोतु च। कूटसाक्षित्वमभ्येतु बिसस्तैन्यं करोति यः॥
दम्भेन धर्मं चरतु राजानं चोपसेवताम्। मधु मांसं समश्नातु बिसस्तैन्यं करोति यः
अनृतं भाषतु सदा विषयांश्चोपसेवतु। ददातु कन्यां शुल्केन बिसस्तैन्यं करोति यः॥

वसिष्ठ उवाच।

अनृतौ मैथुनंयातु दिवा स्वप्नं निषेवतु। अन्योन्यातिथितामेतु बिसस्तैन्यं करोति यः
एककूपे वसेद्ग्रामे ब्राह्मणो वृषलीपतिः। तस्य सालोक्यतां यातु बिसस्तैन्यं करोति यः

भरद्वाज उवाच।

नृशंसस्सोऽस्तु सर्वेषु समृद्ध्या चाप्यहङ्कृतः।
मत्सरी पिशुनश्चैव बिसस्तैन्यं करोति यः॥ ३७०॥
प्रत्याक्रोशत्ववाक्रुष्टस्ताडयत्वन्यताडितः। विक्रीणातु रसांश्चैव बिसस्तैन्यंकरोति यः

गौतम उवाच।

अतिथिं त्वागतं प्राप्य पाकभेदं करोतु सः। शूद्रान्नं च सदाश्नातु बिसस्तैन्यंकरोतियः
दत्त्वा दानं कीर्तयतु परभार्यासुतुष्यतु। एकाकीमिष्टमश्नातु बिसस्तैन्यं करोति यः॥

विश्वामित्र उवाच ।

नित्यकामपरः सोऽस्तु दिवसे चैव मैथुनी ।
नित्यं तु पातकी चैव बिसस्तैन्यं करोति यः ॥ ३७४ ॥

परापवादं वदतु परदारांश्च सेवतु । परनिन्दारतश्चास्तु बिसस्तैन्यं करोति यः ॥३७५॥
मातरं पितरंचैव सोऽवमन्येतदुर्मतिः । स मातर्यन्यबुद्धिः स्याद्बिसस्तैन्यं करोति यः ॥
परपाकं सदाश्नातु परनारी च सेवतु । वेदविक्रयकृच्चास्तु बिसस्तैन्यं करोति यः ॥

जमदग्निरुवाच ।

परस्य या तु प्रेष्यत्वं स तु जन्मनि जन्मनि । सर्वधर्मक्रियाहीनो बिसस्तैन्यं करोतियः

शुनःसख उवाच ।

न्यायेन वेदानध्येतु गृहस्थोऽस्तु प्रियातिथिः ।
सत्यं वदतु वाजस्रं बिसस्तैन्यं करोति यः ॥ ३७६ ॥

अग्निं जुहोतु विधिवद्यज्ञं यजतु नित्यशः । ब्रह्मणस्सदनं यातु बिसस्तैन्यं करोति यः ॥

ऋषय ऊचुः ।

इष्टमेव द्विजातीनां यदिदं शपथीकृतम् । त्वया कृतं बिसस्तैन्यं सर्वेषां नः शुनः सख ॥

शुनःसख उवाच ।

मया ह्यन्तर्हितान्यासन्बिसानीमानि वो द्विजाः ।
धर्मं च श्रोतुकामेन जानीध्वं मां च वासवम् ॥ ३८२ ॥
अलोभादक्षया लोका जिता वो मुनिसत्तमाः ।
विमानमधितिष्ठध्वं गच्छामस्त्रिदशालयम् ॥ ३८३ ॥

ततो महर्षयस्ते तु विज्ञायाथ पुरन्दरम् । ऊचुः पुरन्दरंचेदं वाक्यं वाक्यविशारदाः ॥
इहागत्य नरो यस्तु मध्यमं पुष्करंविशेत् । त्रिरात्रोपोषितो भूत्वा लभेदावश्यकंफलम्

द्वादशे वार्षिकी दीक्षा स्मृता या तु वनौकसाम् ।
तस्याः फलं समग्रं च लभेदिह न संशयः ॥ ३८६ ॥

नासौ दुर्गतिमाप्नोति स्वगणैःसहमोदते । विरिञ्चिस्थानमासाद्य तिष्ठेद्वै ब्रह्मणोदिनम्

पुलस्त्य उवाच ।

इन्द्रेणसह संप्रीतास्तदाजग्मुस्त्रिविष्टपम् । एवं विलोभ्यमानास्ते लोभैर्बहुविधैरिह ॥
नैव लोभं तदा चक्रुस्तेन जग्मुस्त्रिविष्टपम् । इदंयःश्रृणुयान्नित्यमृषीणां चरितं शुभम्
विमुक्तः सर्वपापेभ्यः स्वर्गलोके महीयते ॥ ३६० ॥

इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे सप्तर्षिसंवादो नामैकोनविंशोऽध्यायः ।

---

## विंशोऽध्यायः

### पुष्पवाहननृपत्याख्यानम् ।

भीष्म उवाच ।

अत्याश्चर्यवती रम्या कथेयं पापनाशिनी । विस्तरेण च मे ब्रूहि याथातथ्येन पृच्छतः ॥
माहात्म्यं मध्यमस्यापि ऋषिभिः परिकीर्तितम् ।
फलं चान्नस्य कथितं माहात्म्यं च दमस्य तु ॥ २ ॥
विष्णुना च पदन्यासः कृतोयत्र महामुने । कनीयसस्तथोत्पत्तिर्यथा भूता वदस्व मे ॥

पुलस्त्य उवाच ।

पुरारथन्तरे कल्पे राजासीत्पुष्पवाहनः । नाम्ना लोकेषु विख्यातस्तेजसा सूर्यसन्निभः॥
तपसा तस्य तुष्टेन चतुर्वक्त्रेण भारत । कमलं काञ्चनं दत्तं यथाकामगमं नृप ॥ ५ ॥
सप्तद्वीपानि लोकं च यथेष्टं विचरत्सदा । कल्पादौ तु समं द्वीपं तस्य पुष्करवासिना
लोकेन पूजितं तस्मात्पुष्करद्वीपमुच्यते । तदेव ब्रह्मणादत्तं यानमस्य ततोऽम्बुजम् ॥
पुष्पवाहन इत्याहुस्तस्मात्तं देवदानवाः ॥ ८ ॥
नौपम्यमस्तीह जगत्त्रयेऽपि ब्रह्माम्बुजस्थस्य च तस्य राज्ञः ।
तपोऽनुभावादथ तस्य राज्ञी नारी सहस्रैरभिवन्द्यमाना ।
नाम्ना च लावण्यवती बभूव या पार्वती चेष्टतमा भवस्य ॥ ६ ॥

तस्यात्मजानामयुतं बभूव धर्मात्मनामग्र्य धनुर्धराणाम् ।
तदात्मजांस्तानभिवीक्ष्य राजा मुहुर्मुहुर्विस्मयमाससाद ॥ १० ॥
सोऽभ्यागतं पूज्य मुनिप्रवीरं प्रचेतसं वाक्यमिदं बभाषे ।
कस्माद्विभूतिरचलामरमर्त्यपूजा जाता कथं कमलजा सदृशी सुराज्ञी ॥११॥
भार्या मयाल्पतपसा परितोषितेन दत्तं ममाम्बुजगृहं च मुनीन्द्र धात्रा ।
यस्मिन्प्रविष्टमपि कोटिशतं नृपाणां सामात्यकुञ्जररथौघजनावृतानाम् ॥१२
नालक्ष्यते क्वगतमम्बरगामिभिश्च तारागणेन्दु रविरश्मिभिरप्यगम्यम् ।
तस्मात् किमन्यजननीजठरोद्भवेन धर्मादिकं कृतमशेषजनातिगं यत् ॥ १३ ॥
सर्वैर्मयाथ तनयैरथवानयापि सद्भार्यया तदखिलं कथय प्रचेतः ।
सोऽप्यभ्यधादथभवान्तरितं निरीक्ष्य पृथ्वीपते शृणु तदद्भुत हेतुवृत्तम् ॥
जन्माभवत्तव तु लुब्धकुलेऽपि घोरं जातस्त्वमप्यनुदिनं किल पापकारी ।
वपुरप्यभूत्तव पुनः परुषाङ्गसन्धि दुर्गन्धिसत्त्वकुनखाभरणं समन्तात् ॥१५
नो ते सुहृन्नसुतबन्धुजनो न तादृङ् नैव स्वसा न जननी च तदाभिशस्ता ।
अतिसंमतापरमभीष्टतमाभिमुखी जाता महीश तव योषिदियं सुरूपा ॥१६॥
अभूदनावृष्टिरतीव रौद्रा कदाचनाहारनिमित्तमस्याम् ।
क्षुत्पीडितेन भवता तु यदा न किञ्चिदासादितं वन्यफलादिभक्ष्यम् ॥ १७॥
अथाभिदृष्टं महदम्बुजाढ्यं सरोवरं पङ्कपरीतरोधः ।
पद्मान्यथादायततो बहूनि गतः पुरं वैदिश नामधेयम् ॥ १८ ॥
तन्मूल्यलाभाय पुरं समस्तं भ्रान्तं त्वयाशेषमहस्तदासीत् ।
क्रेता न कश्चित्कमलेषु जातः क्लान्तः परं क्षुत्परिपीडितश्च ॥ १९ ॥

उपविष्टस्त्वमेकस्मिन्सभार्यो भवनाङ्गणे । ततो रात्रौ भवांस्तत्र अश्रौषीन्मङ्गलध्वनिम्
सभार्यस्तत्रगतवान्यत्रासौ मङ्गलध्वनिः । तत्रमण्डलमध्यस्था विष्णोरर्चाविलोकिता
वेश्यानङ्गवती नाम बिभ्रती द्वादशीव्रतम् । समाप्य माघमासस्य द्वादश्यां लवणाचलम्
... न्यवेदयत्तु गुरवे शय्यांचोपस्करान्वितम् ।

अलङ्कृत्य हृषीकेशं सौवर्णं सममादरात् ॥ २३ ॥
सा तु दृष्टा ततस्ताभ्यामिदं च परिचिन्तितम् । किमेभिःकमलैःकार्यंवरं विष्णुरलंकृतः
इति भक्तिस्तदा जाता दम्पत्योस्तु नरेश्वर । तत्प्रसङ्गात्समभ्यर्च्य केशवंलवणाचलम्
शय्या च पुष्पप्रकरैः पूजिताऽभूच्च सर्वशः । अथानङ्गवती तुष्टा तयोर्धान्यशतत्रयम् ॥
दीयतामादिदेशाथ कलधौतपलत्रयम् । न गृहीतं ततस्ताभ्यां महासत्त्वावलम्बनात् ॥
अनङ्गवत्या च पुनस्तयोरन्नं चतुर्विधम् । आनीय व्याहृतं चान्नं भुज्यतामिति भूपते॥

ताभ्यां च तदपि त्यक्तं भोक्ष्यावः श्वो वरानने ।
प्रसङ्गादुपवासो नौ तवाद्यास्तु शुभावहः ॥ २९ ॥

जन्मप्रभृति पापिष्ठावावां देवि दृढव्रते । त्वत्प्रसङ्गाद्भवद्गृहे धर्मलेशोऽस्तु नाविह ॥३०
इति जागरणं ताभ्यां तत्प्रसङ्गादनुष्ठितम् । प्रभाते च तया दत्ता शय्या सलवणाचला
ग्रामश्च गुरवे भक्त्या विप्रेभ्यो द्वादशैव तु । वस्त्रालंकारसंयुक्ता गावश्च कनकान्विताः
भोजनं च सुहृन्मित्रदीनान्धकृपणैःसह । तच्च लुब्धकदाम्पत्यं पूजयित्वा विसर्जितम्

स भवांल्लुब्धको जातः सपत्नीको नृपेश्वरः ।
पुष्करप्रकरात्तस्मात्केशवस्य तु पूजनात् ॥ ३४ ॥

विनष्टाशेषपापस्य तव पुष्करमन्दिरम् । तस्य सत्यस्य माहात्म्यादलोभतपसा नृप ॥
प्रादात्कामगमं यानं लोकनाथश्चतुर्मुखः । संतुष्टस्तवराजेन्द्र पुष्करं त्वं समाश्रय ॥३६
कल्पं स त्वं समासाद्य विभूतिद्वादशीव्रतम् । कुरु राजेन्द्र निर्वाणमवश्यं समवाप्स्यसि
एतदुक्त्वा तु स मुनिस्तत्रैवान्तरधीयत । राजा यथोक्तं च पुनरकरोत्पुष्पवाहनः ३८॥
इदमाचरतो राजन्नखण्डव्रतता भवेत् । यथाकथंचित्कालेन द्वादशद्वादशीर्नृप ॥ ३९ ॥
कर्तव्या शक्तितो देव विप्रेभ्यो दक्षिणा नृप । ज्येष्ठे गावः प्रदातव्यामध्यमेभूमिरुत्तमा
कनिष्ठे काञ्चनं देयमित्येषा दक्षिणा स्मृता । प्रथमं ब्रह्मदैवत्यं द्वितीयं वैष्णवं तथा ॥

तृतीयं रुद्रदैवत्यं त्रयो देवास्त्रिषु स्थिताः ॥ ४१ ॥

इति कलुषविदारणं जनानां पठति च यस्तु शृणोति चापि भक्त्या ।
मतिमपि च स याति देवलोके वसति च रोमसमा निवत्सराणि ॥ ४२ ॥

अथातः संप्रवक्ष्यामि व्रतानामुत्तमं व्रतम् ॥ ४३ ॥
कथितं तेन रुद्रेण महापातकनाशनम् । नक्तमब्दं चरित्वा तु गवा सार्द्धं कुटुम्बिने ॥
हैमं चक्रं त्रिशूलं च दद्याद्विप्राय वाससी । एवं यः कुरुते पुण्यं शिवलोके समोदते ॥
एतदेव व्रतं नाम महापातकनाशनम् । यस्त्वेकभक्तेन क्षिपेद्धेनुं वृषसमन्विताम् ॥४६॥
धेनुं तिलमयीं दद्यात्स पदं याति शांकरम् । एतद्रुद्रव्रतं नाम भयशोकविनाशनम् ॥
यश्च नीलोत्पलं हैमं शर्करापात्रसंयुतम् । एकान्तरितनक्ताशी समांतेवृषसंयुतम् ॥४८॥
वैष्णवं स पदं याति नीलव्रतमिदं स्मृतम् । आषाढ़ादि चतुर्मासमभ्यगं वर्जयेन्नरः ॥
भोजनोपस्करं दद्यात्स याति भवनं हरेः । जनप्रीतिकरं नृणां प्रीतिव्रतमिहोच्यते ॥
वर्जयित्वा मधौयस्तु दधिक्षीरघृतैक्षवम् । दद्याद्वस्त्राणिसूक्ष्माणि रसपात्रेणसंयुतम् ॥
संपूज्य विप्रमिथुनं गौरी मे प्रीयतामिति । एतद्गौरीव्रतंनाम भवानीलोकदायकम् ॥
पुष्यादौ यस्त्रयोदश्यां कृत्वा नक्तमथोपुनः । अशोकं काञ्चनं दद्यादिक्षुयुक्तंदशाङ्गुलम्
विप्राय वस्त्रसंयुक्तं प्रद्युम्नःप्रीयतामिति । कल्पं विष्णुपुरेस्थित्वाविशोकस्स्यात्पुनर्नृप
एतत्कामव्रतं नाम सदाशोक विनाशनम् । आषाढ़ादिव्रतेयस्तुवर्जयेद्यःफलाशनम् ॥
चातुर्मास्ये निवृत्ते तु घटंसर्पिर्गुडान्वितम् । कार्तिक्यां तत्पुनर्हैमंब्राह्मणाय निवेदयेत् ॥
सरुद्रलोकमाप्नोति शिवव्रतमिदं स्मृतम् । वर्जयेद्यस्तु पुष्पाणि हेमन्तेशिशिरोवृते ॥
पुष्पत्रयं च फाल्गुन्यां कृत्वा शक्तयाचकाञ्चनम् । दद्याद्विकालवेलायांप्रीयेतांशिवकेशवौ
दत्त्वा परंपदंयाति सौम्यव्रतमिदंस्मृतम् । फाल्गुनादि तृतीयायां लवणंयस्तु वर्जयेत्
समांते शयनं दद्याद् गृहंचोपस्करान्वितम् । संपूज्य विप्रमिथुनं भवानीप्रीयतामिति ॥
गौरीलोके वसेत्कल्पं सौभाग्यव्रतमुच्यते । सन्ध्यामौनं नरःकृत्वा समांतेघृतकुम्भकम्
वस्त्रयुग्मं तिलान्घण्टां ब्राह्मणाय निवेदयेत् । लोकं सारस्वतं यातिपुनरावृत्तिदुर्लभम्
एतत्सारस्वतंनाम रूपविद्याप्रदायकम् । लक्ष्मीमभ्यर्च्य पञ्चम्यामुपवासीभवेन्नरः ॥
समांते हेमकमलं दद्याद्धेनुसमन्वितम् । स वै विष्णुपदंयाति लक्ष्मीःस्याज्जन्मजन्मनि
एतल्लक्ष्मीव्रतंनाम दुःखशोकविनाशनम् । कृत्वोपलेपनं शम्भोरग्रतःकेशवस्य च ॥६५ ॥
यावदब्दं पुनर्देया धेनुर्जलघटस्तथा । जन्मायुतं स राजास्यात्ततःशिवपुरं व्रजेत् ॥६६॥

एतदायुर्व्रतंनाम सर्वकामप्रदायकम्। अश्वस्थं भास्करं गङ्गां प्रणम्यैकाग्रमानसः ॥
एकभक्तंनरःकुर्यादब्दमेकं विमत्सरः। व्रतांते विप्रमिथुनं पूज्यं धेनुत्रयान्वितम् ॥६८॥
वृक्षं हिरण्मयंदद्यात्सोऽश्वमेध फलं लभेत्। एतत्कीर्तिव्रतंनाम भूतिकीर्तिफलप्रदम् ॥
घृतेन स्नपनं कृत्वा शम्भोर्वाकेशवस्य वा। अक्षताभिःसपुष्पाभिःकृत्वा गोमयमण्डलम्
समांते हेमकमलं तिलधेनुसमन्वितम्। शूलमष्टाङ्गुलंदद्याच्छिवलोकेमहीयते ॥ ७१ ॥
सामगायनकंचैव सामव्रतमिहोच्यते। नवम्यामेकभक्तं तु कृत्वा कन्याश्च शक्तितः ॥

भोजयित्वा समंदद्याद्धेमकंचुकवाससी।
हैमं सिंहं च विप्राय दद्याच्छिवपदं व्रजेत् ॥ ७३ ॥

जन्मार्बुदसुरूपःस्याच्छत्रुभिश्चापराजितः। एतद्वीरव्रतंनाम नराणां च सुखप्रदम् ॥७४॥
चैत्रादि चतुरोमासाञ्जलंदद्याद्दयान्वितः। व्रतान्ते मणिकंदद्यादन्नंवस्त्रसमन्वितम् ॥
तिलपात्रं हिरण्यं च ब्रह्मलोके महीयते। कल्पान्ते भूतिजननमानंदव्रतमुच्यते ॥ ७६ ॥
पंचामृतेन स्नपनं कृत्वा संवत्सरं विभोः। वत्सरान्ते पुनर्दद्याद्धेनुं पञ्चामृतान्विताम् ॥
विप्राय दद्याच्छंखं च स पदं याति शांकरम्। राजा भवति कल्पान्तेधृतिव्रतमिदंस्मृतम्
वर्जयित्वा पुमान्मांसं व्रतान्ते गोप्रदो भवेत्। तद्वद्धेममृगं दद्यात्सोऽश्वमेधफलं लभेत्

अहिंसाव्रतमित्युक्तं कल्पांते भूपतिर्भवेत्।
कल्यमुत्थाय वै स्नानं कृत्वा दाम्पत्यमर्चयेत् ॥ ८० ॥

भोजयित्वा यथाशक्ति माल्यवस्त्रविभूषणैः। सूर्यलोके वसेत्कल्पं सूर्यव्रतमिदं स्मृतम् ॥
आषाढ़ादिचतुर्मासं प्रातःस्नायी भवेन्नरः। विप्राय भोजनं दत्त्वा कार्तिक्यांगोप्रदोभवेत्
सवैष्णवं पदं याति विष्णुव्रतमिदं स्मृतम्। अयनादयनं यावद्वर्जयेत्पुष्पसर्पिषी ॥८३
तदन्ते पुष्पमन्नानि घृतधेन्वा सहैव तु। दत्त्वा शिवपदं याति विप्राय घृतपायसम् ॥
एतच्छीलव्रतंनाम शीलारोग्यफलप्रदम्। यावत्समं भवेद्यस्तु पञ्चदश्यां पयोव्रतः ॥
समान्ते श्राद्धकृद्दद्याद्गाश्च पञ्चपयस्विनीः। वासांसि च पिशङ्गानि जलकुम्भयुतानि च
स याति वैष्णवं लोकं पितॄणां तारयेच्छतम्। कल्पान्तेराजराजेन्द्र पितृव्रतमिदंस्मृतम्
सन्ध्यादीपप्रदो यस्तु घृतैस्तैलं विवर्जयेत्। समान्ते दीपकं दद्याचक्रं शूलं च काञ्चनम्

वस्त्रयुग्मं च विप्राय स तेजस्वी भवेन्नरः। रुद्रलोकमवाप्नोति दीप्तिव्रतमिदं स्मृतम् ॥
कार्तिकादितृतीयायां प्राश्यगोमूत्रयावकम् ॥ नक्तं चरेदब्दमेकमब्दान्तेगोप्रदोभवेत् ॥
गौरीलोके वसेत्कल्पं ततो राजा भवेदिह। एतद्रुद्रव्रतं नाम सदा कल्याणकारकम् ॥
वर्जयेच्चतुरोमासान्यस्तु गन्धानुलेपनम्। शुक्तिगन्धाक्षतान्दद्याद्विप्राय सितवाससी ॥
वारुणं पदमाप्नोति दृढव्रतमिदं स्मृतम्। वैशाखे पुष्पलवणं वर्जयेदथ गोप्रदः ॥ ६३ ॥
भूत्वा विष्णुपदे कल्पं स्थित्वाराजाभवेदिह। एतच्छान्तिव्रतं नाम कीर्तिकामफलप्रदम्
ब्रह्माण्डं काञ्चनं कृत्वातिलराशिसमन्वितम्। घृतेनान्यप्रदो भूत्वा वह्निं संतर्प्यसद्विजम्
संपूज्य विप्रदाम्पत्यं माल्यवस्त्रविभूषणैः। शक्तितस्त्रिपलादूर्ध्वं विश्वात्मा प्रीयतामिति
पुण्येऽह्नि दद्यादपरे ब्रह्म यात्यपुनर्भवम्। एतद्ब्रह्मव्रतं नाम निर्माणफलदं नृणाम्॥ ६७॥
यश्चोभयमुखीं दद्यात्प्रभूतसकलान्विताम्। दिनं पयोव्रतं तिष्ठेत्स याति परमं पदम् ॥
एतद्धे सुव्रतं नाम पुनरावृत्तिदुर्लभम्। त्र्यहं पयोव्रतः स्थित्वा काञ्चनं कल्पपादपम् ॥

पलादूर्ध्वं यथाशक्ति तण्डुलप्रस्थसंयुतम्।
दत्त्वा ब्रह्मपदं याति भीमव्रतमिदं स्मृतम् ॥ १०० ॥

मासोपवासी यो दद्याद्धेनुं विप्रायशोभनाम्। सवैष्णवपदं याति भीमतव्रमिदं स्मृतम्
दद्याद्विंशत्पलादूर्ध्वं महीं कृत्वा तु काञ्चनीम्। दिनं पयोव्रतस्तिष्ठेद्रुद्रलोके महीयते ॥
धनप्रदमिदं प्रोक्तं सप्तकल्पशतानुगम्। माघे मास्यथ चैत्रे वा गुडधेनुप्रदो भवेत् ॥
गुडव्रतं तृतीयायां गौरीलोके महीयते। महाव्रतमिदं नाम परमानन्दकारकम् ॥ १०४॥

पक्षोपवासी यो दद्याद्विप्राय कपिलाद्वयम्।
स ब्रह्मलोकमाप्नोति देवासुरसुपूजितः ॥ १०५ ॥

कल्पान्ते सर्वराजा स्यात्प्रभाव्रतमिदं स्मृतम्। वत्सरंत्वेकभक्ताशी सभक्ष्यजलकुम्भदः
शिवलोके वसेत्कल्पं प्राप्तिव्रतमिदंस्मृतम्। नक्ताशीत्वष्टमीषु स्याद्वत्सरान्ते तु धेनुदः
पौरन्दरं पुरं याति सुगतिव्रतमुच्यते। इन्धनं यो ददेद्विप्रे वर्षादींश्चतुरस्त्वृतून् ॥ १०८॥

घृतधेनुप्रदोऽन्ते च स परं ब्रह्म गच्छति।
वैश्वानरव्रतं नाम सर्वपापप्रणाशनम् ॥ १०६ ॥

एकादश्यां तु नक्ताशी यश्चक्रं विनिवेदयेत्।
कृत्वा समान्ते सौवर्णं विष्णोः पदमवाप्नुयात् ॥ ११० ॥
एतत्कृष्णव्रतंनाम कल्पान्तेराज्यलाभकृत्। पायसाशीसमान्ते तु दद्याद्विप्राय गोयुगम्
लक्ष्मीलोके वसेत्कल्पमेतद्देवीव्रतं स्मृतम्। सप्तम्यां नक्तभुग्दद्यात्समासे गां पयस्विनीम्
सूर्यलोकमवाप्नोति भानुव्रतमिदं स्मृतम्। चतुर्थ्यां नक्तभुग्दद्याद्धेमन्ते गोयुगं तथा ॥
एतद्वैनायकं नाम शिवलोकफलप्रदम्।
महाफलानि यस्त्यक्त्वा चातुर्मास्यं द्विजातये ॥ ११४ ॥
हैमानि कार्तिके दद्याद्धोमान्ते गोयुगं तथा। एतत्सौरव्रतं नाम सूर्यलोकफलप्रदम् ॥
द्वादशद्वादशीर्यस्तु समाप्योपोषणे नृप। गोवस्त्रकाञ्चनैर्विप्रान्पूजयेच्छक्तितो नरः ॥
परं पदमवाप्नोति विष्णुव्रतमिदं स्मृतम्। चतुर्दश्यां तु नक्ताशी समान्ते गोयुगप्रदः ॥
शैवं पदमवाप्नोति त्रैयम्बकमिदं स्मृतम्। सप्तरात्रोषितो दद्याद्घृतकुम्भं द्विजातये ॥
वरव्रतमिदं प्राहुर्ब्रह्मलोकफलप्रदम्। असौ काशीं समासाद्य धेनुं दत्ते पयस्विनीम् ॥
शक्रलोके वसेत्कल्पमिदं मन्त्रव्रतं स्मृतम्।
मुखवासं परित्यज्य समांते गोप्रदो भवेत् ॥ १२० ॥
वारुणं लोकमाप्नोति वारुणव्रतमुच्यते। चान्द्रायणं च यः कुर्याद्धैमं चन्द्रं निवेदयेत्
चन्द्रव्रतमिदं प्रोक्तं चन्द्रलोकफलप्रदम्। ज्येष्ठे पञ्चतपा योऽन्ते हेमधेनुप्रदो दिवम् ॥
यात्यष्टमीचतुर्दश्यो रुद्रव्रतमिदं स्मृतम्। सकृद्विधानकं कुर्यात्तृतीयायां शिवालये ॥
समाप्तेधेनुदो यातिभवानीव्रतमुच्यते। माघेनिश्यार्द्रवासाः स्यात्सप्तम्यां गोप्रदोभवेत
दिवि कल्पं वसित्वेह राजा स्यात्पवनव्रतम्।
त्रिरात्रोपोषितो दद्यात्फाल्गुन्यां भवनं शुभम् ॥ १२५ ॥
आदित्यलोकमाप्नोति धामव्रतमिदंस्मृतम्। त्रिसन्ध्यंपूज्य दाम्पत्यमुपवासी विभूषणैः
ददन्मोक्षमवाप्नोति मोक्षव्रतमिदं स्मृतम्।
दत्वा सितद्वितीयायामिन्दौ लवणभाजनम् ॥ १२७ ॥
समाप्ते गोप्रदो याति विप्राय शिवमन्दिरम्। कांस्यंसवस्त्रं राजेन्द्र दक्षिणासहितं तथा

समाप्ते गांच योदद्यात्सयातिशिवमन्दिरम्। कल्पान्तेराजराजस्स्यात्सोमव्रतमिदंस्मृतम्
प्रतिपत्स्वेकभक्ताशी समाप्ते च फलप्रदः। वैश्वानरपदं याति शिखिव्रतमिदं स्मृतम्॥
हैमं पलद्वयादूर्ध्वं रथमश्वयुगान्वितम्। दद्यात्कृतोपवासः स दिविकल्पशतं वसेत्॥
तदन्ते राजराजस्स्यादश्वव्रतमिदं स्मृतम्। तद्वद्धेमरथं दद्यात्करिभ्यां संयुतं पुनः॥
सत्यलोके वसेत्कल्पं सहस्रमपि भूमिपः।
भवेदिहागतो भूम्यां करिव्रतमिदं स्मृतम्॥ १३३॥
दशम्यामेकभक्ताशी समाप्ते दशधेनुदः। दीपं च काञ्चनं दद्याद्ब्रह्माण्डाधिपतिर्भवेत्॥
एतद्विश्वव्रतं नाममहापातकनाशनम्। कन्यादानंतुकार्तिक्यां पुष्करे यःकरिष्यति॥
एकविंशद्गुणोपेतो ब्रह्मलोकं गमिष्यति।
कन्यादानात्परं दानं नैव चास्त्यधिकं क्वचित्॥ १३६॥
पुष्करेतुविशेषेण कार्तिक्यां तु विशेषतः। विप्रायविधिवद्देयन्तेषां लोकोऽक्षयो भवेत्
तिलपिष्टमयं कृत्वा गजं रत्नसमन्वितम्।
विप्राय ये प्रयच्छन्ति जलमध्ये स्थिता नराः॥ १३८॥
तेषां चैवाक्षयो लोको भविताऽऽभूतसंप्लवम्। यः पठेच्छृणुयाद्वापि व्रतषष्टिमनुत्तमाम्
मन्वन्तरशतं सोऽपि गन्धर्वाधिपतिर्भवेत्॥ १३९॥
षष्टिव्रतं भारत पुण्यमेतत्तवोदितं विश्वजनीनमद्य॥
श्रोतुं यदीच्छा तव राजराज शृणु द्विजातेः करणीयमेतत्॥ १४०॥
नैर्मल्यं भावशुद्धिश्च विना स्नानं न विद्यते॥ १४१॥
तस्मान्मनोविशुद्ध्यर्थं स्नानमादौ विधीयते। अनुद्धृतैरुद्धृतैर्वाजलैःस्नानं समाचरेत्
तीर्थं प्रकल्पयेद्विद्वान्मूलमन्त्रेण मन्त्रवित्। नमो नारायणायेति मूलमन्त्र उदाहृतः॥
सदर्भपाणिर्विधिना आचान्तः प्रयतः शुचिः। चतुर्हस्तसमायुक्तं चतुरस्रं समन्ततः॥
प्रकल्प्यावाहयेद्गंगामेभिर्मन्त्रैर्विचक्षणः। विष्णोः पादप्रसूतासि वैष्णवी विष्णुदेवता॥
त्राहि नस्त्वेनसस्तस्मादाजन्ममरणान्तिकात्।
तिस्रः कोट्योऽर्धकोटी च तीर्थानां वायुरब्रवीत्॥ १४६॥

दिवि भुव्यंतरिक्षे च तानि ते सन्ति जाह्नवि । नन्दिनीत्येव ते नाम देवेषु नलिनीति च
दक्षापृथ्वी च सुभगा विश्वकायाशिवा सिता । विद्याधरीसुप्रसन्ना तथालोकप्रसादिनी
क्षेमा च जाह्नवी चैव शान्ता शान्तिप्रदायिनी ।
एतानि पुण्यनामानि स्नानकाले प्रकीर्त्तयेत् ॥ १४६ ॥
भवेत्सन्निहिता तत्र गङ्गा त्रिपथगामिनी । सप्तवाराभिजप्तेन करसंपुटयोजितम् ॥ १५० ॥
मूर्ध्नि कुर्याज्जलं भूयस्त्रिचतुः पञ्च सप्तधा । स्नानं कुर्यान्मृदा तद्वदामन्त्र्य तु विधानतः
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे । मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्
उद्धृतासि वराहेण कृष्णेन शतबाहुना । नमस्ते सर्वलोकानां प्रभवारणि सुव्रते ॥
एवं स्नात्वा ततःपश्चादाचम्य तु विधानतः । उत्थायवाससी शुभ्रे शुद्धे तु परिधाय वै
ततस्तु तर्पणं कुर्यात्त्रैलोक्याप्यायनाय वै । ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतीन् ॥
देवा यक्षास्तथा नागा गन्धर्वाप्सरसां गणाः ।
क्रूरास्सर्पास्सुपर्णाश्च तरवो जम्भकादयः ॥ १५६ ॥
विद्याधरा जलधरास्तथैवाकाशगामिनः । निराधाराश्च ये जीवा पापधर्मरताश्च ये ॥
तेषामाप्यायनायैतद्दीयते सलिलं मया । कृतोपवीतो देवेभ्यो निवीती च भवेत्ततः ॥
मनुष्यांस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा । सनकश्च सनन्दश्च तृतीयश्च सनातनः ॥
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा । सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा
मरीचिमत्र्यंगिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वसिष्ठं च भृगुं नारदमेव च ॥ १६१ ॥
देवब्रह्मऋषीन्सर्वांस्तर्पयेत्साक्षतोदकैः । अपसव्यं ततः कृत्वा सव्यं जानु च भूतले ॥
अग्निष्वात्तांस्तथा सौम्यान्हविष्मन्तस्तथोष्मपान् ।
सुकालिनो बर्हिषदस्तथा चैवाज्यपान्पुनः ॥ १६३ ॥
संतर्पयेत्पितॄन्भक्त्या सतिलोदकचन्दनैः । सदर्भपाणिर्विधिना पितॄन्स्वांस्तर्पयेत्ततः ॥
पित्रादीन्नामगोत्रेण तथा मातामहानपि । संतर्प्य विधिवद्भक्त्या इमं मन्त्रमुदीरयेत् ॥
येऽबान्धवा बान्धवा ये येऽन्यजन्मनि बान्धवाः ।

ते तृप्तिमखिला यान्तु येऽप्यस्मत्तोयकाङ्क्षिणः ॥ १६६ ॥
आचम्य विधिना सम्यगालिखेत्पद्ममग्रतः । साक्षताद्भिस्सपुष्पाभिः सतिलागरुचन्दनैः
अर्घ्यं दद्यात्प्रयत्नेन सूर्यनामानुकीर्तनैः । नमस्ते विश्वरूपाय नमस्ते विष्णुरूपिणे ॥
सर्वदेव नमस्तेऽस्तु प्रसीद मम भास्कर । दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते
एवं सूर्यं नमस्कृत्य त्रिःकृत्वा च प्रदक्षिणम् ।
द्विजं गां काञ्चनं चैव दृष्ट्वा स्पृष्ट्वा गृहं व्रजेत् ॥ १७० ॥
स्वगेहस्थां ततःपुण्यां प्रतिमां चापिपूजयेत् । भोजनंच ततः पश्चाद्द्विजपूर्वंच कारयेत्
अनेन विधिना सर्वे ऋषयः सिद्धिमागताः ॥ १७२ ॥
इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे स्नानविधिर्नामविंशोऽध्यायः ।

---

## एकविंशोऽध्यायः

### धर्ममूर्तिराजकथानकम् ।

पुलस्त्य उवाच ।

आसीत्पुरा बृहत्कल्पे धर्ममूर्तिर्जनाधिपः । सुहृच्छक्रस्य निहता येन दैत्यास्सहस्रशः ॥
सोमसूर्यादयो यस्य तेजसा विगतप्रभाः । भवन्ति शतशो येन दानवाश्च पराजिताः ॥
यथेच्छरूपधारी च मानुषोऽप्यपराजितः ।
तस्य भानुमती भार्या सती त्रैलोक्यसुन्दरी ॥ ३ ॥
लक्ष्मीसदृशरूपेण निर्जितामरसुन्दरी । राज्ञस्तस्याग्रमहिषी प्राणेभ्योऽपि गरीयसी ॥
दशनारीसहस्राणां मध्ये श्रीरिवराजते । नृपकोटिसहस्रेण न कदाचित्समुच्यते ॥ ५ ॥
कदाचिदास्थानगतः पप्रच्छ स्वपुरोहितम् ।
विस्मयेनावृतो नत्वा वसिष्ठमृषिसत्तमम् ॥ ६ ॥
भगवन्केन धर्मेण मम लक्ष्मीरनुत्तमा । कस्माच्च विपुलं तेजो मच्छरीरे सदोत्तमम् ॥

वसिष्ठ उवाच ।

पुरा लीलावती नाम वेश्या शिवपरायणा ।
तया दत्तश्चतुर्दश्यां पुष्करे लवणाचलः ॥ ८ ॥

हेमवृक्षामरैः सार्द्धं यथावद्विधिपूर्वकम् । शूद्रःसुवर्णकारश्च कर्मकृत्सोऽभवत्तदा ॥
भृत्योलीलावतीगेहे तेन हैमीर्विनिर्मिताः । तरवो हेमपुष्पाश्च श्रद्धायुक्तेन पार्थिव ॥
अतिरूपेण संपन्ना घटितास्ते सुशोभनाः। धर्मकार्यमिति ज्ञात्वा न गृहीतं च वेतनम् ॥
उज्ज्वालिताश्च ते पत्न्या सुवर्णमयपादपाः । लीलावतीगृहे चापि परिचर्या च पार्थिव

कृता ताभ्यामशाठ्येन द्विजशुश्रूषणादिका ।
सा च लीलावती वेश्या कालेन महताऽनघ ॥ १३ ॥

सर्वपापविनिर्मुक्ता जगाम शिवमन्दिरम् । योऽसौसुवर्णकारश्च दरिद्रोऽप्यतिसत्त्ववान्
न मूल्यमादाद्वेश्यातः स भवानिह साम्प्रतम् । सप्तद्वीपपतिर्जातः सूर्यायुतसमप्रभः ॥
यया सुवर्णकारस्य तरवो हेमनिर्मिताः । सम्यगुज्ज्वलिताः पत्न्या सेयंभानुमती तव ॥

तस्मान्नृलोकेष्वपराजितस्त्वमारोग्यसौभाग्ययुता च लक्ष्मीः ।
तस्मात्त्वमप्यत्र विधानपूर्वं धान्याचलादीन्नृपते कुरुष्व ॥ १७ ॥

पुलस्त्य उवाच ।

तथेति संपूज्य सुधर्ममूर्तिर्वचो वसिष्ठस्य ददौ च सर्वान् ।
धान्याचलादीन्विधिना स्मरारेर्लोकं गतोऽसौ सुरपूज्यमानः ॥ १८ ॥
पश्येद्यदीमानुपनीयमानान्स्पृशेन्मनुष्यैरिह दीयमानान् ।
शृणोति भक्त्याऽथ मतिं ददाति विकल्मषः सोऽपि दिवं प्रयाति ॥ १९ ॥
दुःस्वप्नप्रशममुपैति पठ्यमानैः शैलेन्द्रैर्भवभयभेदनैर्मनुष्यः ।
यः कुर्यात्किमु नृपपुङ्गवेह सम्यक् शान्तात्मा सकलगिरीन्द्रसंप्रदानम् ॥२०॥

भीष्म उवाच ।

किमभीष्टवियोगशोकसंघानलमुद्धर्तुमुपोषणं व्रतं वा ।
विभवध्रुवकारि भूतलेऽस्मिन्भवभीतेरपि सूदनं च पुंसः ॥ २१ ॥

पुलस्त्य उवाच ।

परिपृष्टमिदं जगत्प्रियं ते विबुधानामपि दुर्लभं महत्वात् ।
तव भक्तिमतस्तथापि वक्ष्ये व्रतमिन्द्रासुरमानवेषु गुह्यम् ॥ २२ ॥
पुण्यमाश्वयुजे मासि विशोकद्वादशीव्रतम् । दशम्यां लघुभुग्विद्वान्प्रारभेत यमेन तु ॥
उदङ्मुखः प्राङ्मुखो वा दन्तधावनपूर्वकम् ।
एकादश्यां निराहारः सम्यगभ्यर्च्य केशवम् ॥ २४ ॥
श्रियंचाभ्यर्च्य विधिवद्भोक्ष्येऽहं चापरेऽहनि । एवं नियमकृत्सुप्त्वा प्रातरुत्थायमानवः
स्नानं सर्वौषधैः कुर्यात्पञ्चगव्यजलेन तु । शुभ्रमाल्याम्बरधरः पूजयेच्छ्रीशमुत्पलैः ॥२६।
विशोकाय नमः पादौ जंघे च वरदाय वै । श्रीशाय जानुनी तद्वदूरू च जलशायिने ॥
कन्दर्पाय नमो गुह्यं माधवाय नमः कटिम् । दामोदरायेत्युदरं पार्श्वे च विपुलाय वै
नाभिं च पद्मनाभाय हृदयं मन्मथाय वै । श्रीधराय विभोर्वक्षःकरौ मधुभिदे नमः ॥
वैकुण्ठाय नमः कण्ठमास्यं पद्ममुखाय वै ।
नासामशोकनिधये वासुदेवाय चाक्षिणी ॥ ३० ॥
ललाटं वामनायेति हरये च पुनर्भ्रुवौ । अलकं माधवायेति किरीटं विश्वरूपिणे ॥ ३१ ॥
नमः सर्वात्मने तद्वच्छिर इत्यभिपूजयेत् । एवं सम्पूज्य गोविन्दं धूपमाल्यानुलेपनैः ॥
ततस्तु मण्डलं कृत्वा स्थण्डिलं कारयेन्मृदा । चतुरस्रं समन्ताच्चारत्निमात्रमुदक्प्लवम्
श्लक्ष्णं हृद्यं च परितो वप्रत्रयसमावृतम् । त्रिरङ्गुलोच्छ्रिता वप्रास्तद्विस्तारो द्विरङ्गुलः
स्थण्डिलस्योपरिष्टात्तु भित्तिरष्टांगुला भवेत् ।
नदी वालुकया सूर्ये लक्ष्म्याः प्रतिकृतिं न्यसेत् ॥ ३५ ॥
स्थण्डिले सूर्यमध्यस्थ लक्ष्मीमभ्यर्चयेद्बुधः ।
नमो देव्यै नमः शान्त्यै नमो लक्ष्म्यै नमःश्रियै ॥ ३६ ॥
नमस्तुष्ट्यै नमःपुष्ट्यै सृष्ट्यै हृष्ट्यै नमोनमः। विशोका दुःखनाशायविशोकावरदास्तु मे
विशोका मेऽस्तु संपत्त्यै विशोका सर्वसिद्धये । ततःशुभ्राम्बरैःसूर्पं वेष्ट्यसम्पूजयेत्फलैः
भक्ष्यैर्नानाविधैस्तद्वत्सुवर्णकमलेन च । राजतीषु च पात्रीषु न्यसेद्दर्भोदकं बुधः ॥३६॥

ततस्तु नृत्यगीतानि कारयेत्सकलां निशाम् । यामत्रये व्यतीते तु तत उत्थाय मानवः
अभिगम्य च विप्राणां मिथुनानि च पूजयेत् । शक्तितस्त्रीणि चैकं वा वस्त्रमाल्यानुलेपनैः
शयनस्थानि पूज्यानि नमोऽस्तु जलशायिने । ततस्तु गीतवाद्येन रात्र्यां जागरणे कृते ॥
प्रभाते च ततः स्नानं कृत्वादाम्पत्यमर्चयेत् । भोजयेच्च यथाशक्ति वित्तशाठ्येन वर्जितः

भक्त्या श्रुत्वा पुराणानि तद्दिनं चातिवाहयेत् ।
अनेना विधिना सर्वं मासि मासि समाचरेत् ॥ ४४ ॥

व्रतान्ते शयनं दद्याद्गुडधेनुसमन्वितम् । सोपधानं सविश्रामं स्वास्तरावरणं शुभम् ॥
तथा लक्ष्मीर्नरेश त्वां न परित्यज्य गच्छति । तथा सुरूपतारोग्यमशोकं चास्तु मे सदा

यथा देवेन रहिता न लक्ष्मीर्जायते क्वचित् ।
यथा विशोकता मेऽस्तु भक्तिरग्र्या च केशवे ॥ ४७ ॥

मन्त्रेणानेन शयनं गुडधेनुसमन्वितम् । सूर्यश्च लक्ष्म्यासहितो दातव्यो भूतिमिच्छता ॥
उत्पलं करवीरं वाप्यम्लानंचैव कुङ्कुमम् । केतकं सिन्धुवारं च मल्लिकागन्धपाटला ॥

कदम्बं कुब्जकञ्जातीशस्तान्येतानि सर्वदा ।

भीष्म उवाच ।

गुडधेनुविधानं च समाचक्ष्व मुनीश्वर ॥ ५० ॥
किं रूपा केन मन्त्रेणदातव्या तदिहोच्यताम् ।

पुलस्त्य उवाच ।

गुडधेनुविधानस्य यद्रूपमिह यत्फलम् ॥ ५१ ॥

तदिदानीं प्रवक्ष्यामि सर्वपापविनाशनम् । कृष्णाजिनं चतुर्हस्तं प्राग्ग्रीवं विन्यसेद्भुवि ॥
गोमयेनानुलिप्तायां दर्भानास्तीर्य सर्वतः । लघ्वेणकाजिनं तद्वद्वत्सं च परिकल्पयेत् ॥
प्राङ्मुखीं कल्पयेद्धेनुंमृदा वा गांसवत्सकाम् । उत्तमा गुडधेनुःस्यात्सदाभारचतुष्टयम्

वत्सं भारेण कुर्वीत भाराभ्यां मध्यमा स्मृता ।
अर्द्धभारेण वत्सस्स्यात्कनिष्ठा भारकेण तु ॥ ५५ ॥
चतुर्थांशेन वत्सः स्याद् गृहवित्तानुसारतः ।

धेनुवत्सौ कृतौ चोभौ सितसूक्ष्माम्बरावृतौ ॥ ५६
शुक्तिकर्णाविक्षुपादौ शुचिमुक्ताफलेक्षणौ । सितसूत्रसिराजालौ सितकम्बलकम्बलौ ॥
ताम्रगण्डकपृष्ठौ द्वौ सितचामरलोमकौ । विद्रुमभ्रूयुगावेतौ नवनीतस्तनान्वितौ ॥५८
काञ्चनाक्षियुगोपेताविन्द्रनीलकनीनिकौ । क्षौमपुच्छौ कांस्यदोहौ शुभ्रातिकमनीयकौ
सुवर्णश्रृङ्गाभरणौ राजताढ्यखुरौ च तौ । नानाफलसमायुक्तौ घ्राणगन्धकरण्डकौ ॥
इत्येवं रचयित्वा तु धूपदीपैस्तथार्चयेत् । या लक्ष्मीस्सर्वभूतानां या च देवेष्ववस्थिता
धेनुरूपेणसा देवीममपापंव्यपोहतु । विष्णोर्वक्षसि या लक्ष्मीःस्वाहा याच विभावसौ
चन्द्रार्कशक्रशक्तिर्या सा धेनुर्वरदास्तु मे ।
स्वधा त्वं पितृमुख्यानां स्वाहा यज्ञभुजां यतः ॥ ६३ ॥
सर्वपापहरा धेनुस्तस्माद्भूतिं प्रयच्छ मे । एवमामन्त्र्य तां धेनुं ब्राह्मणाय निवेदयेत् ॥
विधानमेतद्धेनूनां सर्वासामपिपठ्यते । यास्तुपापविनाशिन्यः पठ्यन्ते दशधेनवः ॥६५॥
तासां स्वरूपं वक्ष्यामि नामानि च नराधिप । प्रथमा गुडधेनुःस्याद् घृतधेनुरथापरा ॥
तिलधेनुस्तृतीया च चतुर्थी जलनामिका । क्षीरधेनुः पञ्चमी च मधुधेनुस्तथा परा ॥
सप्तमी शर्कराधेनुरष्टमी दधिकल्पिता । रसधेनुश्च नवमी दशमीस्यात्स्वरूपतः ॥ ६८ ॥
कुम्भास्स्यू रसधेनूनामितरासां स्वराशयः ।
सुवर्णधेनुं चाप्यत्र केचिदिच्छन्ति मानवाः ॥ ६९ ॥
नवनीतेन तैलैश्च तथान्येऽपि महर्षयः । एतदेव विधानं स्यात्त एवोपस्करास्स्मृताः ॥
मन्त्रवाहनसंयुक्ताः सदा पर्वणि पर्वणि । यथाश्राद्धं प्रदातव्या भुक्तिमुक्तिफलप्रदाः
गुडधेनुप्रसङ्गेन सर्वास्तव मयोदिताः । अशेषयज्ञफलदाः सर्वपापहराः शुभाः ॥ ७२ ॥
व्रतानामुत्तमं यस्माद्विशोकद्वादशीव्रतम् । तदङ्गत्वेन चैवात्र गुडधेनुः प्रशस्यते ॥७३॥
अयने विषुवे पुण्ये व्यतीपाते तथा पुनः । गुडधेन्वादयो देया उपरागादि पर्वसु ॥७४॥
विशोकद्वादशी चैषा सर्वपापहराशुभा । यामुपोष्य नरो याति तद्विष्णोः परमं पदम्
इहलोके स सौभाग्यमायुरारोग्यमेव च । वैष्णवं पुरमाप्नोति मरणे स्मरणं हरेः॥७६॥
नवार्बुदसहस्राणि दश चाष्टौ च धर्मवित् ।

न शोकदुःखदौर्गत्यं तस्य सञ्जायते नृप ॥ ७७ ॥
नारी वा कुरुते या तु विशोकद्वादशीमिमाम् ।
नृत्यगीतपरा नित्यं साऽपि तत्फलमाप्नुयात् ॥
यस्मादग्रे हरेर्नृत्यमनन्तं गीतवादनम् ॥ ७८ ॥
इति पठति य इत्थं यः शृणोतीह सम्यङ् मधुमुरनरकारेरर्चनं वाथ पश्येत् ॥
मतिमपि च जनानां यो ददातीन्द्रलोके स वसति विबुधौघैःपूज्यते कल्पमेकम् ॥

भीष्मउवाच ।

भगवञ्श्रोतुमिच्छामि दानमाहात्म्यमुत्तमम् । यदक्षयं परे लोके देवर्षिगणपूजितम्॥८०

पुलस्त्य उवाच ।

मेरोः प्रदानं वक्ष्यामि दशधा नृपसत्तम ॥ ८१ ॥
यत्प्रदातानन्तलोकान्प्राप्नोति सुरपूजितान् । पुराणेषु च वेदेषु यज्ञेष्वायतनेषु च ॥८२
नतत्फलमधीतेषु कृतेष्विह यदश्नुते । तस्माद्दानं प्रवक्ष्यामि पर्वतानामनुक्रमात् ॥८३॥
प्रथमो धान्यशैलः स्याद्द्वितीयो लवणाचलः। गुडाचलस्तृतीयस्तु चतुर्थो हेमपर्वतः ॥
पञ्चमस्तिलशैलस्स्यात्षष्ठःकार्पासपर्वतः । सप्तमो घृतशैलःस्याद्रत्नशैलस्तथाष्टमः ॥
राजतो नवमस्तद्वद्दशमःशर्कराचलः । वक्ष्ये विधानमेतेषां यथावदनुपूर्वशः ॥ ८६ ॥
अयने विषुवे पुण्ये व्यतीपाते दिनक्षये । शुक्लपक्षेतृतीयायामुपरागे शशिक्षये ॥ ८७ ॥
विवाहोत्सवयज्ञेषु द्वादश्यामथवा पुनः । शुक्लायां पञ्चदश्यां वा पुण्यर्क्षे वा विधानतः
धान्यशैलादयो देयाः कार्तिक्यां ज्येष्ठपुष्करे । तीर्थेष्वायतनेवापि गोष्ठे वा भवनाङ्गणे
मण्डपं कारयेद्भक्त्या चतुरस्रमुदङ्मुखम् । प्रागुदक्प्रवणं पुण्यं प्राङ्मुखं वा विधानतः
गोमयेनानुलिप्तायां भूमावास्तीर्य वै कुशान् । तन्मध्ये पर्वतं कुर्याद्विष्कम्भंपर्वतान्वितम्
धान्यद्रोणसहस्रेण भवेद्गिरिरिहोत्तमः । मध्यमः पञ्चशतकैः कनिष्ठश्च त्रिभिःशतैः ॥
मेरुर्महाव्रीहिमयस्तु मध्ये सुवर्णवृक्षत्रयसंयुतः स्यात् ।
मूर्द्धन्यवस्थानमथाम्बरेण कार्यं त्वनेकं च पुनर्द्विजाग्र्यैः ॥ ९३ ॥
चत्वारि शृङ्गाणि च राजतानि नितम्ब भागा अपि राजताःस्युः ।

पूर्वेण मुक्ताफलवज्रयुक्तो याम्येन गोमेदकपद्मरागैः ॥ ९४ ॥
पश्चाच्च गारुत्मतनीलरत्नैः सौम्येन वैडूर्यकपुष्परागैः ।
श्रीखण्डखण्डैरभितःप्रवालै र्लतान्वितो मौक्तिकप्रस्तराढ्यः ॥ ९५ ॥
ब्रह्माऽथविष्णुर्भगवान्पुरारिर्दिवाकरोऽप्यत्र हिरण्मयःस्यात् ॥
तथेक्षुवंशावृतकन्दरस्तु घृतोदकप्रस्रवणो दिशासु ॥ ९६ ॥
शुभ्राम्बराण्यम्बुधरावलिः स्यात्पूर्वेण पीतानि च दक्षिणेन ।
वासांसि पश्चादथ कर्बुराणि रक्तानि चैवोत्तरतो घनानि ॥ ९७ ॥
रौप्यान्महेन्द्रप्रमुखांस्तथाऽष्टौ संस्थाप्य लोकाधिपतीन्क्रमेण ।
नानावनाली च समन्ततः स्यान्मनोरमम्माल्यविलेपनं च ९८ ॥
वितानकं चोपरि पञ्चवर्णमम्लानपुष्पाभरणं सितं च ।
इत्थं निवेश्यामरशैलमग्र्यं मेरोस्तु विष्कम्भगिरीन्क्रमेण ॥ ९९ ॥
तुरीयभागेन चतुर्दिशं च संस्थापयेत्पुष्पविलेपनाढ्यम् ।
पूर्वेण मन्दरमनेकफलैश्च युक्तं कामेन काञ्चनमयेन विराजमानम् ॥१००॥
याम्येन गन्धमदनो विनिवेशनीयो गोधूमसंचयमयः कलधौतवांश्च ।
हैमेन यज्ञपतिना घृतमानसेन वस्त्रेण राजतवनैश्च ससंयुतस्यात् ॥१०१॥
पश्चात्तिलाचलमनेकसुगन्धपुष्पसौवर्णपिप्पलहिरण्मयहंसयुक्तम् ।
आकारयेद्रजतपुष्पवनेन तद्वद्वस्त्रान्वितं दधिसितोदसरस्तथाग्रे ॥ १०२ ॥
संस्थाप्य तं विपुलशैलमथोत्तरेण शैलं सुपार्श्वमपि माषमयं सवस्त्रम् ।
पुष्पैश्च हेमवटपादपशेखरं तमाकारयेत्कनककेतुविराजमानम् ॥ १०३ ॥
माक्षीकभद्रसरसा च वनेन तद्वद्रौप्येण भासुरवितानयुतं विधाय ।
होमश्चतुर्भिरथवेदपुराणविद्भिर्दान्तैरनिन्द्यचरिताकृतिभिर्द्विजेन्द्रैः ॥१०४॥
पूर्वेण हस्तमितमत्र विधाय कुण्डं कार्यस्तिलैर्यवघृतेन समित्कुशैश्च ।
रात्रौ च जागरमनुद्धतगीतरूपैरावाहनं च कथयामि शिलोच्चयानाम् ॥१०५
त्वं सर्व देवगणधामनिधे विरुद्धमस्मद्गृहेष्वमरपर्वत नाशयाशु ।

क्षेमं विधत्स्व कुरु शान्तिमनुत्तमां च संपूजितः परमभक्तिमता मया हि ॥
त्वमेव भगवानीशो ब्रह्माविष्णुर्दिवाकरः । मूर्तामूर्तमयं बीजमतः पाहि सनातन ॥
यस्मात्त्वं लोकपालानां विश्वमूर्तेश्च मन्दिरम् ।
रुद्रादित्यवसूनां च तस्माच्छान्तिं प्रयच्छ मे ॥ १०८ ॥
यस्मादशून्यममरैर्नारीभिश्च शिरस्तव । तस्मान्मामुद्धरामुष्माद्दुःखसंसारसागरात् ॥
एवमभ्यर्च्य तं मेरुं मंदरं चाभिपूजयेत् । यस्माच्चैत्ररथेन त्वं भद्राश्वेन च पर्वत ॥
शोभसे मन्दरक्षिप्रमतस्तुष्टिकरो भव । यस्माच्चूडामणिर्जम्बूद्वीपे त्वं गन्धमादन ॥
गन्धर्वगणशोभावांस्ततः कीर्तिर्दृढास्तु मे । यस्मात्त्वं केतुमालेन वैभ्राजेन वनेन च ॥
हिरण्मयाश्मशोभावांस्तस्मात्पुष्टिर्ध्रुवास्तु मे । उत्तरैः कुरुभिर्यस्मात्सावित्रेण वनेन च
सुपार्श्वराजसे नित्यमतः श्रीरक्षयास्तु मे । एवमामन्त्र्य तान्सर्वान्प्रभाते विमलेपुनः ॥
स्नात्वा तु गुरवे दद्यान्मध्यमं पर्वतोत्तमम् । विष्कम्भपर्वतान्दद्यादृत्विग्भ्यःक्रमशोनृप ॥
गावो देयाश्चतुर्विंशदथवा दश पार्थिव । शक्तितः सप्त चाष्टौ वा पञ्च दद्यादशक्तिमान्
एकापि गुरवे देया कपिलाऽथ पयस्विनी । पर्वतामामशेषाणामेष एव विधिःस्मृतः ॥
त एव पूजने मन्त्रास्त एवोपस्कराःस्मृताः। ग्रहाणां लोकपालानां ब्रह्मादीनां च सर्वतः
स्वमन्त्रेणैव सर्वेषु होमः शैलेषु पठ्यते । उपवासी भवेन्नित्यमशक्तौ नक्तमिष्यते ॥
विधानं सर्वशैलानां क्रमशः शृणु पार्थिव । दानेषु चैव ये मन्त्राः पर्वतेषु यथाफलम् ॥
अन्नं ब्रह्म यतः प्रोक्तमन्नं प्राणाः प्रकीर्तिताः । अन्नाद्भवन्ति भूतानि जगदन्नेन वर्धते ॥
अन्नमेव यतोलक्ष्मीरन्नमेव जनार्दनः। धान्यपर्वतरूपेण पाहि तस्मान्नगोत्तम ॥ १२२॥
अनेन विधिना यस्तु दद्याद्धान्यमयं गिरिम् । मन्वन्तरशतं साग्रं देवलोके महीयते ।
अप्सरोगणगन्धर्वैराकीर्णेन विराजितः । विमानेन दिवः पृष्ठमायाति नृपसत्तम ॥
कर्मक्षये राजराज्यमाप्नोतीह न संशयः । अथातः संप्रवक्ष्यामि लवणाचलमुत्तमम् ॥
यत्प्रदानान्नरो लोकमाप्नोति शिवसंयुतम् । उत्तमःषोड़शद्रोणैःकर्तव्यो लवणाचलः
मध्यमश्च तदर्धेन चतुर्भिरधमस्मृतः । वित्तहीनो यथाशक्ति द्रोणादूर्द्ध्वं च कारयेत् ॥
चतुर्थांशेन विष्कम्भपर्वतान्कारयेत्पृथक् । विधानं पूर्ववत्कुर्याद्ब्रह्मादीनां च सर्वतः॥

तद्वद्धेममयं सर्वलोकपालनिवेशनम् । सरांसि वनवृक्षादि तद्वद्धान्यान्निवेशयेत् ॥१२९॥
कुर्याज्जागरमत्रापि दानमन्त्रान्निबोधत । सौभाग्यरससंयुक्तो यतोऽयं लवणे रसः ॥
तदात्मकत्वेन च मां पाह्यापन्नं नगोत्तम । यस्मादन्ये रसाः सर्वे नोत्कटा लवणं विना
प्रियश्च शिवयोर्नित्यं तस्माच्छान्तिप्रदो भव । विष्णुदेहसमुद्भूतो यस्मादारोग्यवर्धनः

तस्मात्पर्वतरूपेण पाहि संसारसागरात् ।
अनेन विधिना यस्तु दद्याल्लवणपर्वतम् ॥ १३३ ॥

उमालोके वसेत्कल्पं ततो याति परां गतिम् । अतःपरं प्रवक्ष्यामि गुडपर्वतमुत्तमम् ॥
यत्प्रदानान्नरः स्वर्गं प्राप्नोति सुरपूजितः । उत्तमो दशभिर्भारैर्मध्यमः पञ्चभिर्मतः ॥

त्रिभिर्भारैः कनिष्ठः स्यात्तदर्धेनाल्पवित्तवान् ।
तद्वदामन्त्रणं पूजां हैमवृक्षान्सुरार्चनम् ॥ १३६ ॥

विष्कम्भपर्वतांस्तद्वत्सरांसि वनदेवताः । होमं जागरणं तद्वल्लोकपालाधिवासनम् ॥
धान्यपर्वतवत्कुर्यादिमं मन्त्रमुदीरयेत् । यथा देवेषु विश्वात्मा प्रवरोऽयं जनार्दनः ॥

सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ।
प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा ॥ १३९ ॥ ?

तथा रसानां प्रवरः सदैवेक्षुरसो मतः । मम तस्मात्परां लक्ष्मीं ददातु गुडपर्वतः ॥
यस्मात्सौभाग्यदायिन्या धामत्वं गुडपर्वत । निर्मितश्चादिपार्वत्यातस्मान्मांपाहिसर्वदा
अनेन विधिना यस्तु दद्याद्गुडमयं गिरिम् । सम्पूज्यमानो गन्धर्वैं गौरीलोके महीयते
पुनः कल्पशतान्ते च सप्तद्वीपाधिपो भवेत् । आयुरारोग्यसंपन्नः शत्रुभिश्चापराजितः
अथ पापहरं वक्ष्ये सुवर्णाचलमुत्तमम् । यस्य प्रदानाद्भवनं वैरिञ्चं यान्ति मानवाः ॥
उत्तमः पलसाहस्रो मध्यमः पञ्चभिः शतैः । तदर्धेनाधमस्तद्वदल्पवित्तोऽपि मानवः ॥
दद्यादेकपलादूर्ध्वं यथाशक्ति विमत्सरः । धान्यपर्वतवत्सर्वं विदध्याद्राजसत्तम ॥

विष्कम्भशैलांस्तद्वच्च ऋत्विग्भ्यःप्रतिपादयेत् ।
नमस्ते सर्वबीजाय ब्रह्मगर्भाय वै नमः ॥ १४७ ॥

यस्मादनन्तफलदस्तस्मात्पाहि शिलोच्चय । यस्मादग्नेरपत्यं त्वं यस्मात्पुत्रोजगत्पतेः

हेमपर्वतरूपेण तस्मात्पाहि नगोत्तम। अनेन विधिना यस्तु दद्यात्कनकपर्वतम् ॥
स याति परमं ब्रह्मलोकमानन्दकारकम्। तत्र कल्पशतं तिष्ठेत्ततो याति परांगतिम् ॥
अथातः संप्रवक्ष्यामि तिलशैलं विधानतः। यत्प्रदानान्नरो याति विष्णुलोकमनुत्तमम्

उत्तमो दशभिर्द्रोणैर्मध्यमः पञ्चभिः स्मृतः।
त्रिभिः कनिष्ठो राजेन्द्र तिलशैलः प्रकीर्तितः ॥ १५२ ॥

पूर्ववच्चापरं सर्वं विष्कम्भपर्वतादिकम्। दानमन्त्रं प्रवक्ष्यामि यथा च नृपपुङ्गव ॥
यस्मान्मधुवधे विष्णोर्देहस्वेदसमुद्भवाः। तिलाःकुशाश्च माषाश्च तस्माच्छान्तिप्रदोभव
हव्यकव्येषुयस्माच्च तिला एव हि रक्षणम्। लक्ष्मीं च कुरुशैलेन्द्र तिलाचलनमोऽस्तुते

इत्यामन्त्र्य च यो दद्यात्तिलाचलमनुत्तमम्।
स वैष्णवं पदं याति पुनरावृत्तिदुर्लभम् ॥ १५६ ॥

कार्पासपर्वतश्चैव विंशद्भारैरिहोत्तमः। दशभिर्मध्यमः प्रोक्तः कनिष्ठः पञ्चभिर्मतः ॥१५७
भारेणाल्पधनो दद्याद्वित्तशाठ्यविवर्जितः। धान्यपर्वतवत्सर्वमासाद्यं राजसत्तम॥१५८॥
प्रभातायां च शर्वर्यां दद्यादिदमुदीरयेत्। त्वमेवावरणं यस्माल्लोकानामिह सर्वदा ॥
कार्पासाद्रे नमस्तस्मादघौघध्वंसनो भव। इति कार्पासशैलेन्द्रं यो दद्याच्छर्वसंनिधौ
रुद्रलोके वसेत्कल्पं ततो राजा भवेदिह। अथातः संप्रवक्ष्यामि घृताचलमनुत्तमम् ॥

तेजोमयं घृतं पुण्यं महापातकनाशनम्।
विंशत्याघृतकुम्भानामुत्तमःस्याद् घृताचलः ॥ १६२ ॥
दशभिर्मध्यमः प्रोक्तः पञ्चभिस्त्वधमः स्मृतः।
अल्पवित्तोऽपि कुर्वीत द्वाभ्यामिह विधानतः ॥ १६३ ॥

विष्कम्भपर्वतांस्तद्वच्चतुर्भागेन कल्पयेत्। शालितण्डुलपात्राणि कुम्भोपरि निवेशयेत्
कारयेत्संहतानुच्चान्यथाशोभं विधानतः। वेष्टयेच्छुक्लवासोभिरिक्षुदण्डफलादिकैः ॥
धान्यपर्वतवत्सर्वं विधानमिह पठ्यते। अधिवासनपूर्वं हि तद्वद्धोम सुरार्चनम् ॥१६६॥
प्रभातायां च शर्वर्यां गुरवे विनिवेदयेत्। विष्कम्भपर्वतांस्तद्वद्दत्विग्भ्यःशान्तमानसः
संयोगाद्घृतमुत्पन्नं यस्मादमृततेजसि। तस्माद्घृतार्चिर्विश्वात्मा प्रीयतामत्र शंकरः

यस्मात्तेजोमयं ब्रह्म घृते चैव व्यवस्थितम्। घृतपर्वतरूपेण तस्मान्नः पाहि भूधर ॥
अनेन विधिना दद्याद् घृताचलमनुत्तमम्।
महापातकयुक्तोऽपि लोकमायाति शाम्भवम् ॥ १७० ॥
हंससारसयुक्तेन किङ्किणीजालमालिना। विमानेनाप्सरोभिश्च सिद्धविद्याधरैर्वृतः ॥
विचरेत्पितृभिःसार्धं यावदाभूतसम्प्लवम्। अथातः संप्रवक्ष्यामि रत्नाचलमनुत्तमम् ॥
मुक्ताफलसहस्रेण पर्वतस्यादनुत्तमः। मध्यमः पञ्चशतिकस्त्रिशतेनाधमः स्मृतः ॥१७३
चतुर्थांशेन विष्कम्भपर्वताः स्युः समन्ततः। पूर्वेण वज्रगोमेदैर्दक्षिणेनेन्द्रनीलकैः ॥
पुष्परागैर्युतः कार्यो विद्वद्भिर्गन्धमादनः।
वैडूर्यविद्रुमैः पश्चात्संमिश्रो विपुलाचलः ॥ १७५ ॥
पद्मरागैःससौवर्णैरुत्तरेणापि विन्यसेत्। धान्यपर्वतवत्सर्वमत्रापि परिकल्पयेत् ॥
तद्वदावाहनं कृत्वा वृक्षान्देवांश्च काञ्चनान्। पूजयेत्पुष्पगन्धाद्यैः प्रभाते स्याद्विसर्जनम्
पूर्ववद्गुरुऋत्विग्भ्य इमं मन्त्रमुदीरयेत्। यथा देवगणाः सर्वे सर्वरत्नेष्ववस्थिताः ॥
त्वं च रत्नमयो नित्यमतः पाहि महाचल। यस्माद्रत्नप्रदानेन तुष्टिमेति जनार्दनः ॥
पूजामन्त्रप्रसादेन तस्मान्नः पाहि पर्वत।
अनेन विधिना यस्तु दद्याद्रत्नमयं गिरिम् ॥ १८० ॥
स याति वैष्णवं लोकममरेश्वरपूजितः। यावत्कल्पशतं साग्रं वसेत्तत्र नराधिप ॥
रूपारोग्यगुणोपेतः सप्तद्वीपाधिपोभवेत्। ब्रह्महत्यादिकं किञ्चिदत्रामुत्राथ वा कृतम् ॥
तत्सर्वं नाशमायाति गिरिर्वज्राहतो यथा।
अथातः संप्रवक्ष्यामि रौप्याचलमनुत्तमम् ॥ १८३ ॥
यत्प्रदानान्नरो याति सोमलोकं नरोत्तम। दशभिः पलसाहस्रैरुत्तमो रजताचलः ॥
पञ्चभिर्मध्यमः प्रोक्तस्तदर्धेनाधमः स्मृतः। अशक्तो विंशतेरूर्ध्वं कारयेच्छक्तितःसदा ॥
विष्कंभपर्वतांस्तद्वत्तुरीयांशेन कल्पयेत्। पूर्ववद्राजतान्कुर्यान्मन्दरादीन्विधानतः ॥१८६
कलधौतमयांस्तद्वल्लोकेशान्कारयेद् बुधः। ब्रह्मविष्णवर्कवान्कार्यो नितम्बोऽत्रहिरण्मयः
राजतं स्यात्तदन्येषां पर्वतानां च काञ्चनम्। शेषं च पूर्ववत्कुर्याद्धोमजागरणादिकम् ॥

दद्यात्तद्वत्प्रभाते तु गुरवे रौप्यपर्वतम् ।
विष्कंभशैलानृत्विग्भ्यः पूज्य वस्त्रविभूषणैः ॥ १८६ ॥

इमं मन्त्रं पठन्दद्याद्दर्भपाणिर्विमत्सरः । पितॄणां वल्लभं यस्माद्धिन्दोर्वा शङ्करस्य च ॥
रजतं पाहि तस्मान्नः शोकसंसारसागरात् । इत्थं निवेश्य यो दद्याद्रजातचलमुत्तमम् ॥
गवामयुतसाहस्रफलमाप्नोति मानवः । सोमलोके सगन्धर्वैः किन्नराप्सरसांगणैः ॥
पूज्यमानो वसेद्विद्वान्यावदाभूतसंप्लवम् । अथातः संप्रवक्ष्यामि शर्कराचलमुत्तमम् ॥
यस्य प्रदानाद्विष्णवर्करुद्रास्तुष्यन्ति सर्वदा । अष्टभिः शर्कराभारैरुत्तमः स्यान्महाचलः

चतुर्भिर्मध्यमः प्रोक्तो भाराभ्यामधमःस्मृतम् ।
भारेण चार्द्धभारेण कुर्याद्यः स्वल्पवित्तवान् ॥ १९५ ॥

विष्कंभपर्वतान्कुर्यात्तुरीयांशेन मानवः । धान्यपर्वतवत्सर्वं हैमामरसुसंयुतम् ॥१९६॥
मेरोरुपरितःस्थाप्यं हैमं तत्र तरुत्रयम् । मंदारःपारिजातश्च तृतीयः कल्पपादपः ॥१९७॥
एतद्वृक्षत्रयं मूर्ध्निसर्वेष्वपि निवेशयेत् । हरिचन्दनसंतानौ पूर्वपश्चिमभागयोः ॥१९८॥
निवेश्यौ सर्वशैलेषु विशेषाच्छर्कराचले । मन्दरे कामदेवस्तु प्रत्यग्वक्त्रः सदा भवेत् ॥

गंधमादनश्रृङ्गे तु धनदः स्यादुदङ्मुखः ।
प्राङ्मुखो वेदमूर्तिस्तु हंसः स्याद्विपुलाचले ॥ २०० ॥

हैमी भवेत्सुपार्श्वे तु सुरभी दक्षिणामुखी । धान्यपर्वतवत्सर्वमावाहनमखादिकम् ॥
कृत्वाऽथगुरवे दद्यान्मध्यमं पर्वतोत्तमम् । ऋत्विग्भ्यश्चतुरः शैलानिमान्मन्त्रानुदीरयेत्
सौभाग्यामृतसारोऽयं परमःशर्कराचलः । तस्मादानन्दकारी त्वं भव शैलेन्द्र सर्वदा ॥
अमृतं पिबतां ये तु पतिता भुवि शीकराः । देवानां तत्समुत्थस्त्वं पाहिनः शर्कराचल

मनोभवधनुर्मध्यादुद्भूता शर्करा पुनः ।
तन्मयोऽसि महाशैल पाहि संसारसागरात् ॥ २०५ ॥

यो दद्याच्छर्कराशैलमनेन विधिना नरः । सर्वपापविनिर्मुक्तः प्रयाति ब्रह्ममन्दिरम् ॥
चन्द्रसूर्यप्रतीकाशमधिरुह्यानुजीविभिः । सहैव यानमुत्तिष्ठेत्ततो विष्णुप्रभो दिवि ॥
ततः कल्पशतान्ते तु सप्तद्वीपाधिपो भवेत् । आयुरारोग्यसंपन्नो यावज्जन्मायुतत्रयम् ॥

भोजनं शक्तितः कुर्यात्सर्वशैलेष्वमत्सरः। स्वयं चाक्षारलवणमश्नीयात्तदनुज्ञया॥२०९
पर्वतोपस्करान्सर्वान्प्रापयेद्ब्राह्मणालयम्। एतत्ते सर्वमाख्यातं शैलदानमनुत्तमम्॥
यदन्यद्रोचते तुभ्यं तन्मां पृच्छस्व पार्थिव!।

भीष्म उवाच।

भगवन्भवसंसारसागरोत्तारकारकम्॥ २११॥
किञ्चिद् व्रतं समाचक्ष्व स्वर्गारोग्यफलप्रदम्।

पुलस्त्य उवाच।

सौरधर्मं प्रवक्ष्यामि नाम्ना कल्याणसप्तमीम्॥ २१२॥
विशोकसप्तमीं तत्तद्वत्तृतीयां फलसप्तमीम्। शर्करासप्तमीं कुर्यात्तथा कमलसप्तमीम्॥
मन्दारसप्तमीं षष्ठीं सप्तमीं शुभसप्तमीम्। सर्वाः पुण्यफलाः प्रोक्ताः सर्वादेवर्षिपूजिताः
विधानमासां वक्ष्यामि यथावदनुपूर्वशः। यदा तु शुक्लसप्तम्यामादित्यस्य दिनंभवेत्
सा तु कल्याणिनी नाम विजयाच निगद्यते। प्रातर्गव्येन पयसा स्नानं नद्या समाचरेत्
शुक्लाम्बरधरः पद्ममक्षतैः परिकल्पयेत्।
प्राङ्मुखोऽष्टदलं मध्येतद्वद्वृत्तां च कर्णिकाम्॥ २१७॥
पुष्पाक्षताद्भिर्देवेशं विन्यसेत्सर्वतः क्रमात्। पूर्वेण तपनायेति मार्तण्डायेति वै ततः॥
याम्ये दिवाकरायेति विधात्र इति नैर्ऋते। पश्चिमे वरुणायेति भास्करायेति चानिले
सौम्ये विकर्तनायेति देवायेत्यष्टमे दले। आदावंते च मध्ये च नमोऽस्तु परमात्मने॥
मन्त्रैरेतैस्समभ्यर्च्य नमस्कारान्तदापितैः। शुक्लैर्वस्त्रैःफलैर्भक्ष्यैर्धूपमाल्यानुलेपनैः॥
स्थण्डिले पूजयेद्भक्त्या गुडेन लवणेन वै।
ततो व्याहृतिमन्त्रेण विसृज्य द्विजपुङ्गवान्॥ २२२॥
शक्तितस्तर्पयेद्भक्त्या गुडक्षीरघृतादिभिः। तिलपात्रं हिरण्यं च ब्राह्मणाय निवेदयेत्॥
एवं नियमकृत्सुप्त्वा प्रातरुत्थाय मानवः। कृतस्नानजपो विप्रैः सहैवघृतपायसम्॥
भुक्त्वा च वेदविदुषि वैडालव्रतवर्जिते। घृतपात्रं सकनकं सोदकुंभं निवेदयेत्॥२२५॥
प्रीयतामत्र भगवान्परमात्मा दिवाकरः। अनेन विधिना सर्वं मासि मासि समाचरेत्

ततस्त्रयोदशे मासि गाश्च दद्यात्त्रयोदश।
वस्त्रालंकारसंयुक्ताः स्वर्णशृङ्गाः पयस्विनीः ॥ २२७ ॥
एकामपि प्रदद्याच्च वित्तहीनो विमत्सरः। न वित्तशाठ्यं कुर्वीत यतो मोहात्पतत्यधः
अनेन विधिना यस्तु कुर्यात्कल्याणसप्तमीम्। सर्वपापविनिर्मुक्तः सूर्यलोके महीयते॥
आयुरारोग्यमैश्वर्यमनंतमिह जायते। सर्वपापहरा चेयं सर्वदैवतपूजिता ॥ २३०॥
सर्वदुष्टोपशमनी सदा कल्याणसप्तमीम्। इमामनन्तफलदां यस्तु कल्याणसप्तमीम्॥
शृणोति यः पठेद्वापि स च पापैः प्रमुच्यते। विशोकसप्तमीं तद्वद्वक्ष्यामि नृपसत्तम॥
यामुपोष्य नरःशोकं न कदाचिदिहाश्नुते।
माघे कृष्णतिलैः स्नातः पंचम्यां शुक्लपक्षतः ॥ २३३ ॥
कृताहारःकृसरया दन्तधावनपूर्वकम्। उपवासव्रतं कृत्वा ब्रह्मचारी निशि स्वपेत् ॥२३४
ततः प्रभात उत्थाय कृतस्नानजपः शुचिः। कृत्वा तु काञ्चनं पद्ममर्कायेति प्रपूजयेत्॥
करवीरेण रक्तेन रक्तवस्त्रयुगेन च। यथा विशोकं भुवनं त्वयैवादित्य सर्वदा ॥२३६॥
तथा विशोकता मे स्यात्त्वद्भक्तिः प्रति जन्म च।
एवं सम्पूज्य षष्ठ्यां तु भक्त्या सम्पूजयेद्द्विजान् ॥ २३७ ॥
स्वयं सम्प्राश्य गोमूत्रमुत्थाय कृतनैत्यकः। सम्पूज्य विप्रान्यत्नेन गुडपात्रसमन्वितम्
सद्वस्त्रयुग्मं पद्मं च ब्राह्मणाय निवेदयेत्। अतैललवणं भुक्त्वा सप्तम्यां मौनसंयुतः॥
ततः पुराणश्रवणं कर्तव्यं भूतिमिच्छता। अनेन विधिना सर्वमुभयोरपि पक्षयोः॥
कुर्याद्यावत्पुनर्माघशुक्लपक्षस्य सप्तमी। व्रतांते कलशं दद्यात्सुवर्णकमलान्वितम्॥
शय्यां सोपस्करां दद्यात्कपिलां च पयस्विनीम्।
अनेन विधिनायस्तु वित्तशाठ्येन वर्जितः ॥ २४२ ॥
विशोकसप्तमीं कुर्यात्सयाति परमांगतिम्। यावज्जन्मसहस्राणां साग्रं कोटिशतंभवेत्
तावन्नशोकमाप्नोति रोगदौर्गत्यवर्जितः। यं यं कामयते कामं तं तं प्राप्नोति पुष्कलम्
निष्कामं कुरुते यस्तु स परं ब्रह्म गच्छति।
यः पठेच्छृणुयाद्वापि विशोकाख्यां तु सप्तमीम् ॥ २४५ ॥

सोऽपीन्द्रलोकमासाद्य न दुःखी जायते क्वचित् ।
अन्यामपि प्रवक्ष्यामि नाम्ना तु फलसप्तमीम् ॥ २४६ ॥
यामुपोष्यनरः पापैर्विमुक्तः स्वर्गभाग्भवेत् । मार्गशीर्षे शुभे मासि पञ्चम्यां नियतव्रतः ॥
षष्ठीमुपोष्य कमलं कारयित्वा तु काञ्चनम् । शर्करासंयुतं दद्याद्ब्राह्मणाय कुटुम्बिने ॥
रूपं च काञ्चनं कृत्वा फलस्यैकस्य धर्मवित् । दद्याद्द्विकालवेलायां भानुर्मेप्रीयतामिति
शक्त्या तु विप्रान्सम्पूज्य सप्तम्यां क्षीरभोजनम् ।
कृत्वा कुर्यात्फलत्यागं यावत्स्यात्कृष्णसप्तमी ॥ २५० ॥
तामुपोष्याथ विधिवदनेनैव क्रमेण तु । तद्वद्धेमफलं दत्त्वा सुवर्णकमलान्वितम् ॥
शर्करापात्रसंयुक्तं वस्त्रमालासमन्वितम् । संवत्सरमनेनैव विधिनोभयसप्तमीम् ॥२५२
उपोष्य दद्यात्क्रमशः सूर्यमन्त्रमुदीरयेत् । भानुरर्कोरविर्ब्रह्मासूर्यःशक्रोहरिः शिवः ॥
श्रीमान्विभावसुस्त्वष्टा वरुणः प्रीयतामिति । प्रतिमासं च सप्तम्यामेकैकं नामकीर्त्तयेत्
प्रतिपक्षं फलत्यागमेतत्कुर्वन्समाचरेत् । व्रतान्ते विप्रमिथुनं पूजयेद्वस्त्रभूषणैः ॥ २५५ ॥
शर्कराकलशं दद्याद्धेमपद्मफलान्वितम् । यथा न विफलः कामस्त्वद्भक्तानां सदा भवेत्
तथानन्तफलावाप्तिरस्तु मे जन्मजन्मनि । इमामनन्तफलदां यः कुर्यात्फलसप्तमीम् ॥
भूतभव्यांश्च पुरुषांस्तारयेदेकविंशतिम् ।
यः शृणोति पठेद्वापि सोऽपि कल्याणभाग्भवेत् ॥ २५८ ॥
सर्वपापविशुद्धात्मा सूर्यलोके महीयते । सुरापानादिकं किञ्चिदत्रामुत्र च वा कृतम् ॥
तत्सर्वं नाशमायाति यःकुर्यात्फलसप्तमीम् । शर्करासप्तमींवक्ष्ये तद्वत्कल्मपनाशिनीम्
आयुरारोग्यमैश्वर्यं ययानन्तं प्रजायते । माधवस्य सिते पक्षे सप्तम्यां नियतव्रतः ॥
प्रातः स्नात्वा तिलैः शुभ्रैः शुद्धमाल्यानुलेपनः ।
स्थण्डिले पद्ममालिख्य कुङ्कुमेन सकर्णिकम् ॥ २६२ ॥
तस्मिन्नमः सवित्रेति गन्धपुष्पं निवेदयेत् । स्थापयेदुदकुम्भं च शर्करापात्रसंयुतम् ॥
शुक्लवस्त्रैरलङ्कृत्य शुक्लमाल्यानुलेपनैः । स्वर्णपुष्पसमायुक्तं मन्त्रेणानेन पूजयेत् ॥
विश्ववेदमयो यस्मात्त्वं वेदेषु च पठ्यसे । त्वमेवामृतसर्वस्वमतःशान्तिं प्रयच्छ मे ॥

पञ्चगव्यं ततः पीत्वा स्वपेत्तत्पार्श्वतः क्षितौ । सौरसूक्तं जपन्नास्ते पुराणश्रवणेन च
अहोरात्रे गते पश्चादष्टम्यां कृतनैत्यकः । तत्सर्ववेदविदुषे ब्राह्मणाय निवेदयेत् ॥२६७॥
भोजयेच्छक्तितो विप्राञ्छर्कराघृतपायसैः । भुञ्जीतातैललवणं स्वयमप्यथ वाग्यतः ॥
अनेन विधिना सर्वं मासि मासि समाचरेत् । संवत्सरान्ते शयनं शर्कराकलशान्वितम्

सर्वोपस्करसंयुक्तं तथैकां गां पयस्विनीम् ।
गृहं च शक्तिमान्दद्यात्समस्तोपस्करान्वितम् ॥ २७० ॥
सहस्रेणाथ निष्काणां कृत्वा दद्याच्छतेन वा ।
दशभिर्वा त्रिभिर्वापि निष्केणैकेन वा पुनः ॥ २७१ ॥
पद्मं स्वशक्तितो दद्यात्पूर्ववन्मन्त्रपाठनम् ।
वित्तशाठ्यं न कुर्वीत कुर्वन्दोषान्समश्नुते ॥ २७२ ॥

अमृतं पिबतो वक्त्रात्सूर्यस्यामृतबिन्दवः । समुत्पेतुर्द्धरण्यां ये शालिमुद्गेक्षवस्तु ते ॥
शर्करायारसस्तस्मादिक्षुसारोऽमृतात्मवान् । इष्टा रवेरतःपुण्या शर्करा हव्यकव्ययोः
शर्करासप्तमी चेयं वाजिमेधफलप्रदा । सर्वदुष्टोपशमनी पुत्रपौत्रविवर्धिनी ॥ २७५ ॥
यःकुर्यात्परया भक्त्या स परं ब्रह्मगच्छति । कल्पमेकं वसेत्स्वर्गे ततो याति परं पदम्

इदमनघ शृणोति यः स्मरेद्वा परिपठतीह सुरेश्वरस्य लोके ।
मतिमपि च ददाति सोऽपि देवैरमरपुरे परिपूज्यते मुनीन्द्रैः ॥२७७॥

अतःपरं प्रवक्ष्यामि तद्वत्कमलसप्तमीम् । यस्यास्संकीर्त्तनादेव तुष्यतीह दिवाकरः ॥
वसन्तामलसप्तम्यां सुस्नातो गौरसर्षपैः । तिलपात्रे च सौवर्णं निधाय कमलं शुभम् ॥
वस्त्रयुग्मावृतं कृत्वा गन्धपुष्पैरथार्चयेत् । नमस्ते पद्महस्ताय नमस्ते विश्वधारिणे ॥
दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तुते । ततो द्विकालवेलायामुदकुम्भसमन्वितम् ॥
विप्राय दद्यात्सम्पूज्य वस्त्रमाल्यविभूषणैः । शक्तितः कपिलां दद्यादलङ्कृत्य विधानतः
अहोरात्रे गते पश्चादष्टम्यां भोजयेद्द्विजान् । यथाशक्ति च भुञ्जीत विमांसतैलवर्जितम्
अनेन विधिना शुक्लसप्तम्यां मासि मासि च । सर्वं समाचरेद्भक्त्या वित्तशाठ्यविवर्जितः

व्रतान्ते शयनं दद्यात्सुवर्णकमलान्वितम् ॥ २८५ ॥

गाश्च प्रदद्याच्छक्त्या तु सुवर्णस्य पयस्विनीः। भाजनासनदीपादीन्दद्यादिष्टानुपस्करान्
अनेन विधिना यस्तु कुर्यात्कमलसप्तमीम्। लक्ष्मीमनन्तामध्येति सूर्यलोके च मोदते

कल्पे कल्पे ततो लोकान्सप्त गत्वा पृथक् पृथक्।
अप्सरोभिः परिवृतस्ततो याति परां गतिम् ॥ २८८ ॥
पश्येदिमां यः शृणुयान्मुहूर्तं पठेच्च भक्त्याऽथ मतिं ददाति।
सोऽप्यत्र लक्ष्मीममलामवाप्यगन्धर्वविद्याधरलोकमेति ॥ २८६ ॥

अतः परं प्रवक्ष्यामि सर्वपापप्रणाशिनीम्। सर्वकामप्रदां पुण्यां नाम्ना मन्दारसप्तमीम्
माघस्यामलपक्षे तु पञ्चम्यां लघुभुङ्नरः। दन्तकाष्ठं ततः कृत्वा षष्ठीमुपवसेद्बुधः ॥

विप्रान्सम्पूजयित्वा तु मन्दारं प्राशयेन्निशि।
ततः प्रभात उत्थाय कृत्वा स्नानं पुनर्द्विजान् ॥ २९२ ॥
भोजयेच्छक्तितः कुर्यान्मन्दारकुसुमाष्टकम्।
सौवर्णं पुरुषं तद्वत्पद्महस्तं सुशोभनम् ॥ २९३ ॥

पद्मं कृष्णतिलैः कृत्वा ताम्रपात्रेऽष्टपत्रकम्। हेममन्दारकुसुमैर्भास्कारायेति पूर्वतः ॥
नमस्कारेण तद्वच्च सूर्यायेत्यमले दले। दक्षिणे तद्वदर्काय तथार्यम्णे च नैर्ऋते ॥
पश्चिमे वेदधाम्ने च वायव्ये चण्डभानवे। पूष्णे चोत्तरतःपूज्य आनन्दायेति तत्परम्

कर्णिकायां च पुरुषः स्थाप्यः सर्वात्मनेऽपि च।
शुक्लवस्त्रैःसमावेष्ट्य भक्ष्यैर्माल्यफलादिभिः ॥ २९७ ॥

एवमभ्यर्च्य तत्सर्वं दद्याद्वेदविदे पुनः। भुञ्जीतातैललवणं वाग्यतः प्राङ्मुखो गृही ॥
अनेन विधिना सर्वं सप्तम्यां मासि मासि च। कुर्यात्संवत्सरं यावद्वित्तशाठ्यविवर्जितः
एतदेव व्रतान्ते तु निधाय कलशोपरि। गोभिर्विभवतः सार्द्धं दातव्यं भूतिमिच्छता ॥
नमो मन्दारनाथाय मन्दारभवनाय च। त्वं रवे! तारयस्वास्मानस्मात्संसारसागरात्

अनेन विधिना यस्तु कुर्यान्मन्दारसप्तमीम्।
विपाप्मा स सुखी मर्त्यः कल्पं च दिवि मोदते ॥ ३०२ ॥

इमामघौघपटलभीषणध्वान्तदीपिकाम्। गच्छन्सङ्गृह्य संसारशर्वर्यां न स्खलेन्नरः ॥

मन्दारसप्तमीमेतामीप्सितार्थफलप्रदाम् । यः पठे च्छृणुयाद्वापि सोऽपि पापैः प्रमुच्यते
अथान्यामपि वक्ष्यामि शोभनां शुभसप्तमीम् । यामुपोष्य नरो रोगशोकौघात्तुप्रमुच्यते
पुण्यमाश्वयुजे मासि कृतस्नानजपः शुचिः ॥
वाचयित्वा ततो विप्रानारभेच्छुभसप्तमीम् ॥ ३०६ ॥
कपिलां पूजयेद्भक्त्या गन्धमाल्यानुलेपनैः । नमामि सूर्यसम्भूतामशेषभुवनालयाम् ॥
त्वामहं शुभकल्याणि स्वशरीरविशुद्धये । अथ कृत्वा तिलप्रस्थं ताम्रपात्रेण संयुतम्
काञ्चनं वृषभं तद्वद्वस्त्रमाल्यगुडान्वितम् । सोपधानं च विश्रामभाजनासनसंयुतम् ॥
फलैर्नानाविधैर्भक्ष्यैर्घृतपायससंयुतैः । दद्यादुद्धिकालवेलायामर्यमाप्रीयतामिति ॥
पञ्चगव्यं च संप्राश्य स्वपेद्भूमावसंस्तरे । ततः प्रभाते सञ्जाते भक्त्या संतर्पयेद्द्विजान्
अनेन विधिना दद्यान्मासि मासि सदा नरः । वाससी वृषभंहैमंलद्धद्गां काञ्चनोद्भवाम्
संवत्सरान्ते शयनमिक्षुदण्डगुडान्वितम् । ताम्रपात्रे तिलप्रस्थं सौवर्णं वृषभं तथा ॥
दद्याद्वेदविदे सर्वं विश्वात्मा प्रीयतामिति । अनेन विधिनाविद्वान्कुर्याद्यःशुभसप्तमीम् ॥
तस्य श्रीर्विमला कीर्त्तिर्भवेज्जन्मनि जन्मनि । अप्सरोगणगन्धर्वैःपूज्यमानःसुरालये
वसेद्गणाधिपो भूत्वा यावदाभूतसम्प्लवम् । कल्पादाववतीर्णश्च सप्तद्वीपाधिपो भवेत्
भ्रूणहत्यासहस्रस्य ब्रह्महत्याशतस्य च । नाशायालमियं पुण्या पठ्यते शुभसप्तमी ॥
इमां पठेद्यः शृणुयान्मुहूर्तं पश्येत्प्रसंगादपि दीयमानम् ।
सोऽप्यत्र सर्वाघविमुक्तदेहः प्राप्नोति विद्याधरनायकत्वम् ॥ ३१८ ॥
यावत्समास्सप्त नरः करोति यः सप्तमीं सप्तविधानयुक्ताम् ।
स सप्तलोकाधिपतिः क्रमेण भूत्वा पदं याति परं मुरारेः ॥ ३१६ ॥
इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे पुष्करमाहात्य एकविंशोऽध्यायः ।

———

# द्वात्रिंशोऽध्यायः

## इन्द्रदत्तशापेनाग्निमारुतयोः पृथिव्यां जन्मवर्णनम् ।

भीष्म उवाच ।

भूर्लोकोऽथ भुवर्लोकःस्वर्लोकोऽथमहर्जनः । तपः सत्यं च सप्तैते देवलोकाःप्रकीर्तिताः
पर्यायेण तु सर्वेषामाधिपत्यं कथं भवेत् । इह लोके शुभं रूपमायुरारोग्यमेव च ॥२॥
लक्ष्मीश्च विपुला ब्रह्मन्कथं स्यात्सुरपूजित ॥

पुलस्त्य उवाच ।

पुरा हुताशनःसार्द्धं मारुतेन महीतले ॥ ३ ॥
आदिष्टः पुरुहूतेन विनाशाय सुरद्विषाम् । निर्दग्धेषु ततस्तेन दानवेषु सहस्रशः ॥ ४॥
तारकः कमलाक्षश्च कालदंष्ट्रःपरावसुः । विरोचनस्तु संह्रादः प्रयातास्ते तदावसन् ॥
अन्तःसमुद्रमाविश्य सन्निवेशमकुर्वत । अशक्ता इति तेऽप्यग्निमारुताभ्यामुपेक्षिताः ॥
ततःप्रभृति वै देवान्मानुषान्सभुजङ्गमान् । सम्पीड्य च मुनीन्सर्वान्प्रविशन्ति पुनर्जलम्
एवं युगसहस्राणि ते वीराः सप्त पञ्च च । जलदुर्गबलाद्राजन्पीडयन्ति जगत्त्रयम् ॥८
ततः पुनरथो वह्निमारुतावमराधिपः । आदिदेशाचिरादम्बुनिधिरेष विशोष्यताम् ॥९॥
यस्मादस्मद्द्विषां चैष शरणं वरुणालयः । तस्माद्भवद्भ्यामद्यैव शोषमेष प्रणीयताम् ॥
तावूचतुस्ततः शक्रं मयशम्बरसूदनम् । अधर्म एष देवेन्द्र सागरस्य विनाशनम् ॥ ११ ॥
यस्माज्जीवनिकायस्य महतः संक्षयो भवेत् । तस्मादुपायमन्यं तु समाश्रय पुरन्दर ॥
यस्य योजनमात्रेऽपि जीवकोटिशतानिच । निवसन्ति सुरश्रेष्ठ स कथं नाशमर्हति ॥

पुलस्त्य उवाच ।

एवमुक्तः सुरेन्द्रस्तु क्रोधसंरक्तलोचनः । उवाचेदं वचो रोषादमरावग्निमारुतौ ॥१४॥

इन्द्र उवाच ।

न धर्माधर्मसंयोगं प्राप्नुवन्त्यमराःक्वचित् । भवन्तौ तु विशेषेण महात्मानौ च तिष्ठत
ममाज्ञानकृता यस्मान्मारुतेन समं त्वया । मुनिव्रतपरो भूत्वा परिगृह्य कलेवरम् ॥१६

ततस्त्वोषधयो जाताः सप्तसौभाग्यदायिकाः।
इक्षवस्तरुराजश्च निष्पावाश्शालिधान्यकम् ॥ ६ ॥
विकारवच्च गोक्षीरं कुसुम्भं कुसुमं तथा। लवणं चाष्टमं तद्वत्सौभाग्याष्टकमुच्यते ॥
पीतं यद्ब्रह्मपुत्रेण योगज्ञानविदा पुरा। दुहिता साऽभवत्तस्माद्या सतीत्यभिधीयते ॥
लोकानतीत्य लालित्याल्ललिता तेन चोच्यते। त्रैलोक्यसुन्दरीं देवीमुपयेमे पिनाकधृक्
त्रिविश्वसौभाग्यमयीं भुक्तिमुक्तिफलप्रदाम्।
तामाराध्य पुमान्भक्त्या नारी वा किं न विन्दति ॥ १३ ॥

भीष्म उवाच।

कथमाराधनं तस्या ललितायाः मुने वद। यद्विधानं च जगतः शान्तये तद्वदस्व मे ॥१४॥

पुलस्त्य उवाच।

वसन्तमासमासाद्य तृतीयायां जनप्रियः। शुक्लपक्षस्य पूर्वाह्णे तिलैः स्नानं समाचरेत्॥
तस्मिन्नहनि सा देवी किल विश्वात्मना सती। पाणिग्रहणिकैर्मन्त्रैरुद्वूढा वरवर्णिनी
तया सहैव विश्वेशं तृतीयायामथार्चयेत्।
फलैर्नानाविधैर्दीपैर्धूपैर्नैवेद्यसंयुतैः ॥ १७ ॥
प्रतिमां पञ्चगव्येन तथा गन्धोदकेन च। स्नापयित्वाऽर्चयेद्गौरीमिन्दुशेखरसंयुताम्
नमोऽस्तु पाटलायै तु पादौ देव्याः शिवस्य च।
शिवायेति च सङ्कीर्त्य जयायै गुल्फयोर्द्वयोः ॥ १९ ॥
त्र्यम्बकायेति रुद्रस्य भवान्यै जङ्घयोर्युगम्।
शिरो रुद्रेश्वरायेति विजयायै च जानुनी ॥ २० ॥
सङ्कीर्त्य हरिकेशाय तथोरुवरदे नमः। ईशायेति कटिंरत्यै शङ्करायेति शङ्करम् ॥ २१ ॥
कुक्षिद्वयं च कोटव्यै शूलिनं शूलपाणये। मङ्गलायै नमस्तुभ्यमुदरं चाभिपूजयेत् ॥२२॥
सर्वात्मने नमो रुद्रमीशान्यै च कुचद्वयम्। शिवंवेदात्मने तद्वद्रुद्राण्यै कण्ठमर्चयेत् ॥
त्रिपुरघ्नाय विश्वेशमनन्तायै करद्वयम्। त्रिलोचनायेति हरं बाहू कालानलप्रिये ॥२४॥
सौभाग्यभवनायेति भूषणानि सदार्चयेत्। स्वाहा स्वधायै च मुखमीश्वरायेतिशूलिनम्

अशोकवनवासिन्यै पूज्यावोष्ठौ च भूतिदौ । स्थाणवे च हरं तद्वदास्यं चन्द्रमुखप्रिये ॥
नमोऽर्धनारीशहरमसिताङ्गेति नासिकाम् । नम उग्राय लोकेशं ललितेति पुनर्भ्रुवौ ॥
शर्वाय पुरहर्त्तारं वासुदेव्यै तथालकम् । नमः श्रीकण्ठनाथाय शिवकेशांस्तथार्चयेत् ॥
भीमोग्रभीमरूपिण्यै शिरःसर्वात्मनेनमः । हरमभ्यर्च्य विधिवत्सौभाग्याष्टकमग्रतः ॥
स्थापयेत्स्निग्धनिष्पावान्कुसुम्भक्षीरजीरकम् । तरुराजेक्षुलवणं कुस्तुम्बुरुमथाष्टमम् ॥
दद्यात्सौभाग्यकृद्यस्मात्सौभाग्याष्टकमित्युत । एवं निवेद्य तत्सर्वमग्रतः शिवयोः पुनः
चैत्रे शृङ्गाटकान्प्राश्य स्वपेद्भूमावरिन्दम । पुनः प्रभाते च तथा कृतस्नानजपःशुचिः ॥
सम्पूज्य द्विजदाम्पत्यं माल्यवस्त्रविभूषणैः । सौभाग्याष्टकसंयुक्तं सौवर्णप्रतिमाद्वयम्
प्रीयतांमेऽत्रललिता ब्राह्मणाय निवेदयेत् । एवं संवत्सरं यावत्तृतीयायां सदा नृप ॥३४
प्राशने दानमन्त्रे च विशेषोऽयं निबोधमे । गोशृङ्गाम्बुमधौ प्रोक्तं वैशाखे गोमयं पुनः

ज्येष्ठे मन्दारकुसुमं बिल्वपत्रं शुचौ स्मृतम् ।
श्रावणे दधि सम्प्राश्यं नभस्ये तु कुशोदकम् ॥ ३६ ॥
क्षीरं चाश्वयुजे मासि कार्तिके पृषदाज्यकम् ।
मार्गशीर्षे तु गोमूत्रं पौषे सम्प्राशयेद् घृतम् ॥ ३७ ॥
माघे कृष्णतिलांस्तद्वत्पञ्चगव्यं च फाल्गुने ।
ललिता विजया भद्रा भवानी कुमुदा शिवा ॥ ३८ ॥
वासुदेवी तथा गौरी मङ्गला कमला सती ।
उमा च दानकाले तु प्रीयतामिति कीर्त्तयेत् ॥ ३९ ॥
तस्मिंस्तु द्वादशे मासि द्वादश्यां कृष्णमर्चयेत् ।
तथा लक्ष्मीं च तत्रैव भर्त्रा सार्धमथार्चयेत् ॥ ४० ॥

पौर्णमास्यामतस्तद्वत्सपत्नीकः पितामहः । उपासनीयो विदुषा परत्राभीतिमिच्छता ॥
सौभाग्याष्टकं तद्वच्च दातव्यं भूतिमिच्छता । मल्लिकाशोककमलं कदम्बोत्पलचम्पकम्
कुब्जकं करवीरं च बाणमम्लानपङ्कजम् । सिन्दुवारं च सर्वेषु मासेषु कुसुमंस्मृतम् ॥
जपाकुसुम्भकुसुमं मालती शतपत्रिका । यथा लाभं प्रशस्तानि करवीरं च सर्वदा ॥

एवं संवत्सरं यावदुपोष्यविधिवन्नरः। स्त्री च नक्तं कुमारी च शिवमभ्यर्च्य भक्तितः
व्रतान्ते शयनं दद्यात्सर्वोपस्करसंयुतम्। उमामहेश्वरौ हैमौ वृषभश्च गवा सह ॥४६॥

स्थापयित्वा च शयनं ब्राह्मणाय निवेदयेत्।
द्वादश्यां वत्सरं त्वेकं महालक्ष्म्या च केशवम् ॥ ४७ ॥
ब्रह्माणं सह सावित्र्या पूजयित्वा नरस्त्विह।
सर्वान्कामानवाप्नोति मनसा समभीप्सितान् ॥ ४८ ॥

अन्यान्यपि यथाशक्ति मिथुनान्यम्बरादिभिः। धान्यालङ्कारगोदानैरन्यैश्च धनसञ्चयैः ॥
वित्तशाठ्येन रहितः पूजयेद्गतविस्मयः। एवं करोति यः सम्यक्सौभाग्यशयनव्रतम्

सर्वान्कामानवाप्नोति पदं वा नित्यमश्नुते।
फलस्यैकस्य च त्यागमेतत्कुर्वन्समाचरेत् ॥ ५१ ॥

यशः कीर्तिमवाप्नोति प्रतिमासं नराधिप। सौभाग्यारोग्यरूपैश्च वस्त्रालङ्कारभूषणैः ॥
न वियुक्तो भवेद्राजन्सौभाग्यशयनप्रदः। यस्तु द्वादशवर्षाणि सौभाग्यशयनव्रतम् ॥
करोति सप्त चाष्टौवा ब्रह्मलोके महीयते। पूज्यमानो वसेत्सम्यग्यावत्कल्पायुतंनरः ॥
विष्णोर्लोकमथासाद्य शिवलोकगतस्तथा। नारी वा कुरुते या तु कुमारी वा नरेश्वर
सापि तत्फलमाप्नोति देव्यनुग्रहलालिता। शृणुयादपि यश्चैव प्रदद्यादथवा मतिम् ॥

सोऽपि विद्याधरो भूत्वा स्वर्गलोके चिरं वसेत्।
इदमिह मदनेन पूर्वसृष्टं शतधनुषा च कृतं नरेण तद्वत् ॥
कृतमथ पवनेन नन्दिना च किमु जननाथ महाद्भुतं न वा स्यात् ॥५८॥

इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे व्रताध्यायो नाम एकोनत्रिंशोऽध्यायः।

———

# त्रिंशोऽध्यायः

## वामनावतारचरित्रवर्णनम् ।

भीष्म उवाच ।

यज्ञपर्वतमासाद्य विष्णुना प्रभविष्णुना । पदानि चेह दत्तानि किमर्थं पदपद्धतिः ॥१॥
कृता वै देवदेवेन तन्मे वद महामते । कतमो दानवस्तेन विष्णुना दमितोऽत्र वै ॥२॥
कृत्वा वै पदविन्यासं तन्मे शंस महामुने । स्वर्लोके वसतिर्विष्णोर्वैकुण्ठेऽस्य महात्मनः॥
स कथं मानुषे लोके पदन्यासं चकारह । देवलोकेषु वै देव देवाः सेन्द्रपुरोगमाः ॥४॥
तपसा महता ब्रह्मन्भक्त्या ये सततं प्रभुम् । श्रीवराहस्यवसतिर्महर्लोकेप्रकीर्तिता ॥ ५ ॥
नृसिंहस्य तथा प्रोक्ता जनलोके महात्मनः । त्रिविक्रमस्य वसतिस्तपोलोके प्रकीर्तिता
लोकानेतान्परित्यज्य कथंभूमौ पदद्वयम् । क्षेत्रेपैतामहे चास्मिन्पुष्करे यज्ञपर्वते ॥ ७ ॥
पदानि कृतवान्ब्रह्मन्विस्तरान्मम कीर्तय । श्रुतेन सर्वपापस्य नाशो वै भविता ध्रुवम् ॥

पुलस्त्य उवाच ।

सम्यक्पृच्छसि भोस्त्वं यत्संश्रृणुत्वं समाहितः ।
यथा पूर्वं पदन्यासः कृतो देवेन विष्णुना ॥ ६ ॥

यज्ञपर्वतमासाद्य शिलापर्वतरोधसि । पुरा कृतयुगे भीष्म देवकार्यार्थसिद्धये ॥ १० ॥
विष्णुना च कृतं पूर्वं पृथिव्यर्थे परन्तप । त्रिदिवं सर्वमानीतं दानवैर्बलवत्तरैः ॥ ११ ॥
त्रैलोक्यं वशमानीय जित्वा देवान्सवासवान् । दानवा यज्ञभोक्तारस्तत्रासन्बलवत्तराः
कृता बाष्कलिना सर्वे दानवेन बलीयसा । एवम्भूते तदा लोके त्रैलोक्ये सचराचरे
परमार्तिं ययौ शक्रो निराशो जीविते कृतः। स बाष्कलिर्दानवेन्द्रोऽवध्योऽयं ममसंयुगे
ब्रह्मणो वरदानेन सर्वेषां तु दिवौकसाम् । तदहं ब्रह्मणो लोकवृतः सर्वैर्दिवौकसैः ॥
व्रजामि शरणं देवं गतिरन्या न विद्यते । एवं विचिन्त्य देवेन्द्रो वृतः सर्वैर्दिवौकसैः
जगाम त्वरितो भीष्म यत्र देवः पितामहः । ब्रह्मणः स पदंप्राप्य वृतस्तैश्च दिवौकसैः

अब्रवीज्जगतः कार्यं प्राप्तामापदमुत्तमाम् । किं न जानासिवै देव यतो नो भयमागतम्
दैत्यैर्यदाहृतं सर्वं वरदानाच्च ते प्रभो । कथितं वै मयासर्वं बाष्कलेश्च दुरात्मनः ॥
क्रियतां चाविलम्बेन पिता त्वं नः पितामहः । तत्त्वं चिन्तयदेवेशशान्त्यर्थंजगतस्त्विह

तेषां च पश्यतां किञ्चिच्छ्रौतस्मार्तादिकाःक्रियाः ।
न प्रावर्तन्त हानिस्तु तैरस्माकं दिने दिने ॥ २१ ॥

यथा हि प्राकृतः कश्चित्स्वार्थमुद्दिश्यभाषते । विज्ञाप्यसेतथास्माभिर्निरस्तोपकृतैःसदा
यद्येनोपकृतं यस्य सहस्रगुणितंपुनः । यो न तस्योपकाराय तत्करोति वृथा मतिः ॥
तस्योपकारदग्धस्य निस्त्रपस्यासतःपुनः । नरकेष्वपि संवासस्तस्य दुष्कृतकारिणः ॥
नैतावतैव साधुत्वं कृते या तु प्रतिक्रिया । स्वार्थे कनिष्ठबुद्धीनामेतन्नापि प्रवर्तते ॥
यद्यस्य नाभवत्स्थानं जगतो ह्यत्र दुःखदम् । शतधाहृदयं दीर्णं तन्न तृप्तिमुपागतम् ॥
तत्र त्वा यत्र गन्तास्मि निमग्नानुद्धरस्व नः । उपायकथनेनास्य येन तेजःप्रवर्तते ॥२७॥

यथाऽऽख्यातं मया दृष्टं जगत्तत्थमवेक्ष्यताम् ।
निस्स्वाध्यायवषट्कारं निवृत्तोत्सवमङ्गलम् ॥ २८ ॥

त्यक्ताध्ययनसंयोगं मुक्तवार्तापरिग्रहम् । दण्डनीत्या परित्यक्तं श्वासमात्रावशेषितम्
जगदार्तिमपि प्राप्तं पुनः कष्टतरां दशाम् । एतावता हि कालेन वयं ग्लानिमुपागताः ॥

ब्रह्मोवाच ।

जानामि वाष्कलिं तं तु वरदानाच्च गर्वितम् । अजेयंभवतांमन्येविष्णुसाध्योभविष्यति
निरुध्य संस्थितो ब्रह्मा भावं तत्वमयं तदा । समाधिस्थस्य तस्यैवध्यानमात्राच्चतुर्भुजः
स्तोकेनैव हि कालेन चिन्त्यमानः स्वयम्भुवा । आजगाम मुहूर्तेन सर्वेषामेव पश्यताम्

विष्णुरुवाच ।

भोभोब्रह्मन्निवर्त्तस्व ध्यानादस्मान्निवारितः । यदर्थमिष्यतेध्यानंसोऽहंत्वांसमुपागतः

ब्रह्मोवाच ।

महाप्रसाद एषोऽत्र स्वामिनो हि प्रदर्शनम् । कस्यान्यस्यभवेच्चैषाचिन्तायाजगतःप्रभो
ममैव तावदुत्पत्तिर्जगदर्थे विनिर्मिता । जगदेतत्त्वदर्थीयं तत्त्वतो नास्ति विस्मयः ॥

भवता पालनं कार्यं संहरेद्रुद्र एव तु । एवम्भूते जगत्यस्मिञ्शक्रस्यास्य महात्मनः ॥
हृतं राज्यं बाष्कलिना त्रैलोक्यं सचराचरम् । भृत्यस्य क्रियतांसाह्यं मन्त्रदानेनकेशव:

वासुदेव उवाच ।

भवतो वरदानेन:अवध्यः स तु सांप्रतम् । बुद्धिसाध्यः स वै कार्यो बन्धनादिह दानवः
वामनोऽहं भविष्यामि दानवानां विनाशकः । मया सहव्रजत्वेषबाष्कलेस्तु निवेशनम्
तत्र गत्वा वरं त्वेष मदर्थे याचतामिमम् । वामनस्यास्य विप्रस्य भूमे राजन्पदत्रयम्
प्रयच्छस्वमहाभाग याच्ञैषा तु मयाकृता । शक्रेणोक्तोदानवेन्द्रोदद्यात्स्वमपिजीवितम्
गृह्य प्रतिग्रहं तस्य दानवस्य पितामह । तं बद्ध्वा च ततो यत्नात्कृत्वा पातालवासिनम्
सौकरं रूपमास्थाय वधार्थं च दुरात्मनः । भविष्यामि न सन्देहो व्रज शक्रत्वरान्वित:
विरराम तमुक्त्वैवमन्तर्द्धानं गतश्च वै । अथकालान्तरे विष्णावदितेर्गर्भतांगते ॥ ४५ ॥
निमित्तान्यतिघोराणि प्रादुर्भूतान्यनेकशः । समस्तजगदाधारे विष्णौ गर्भत्वमागते ॥
शोभनं हि तदा जातं निमित्तं चैवमूर्जितम् । मालतीकुसुमानां तु सुगन्धःसुरभिर्ववौ

अथ विहितविधानं कालमासाद्य देवस्त्रिदशगणहितार्थं सर्वभूतानुकम्पी ।
विमलविरलकेशश्चन्द्रशङ्खोदयश्रीरदितितनयभावं देवदेवश्चकार ॥ ४८ ॥
अवतरति च विष्णौ सिद्धदेवासुराणामनिमिषनयनानां विप्रसेदुर्मुखानि ॥
अति विरतरजोभिर्वायुभिः संवहद्भिर्दिनमपि च तदासीज्जन्म विष्णोः सुगर्भे ॥
अदितिरजनगर्भा सापि देवी प्रयान्ती नतजघनभरार्ता मन्दसंचाररम्या ।
अलसवदनखेदं पाण्डुभावं वहन्ती गुरुतरमवगाढं गर्भमेवोद्वहन्ती ॥ ५० ॥
ततःप्रविष्टे खलु गर्भवासं नारायणे भूतभविष्ययोगात् ।
विना पदं प्राप्तमनोरथानि भूतानि सर्वाणि तदा बभूवुः ॥ ५१ ॥
समीरणो वाति च मन्दमन्दम्पतत्सु वर्षेषु नगोद्भवेषु ।
विविक्तमार्गेषु दिगन्तरेषु जनेषु वै सत्यमुपागतेषु ॥ ५२ ॥
विमुच्यमाने गगने रजोभिः शनैश्शनैर्नश्यति चान्धकारे ॥ ५३ ॥

उदरान्तर्गते विष्णौ द्रोहबुद्धिस्तदाभवत् । तां निशामय राजेन्द्र देवमातुर्यथाक्रमम् ॥

किमनुक्रमणेनैव लङ्घयामित्रिविष्टपम् । बाष्कलिं दानवेन्द्रं तं कुर्यां पातालवासिनम् ॥
शक्रस्य तु मया दत्तं धनं लावण्यमेव च । दानवानां विनाशाय एकैव प्रभवाम्यहम् ॥
क्षिपामिशरजालानि चक्रयानान्यनेकशः । गदाव्रातांश्च विविधान्दानवानां विनाशने ॥
विबुधान्देवलोकस्थानधोभूमेस्तु दानवान् । करोमि कालयोगेन तत्तु कार्यं व्रतेन मे ॥
निस्सृतासहसावाणीवक्त्रमेवाभिसंस्थिता । येनेदं चिन्त्यते पूर्वं यन्न दृष्टं न च श्रुतम्
बन्धं वै दनुमुख्यस्य कृतं कोपेन पश्य मे । कश्यपाय पुरादत्तं धनं लावण्यमेव च ॥
किमयं विगतोत्साहो वायवोऽथ समाकुलाः । भ्रमतीव हि मे दृष्टिर्मैतद्रूपं प्रचिन्तितम्
आविष्टा किमहं वच्मि केनाप्यसदृशं वचः । विकल्पवशमापन्नाभीक्ष्णं हृदि ममर्श सा
दधार दिव्यं वर्षाणां सहस्रं दिव्यमीश्वरम् । ततः समभवत्तस्यां वामनोभूतवामनः ॥
जातेन येन चक्षूंषिदानवानां हृतानिवै । जातमात्रे ततस्तस्मिन्देवदेवे जनार्दने ॥ ६४ ॥

नद्यः स्वच्छाम्बुवाहिन्यो ववौ गन्धवहोऽनिलः ।
कश्यपोऽपि सुखं लेभे तेन पुत्रेण भास्वता ॥ ६५ ॥

सर्वेषां मानसोत्साहस्त्रैलोक्यान्तरवासिनाम् । सञ्जातमात्रे तु ततो जनाधिप जनार्दने

स्वर्गेलोके दुन्दुभयो विनेदुस्तैश्च ताड़िताः ।
अतिप्रहर्षात्तु जगत्त्रयस्य मोहश्च दुःखानि च नाशमीयुः ।
जगौ च गन्धर्वगणोऽतिमात्रं भावस्वरैर्भर्तृ विमिश्रिताश्च ॥ ६७ ॥
सुराङ्गनाश्चापि च भावयुक्ता नृत्यन्ति तत्राप्सरसां समूहाः ।
तथैव विद्याधरसिद्धसङ्घा विमानयानैर्मुदिता भ्रमन्ति ॥ ६८ ॥
वदन्ति सत्यानृतकार्यनिर्णयं तथाभिरङ्गं प्रतिदर्शयन्ति ।
गायन्ति गेयं विनिवृत्तरागा. मुहुर्मुहुर्दुःखसुखप्रभूताः ॥ ६९ ॥
नृत्यन्ति वै स्वर्गगताश्च ते तु धर्मार्जितं स्वर्गमितो व्रजन्ति ॥ ७० ॥
इति विगतविषादे निर्मले जीवलोके तिमिरनिकरमुक्ता निर्वृतिं प्राप्तुकामाः।
तत्रोचुः केचिदुर्व्यां जयजयभगवन्संप्रहृष्टाश्च केचि-
त्त्वेवं प्रोक्तप्रणादैरविरलमनसश्चानुवादैस्तथान्ये ।

ध्यायन्तेऽन्ये निगूढं जननभयजरामृत्युविच्छेदहेतो-
रित्येवं कृत्स्नमासीज्जगदिदमखिलं सर्वतःसम्प्रहृष्टम् ॥ ७२ ॥

परमासाद्य यं विष्णुं ब्रह्माहं जगतःकृते । जातोऽयं भवतामर्थे वामनो यदपीश्वरः ॥७३
एष ब्रह्मा च विष्णुश्च एष एव महेश्वरः । एष वेदाश्च यज्ञाश्च स्वर्गश्चैव न संशयः ॥
विष्णुव्याप्तमिदं सर्वं जगत्स्थावरजङ्गमम् । एकःस तु पृथक्त्वेन स्वयम्भूरिति विश्रुतः
यथार्थवर्णके स्थाने विचित्रःस्फाटिकोमणिः । ततो गुणवशात्तस्य स्वयम्भोरनुवर्त्तनम्
यथा हि गार्हपत्योऽग्निरन्यसंज्ञां पुनर्व्रजेत् । लभेत संज्ञां भगवान्ब्रह्मादिषु तथा ह्यसौ
सर्वथा वामनोदेवो देवकार्यं करिष्यति । एवं चिन्तयतांतेषां भावितानां दिवौकसाम्
जगाम शक्रसहितो बाष्कलेश्च निवेशनम् । दूरादेव च तां दृष्ट्वा पुरीं तस्यसमावृत्ताम् ॥
पाण्डुरैः खगमागम्यैः सर्वरत्नोपशोभितैः । शोभितां भवनैर्मुख्यैस्सुविभक्तमहापथैः ॥
नित्यप्रभिन्नैर्मातङ्गैरञ्जनाचलसन्निभैः । देवनागकुलोत्पन्नैःशतसङ्ख्यैर्विराजिताम् ॥८१॥
निर्मांसगात्रैस्तुरगैरल्पकर्णैर्मनोजवैः । दीर्घग्रीवाक्षिकुटैश्च मनोज्ञैरुपशोभिताम् ॥८२॥
पद्मगर्भसुवर्णाभाः पूर्णचन्द्रनिभाननाः । सँल्लापोल्लापकुशलास्तत्र वेश्याः सहस्रशः ॥

न तत्पुण्यं न सा विद्या न तच्छिल्पं न सा कला ।
बाष्कलेर्न पुरे यत्तु निवासं प्रतिगच्छति ॥ ८४ ॥

उद्यानशतसम्बाधे समाजोत्सवमालिनि । अन्विते दनुमुख्यैश्च सर्वैरन्तकवर्जितैः ॥८५॥
वीणावेणुमृदङ्गानां शब्दैः सर्वत्र नादिते । सदा प्रहृष्टा दनुजा बहुरत्नोपशोभिताः ॥८६
क्रीडमानाः प्रदृश्यन्ते मेराविव यथाऽमराः । ब्रह्मघोषो महांस्तत्र दनुवृद्धैरुदीरितः ॥
साज्यधूमेन चाग्नीनां वायुना नष्टकिल्बिषे । सुगन्धधूपविक्षेपसुरभीकृतमारुते ॥ ८८ ॥

सुगन्धिदनुजाकीर्णे पुरे तस्मिंस्तु बाष्कलिः ।
त्रैलोक्यं तु वशे कृत्वा सुखेनास्ते स दानवः ॥ ८९ ॥

तत्रस्थः पालयन्नास्ते त्रैलोक्यं सचराचरम् । धर्मज्ञश्च कृतज्ञश्च सत्यवादी जितेन्द्रियः
सुदर्शः पूर्वदेवानां नयानयविचक्षणः । ब्रह्मण्यश्च शरण्यश्च दीनानामनुकम्पकः ॥ ९१ ॥
वेदमन्त्रप्रभूत्साहसर्वशक्तिसमन्वितः । षाड्गुण्यविषयोत्साहः स्मितपूर्वाभिभाषितः ॥

वेदवेदाङ्गतत्त्वज्ञो यज्ञयाजी तपोरतः । न च दुःशीलनिरतः स सर्वत्राविहिंसकः ॥९३॥
मान्यमानयिता शुद्धः सुमुखः पूज्यपूजकः । सर्वार्थविदनाधृष्यः सुभगः प्रियदर्शनः ॥
बहुधान्यो बहुधनो बहुयानश्च दानवः । त्रिवर्गसाधको नित्यं त्रैलोक्ये वरपूरुषः ॥९५
स्वपुरीनिलयो नित्यं देवदानवदर्पहा । स चैव पालयामास त्रैलोक्ये सकलाः प्रजाः ॥

नाधमः कश्चिदप्यास्ते तस्मिन्नाजनि दानवे ।
दीनो वा व्याधितो वापिरल्पायुर्वाथ दुःखितः
मूर्खो वा मन्दरूपो वा दुर्भगो वा निराकृतः ॥ ९७ ॥
एवं युतं तं विमलैर्गुणौघैर्दृष्ट्वा च मत्वा च निविष्टबुद्धिम् ।
प्रसादयन्दैत्यवरं महात्मा पुरन्दरस्तं तु दनुप्रधानम् ॥ ९८ ॥

तेजोयुक्तं दानवं तं तपन्तमिव भास्करम् । त्रैलोक्यधारणे शक्तं विस्मितः सोऽभवत्तदा
इन्द्रं पुरागतं दृष्ट्वा दानवेन्द्राय पार्थिव । इदमूचुस्तदा गत्वा दानवा युद्धदुर्मदाः ॥१००॥
आश्चर्यमिति वै कृत्वा इन्द्रोऽभ्येति पुरीं तव । एकाकी द्विजमुख्येन वामनेन सहप्रभो॥
अस्माभिर्यदनुष्ठेयं साम्प्रतं नो वद स्वराट् । दानवानब्रवीत्सर्वान्पुरे तिष्ठत सङ्कुलम् ॥

प्रवेश्यतां देवराजः पूज्यः स तु ममाद्य वै ॥ १०२ ॥

एतस्मिन्नेव काले तु वामनः स च वासवः । आगतौ दनुनाथेन प्रेम्णाचैवावलोकितौ
कृतार्थं मन्यतात्मानं प्रणिपातपुरःसरम् । उवाच वचनं राजा दानवानां धुरन्धरः ॥१०४
अद्य वै त्रिषु लोकेषु नास्ति धन्यतरो मया। योऽहंश्रिया वृतःशक्रं पश्यामिगृहमागतम्
अर्थित्वकाम्यया यस्तु मामयं याचयिष्यति । गृहागतस्य तस्याहं दास्येप्राणानपिध्रुवम्

दारान्पुत्रांस्तथागारं त्रैलोक्ये का कथा मम ।
आगत्य संमुखं तस्य अङ्कमानीय सादरम् ॥ १०७ ॥

परिष्वज्याभिनन्द्यैनं गृहं प्रावेशयत्स्वकम् । तस्य स्वागतमर्घ्याद्यैःकृत्वा पूजां प्रयत्नतः
अद्य मे सफलं जन्म पूर्णाः सर्वे मनोरथाः । यस्त्वां पश्यामि शक्राद्य स्वयमेव गृहागतम्

ख्याप्योऽहं दनुमुख्यानां देवराज त्वया कृतः ।
आगच्छता मम गृहं पुण्यता तु परा हि मे ॥ ११० ॥

अग्निष्टोमादिभिर्यज्ञैस्सम्यगिष्टैस्तु यत्फलम् । तत्फलं समवाप्यैतत्त्वयि दृष्टे पुरन्दर ॥
यत्फलं भूमिदानेन गवांदानेन ऋत्विजे । ममाद्य तत्फलं भूतमथवा राजसूयकम् ॥
नाल्पेन तपसालभ्यं दर्शनं तव वासव । एवं गेहे मया यत्ते प्रियं कार्यं तदुच्यताम् ॥

विकल्पोऽन्यो न भवता हृदि कार्यः कथञ्चन ।
कृतं च तद्विजानीया यद्यपि स्यात्सुदुष्करम् ॥ ११४ ॥

पुण्योऽहं पुण्यतां प्राप्तो दर्शनात्तव शत्रुहन् । यत्ते देववरैर्वन्द्यौ वन्दितौ चरणौ मया ॥
किमागमनकृत्यं ते वद सर्वं मयि प्रभो । अत्याश्चर्यमिदं मन्ये तवागमनकारणम् ॥

इन्द्र उवाच ।

जानेऽहं दनुमुख्यानांप्रधानं त्वांतुवाष्कले । नात्याश्चर्यमिदं भाति त्वयि दृष्टेऽसुरोत्तम

विमुखा नार्थिनो यान्ति भवतो गृहमागताः ।
अर्थिनां कल्पवृक्षोऽसि दाता चान्यो न विद्यते ॥ ११८ ॥

प्रभायां सूर्यतुल्योऽसिगाम्भीर्ये सागरोपमः । सहिष्णुत्वे धराचैव श्रियानारायणोपमः
ब्रह्मणः कश्यपकुले जातोऽयं वामनःशुभे । प्रार्थितोऽहमनेनैवं भूमेर्देहि पदत्रयम् ॥

ममाग्निशरणार्थाय यत्र कुर्यां मखं त्वहम् ।
तदस्य कारणं कृत्वा अर्थितैषा मम प्रभो ॥ १२१ ॥
लोकत्रयं मेऽपहृतन्त्वया विक्रम्य वाष्कले ।
निर्वृत्तिको निर्धनोऽस्मि यद्वित्तेन तदस्ति मे ॥ १२२ ॥

भवन्तं याचयिष्यामि परार्थेनापि चात्मना । अर्थित्वेन ममाप्यस्य यद्योग्यं तत्समाचर
जातोऽसिकाश्यपेच त्वं वंशेवंशविवर्द्धनः । दित्यास्त्वंगर्भसम्भूतः पितात्रैलोक्यपूजितः

एवं भूतमहं ज्ञात्वा तेन त्वां याचयाम्यहम् ।
अस्याग्निशरणार्थाय दीयतां भूपदत्रयम् ॥ १२५ ॥

अतीव ह्रस्वगात्रस्य वामनस्यास्य दानव । भूमिभागे च पारक्ये दातुं न त्वहमुत्सहे ॥
एतद्देव मया दत्तं यद्भवानर्थितोऽसि मे । गुरवो यदि मन्यन्ते मन्त्रिणो वा पदत्रयम् ॥
अर्थित्वेन मदीयेन स्वकुले बान्धवेऽपि च । गृहायाते मयि तथा यद्योग्यं तत्समाचर ॥

यदि ते रुचितं धीर दानवेन्द्र महाद्युते। तदस्मै दीयतां शीघ्रं वामनाय महात्मने॥

वाष्कलिरुवाच।

देवेन्द्र स्वागतं तेऽस्तु स्वस्ति प्राप्नुहि मा चिरम्।
त्वं समीक्ष स्वधात्मानं सर्वेषां च परायणम्॥ १३०॥

त्वयि भारं समावेश्य सुखमास्ते पितामहः। ध्यानधारणया युक्तश्चिन्तयानः परं पदम्.

सङ्ग्रामैर्बहुभिः खिन्नो जगच्चिन्तामपास्य तु।
क्षीराब्धिद्वीपमाश्रित्य सुखं स्वपिति केशवः॥ १३२॥

कैलासे पर्वतश्रेष्ठे कृत्तिवासा उमापतिः। रमते भार्यया सार्धं भारं त्वयि निवेश्य वै॥
अन्ये च दानवाः सर्वे बलिनःसायुधास्त्वया। असहायेनैव शक्र सर्वेऽपिविनिपातिताः
आदित्या द्वादशैवेह रुद्रास्त्वेकादशापि वा। अश्विनौ वसवश्चैव धर्मश्चैव सनातनः
त्वद्बाहुबलमाश्रित्य त्रिदिवे मखभागिनः। त्वयाक्रतुशतैरिष्टं समाप्तवरदक्षिणैः॥१३६॥

त्वया च घातितो वृत्रो नमुचिः पाकशासन।
त्वदाज्ञाकारिणा पूर्वं विष्णुना प्रभविष्णुना॥ १३७॥
हिरण्यकशिपोर्भ्राता हिरण्याक्षोऽपि घातितः।
हिरण्यकशिपुर्योऽत्र जङ्घे चारोप्य घातितः॥ १३८॥

वज्रपाणिनमायान्तमैरावणशिरोगतम्। सङ्ग्रामभूमौ दृष्ट्वा त्वां सर्वे नश्यन्ति दानवाः
ये त्वया विजिताः पूर्वं दानवा बलवत्तराः। सहस्रांशेन तत्तुल्यो न भवामि कथञ्चन॥

एवं विधोऽसि देवेन्द्र मम का गणना भवेत्।
मां समुद्धर्तुकामेन त्वयैवागमनं कृतम्॥ १४१॥

करिष्यामि न सन्देहो दास्ये प्राणानपिध्रुवम्। किमर्थंदेवराजोक्ता भूमिरेषात्वया हिमे
इमेदाराः सुता गावो यच्चान्यद्विद्यतेवसु। त्रैलोक्यराज्यमखिलं विप्रस्यास्य प्रदीयताम्
अपकीर्तिर्भवेन्मह्यं पूर्वेषां च न संशयः। गृहायातस्य शक्रस्य दत्तं वाष्कलिना न तु॥

अन्योऽपि योऽर्थी मे प्राप्तः स मे प्रियतरः सदा।
भवानत्र विशेषेण विचारं मा कृथाः क्वचित्॥ १४५॥

बृहत्त्रपा मे देवेन्द्र यद्भूमेस्तु पदत्रयम् ।
ब्राह्मणस्य विशेषेण प्रार्थितं तु त्वया विभो ॥ १४६ ॥
दास्येग्रामवरानस्य भवतस्तुत्रिविष्टपम् । अश्वान्गजान्भूमिधनं स्त्रियश्चोद्भिन्नचूचुकाः
यासां दर्शनमात्रेण वृद्धोऽपि तरुणायते । ताः स्त्रियो वसुधां चैतां वामनस्यप्रतिग्रहम्
प्रतिदास्यामि देवेन्द्र प्रसादः क्रियतां हि मे ।
एतावदुक्ते वचने तदा बाष्कलिना नृप ॥ १४६ ॥
पुरोधास्तूशना प्राह दानवेन्द्रं तदा वचः । भवान्राजा दानवेन्द्र ऐश्वर्येऽष्टविधे स्थितः
युक्तायुक्तं न जानासि देयं कस्य मया क्वचित् ।
मन्त्रिभिः सुसमालोच्य युक्तायुक्तं परीक्ष्य च ॥ १५१ ॥
प्राप्तं त्रैलोक्यराज्यत्वं जित्वा देवान्सवासवान् ।
वाक्यस्यास्यावसाने च भवान्प्राप्स्यति बन्धनम् ॥ १५२ ॥
य एष वामनोराजन्विष्णुरेव सनातनः । नास्य वै भवता देयं पिता ते घातितः स्वयम्
अयं ते पितृहा प्राप्तो मातृहा बन्धुघातकः । वंशोच्छेदकरस्तुभ्यं भूतश्चैव भविष्यति
न चैष धर्मं जानाति शक्रादीनां हिते रतः । मायाविना दानवा ये मायया येननिर्जिताः
मायया ब्राह्मणं रूपं वामनं च प्रदर्शितम् । अत्र किं बहुनोक्तेन नास्य देयं तु किञ्चन ॥
मक्षिकापादमात्रं तु भूमिरस्य प्रतिग्रहः । विनाशमेष्यसि क्षिप्रं सत्यं सत्यं मया श्रुतम्
गुरुणाप्येवमुक्तस्तु भूयो वाक्यमथाब्रवीत् ।
धर्मार्थिना मया सर्वं प्रतिज्ञातं गुरो त्विदम् ॥ १५८ ॥
प्रतिज्ञापालनं कार्यं सतां धर्मः सनातनः । यद्येष भगवान्विष्णुर्नास्ति धन्यतरो मया ॥
गृह्य प्रतिग्रहं मत्तो यदि देवान्बुभूषति । भूयोऽपि धन्यतां नीतो देवेनानेन वै गुरो ॥
यं योगिनो ध्यानयुक्ता ध्यायमाना हि दर्शनम् ।
न लभन्ते तथा विप्रास्सोऽयं दृष्टो मयाद्य वै ॥ १६१ ॥
दानानि ये प्रयच्छन्ति सकुशोदकपाणिना । प्रीयतां भगवान्विष्णुः परमात्मा सनातनः
एवमुक्ते तु वचने अपवर्गस्य भागिनः । यदत्र कार्यं करणे विकल्पो मे बभूव ह ॥१६३॥

उपदिष्टोऽस्मि भवता बालत्वे चावधारितम्।
शत्रावपि गृहायातो मास्त्वदेयं तु किञ्चन ॥ १६४ ॥
एतदेव विचिन्त्याहं प्राणानपि स्वकान्गुरो।
वामनस्य प्रदास्यामि शक्रस्यापि त्रिविष्टपम् ॥ १६५ ॥
अपीडाकारि यद्दानं तद्दानमिह दीयते। पीडाकारि च यद्दानं तद्दानं समलंस्मृतम् ॥

पुलस्त्य उवाच।

एतच्छ्रुत्वा गुरुस्तत्र त्रपयाऽधोमुखः स्थितः।

बाष्कलिरुवाच।

अर्थिता भवता देव देया सर्वा धरा मया ॥ १६७ ॥
त्रपाकरं भवेन्मह्यं यदस्य भूपदत्रयम्।

इन्द्र उवाच।

सत्यमेतद्दानवेन्द्र यदुक्तं भवता हि मे ॥ १६८ ॥
भूमेः पदत्रयार्थित्वं द्विजेनानेन मे कृतम्। एतावता त्वयं चार्थी मयाप्यस्य कृते भवान्
दनुपुत्रो याचितोऽसि वरमेतत्प्रदीयताम्।

बाष्कलिरुवाच।

पदत्रयं वामनाय देवराज प्रतीच्छ मे ॥ १७० ॥
तत्र त्वं सुचिरं कालं सुखी सुरपते वस।

पुलस्त्य उवाच।

एवमुक्त्वा बाष्कलिना वामनाय पदत्रयम् ॥ १७१ ॥
तोयपूर्वं तदा दत्तं प्रीयतां मे हरिःस्वयम्। दत्ते तु दानवेन्द्रेण त्यक्त्वा रूपं च वामनम्
हरिराचक्रमे लोकान्देवानां हितकाम्यया। यज्ञपर्वतामासाद्य गत्वाचैव उदङ्मुखः ॥
देवस्य वामचरणे निविष्टो दानवालयः। तत्र क्रमं स प्रथमं ददौ सूर्ये जगत्पतिः ॥
द्वितीयं च ध्रुवे देवस्तृतीयेन च पार्थिव। ब्रह्माण्डस्ताडितस्तेन देवेनाद्भुतकर्मणा ॥
अंगुष्ठाग्रेण भिन्नेऽण्डे जलं भूरि विनिःसृतम्।

प्लावयित्वा ब्रह्मलोकान्सर्वांल्लोकाननुक्रमात् ॥ १७६ ॥
ध्रुवस्थानं सूर्यलोकं प्लाव्य तं यज्ञपर्वतम् ।
प्रविष्टा पुष्करं धारा धौत्वा विष्णुपदानि सा ॥ १७७ ॥
पदानि यानि जातानि वैष्णवानि धरातले ।
तत्राश्रमे तु यो गत्वा स्नानं वाप्यां समाचरेत् ॥ १७८ ॥
अश्वमेधफलं तस्य दर्शनादेव जायते । एकविंशकुलोपेतो वैकुण्ठे वासमाप्नुयात् ॥
भुक्त्वा तु विपुलान्भोगन्कल्पानां तु शतत्रयम् ।
तदन्ते जायते राजा सार्वभौमः क्षिताविह ॥ १८० ॥
तोयधारा तु सा भीष्म अंगुष्ठाग्राद्विनिःसृता । नदीसावैष्णवीप्रोक्ताविष्णुपादसमुद्भवा
अनेन कारणेनाभूद्गङ्गा विष्णुपदी नृप । यया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ॥
अंगुष्ठाग्रक्षता दण्डाद्यत्प्रविष्टं जलं शुभम् । प्राप्तं देवनदीत्वं तु यातु विष्णुपदी नदी ॥
देवनद्या तया व्याप्तं ब्रह्माण्डं सचराचरम् । विभूतिभिर्महाभाग सर्वानुग्रहकाम्यया ॥
स बाष्कलिर्वामनेन उक्तःपूरय मे क्रमान् । अधोमुखस्तदा जात उत्तरं नास्यविन्दति ॥
मौनीभूतं तु तं दृष्ट्वा पुरोधा वाक्यमब्रवीत् ॥

शुक्र उवाच ।

स्वाभाविकी दानशक्तिर्न तु स्रष्टुं वयं क्षमाः ॥ १८६ ॥
यावतीयं धरा देव सा दत्ताऽनेन ते प्रभो ।

पुलस्त्य उवाच ।

उक्तो बाष्कलिना विष्णुर्यावन्मात्रा वसुन्धरा ॥ १८७ ॥
या सृष्टा भवता पूर्वं सा मया न च गोपिता । अल्पा भूमिर्भवान्दीर्घो न तु सृष्टेरहं क्षमः
इच्छाशक्तिः प्रभवति प्रभोस्ते देव सर्वदा । निरुत्तरस्तदा विष्णुर्मत्वा तं सत्यवादिनम्
ब्रूहि दानवमुख्य त्वं कंते कामं करोम्यहम् । मम हस्तगतं तोयं त्वया दत्तं तु दानव ॥
तेन त्वं वरयोग्योऽसि वराणां भाजनं शुभम् । दास्येऽहं भवतः काममर्थीयेनवृणुष्वह
विज्ञप्तो हि तदा तेन देवदेवो जनार्दनः ॥

बाष्कलिरुवाच ।

भक्तिं वृणोमि देवेश त्वद्धस्तान्मरणं हि मे ॥१९२॥

व्रजामि श्वेतद्वीपं ते दुर्लभं तु तपस्विनाम् ॥

पुलस्त्य उवाच ॥

आहैवमुक्ते विष्णुस्तां तिष्ठस्वैकं युगान्तरम् ॥ १९३ ॥

वाराहरूपी यदाहं प्रवेक्ष्यामि धरातलम् । तदा हनिष्येऽहं त्वां तु मदग्रे च यदैष्यसि ॥

उक्तोऽथ दानवस्तेन अपासर्प्पत्तदग्रतः । वामनेन समाक्रान्ताः सर्वे लोकास्तदा नृप ॥

असुरैस्तैस्तदा त्यक्तं देवानां सत्यरक्षणैः । देवो हत्वा तु त्रैलोक्यं जगामादर्शनं विभुः

पातालनिलयश्चापि सुखमास्ते स बाष्कलिः । शक्रोऽपि पालयामास विपश्चिद्भुवनत्रयम्

अयं त्रैविक्रमो नाम प्रादुर्भावो जगद्गुरोः । गङ्गासम्भवसंयुक्तस्सर्वकल्मषनाशनः ॥

विष्णोःपदानामेषा त उत्पत्तिःकथिता नृप । यां श्रुत्वा तु नरोलोके सर्वपापैःप्रमुच्यते

दुःस्वप्नं दुर्विचिन्त्यं च दुष्करं दुष्कृतानि च ।

क्षिप्रं हि नाशमायान्ति दृष्टे विष्णुपदत्रये ॥ २०० ॥

युगानुक्रमशो दृष्ट्वा पापिनो जन्तवस्तथा । सूक्ष्मता दर्शिता भीष्म विष्णुना पददर्शने ॥

यस्त्वारोहति तस्मिंस्तु मौनवान्मानवो भुवि । कृत्वात्रिपुष्करीयात्रामश्वमेधफलंव्रजेत्

मुच्यते सर्वपापैश्च मृतो विष्णुपुरं व्रजेत् ॥ २०३ ॥

इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे विष्णुपदोत्पत्तिर्नामत्रिंशोध्यायः ।

---

## एकत्रिंशोऽध्यायः

### नागतीर्थवर्णनम् ।

भीष्म उवाच ।

भगवन्महदाश्चर्यं बाष्कलेर्बन्धनं हि यत् । कृतं त्रिविक्रमं रूपं यदा संयमितो बलिः ॥

एतन्मया श्रुतं पूर्वं कथ्यमानं द्विजोत्तमैः । पाताले वसतेऽद्यापि वैरोचनसुतोबलिः ॥
नागतीर्थं यथाभूतं पिशाचानां तु सम्भवम् । शिवदूतो कथं चात्र केनेयं मङ्गलीकृता ॥
अन्तरिक्षे पुष्करं तु केन नीतं महामुने । एतदाचक्ष्व मे सर्वं यथा बाष्कलिबन्धनम् ॥
भूमिप्रक्रमणं पूर्वं कृतं देवेन विष्णुना । द्वितीये कारणं किंच येन देवश्चकार ह ॥
तत्त्वतस्त्वं हि तत्सर्वं यथाभूतं तथा वद । पापक्षयकरं ह्येतच्छ्रोतव्यं भूतिमिच्छता ॥

पुलस्त्य उवाच ।

प्रश्नभारस्त्वया राजन्कौतुकादेव कीर्तितः । कथयामि हि तत्सर्वं यथा भूतं नृपोत्तम
विष्णोःपदानुषङ्गेण बन्धनं बाष्कलेरिह । श्रुतन्तद्भवता सर्वं मया ते परिकीर्तितम् ॥
भूयोऽपि विष्णुना भीष्म प्राप्ते वैवस्वतेऽन्तरे ।
त्रैलोक्यं बलिनाक्रान्तं विष्णुना प्रभविष्णुना ॥ ६ ॥
गत्वा त्वेकाकिना यज्ञे तथा संयमितोबलिः । भूयोऽपि देवदेवेन भूमेःप्रक्रमणं कृतम्
प्रादुर्भावो वामनस्य तथा भूतो नराधिप । पुनस्त्रिविक्रमो भूत्वा वामनोऽभूदवामनः
उत्पत्तिरेषा ते सर्वा कथिता कुरुनन्दन । नागानां तु यथा तीर्थं तच्छृणुष्व महाव्रत ॥
अनन्तो वासुकिश्चैव तक्षकश्च महाबलः । कर्कोटकश्च नागेन्द्रः पद्मश्चान्यःसरीसृपः ॥
महापद्मस्तथाशङ्खः कुलिकश्चापराजितः । एते कश्यपदायादा एतैरापूरितं जगत् ॥१४॥
एतेषां तु प्रसूत्या तु इदमापूरितं जगत् । कुटिलाभीमकर्माणस्तीक्ष्णास्याश्च विषोल्बणाः
दष्ट्वा मन्दांश्च मनुजान्कुर्युर्भस्म क्षणात्तु ते । तद्दर्शनाद्भवेन्नाशो मनुष्याणां नराधिप ॥
अहन्यहनि जायेत क्षयः परमदारुणः । आत्मनस्तु क्षयं दृष्ट्वा प्रजाःसर्वास्समन्ततः ॥१७
जग्मुः शरण्यं शरणं ब्रह्माणं परमेश्वरम् । इममेवार्थमुद्दिश्य प्रजाः सर्वा महीपते ॥१८
ऊचुः कमलजं दृष्ट्वा पुराणं ब्रह्मसंज्ञकम् ॥

प्रजा ऊचुः ।

देवदेवेश लोकानां प्रसूते परमेश्वर ॥ १९ ॥
त्राहि नस्तीक्ष्णदंष्ट्राणां भुजगानां महात्मनाम् ।
दिने दिने भयं देव पश्यामः कृपणा भृशम् ॥ २० ॥

मनुष्यपशुपक्ष्यादि तत्सर्वं भस्मसाद्भवेत् । त्वया सृष्टिः कृता देव क्षीयते तु भुजङ्गमैः
एतज्ज्ञात्वा यदुचितं तत्कुरुष्व पितामह ॥

ब्रह्मोवाच ।

अहं रक्षां विधास्यामि भवतीनां न संशयः ॥ २२ ॥
व्रजध्वं स्वनिकेतानि नीरुजो गतसाध्वसाः ॥

पुलस्त्य उवाच ।

एवमुक्ते प्रजाः सर्वा ब्रह्मणा व्यक्तमूर्तिना ॥ २३ ॥
आजग्मुः परमप्रीताः स्तुत्वा चैव स्वयम्भुवम् ।
प्रयातासु प्रजास्वेवं तानाहूय भुजङ्गमान् ॥ २४ ॥
शशाप परमक्रुद्धो वासुकिप्रमुखांस्तदा ॥

ब्रह्मोवाच ।

अहन्यहनि भूतानि भक्ष्यन्ते वै दुरात्मभिः ॥ २५ ॥
नश्यन्ति तूरगैर्दष्टा मनुष्याः पशवस्तथा । [यस्मान्मत्प्रभवान्नित्यं क्षयं नयथ मानुषान् ]
अतोऽन्यस्मिन्भवे भूयान्मम कोपात्सुदारुणात् ।
भवतां हि क्षयो घोरो भावि वैवस्वतेऽन्तरे ॥ २७ ॥
तथान्यः सोमवंशीयो राजा वै जनमेजयः ॥
धक्ष्यते सर्पसत्रेण प्रदीप्ते हव्यवाहने ॥ २८ ॥
मातृष्वसुश्च तनयांस्ताक्ष्यों वो भक्षयिष्यति । एवं वो भविता नाशः सर्वेषां दुष्टचेतसाम् ।
शप्त्वा कुलसहस्रन्तु यावदेकं कुलं स्थितम् ।

पुलस्त्य उवाच ।

एवमुक्ते तु वेपन्तो ब्रह्मणा भुजगोत्तमाः ॥ ३० ॥
निपत्य पादयोस्तस्य इदमूचुर्वचस्तदा ।

सर्पा ऊचुः ।

भगवन्कुटिला जातिरस्माकं भूतभावन ॥ ३१ ॥

विषोल्बणत्वं क्रूरत्वं दन्दशूकत्वमेव च। सम्पादितं त्वया देव इदानीं शपसे कथम्॥

ब्रह्मोवाच ।

यदि नाम मया सृष्टा भवन्तः कुटिलाशयाः । ततःकिं बहुना नित्यं भक्षयध्वं गतव्यथाः

नागा ऊचुः ।

मर्यादां कुरु देवेश स्थानं चैव पृथक्पृथक् । मनुष्याणां तथास्माकं समयं देव कारय॥
शापो यो भवता दत्तो मनुष्योजनमेजयः । नाशं नः सर्पसत्रेण उल्बणं च करिष्यति॥

ब्रह्मोवाच ।

जरत्कारुरिति ख्यातो भविता ब्रह्मवित्तमः । जरत्कन्या तस्यदेया तस्यामुत्पत्स्यतेसुतः
रक्षां कर्त्ता स वो विप्रो भवतां कुलपावनः । तथा करोमि नागानां समयं मनुजैः सह
तदेकमनसः सर्वे शृणुध्वं मम शासनम् । सुतलं वितलं चैव तृतीयं च तलातलम्॥
दत्तंच त्रिप्रकारं वो गृहं तत्र गमिष्यथ । तत्र भोगान्बहुविधान्भुञ्जाना मम शासनात्
तिष्ठध्वं सप्तमं यावत्कालं तं तु पुनःपुनः । ततो वैवस्वतस्यादौ काश्यपेयो भविष्यति
दायादः सर्वदेवानां सुपर्णस्सर्पभक्षकः । तदा प्रसूतिः सर्पाणां दग्धा वै चित्रभानुना
भवतां चैव सर्वेषां भविष्यति न संशयः ॥ ४१ ॥
ये ये क्रूरा भोगिनो दुर्विनीतास्तेषामन्तो भाविता नान्यथैतत् ।
कालव्याप्तं भक्षयध्वं च सत्त्रं तथापकारे च कृते मनुष्यम् ॥ ४२ ॥
मन्त्रौषधैर्गारुडैश्चैव तन्त्रैर्बन्धैर्जुष्टा मानवा ये भवन्ति ।
तेभ्यो भीतैर्वर्तितव्यं न चान्यच्चित्ते कार्यं चान्यथा वो विनाशः ॥ ४३ ॥

पुलस्त्य उवाच ।

इतीरिते ब्रह्मणा वै भुजङ्गा जग्मुः स्थानं सुतलाख्यं हि सर्वे ।
तस्थुर्भोगान्भुञ्जमानाश्च सर्वे रसातले लीलया संस्थितास्ते ॥ ४४ ॥
एवं शापं तु ते लब्ध्वा प्रसादं च चतुर्मुखात् ।
तस्थुः पातालनिलये मुदिते नान्तरात्मना ॥ ४५ ॥
ततः कालान्तरे भूते पुनरेवं व्यचिन्तयन् । भविता भारतो राजा पाण्डवेयो महायशाः

अस्माकं तु क्षयकरो दैवयोगेन केनचित्। कथं त्रिभुवने नाथः सर्वेषां च पितामहः॥
सृष्टिकर्त्ता जगद्वन्द्यः शापमस्मासु दत्तवान्। देवं विरञ्चिनं त्यक्त्वा गतिरन्यान विद्यते
वैराजे भवनश्रेष्ठे तत्रदेवः स तिष्ठति। स देवः पुष्करस्थो वै यज्ञं यजति साम्प्रतम्॥

गत्वा प्रसादयामस्तं वरं तुष्टः प्रदास्यति।
एवं विचिन्त्य ते सर्वे नागा गत्वा च पुष्करम्॥ ५०॥

यज्ञपर्वतमासाद्य शैलभित्तिमुपाश्रिताः। दृष्ट्वा नागांस्तथा श्रान्तान्वारिधाराश्च शीतलाः
उदङ्मुखा वै निष्क्रान्तास्सर्वेषां तु सुखप्रदाः। नागतीर्थं ततो जातं पृथिव्यां भरतर्षभ
नागकुण्डं च वै केचित्सरितं चापरेऽब्रुवन्। पुण्यं तत्सर्वतीर्थानां सर्पाणां विषनाशनम्

मज्जन्ति तत्र ये मर्त्या अधिश्रावणपञ्चमीम्।
न तेषां तु कुले सर्पाः पीडां कुर्वन्ति कर्हिचित्॥ ५४॥

श्राद्धं पितॄणां ये तत्र करिष्यन्ति नरा भुवि। ब्रह्मातेषां परं स्थानं दास्यते नात्रसंशयः
नागानां तु भयं ज्ञात्वा ब्रह्मालोकपितामहः। पूर्वोक्तं तु पुनर्वाक्यं नागानश्रावयत्तदा

पञ्चमी सा तिथिर्धन्या सर्वपापहरा शुभा।
यतोऽस्यामेव सुतिथौ नागानां कार्यमुद्धृतम्॥ ५७॥
एतस्यां सर्वतो यस्तु कट्वम्लं परिवर्जयेत्।
क्षीरेण स्नापयेन्नागांस्तस्य ते यान्ति मित्रताम्॥ ५८॥

भीष्म उवाच।

शिवदूती यथा जातायेन चैव निवेशिता। तन्मे सर्वंयथातत्त्वं भवान्शंसितुमर्हति॥५९॥

पुलस्त्य उवाच।

शिवा नीलगिरिं प्राप्ता तपसे धृतमानसा। रौद्री जटोद्भवाशक्तिस्तस्याः शृणु नृपव्रतम्

तपः कृत्वा चिरं कालं ग्रसिष्याम्यखिलं जगत्।
एवमुद्दिश्य पञ्चाग्निं साधयामास भामिनी॥ ६१॥

तस्याःकालान्तरे देव्यास्तपन्त्यास्तप उत्तमम्। रुरुर्नाम महातेजा ब्रह्मदत्तवरोऽसुरः॥
समुद्रमध्ये रत्नाख्यं पुरमस्ति महाधनम्। तत्रातिष्ठत्सदैत्येन्द्रस्सर्वदेवभयङ्करः॥६३॥

अनेकशतसाहस्रकोटिकोटिशतोत्तमैः । असुरैरर्चितःश्रीमोन्द्वितीयो नमुचिर्यथा ॥६४॥
कालेन महता सोऽथ लोकपालपुरं ययौ । जिगीषुः सैन्यसंवीतो देवैर्वैरमरोचयत् ॥

उत्तिष्ठतस्तस्य महासुरस्य समुद्रतोयं ववृधेऽतिवेगात् ।
अनेकनागग्रहमीनजुष्टमाप्लावयत्पर्वतसानुदेशान् ॥ ६६ ॥
अन्तस्थितानेकसुरारिसङ्घं विचित्रवर्मायुधचित्रशोभम् ।
भीमं बलं चलितं चारुयोधं विनिर्ययौ सिन्धुजलाद्विशालम् ॥ ६७ ॥
तत्र द्विपा दैत्यभटाभ्युपेताः सयानघण्टाश्च समृद्धियुक्ताः ।
विनिर्ययुः स्वाकृतिभिर्झषाणां समत्वमुच्चैः खलु दर्शयन्तः ॥ ६८ ॥
अश्वास्तथा काञ्चनसूत्रनद्धा रोहीत मत्स्या इव ते जलान्ते ।
व्यवस्थितास्तैः सममेव तूर्णं विनिर्ययुर्लक्षशः कोटिशश्च ॥ ६९ ॥
तथा रविस्यन्दनतुल्यवेगाः सचक्रदण्डाक्षतवेणुयुक्ताः ।
रथाश्च यन्त्रोपरिपीडिताङ्गाश्चलत्पताकाः स्वनितं विचक्रुः ॥ ७० ॥
तथैव योधाः स्थगितास्तरीभिस्तितीर्षवस्ते प्रवरास्त्रपाणयः ॥
रणे रणे लब्धजयाः प्रहारिणो विरेजुरुच्चैरसुरानुगा भृशम् ॥ ७१ ॥

देवेषु वै रणे तेषु विद्रुतेषु विशेषतः । असुरास्सर्वदेवानामन्वधावंस्ततस्ततः ॥ ७२ ॥
ततो देवगणाः सर्वे द्रवन्तो भयविह्वलाः । नीलं गिरिवरं जग्मुर्यत्रदेवीस्वयं स्थिता ॥

रौद्री तपोन्विता धन्या शाम्भवी शक्तिरुत्तमा ।
संहारकारिणी देवी कालरात्रीति यां विदुः ॥ ७४ ॥

सा तु दृष्ट्वा तदा देवान्भयत्रस्तान्विचेतसः । पप्रच्छ विस्मयाद्देवी प्रोत्फुल्लाम्बुजलोचन

देव्युवाच ।

पृष्ठतो वो न पश्यामि भयं किञ्चिदुपागतम् । कथं तु विद्रुता देवाः सर्वे शक्रपुरःसराः

देवा ऊचुः ।

अयमायाति दैत्येन्द्रो रुरुर्भीमपराक्रमः । चतुरङ्गेण सैन्येन महता परिवारितः ॥ ७७ ॥
तस्माद्भीता वयं देवीं भवतीं शरणं गताः ।

पुलस्त्य उवाच ।

देवानामिति वै श्रुत्वा वाक्यमुच्चैर्जहास सा ॥ ७८ ॥

तस्यां हसन्त्यां निश्चेरुर्बह्वङ्ग्यो वदनात्ततः ।

पाशाङ्कुशधराः सर्वाः पीनोन्नतपयोधराः ॥ ७६ ॥

सर्वाश्शूलधरा भीमाः सर्वादंष्ट्राङ्कुशाननाः । आवद्धमुकुटाः सर्वाः सन्दष्टदशनच्छदाः ॥

फूत्काररावैरशिवैस्त्रासयन्त्यश्चराचरम् ।

काश्चिच्छुक्लाम्बरधराः काश्चिच्चित्राम्बरास्तथा ॥ ८१ ॥

सुनीलवसनाः काश्चिद्रक्तपानातिलालसाः । नानारूपैर्मुखैस्तास्तु नानावेषवपुर्धराः ॥

ताभिरेवं वृता देवी देवानामभयङ्करी । मा भैष्ट देवा भद्रं वो यावद्वदति दानवः ॥

चतुरङ्गबलोपेतो रुरुस्तावत्समागतः । तं नीलपर्वतवरं देवानां मार्गमार्गिणः ॥

देवानामग्रतः सैन्यं दृष्ट्वा देवी समाकुलम् । तिष्ठतिष्ठेति जल्पन्तो दैत्यास्ते समुपागताः

ततः प्रववृते युद्धं तासां तेषां महाभयम् । नाराचैर्भिन्नदेहानां दैत्यानां भुवि सर्पताम् ॥

रोषाद्दण्डप्रभग्नाजां सर्पाणामिव सर्पताम् । शक्तिनिर्भिन्नहृदयां गदासंचूर्णितोरसः

कुठारैर्भिन्नशिरसोमुसलैर्भिन्नमस्तकाः । विद्धोदरास्त्रिशूलाग्रैश्छिन्नग्रीवा वरासिभिः ॥

क्षताश्वरथमातङ्गपादाताः पेतुराहवे । रणभूमिं समासाद्य दैत्याः सर्वे रुरुंविना ॥ ८६ ॥

ततो बलं हतं दृष्ट्वा रुरुर्मायान्तदाऽऽददे । तया संमोहिता देव्यो देवाश्चापिरणाजिरे ॥

तामस्या मायया देव्या सर्वमन्धन्तमोऽभवत् ।

ततोदेवी महाशक्त्या तन्दैत्यंसमताडयत् ॥ ६१ ॥

तया तु ताडितस्याजौ दैत्यस्य प्रगतंतमः । मायायामथ नष्टायां तामस्यां दानवोरुरुः ॥

पातालमाविशत्तूर्णं तत्रापि परमेश्वरी । देवीभिःसहिताक्रुद्धा पुरतोऽभिमुखी स्थिता ॥

रुरोस्तु दानवेन्द्रस्य भीतस्याग्रे गतस्य च । नखाग्रेण शिरश्छित्त्वा चर्मचादाय वेगिता

निर्ययावथ पातालात्पुष्करं च पुनर्गिरिम् । कन्यासैन्येन महता बहुरूपेण भास्वता ॥

देवैस्तु विस्मितैर्दृष्टा चर्ममुण्डधरा रुरोः । स्वकीये तपसःस्थाने निविष्टापरमेश्वरी ॥

ततो देव्यो महाभागाःपरिवार्य व्यवस्थिताः । याचयामासुरन्यग्रास्तांतुदेवींबुभुक्षिताः॥

देव्य ऊचुः ।

बुभुक्षिता वयं देवि देहि नो भोजनं वरम् ।

पुलस्त्य उवाच ।

एवमुक्ता ततो देवी दध्यौ तासां तु भोजनम् ॥ ९८ ॥
नाध्यगच्छत्तदा तासां भोजनं चिन्तितम्महत् । तदादध्यौ महादेवं रुद्रं पशुपतिं विभुम्
सोऽपिध्यानात्समुत्तस्थौ परमात्मात्रिलोचनः । उवाचरुद्रस्तांदेवींकिंतेकार्यंविवक्षितम्
ब्रूहि देवि महामाये यत्ते मनसि वर्तते ।

शिवदूत्युवाच ।

छागमध्ये तु वै देव छागरूपेण वर्तसे ॥ १०१ ॥
एतास्त्वांभक्षयिष्यन्तिभक्ष्यमीप्सितमादरात् । भक्षार्थमासांदेवेशकिञ्चिद्दातुमिहार्हसि
शूलीकुर्वन्ति मामेता भक्षार्थिन्यो महाबलाः । अन्यथा मामपि बलाद्भक्षयेयुर्बुभुक्षिताः
एवं मां तु समालक्ष्य भक्ष्यं कल्पय सत्वरम् ।

रुद्र उवाच ।

शिवदूति ब्रवीम्येकं प्रवृत्तं यद्युगान्तरे ॥ १०४ ॥
गङ्गाद्वारे दक्षयज्ञो गणैर्विध्वंसितो मम । तत्र यज्ञोमृगोभूत्वा प्रदुद्राव सुवेगवान् ॥
मया बाणेन निर्विद्धो रुधिरेण प्रसेचितः । अजगन्धस्तदाभूतो नाम देवैस्तु मे कृतम् ॥
अजगन्धस्त्वमेवेति दास्ये चान्यत्तु भोजनम् । एतासां श्रृणुमेदेवि भक्ष्यमेकंमयोचितम्
कथ्यमानं वरारोहे कालरात्रि महाप्रभे । यास्त्री सगर्भा देवेशि अन्यस्त्रीपरिधानकम्
परिधत्ते स्पृशेद्वापि पुरुषस्य विशेषतः ।

सभागोऽस्तु वरारोहे कासाञ्चित्पृथिवीतले ॥ १०६ ॥
अप्येकवर्षं बालं तु गृहीत्वा तत्रवै बलात् । भुक्त्वातिष्ठन्तु सुप्रीता अपि वर्षशतान्बहून्
अन्याःसूतिगृहेच्छिद्रं गृह्णीयुस्तु ह्यपूजिताः । निवसिष्यन्ति देवेशि तथावैजातहारिकाः
गृहेक्षेत्रेतटाके च वाप्युद्यानेषु चैवहि । अन्येषु च रुदन्त्यो याःस्त्रियस्तिष्ठन्ति नित्यशः
तासां शरीरगाश्चान्याःकाश्चित्तृप्तिमवाप्नुयुः ।

शिवदूत्युवाच ।

कुत्सितं भवता दत्तं प्रजानांपरि पीडनम् ॥ ११३ ॥
न च त्वं बुध्यसे दातुं शङ्करस्यविशेषतः । त्रपाकरं यद्भवति प्रजानां परिपीडकम् ॥
न तु तद्युज्यते दातुं तासां भक्ष्यं तु शङ्कर ! ।

रुद्र उवाच ।

अवन्त्यां तु यदा स्कन्दो मया पूर्वं तु भद्रितः ॥ ११५ ॥
चूडाकर्मणि वृत्ते तु कुमारस्यतदाशुभे । आगत्य मातरो भक्ष्यमपूर्वं तु प्रचक्रिरे ॥
देवलोकाद्देवगणा मातृणां भोक्तुमागताः । तासांगृहे यदापूर्वं ब्रह्माद्यास्सुरसत्तमाः ॥
गन्धर्वाप्सरसश्चैव यक्षास्सर्वे च गुह्यकाः । मेर्वादयःशिखरिणो गङ्गाद्याःसरितस्तथा
सर्वेनागा गजास्सिद्धाःपक्षिणोऽसुरसूदनाः । डाकिन्यःसहवेतालैर्वृताःसर्वैर्ग्रहैस्तदा ॥
किमुक्तेनामुना देवि यत्सृष्टं ब्रह्मणात्विह । तत्सर्वं भोजनंदत्तं स्वेच्छान्नं च नभोगतम्

शिवदूत्युवाच ।

आसां कृतं देहिभोज्यं दुर्लभं यत्त्रिविष्टपे । स्नेहाक्तं सगुडंहृद्यं सुपक्वपरिकल्पितम् ॥
क्वचिन्नान्येन यद्भुक्तमपूर्वं परमेश्वर ।

पुलस्त्यउवाच ।

एवमुक्तस्तदा सोऽपि देवदेवो महेश्वरः ॥ १२२ ॥
भक्ष्यार्थं तास्तदा प्राह पार्वत्याश्चैव सन्निधौ ।

शिवउवाच ।

मया वै साधितं चान्नं प्रकारैर्बहुभिःकृतम् ॥ १२३ ॥
तत्सर्वं च व्ययं यातं न चान्यदिह दृश्यते । भवतीष्वागतास्वद्यकिं मया देयमुच्यताम्
अपूर्वं भवतीनां यन्मयादेयं विशेषतः । आस्वादितं न चान्येन भक्ष्यार्थे च ददाम्यहम्
अधोभागे च मेनाभेर्वर्तुलौफलसन्निभौ । भक्षयध्वं हि सहितालम्बौ मे वृषणाविमौ ॥
अनेन चापि भोज्येन परा तृप्तिर्भविष्यति ।

पुलस्त्य उवाच ।

महाप्रसादं ता लब्ध्वा देव्यस्सर्वास्तदा शिवम् ॥ १२७ ॥

प्रणिपत्य स्थिताश्शर्वं इदं वचनमब्रवीत् । करिष्यन्ति शुभाचारान्विना हास्येन ये नराः

तेषां धनं पशुःपुत्रा दाराश्चैव गृहादिकम् ।

भविष्यति मया दत्तं यच्चान्यन्मनसि स्थितम् ॥ १२६ ॥

हास्येन दीर्घदशना दरिद्राश्च भवन्ति ते । तस्मान्ननिन्दा हास्यं च कर्तव्यं हि विजानता
भवत्यो मातरःख्याता ह्यस्मिँल्लोके भविष्यथ । उपहारै नरा ये तु करिष्यन्तिचकौमुदीम्
चणकान्पूरिकाश्चैव वृषणैःसह पूपकान् । बन्धुभिःस्वजनैश्चैव तेषां वंशो न छिद्यते
अपुत्रो लभतेपुत्रं धनार्थी लभतेधनम् । रूपवान्सुभगो भोगी सर्वशास्त्रविशारदः ॥
हंसयुक्तेन यानेन ब्रह्मलोके महीयते । शिवदूति मयाप्येवं तासां दत्तं च भक्षणम् ॥
त्रपाकरं किं भवत्या उक्तोऽहं तन्निशामय । जयस्व देवि चामुण्डे जयभूतापहारिणि ॥
जय सर्वगते देवि कालरात्रि नमोऽस्तुते । विश्वमूर्तियुते शुद्धे विरूपाक्षि त्रिलोचने ॥
भीमरूपे शिवे विद्ये महामाये महोदरे । मनोजये मनोदुर्गे भीमाक्षि क्षुभितक्षये ॥१३७॥
महामारि विचित्राङ्गि गीतनृत्यप्रिये शुभे । विकरालि महाकालि कालिके पापहारिणि
पाशहस्ते दण्डहस्ते भीमहस्ते भयानके । चामुण्डे ज्वलमानास्ये तीक्ष्णदंष्ट्रे महाबले ॥
शिवयानप्रिये देवि प्रेतासनगते शिवे । भीमाक्षि भीषणे देवि सर्वभूतभयङ्करि ॥१४०॥

करालि विकराले च महाकालि करालिनि ।

कालि करालविक्रान्ते कालरात्रि नमोस्तुते ॥ १४१ ॥

सर्वशस्त्रभृते देवि नमो देवनमस्कृते ।

पुलस्त्य उवाच ।

एवं स्तुता शिवदूती रुद्रेण परमेष्ठिना ॥ १४२ ॥

तुतोष परमा देवी वाक्यं चैवमुवाच ह । वरं वृणीष्व देवेश यत्ते मनसि वर्तते ॥

रुद्रउवाच ।

स्तोत्रेणानेन ये देवि स्तोष्यन्ति त्वां वरानने । तेषां त्वां वरदा देवि भव सर्वगतासती

इमं पर्वतमारुह्य यःपूजयति भक्तितः । सपुत्रपौत्र पशुमान्समृद्धिमुपगच्छतु ॥ १४५ ॥
यश्चैवं शृणुयाद्भक्त्या स्तवं देवि समुद्भवम् । सर्वपापविनिर्मुक्तःपरं निर्वाणमृच्छतु ॥
अष्टराज्यो यदाराजा नवम्यां नियतःशुचिः । अष्टम्यां च चतुर्दश्यां सोपवासो नरोत्तम

संवत्सरेण लभतां राज्यं निष्कण्टकं पुनः ।
एषा ज्ञानान्विता शक्तिःशिवदूतीति चोच्यते ॥ १४८ ॥

य एवं शृणुयान्नित्यं भक्त्या परमया नृप । सर्वपापविनिर्मुक्तःपरं निर्वाणमाप्नुयात् ॥
यश्चैनं पठते भक्त्या स्नात्वा वै पुष्करेजले । सर्वमेतत्फलं प्राप्य ब्रह्मलोके महीयते ॥
यत्रैतल्लिखितं गेहे सदा तिष्ठति पार्थिव । न तत्राग्निभयं घोरं सर्वचोरादिसम्भवम् ॥

यश्चेदं पूजयेद्भक्त्या पुस्तकेऽपि स्थितं बुधाः ।
तेन चेष्टं भवेत्सर्वं त्रैलोक्यं सचराचरम् ॥ १५२ ॥
जायन्ते बहवःपुत्रा धनं धान्यं वरस्त्रियः ।
रत्नान्यश्वा गजा भृत्यास्तेषामाशु भवन्ति च ॥ १५३ ॥
यत्रेदं लिख्यते गेहे तत्राप्येव ध्रुवं भवेत् ॥ १५४ ॥

इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे शिवदूतीचरितं नामैकत्रिंशोऽध्यायः ।

———

## द्वात्रिंशोऽध्यायः

### प्रेतपञ्चककथानकम् ।

भीष्म उवाच ।

केन कर्मविपाकेन प्रेतत्वं जायते पुनः । केन वात्र प्रमुच्येत तन्मे ब्रूहि महामते ॥ १ ॥

पुलस्त्य उवाच ।

अहं ते कथयिष्यामि सर्वमेतदशेषतः । यच्छ्रुत्वा न पुनर्मोहं यास्यते नृपसत्तम ॥ २ ॥
येन जायेत प्रेतत्वं येन चास्मात्प्रमुच्यते । प्राप्नोति नरकं घोरं दुस्तरं त्रिदशैरपि ॥३॥

सतां सम्भाषणे चैव पुण्यतीर्थानुकीर्त्तने । मानवास्तु प्रमुच्यन्ते आपन्नाः प्रेतयोनिषु ॥

श्रूयते हि पुरा भीष्म ब्राह्मणःशंसितव्रतः ।
पृथुस्सर्वत्र विख्यातःसन्तोषे च सदा स्थितः ॥ ५ ॥

स्वाध्याययुक्तो गेहेषु नित्ययोगश्च योगवित् । जपयज्ञविधानेन युक्तं कालं क्षिपेच्च सः

युक्तःक्षमादयाभ्यां च क्षान्त्या युक्तश्च तत्त्ववित् ।
अहिंसाहितचित्तश्च मार्द्दवे च तथा स्थितः ॥ ७ ॥

ब्रह्मचर्यसमायुक्तः तपोयोगसमन्वितः । युक्तः स पितृकार्येषु युक्तो वैदिककर्मसु ॥८॥

परलोकभयेयुक्तो युक्तस्सत्यवचः प्रति । युक्तोमधुरवाक्येषु युक्तश्चातिथि पूजने ॥९॥

इष्टापूर्तसमायुक्तो युक्तो द्वन्द्वविवर्जने ।
स्वकर्मविधिसंयुक्तो युक्तःस्वाध्याय कर्मसु ॥ १० ॥

एवं कर्माणि कुर्वतस्संसारविजिगीषया । बहून्यब्दान्यतीतानि ब्राह्मणस्य गृहेसतः ॥

तस्य बुद्धिरियं जाता तीर्थाभिगमनं प्रति । पुण्यैस्तीर्थजलैरेतत्क्लिन्नं कुर्यां कलेवरम्

प्रयतः पुष्करे स्नात्वा भास्करस्योदयं प्रति ।
कृतजप्यनमस्कारोऽप्यद्ध्वानं प्रत्यपद्यत ॥ १३ ॥

अग्रतःपञ्चपुरुषानपश्यत्सोऽति भीषणान् । वने कण्टकवृक्षाढ्ये निर्जने पक्षिवर्जिते ॥

तान्दृष्ट्वा विकृताकारान्सुघोरान्पापदर्शनान् ।
ईषत्सन्त्रस्तहृदयो व्यतिष्ठन्निश्चलाकृतिः ॥ १५ ॥

अवलम्ब्य ततो धैर्य्यं भयमुत्सृज्य दूरतः । पप्रच्छ मधुराभाषी के यूयं विकृताःकुतः ॥

किं वा चैव कृतं कर्म येन प्राप्ताश्च वैकृतम् । कथमेवं विधाःसर्वे प्रस्थिताःकुत्रचाध्वनि

प्रेता ऊचुः ।

क्षुत्पिपासान्विता नित्यं महादुःखसमावृताः ।
हृतप्रज्ञा वयं सर्वे नष्टसञ्ज्ञा विचेतसः ॥ १८ ॥

न जानीमो दिशं चापि प्रदिशं चापिकाञ्चन । नान्तरिक्षंमहीं चापि न जानीमोदिवंतथा

यदेतद्दुःखमाख्यातमेतदेव सुखं भवेत् । प्रभातमिदमाभाति भास्करोदयदर्शनात् ॥

अहं पर्युषितो नाम सूचीमुखस्तथापरः।
शीघ्रगो रोहकश्चैव पञ्चमो लेखकस्तथा॥ २१॥

ब्राह्मण उवाच।

प्रेतानां कर्मजातानां नाम्नां वै सम्भवःकुतः।
किं तत्कारणमुद्दिश्य यतो यूयं सनामकाः॥ २२॥

प्रेता ऊचुः।

अहं स्वादु सदाभुञ्जे दद्यां पर्युषितं द्विजे। एतत्कारणमासाद्य नामपर्युषितो मम॥२३॥
सूचिता बहवोऽनेन विप्राश्चान्नाद्यकाङ्क्षिणः। एतत्कारणमुद्दिश्य सूचीमुखाभिधोमतः
शीघ्रंगतोऽस्मिविप्रेणयाचितःक्षुधितेन च। एतत्कारणमुद्दिश्य शीघ्रगोद्विजसत्तम॥
गृहोपरिसदास्वादेभुङ्क्तेद्विजभयेनहि। उद्विग्नमानसस्तत्र तेनासौ रोहकःस्मृतः॥२६॥

मौने चापि स्थितो नित्यं याचितो विलिखन्महीम्।
अस्माकमपि पापिष्ठो लेखको नाम नामतः॥ २७॥
कृच्छ्रेण लेखको याति रोहकस्तु अवाक्छिराः।
शीघ्रगःपङ्गुतां प्राप्तःसूची सूचीमुखोऽभवत्॥ २८॥

पर्युषितो लम्बग्रीवो लम्बोदर उदाहृतः। वृहद्वृषण लम्बोष्ठःपापादस्माद्जायत॥२९॥
एतत्ते सर्वमाख्यातमात्मवृत्तं सहेतुकम्। पृच्छस्व यदि ते श्रद्धा पृष्टाश्च कथयामहे॥

ब्राह्मण उवाच।

ये जीवा भुवि तिष्ठन्ति सर्वेऽप्याहारमूलकाः।
युष्माकमपि चाहारं श्रोतुमिच्छामि तत्त्वतः॥ ३१॥

प्रेता ऊचुः।

शृणुष्वाहारमस्माकं सर्वसत्त्वविगर्हितम्।
यच्छ्रुत्वा निन्दसे विप्र भूयोभूयश्च नित्यशः॥ ३२॥

श्लेष्ममूत्रपुरीषेण योषिदङ्गमलेन च। गृहाणि त्यक्तशौचानि प्रेता भुञ्जन्ति तत्र वै॥

स्त्रीभिर्दग्धानि कीर्णानि प्रकीर्णोच्छिष्टकानि च।

मलेनापि जुगुप्स्यानि प्रेता भुञ्जन्ति तत्र वै ॥ ३४ ॥
चित्तलज्जाविहीनानि होमहीनानि यानि च । व्रतैश्चैव विहीनानि प्रेताभुञ्जन्ति तत्र वै
गुरवो नैव पूज्यन्ते स्त्रीजितानि गृहाणि च ।
क्रोधलोभगृहीतानि प्रेता भुञ्जन्ति तत्र वै ॥ ३६ ॥
त्रपा मे जायते तात कथ्यमाने स्वभोजने । अस्मात्परतरं चान्यन्न वक्तुमपि शक्यते ॥
निवृत्तिं प्रेतभावस्य पृच्छामस्त्वां दृढव्रत । यथा न भवति प्रेतस्तन्मे वद तपोधन ॥३८

ब्राह्मण उवाच ।

एकरात्रद्विरात्रादि कृच्छ्रचान्द्रायणादिभिः । व्रतैरन्यैः कृतैर्नित्यं न प्रेतो जायते नरः ॥
त्रीनग्नीन्पञ्च चैकं वा योऽहन्यहनि सेवते । स वै भूतदयापन्नो न प्रेतो जायते नरः ॥
तुल्यो मानेऽपमाने च तुल्यःकाञ्चनलोष्टयोः ।
तुल्यःशत्रौ च मित्रे च न प्रेतो जायते नरः ॥ ४१ ॥
देवतातिथिपूजासु गुरुपूजासु नित्यशः । रतो वै पितृपूजासु न प्रेतो जायते नरः ॥
शुक्लाङ्गारकसंयुक्ता चतुर्थी जायते यदा ।
श्रद्धया श्राद्धकृत्तस्यां न प्रेतो जायते नरः ॥ ४३ ॥
जितक्रोधविमर्शो यस्तृष्णासङ्गविवर्जितः । क्षमावान्दानशीलश्च न प्रेतो जायते नरः ॥
गोब्राह्मणांश्च तीर्थानि पर्वतांश्च नदीस्तथा । देवांश्चैव तु यो वन्द्यान्न प्रेतो जायते नरः

प्रेता ऊचुः ।

श्रुताश्च विविधा धर्माः पृच्छामो दुःखिता मुने । येन वै जायते प्रेतस्तन्नो वद महामते

ब्राह्मण उवाच ।

शूद्रान्नेन तु भुक्तेन ब्राह्मणेन विशेषतः । म्रियते ह्युदरस्थेन स वै प्रेतो भवेन्नरः ॥४७॥
मातरं पितरं भ्रातॄन्भगिनीं सुतमेव च । अदृष्टदोषांस्त्यजति स प्रेतो जायते नरः॥४८॥
अयाज्ययाजनाच्चैव याज्यस्य च विवर्जनात् । रतो वै शूद्रसेवासु स प्रेतो जायते नरः
न्यासापहर्ता मित्रध्रुक्छूद्रपाकरतः सदा ।
विस्रम्भघाती कूटस्थः स प्रेतो जायते नरः ॥ ५० ॥

ब्रह्महा गोघ्नकः स्तेनः सुरापो गुरुतल्पगः । भूमिकन्यापहर्त्ता च स प्रेतो जायते नरः
सामान्यां दक्षिणां लब्ध्वा एक एव निगूहति ।
नास्तिकी भावनिरतः स वै प्रेतोऽभिजायते ॥ ५२ ॥
एवं ब्रुवाणे विप्रेन्द्र आकाशे दुन्दुभिस्वनः ।
पुष्पवृष्टिः पपातोर्व्यां देवैर्मुक्ता सहस्रशः ॥ ५३ ॥
प्रेतानां तु विमानानि आगतानि समन्ततः ।
अस्य विप्रस्य सम्भाषात्पुण्यसङ्कीर्तनेन च ॥ ५४ ॥
तस्मात्सर्वप्रयत्नेन सतां सम्भाषणं कुरु । यदि ते श्रेयसा कार्यं गङ्गासुत अतन्द्रितः ॥
तिलकं सर्वधर्मस्य पञ्चप्रेतकथामिमाम् । पठेल्लक्ष्यंयोऽस्य कुले न प्रेतो जायते नरः ॥
शृणोति वाप्यभीक्ष्णं वा श्रद्धया परयाऽन्वितः ।
भक्त्या समन्वितो वापि न प्रेतो जायते नरः ॥ ५७ ॥

भीष्म उवाच ।

अन्तरिक्षे किमर्थं तु पुष्करं परिकीर्त्यते । मुनिभिर्धर्मशीलैश्च लभ्यते तत्कथं त्विह ॥
येन तल्लभ्यते लब्धं लब्धं चैव फलप्रदम् । तन्मे सर्वं समाचक्ष्व कौतुकादेव पृच्छतः ॥

पुलस्त्य उवाच ।

ऋषिकोटिस्समायाता दक्षिणापथवासिनी ।
स्नानार्थं पुष्करे राजन्पुष्करञ्च वियद्गतम् ॥ ६० ॥
मत्वा ते मुनयः सर्वे प्राणायामपरायणाः । ध्यायमानाःपरं ब्रह्मस्थिता द्वादशवत्सरान्
ब्रह्मामहर्षयस्तत्र देवास्सेन्द्रास्समागताः । ऋषयोऽन्तर्हिताः प्रोचुर्नियमांस्तेसुदुष्करान्
आकारणं पुष्करस्य मन्त्रेण क्रियतां द्विजाः ।
आपोहिष्ठेति तिसृभिर्ऋग्भिः सान्निध्यमेष्यति ॥ ६३ ॥
अघमर्षणजप्येन भवेद्वैफलदायकम् । विप्रैर्वाक्यावसाने तु सर्वैस्तैस्तु तथाकृतम् ॥६४॥
कृतेनपुण्यतां प्राप्ता ये निदेशाच्च ते द्विजाः । गर्हिता धर्मशास्त्रेषु ते विप्रादक्षिणोत्तराः
ये चान्ये पार्वतीयाश्च श्राद्धे नार्हन्ति केतनम् ।

एतस्मात्कारणाद्राजन्वियत्येवं समास्थितम् ॥ ६६ ॥
कार्तिक्यां पुष्करं स्नानात्पूततामभिगच्छति । ब्रह्मणा सहितं राजन्सर्वेषांपुण्यदायकम्
तत्रागतास्तु ये वर्णाः सर्वे ते पुण्यभाजनाः ।
द्विजैस्तुल्या न सन्देहो विना मन्त्रेण ते नृप ॥ ६८ ॥
आग्नेयं तु यदा ऋक्षं कार्तिक्यां भवति क्वचित् ।
महती सा तिथिर्ज्ञेया स्नाने दाने तथोत्तमा ॥ ६९ ॥
यदा याम्यं तु भवति ऋक्षं तस्यां तिथौ क्वचित् ।
तिथिः सापि महापुण्या यतिभिः परकीर्तिता ॥ ७० ॥
प्राजापत्यं यदा ऋक्षं तिथौ तस्यां नराधिप ।
सा महाकार्तिकी प्रोक्ता देवानामपि दुर्लभा ॥ ७१ ॥
यदा चार्के गुरौ सोमे वारेष्वेतेषु वै त्रिषु ।
त्रीण्येतानि च ऋक्षाणि स्वयं प्रोक्तानि ब्रह्मणा ॥ ७२ ॥
अत्राश्वमेधिकं पुण्यं स्नातस्यभवति ध्रुवम् । दानमक्षयतां याति पितॄणां तर्पणं तथा
विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः ।
स योगः पुष्करो नाम पुष्करेष्वतिदुर्लभः ॥ ७४ ॥
अन्तरिक्षावतीर्णे तु तीर्थे पैतामहे शुभे । स्नानं येऽत्र करिष्यन्ति तेषां लोकामहोदयाः
न स्पृहान्तेऽन्यपुण्यस्य कृतस्याप्यकृतस्य च ।
करिष्यन्ति महाराज सत्यमेतदुदाहृतम् ॥ ७६ ॥
तीर्थानां प्रवरं तीर्थं पृथिव्यामिह पठ्यते । नास्मात्परं पुण्यतीर्थं लोकेषु नृप पठ्यते ॥
कार्तिक्यां तु विशेषेण पुण्या पापहरा शुभा । उदुम्बरवनात्तस्मादागता च सरस्वती ॥
तया तत्पूरितं तीर्थं पुष्करं मुनिसेवितम् । दक्षिणे शिखरं भाति पर्वतस्याविदूरतः ॥
नीलाञ्जनचयप्रख्यं वर्णतोनीलशाद्वलम् । तया तच्छिखरं तस्य खस्थितंपुष्करं यथा ॥
प्रावृट्काले वियत्पूर्णं घनवृन्दमिवोच्छ्रितम् । कदम्बपुष्पगन्धाढ्यं कुटजार्जुनभूषितम्
रथमार्गमिवारोढुं रवेस्तच्छिखरं स्थितम् । वृत्तैस्सपुलकैस्स्निग्धैः स्त्रीणामिवपयोधरैः

श्रीफलैः शिखरं भाति समन्तात्सुमनोहरैः ।
गुञ्जद्भिः षट्पदकुलैः समन्तादुपशोभितम् ८३ ॥

कोकिलारावरुचिरं शिखिकेकारवाकुलम् । शृङ्गे मनोहरे तस्मिन्नुद्गता सुमनोरमा ॥ पुण्या पुण्यजलोपेता नदीयं ब्रह्मणस्सुता । वंशस्तम्बात्सुविपुला प्रवृत्ता चोत्तरामुखी गत्वा ततो नातिदूरात्पुनर्याति पराङ्मुखी । ततः प्रभृति सा देवी प्रसन्ना प्रकटास्थिता अन्तर्धानं परित्यज्य प्राणिनामनुकम्पया । कनका सुप्रभा चैव नन्दा प्राची सरस्वती पञ्चस्रोताः पुष्करेषु ब्रह्मणा परिभाषिता । तस्यास्तीरे सुरम्याणितीर्थान्यायतनानि च संसेवितानि मुनिभिः सिद्धैश्चापि समन्ततः । तेषु सर्वेषु भविता धर्महेतुः सरस्वती ॥ हाटकक्षितिगौरीणां तत्तीर्थेषु महोदयम् । दानं दत्तं नरैः स्नातैर्जनयत्यक्षयं फलम् ॥

धान्यप्रदानं प्रवरं वदन्ति तिलप्रदानं च तथा मुनीन्द्राः ।
यैस्तेषु तीर्थेषु नरैः प्रदत्तं तद्धर्महेतुप्रवरं प्रदिष्टम् ॥ ९१ ॥
प्रायोपवेशं प्रयतः प्रयत्नाद्यस्तेषु कुर्यात्प्रमदा पुमान्वा ।
तीर्थेऽपि संयोज्य मनोऽपि चेत्थं भुङ्क्ते फलं ब्रह्म गृहे यथेष्टम् ॥ ९२ ॥
तस्योपकण्ठे म्रियते हि यैस्तु कर्मक्षयात्स्थावरजङ्गमैश्च ।
ते चापि सर्वे सकलं प्रसह्य लभन्ति यज्ञस्य फलं दुरापम् ॥ ९३ ॥
ततस्तु सा धर्मफलारणी च जन्मादिदुःखार्दितचेतसां तु ।
सर्वात्मना चारुफला सरस्वती सेव्या प्रयत्नात्पुरुषैर्महानदी ॥ ९४ ॥

तत्र ये सलिलं पूतं पिबन्ति सततन्नराः । न ते मनुष्या देवास्ते जगत्यामिह संस्थिताः यज्ञैर्दानैस्तपोभिश्च यत्फलं प्राप्यते द्विजैः । तदत्र स्नानमात्रेण शूद्रैरपि स्वभावजैः ॥ दर्शनात्पुष्करस्यापि महापातकिनोऽपि ये । तेऽपि तत्पापनिर्मुक्ताः स्वर्गं यान्ति तनुक्षये तत्रोपवासी यज्ञस्य पुण्डरीकस्य यत्फलम् । तत्प्राप्नोति नरः क्षिप्रमल्पायासेन पुष्करे माघमासे तिलान्यस्तु प्रयच्छति च सद्द्विजे । यथाशक्तिच भक्त्या च सविष्णुभवनेवसेत्

तत्रोपवासं स्नानं च पञ्चगव्याशनं तथा ।
यः करोति नरः सोऽपि देहान्ते स्वर्गमाप्नुयात् ॥ १०० ॥

वसन्ति तत्समीपस्था. येऽपि तस्करजातयः ।
तेऽपि तस्यानुभावेन स्वर्यान्ति च न संशयः ॥ १०२ ॥
ये पुनः शूद्रवृत्तिस्थास्त्रिरात्रोपोषितानराः । प्रयच्छन्ति द्विजेभ्योऽर्थं ब्रह्मशक्तिसमन्विताः
ते मृता यानमारूढाः पद्मासनचतुर्भुजाः । ब्रह्मणा सह सायुज्यं प्राप्नुवन्त्यपुनर्भवम् ॥
गङ्गोद्भेदं यत्र गङ्गा सम्प्राप्ता सरितां वराम् ।
सरस्वतीं द्रष्टुकामा सान्त्वार्थे प्रोद्गताऽम्बरात् ॥ १०४ ॥
तत्रगत्वा पयः पूतं सुरसिद्धनिषेवितम् । सारस्वतं च विमलं विद्याधरगणार्चितम् ॥
पीतमेकाञ्जलिमितं येनाप्तं तेन तत्परम् । अवलोक्य दिशं पूर्वामाह गङ्गे सखि त्वया ॥
एकाकिनी वियुक्तास्मि क यास्येऽहमबान्धवा ।
तां विज्ञाय ततो गङ्गा रुदन्तीं शोककर्शिताम् ॥ १०७ ॥
पूर्वदेशात्समायाता द्रष्टुंतां दीनमानसाम् । दृष्ट्वाच तां महाभागां परिष्वज्य तु पीडिताम्
नेत्रे प्रमृज्य चैतस्याः प्राहगङ्गा वचस्तदा ।

गङ्गोवाच ।

मा रोदीस्त्वं महाभागे दुष्करं ते कृतं सखि ॥ १०६ ॥
देवकार्यं यदन्येन कर्तुं शक्येत नैवहि । एतस्मात्ते महाभागे द्रष्टुं देवाः समागताः ॥
एषाञ्च क्रियतां पूजा वाङ्मनःकायकर्मणा ।

पुलस्त्य उवाच ।

सरस्वती सुरेन्द्राणां कृत्वा पूजाविधिक्रमम् ॥ १११ ॥
क्रमेण ब्रह्मजा पश्चात्सङ्गता तु सखीजनम् । जेष्ठमध्यमयोर्मध्ये सङ्गमो लोकविश्रुतः ॥
पश्चान्मुखी ब्रह्मसुता जाह्नवी तु उदङ्मुखी । ततस्ते विबुधा सर्वे पुष्करं ये समागताः
विदित्वा दुष्करं कर्म तस्यां स्तुतिमकारयन् ।

देवा ऊचुः ।

त्वं बुद्धिस्त्वं मतिर्लक्ष्मीस्त्वं विद्या त्वं गतिः परा ॥ ११४ ॥
त्वं श्रद्धा त्वं परा निष्ठा बुद्धिर्मेधा रतिःक्षमा ।

त्वं सिद्धिस्त्वं स्वधा स्वाहा त्वं पवित्रं मतं महत् ॥ ११५ ।
सन्ध्या रात्रिः प्रभाभूतिर्मेधा श्रद्धासरस्वती । यज्ञविद्या महाविद्या गुह्यविद्याच शोभना
आन्वीक्षिकी तु या वार्ता दण्डनीतिश्च कथ्यते ।
नमोऽस्तु ते पुण्यजले नमः सागरगामिनि ॥ ११७ ॥
नमस्ते पापनिर्मोके नमो देवि जगत्प्रिये ।

पुलस्त्य उवाच ।

एवं स्तुता हि सा देवी दिव्या स्वार्थपरायणैः ॥ ११८ ॥
एवं सा प्राङ्मुखी तत्र स्थिता देवी सरस्वती । सर्वतीर्थमयी देवी सर्वामरसमन्विता
प्राची सेति बुधैर्ज्ञेया ब्रह्मणो वचनन्तथा । तत्र शुद्धावटं नाम तीर्थं पैतामहं स्मृतम्
दर्शनेनापि वै तस्य महापातकिनोऽपि ये ।
भोगिभोगान्समश्नन्ति विशुद्धा ब्राह्मणोऽन्तिके ॥ १२१ ॥
प्रायोपवेशं ये तत्र प्रकुर्वन्ति नरोत्तमाः । ते मृता ब्रह्मयानेन दिवं यान्त्यकुतोभयाः ॥
तत्राल्पमपि यैर्दानन्दत्तं ब्रह्मविदात्मनाम् । जन्मान्तरशतं तेषां तैर्दत्तं भावितात्मनाम् ॥
खण्डस्फुटितसंस्कारं तत्र कुर्वन्ति ये नराः । ते ब्रह्मलोकमासाद्य मोदन्ते सुखिनस्सदा
योऽत्र पूजा जपो होमः कृतो भवति देहिनाम् ।
अनन्तं तत्फलं सर्वं ब्रह्मभक्तिरतात्मनाम् ॥ १२५ ॥
तत्र दीपप्रदानेन ज्ञानचक्षुरतीन्द्रियः । प्राप्नोति धूपदानेन स्थानं ब्रह्मनिषेवितम् ॥ १२६ ।
अथ किं बहुनोक्तेन सङ्गमे यत्प्रदीयते । तदनन्तफलं प्रोक्तं जीवतो वा मृतस्य च ॥
स्नानाज्जपात्तथा होमादनन्तफलसाधकम् । रामेणागत्य वै तत्र पिण्डं दशरथस्य च ॥
दत्तं श्राद्धं तत्र तेन मार्कण्डेयेन दर्शिते । तत्रवापी चतुष्कोणा तत्र पिण्डप्रदा नराः ॥
हंसयुक्तेन यानेन सर्वंयान्ति त्रिविष्टपम् । तस्यां वाप्यां तु वै ब्रह्मा पितृमेधं चकार ह
यज्ञं यज्ञविदां श्रेष्ठः समाप्तवरदक्षिणम् । वसवः पितरो ज्ञेया रुद्राश्चैव पितामहाः ॥
आदित्याश्च ततस्तेषां विहिताः प्रपितामहाः ।
त्रिविधा अपि आहूय पुनरुक्ता विरिञ्चिना ॥ १३२ ॥

भवद्भिः पिण्डदानाद्यं ग्राह्यमत्रस्थितैस्सदा । यत्कृतं पितृकार्यं च तदनन्तफलं भवेत् ॥
तृप्त्यर्थं पितरस्तेषां तुष्टाश्चैव पितामहाः । लभन्ते तर्पणात्तृप्तिं पिण्डदानात्त्रिविष्टम् ॥

तस्मात्सर्वं परित्यज्य प्राचीने पिण्डदो भवेत् ।
दत्त्वा पुत्रः प्रयत्नेन पितॄन्सर्वांश्च तर्पयेत् ॥ १३५ ॥

प्राचीनेश्वरदेवस्य पुरोभूतं प्रतिष्ठितम् । आदितीर्थंतदित्युक्तं दर्शनादपि मुक्तिदम् ॥

स्पृष्ट्वा तु सलिलन्तत्र मुच्यते जन्मबन्धनात् ।
अवगाहनाद् ब्रह्मणोऽसौ भवत्यनुचरःसदा ॥ १३७ ॥
आदितीर्थे नरः स्नात्वा यःप्रदद्यात्समाधिना ।
अन्नमल्पमपि प्रायः प्रायशस्स्वर्गमाप्नुयात् ॥ १३८ ॥

यस्तत्र ब्रह्मभक्तानां नरः स्नात्वा ददेद्धनम् । कृसरेणापि हेम्नाच सत्स्वर्गे मोदते सुखी

प्राची सरस्वती तत्र नरैः किं मृग्यते परम् ।
तस्यां स्नानात्फलं तृप्त्यै तपोयज्ञादिलक्षणम् ॥ १४० ॥
ये पिबन्ति नराः पुण्यां प्राचीं देवीं सरस्वतीम् ।
न ते नराः सुराः ज्ञेया मार्कण्डेयर्षिरब्रवीत् ॥ १४१ ॥
सरस्वतीं नदीं प्राप्य न स्नाने नियमः क्वचित् ।
भुक्ते वा न च वा भुक्ते दिवा वा यदि वा निशि ॥ १४२ ॥

तत्तीर्थंसर्वतीर्थानांप्राचीनप्रवरंस्मृतम् । पापघ्नं पुण्यजननं प्राणिनां परिकीर्तितम् ॥

ये पुनर्भावितात्मानस्तत्र स्नात्वा जनार्दनम् ।
पूजयन्ति यथाशक्ति ते प्रयान्ति त्रिविष्टपम् ॥ १४४ ॥
देवानां प्रवरो विष्णुस्तेन यत्र सरस्वतीम् ।
सेविता तत्परंतीर्थं क्षितौ ब्रह्मसुतोऽब्रवीत् ॥ १४५ ॥

ततस्तस्मान्महातीर्थं मन्यमाना महोदयम् । मन्दाकिनीमुदीक्षन्ती स्थिता तत्र सरस्वती

तत्तीर्थं सर्वतीर्थानां परं स्वायम्भुवोऽब्रवीत् ।
मन्दकिन्या समं यत्र प्राप्य पुण्यसमागमम् ॥ १४७ ॥

तत्र स्थाने स्थिता देवैःस्तुता देवी सरस्वती ।
मत्वा चैकाकिनीं तां तु दीनास्यां दीनमानसाम् ॥ १४८ ॥

सखीं तदासृजद्ब्रह्मा रूपिणीं विमलेक्षणाम् । हरिणीं हरिरप्याशु जज्ञे कमललोचनाम्
वज्रिणीमपि देवेशो वज्रपाणिर्विसृष्टवान् । सुकुरङ्गरुचिर्देवो नीलकण्ठो वृषध्वजः ॥
सखीं सञ्जनयामास सरस्वत्यास्त्रिलोचनः । विलोक्यमाना साराजन्सखीभिःसुरसुन्दरी
प्रहृष्टा यातुमारब्धा देवादेशान्महानदी । ततः सखीभिः सार्द्धं सा प्राचीनागन्तुमुद्यता
सरस्वती समस्तानां तासां श्रेष्ठतमास्मृता । प्राची सरस्वतीतोयं ये पिबन्तिमृगाभुवि
तेऽपि स्वर्गं गमिष्यन्ति यज्ञैर्द्विजवरायथा । चिन्तामणिरिवात्रैषा प्राचीज्ञेया सरस्वती
तथा कामफलस्येयं हेतुभूता महानदी । दक्षिणां दिशमालोक्य पुनःपश्चान्मुखीगता
उक्ता तया तथागङ्गा दिशं प्राचीं व्रजस्वह । विस्मर्तव्या न चाहं ते व्रज देवियथागतम्

इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे तीर्थावतारो नाम द्वात्रिंशोऽध्यायः ।

---

# त्रयस्त्रिंशोऽध्यायः

## मार्कण्डेयोत्पत्तिकथानकम् ।

भीष्म उवाच ।

मार्कण्डेये न वैरामः कथमत्र प्रबोधितः । कथं समागमो भूतः कस्मिन्काले कदामुने
मार्कण्डेयः कस्य सुतः कथं जातो महातपाः । नाम्नोऽस्य निगमंब्रूहियथाभूतंमहामुने ॥

पुलस्त्य उवाच ।

अथ ते सम्प्रवक्ष्यामि मार्कण्डेयोद्भवं पुनः । पुरा कल्पे मुनिः पूर्वं मृकण्डुर्नाम विश्रुतः
भृगोः पुत्रो महाभागः सभार्यस्तप्तवांस्तपः । तस्यपुत्रस्तदा जातो वसतस्तु वनान्तरे
स पञ्चवार्षिको भूतो बालएव गुणाधिकः । ज्ञानिना सतदादृष्टो भ्रमन्बालस्तदाङ्गणे
स्थित्वा ससुचिरंकालं भाव्यर्थं प्रत्यबुध्यत । तस्य पित्रा सवै पृष्टःकियदायुः सुतस्यमे

सङ्ख्ययाऽऽचक्ष्व वर्षाणि तस्याल्पान्यधिकानि वा ।
मृकण्डुनैव मुक्तस्तु स ज्ञानी वाक्यमब्रवीत् ॥ ७ ॥

षण्मासमायुः पुत्रस्य धात्रा सृष्टं मुनीश्वर । नैवशोकस्त्वया कार्यः सत्यमेतदुदाहृतम्
सतच्छ्रुत्वा वचो भीष्म ज्ञानिनायदुदाहृतम् । अथोपनयनं चक्रे बालकस्य पिता तदा
आह चैनं पिता पुत्रमृषींस्त्वमभिवादय । एवमुक्तः सवैपित्रा प्रहृष्टश्चाभिवादने ॥१०॥
न वर्णावर्णतां वेत्ति सर्ववर्णाभिवादनः । पञ्चमासास्त्वतिक्रान्ता दिवसाःपञ्चविंशतिः
मार्गेणाथ समायाता ऋषयस्तत्र सप्त वै । बालेन तेन ते दृष्टाः सर्वे चाप्यभिवादिताः ॥
आयुष्मान्भव तै रुक्तः स बालो दण्डमेखली । उक्त्वैवं तेपुनर्बालमपश्यन्क्षीणजीवितम्
दिनानि पञ्च तस्यायुर्ज्ञात्वा भीताश्चतेनृप । तंगृहीत्वाबालकंचगतास्तेब्रह्मणोऽन्तिकम्
प्रतिमुच्य च तं राजन्प्रणिपेतुः पितामहम् । अयमावेदितस्तैस्तु तेन ब्रह्माभिवादितः ॥

चिरायुर्ब्रह्मणा बालः प्रोक्तः स ऋषिसन्निधौ ।
ततस्ते मुनयः प्रीताः श्रुत्वा वाक्यं पितामहात् ॥ १६ ॥
पितामहो ऋषीन्दृष्ट्वा प्रोवाच विस्मयान्वितः ।
कार्येण येन चायातः कोऽयं बालो निवेद्यताम् ॥ १७ ॥

ततस्त ऋषयो राजन्सर्वं तस्मै न्यवेदयन् । पुत्रोमृकण्डोः क्षीणायुः सायुषंकुरुबालकम्
अल्पायुषस्त्वस्य मुनिर्बद्ध्वेमां चापि मेखलाम् । यज्ञोपवीतंदण्डं च दत्त्वाचैनमबोधयत्
यं कंचित्पश्यसे बालभ्रमन्तं भूतले जनम् । तस्याभिवादः कर्तव्य एवमाह पिता वचः
अभिवादनशीलोऽयं क्षितौ दृष्टः परिभ्रमन् । तीर्थयात्राप्रसङ्गेन दैवयोगात्पितामह ॥
चिरायुर्भवपुत्रेति प्रोक्तोऽसौ तत्र बालकः । कथं वचो भवेत्सत्यमस्माकं भवतासह
एवमुक्तस्तदा तैस्तु ब्रह्मा लोकपितामहः । ऋतवाक्यादियं भूमिः संस्थिता सर्वतोभया

ब्रह्मोवाच ।

मत्समश्चायुषाबालो मार्कण्डेयो भविष्यति । ऋषीणांचापिमुख्यश्चमत्सहायोभविष्यति
कल्पस्यादौ तथा चान्ते मतो मे मुनिसत्तमः । एवं ते मुनयो बालं ब्रह्मलोकेपितामहात्
संसाध्य प्रेषयामासु भूयोऽप्येनं धरातलम् । तीर्थयात्रां गताविप्रामार्कण्डेयोनिजंगृहम्

जगाम तेषु यातेषु पितरं स्वमथाब्रवीत् । ब्रह्मलोकमहंनीतो मुनिभिर्ब्रह्मवादिभिः ॥
दीर्घायुश्च कृतश्चास्मि वरान्दत्वा विसर्जितः । एतदन्यच्च मे दत्तं गतं चिन्ताकरं तव ॥
कल्पस्यादौ तथा चान्ते भविष्ये समनन्तरे । लोककर्तुर्ब्रह्मणोऽहं प्रसादात्तस्य वै पितः
पुष्करं वै गमिष्यामि तपस्तप्तुं समुद्यतः । तत्राहं देवदेवेशमुपासिष्ये पितामहम् ॥
सर्वकामवाप्तिकरं सर्वारातिनिवर्हणम् । सर्वसौख्यप्रदं देवमिन्द्रादीनां परायणम् ॥
ब्रह्माणंतोषयिष्यामि सर्वलोकपितामहम् । मार्कण्डेयवचः श्रुत्वा मृकण्डुर्मुनिसत्तमः
जगाम परमं हर्षंक्षणमेकं समुच्छ्वसन् । धैर्यं सुमनसास्थाय इदं वचनमब्रवीत् ॥३३॥
अद्य मे सफलं जन्म जीवितं च सुजीवितम् । सर्वस्य जगतां स्रष्टा येन दृष्टःपितामहः
त्वया दायाद्वानस्मि पुत्रेण वंशधारिणा । त्वं गच्छ पश्य देवेशं पुष्करस्थं पितामहम्
दृष्टेतस्मिञ्जगन्नाथे न जरामृत्युरेव च । नृणां भवति सौख्यानि तथैश्वर्यं तपोऽक्षयम्

त्रीणि शृङ्गाणि शुभ्राणि त्रीणि प्रस्रवणानि च ।
पुष्कराणि तथा त्रीणि न विद्मस्तत्र कारणम् ॥ ३७ ॥

कनीयांसंमध्यमं च तृतीयं ज्येष्ठपुष्करम् । शृङ्गशब्दाभिधानानि शुभ्रप्रस्रवणानि च ॥
ब्रह्माविष्णुस्तथा रुद्रो नित्यं सन्निहितास्त्रियः । पुष्करेषु महाराज नातःपुण्यतमं भुवि
विरजंविमलं तोयंत्रिषु लोकेषु विश्रुतम् । ब्रह्मलोकस्य पन्थानं धन्याःपश्यन्तिपुष्करम्
यस्तु वर्षशतं साग्रमग्निहोत्रमुपासिता । कार्तिकीं वावसेदेकां पुष्करे सममेवच ॥४१॥
कर्तुम्मया न शकितं कर्मणा नैव साधितम् । तदयत्नात्त्वया तात मृत्युस्सर्वहरोजितः
तत्र दृष्टस्सदेवेशो ब्रह्मालोकपितामहः । नान्योमर्त्यस्त्वया तुल्योभविता जगतीतले ॥
अहं वै तोषितो येन पञ्चवार्षिकजन्मना । वरेण त्वं मदीयेन उपमा चिरजीविनाम् ॥
गमिष्यसि न सन्देहस्तथाशीर्वचनम्मम । एवं वदन्ति ते सर्वे व्रजलोकान्यथेप्सितान्
एवं लब्धप्रसादेन मृकण्डुतनयेन च । आश्रमः स्थापितस्तेन मार्कण्डाश्रम इत्युत ॥
तत्र स्नात्वा शुचिर्भूत्वा वाजपेयफलं लभेत् । सर्वपापविशुद्धात्मा चिरायुर्जायते नरः ॥

पुलस्त्य उवाच ।

तथान्यं ते प्रवक्ष्यामि इतिहासं पुरातनम् । यथा रामेण वै तीर्थं पुष्करं तु विनिर्मितम्

चित्रकूटात्पुरा रामो मैथिल्या लक्ष्मणेनच । अत्रेराश्रममासाद्य पप्रच्छ मुनिसत्तमम् ॥

राम उवाच ।

क्वानि पुण्यानि तीर्थानि किं वा क्षेत्रं महामुने ।
यत्र गत्वा नरो योगिन्वियोगं सह बन्धुभिः ॥ ५० ॥
नैव प्राप्नोति भगवन्स्तन्ममाचक्ष्वसुव्रत । अनेन वनवासेन राज्ञस्तु मरणेन च ॥५१॥
भरतस्य वियोगेन परितप्ये ह्यहं त्रिभिः । तद्वाक्यं राघवेणोक्तं श्रुत्वा विप्रर्षभस्तदा ॥
ध्यात्वा च सुचिरं कालमिदं वचमब्रवीत् ।

अत्रिरुवाच ।

साधु पृष्टं त्वया वीर रघूणां वंशवर्धन ॥ ५३ ॥
मम पित्रा कृतं तीर्थं पुष्करं नाम विश्रुतम् । पर्वतौ द्वौ च विख्यातौ मर्यादायज्ञपर्वतौ
कुण्डत्रयं तयोर्मध्ये ज्येष्ठमध्यकनिष्ठकम् ॥ ५५ ॥
तेषु गत्वा दशरथं पिण्डदानेन तर्पय । तीर्थानां प्रवरं तीर्थंक्षेत्राणामपि चोत्तमम् ॥
अवियोगा च सुरसा वापी रघुकुलोद्वह ॥ ५६ ॥
तथा सौभाग्यकूपोऽन्यः सुजलो रघुनन्दन । तेषु पिण्डप्रदानेन पितरो मोक्षमाप्नुयुः
आभूतसम्प्लवं कालमेतदाह पितामहः । तत्र राघव गच्छस्व भूयोऽप्यागमनं क्रिया ॥
तथेति चोक्त्वा रामोऽपि गमनाय मनो दधे । ऋक्षवन्तमभिक्रम्य नगरं वैदिशन्तथा ॥
चर्मण्वतीं समुत्तीर्य प्राप्तोऽसौ यज्ञपर्वतम् । तमतिक्रम्य वेगेन मध्यमे पुष्करे स्थितः ॥
पितॄन्सन्तर्पयामास अद्भिर्देवांश्च सर्वशः । स्नानावसाने रामेण मार्कण्डो मुनिपुङ्गव ॥
आगच्छञ्शिष्यसंयुक्तो दृष्टस्तत्रैव धीमता ।
गत्वा वै सम्मुखं तस्य प्रणिपत्य च सादरम् ॥ ६२ ॥
पृष्टोऽवियोगदः कूपः कतमस्यां दिशि प्रभो ।
सुतो दशरथस्याहं रामो नाम जनैः स्मृतः ॥ ६३ ॥
सौभाग्यवापींतां द्रष्टुमहं प्राप्तोऽत्रिशासनात् । तत्स्थानंतौ चैव कूपौ भगवान्प्रब्रवीतुमे
एवमुक्तश्च रामेण मार्कण्डः प्रत्युवाच ह ।

मार्कण्डेय उवाच ।

साधु राघव भद्रं ते सुकृतं भवता कृतम् ॥ ६५ ॥

तीर्थयात्राप्रसङ्गेन यत्प्राप्तोऽसीह साम्प्रतमम् ।

एह्यागच्छस्व पश्यस्व वापीं तामवियोगदाम् ॥ ६६ ॥

अवियोगश्च सर्वैश्च कूप एवात्र जायते । आमुष्मिके चैहिके च जीवतोऽपि मृतस्य वा

एतद्वाक्यं मुनीन्द्रस्य श्रुत्वा लक्ष्मणपूर्वजः । सस्मार रामो राजानं तदा दशरथं नृप ॥

भरतं सह शत्रुघ्नं भ्रातॄनन्यांश्च नागरान् । एवं चिन्तयतस्तस्य सन्ध्याकालो व्यजायत

उपास्य पश्चिमां सन्ध्यां मुनिभिः सह राघवः ।

सुष्वाप तां निशां तत्र भ्रातृभार्यासमन्वितः ॥ ७० ॥

विभावर्यवसाने तु स्वप्नान्ते रघुनन्दनः ।

पित्रा मात्रा तथा चान्यैरयोध्यायां स्थितः किल ॥ ७१ ॥

विवाहमङ्गले वृत्ते बहुभिर्बान्धवैः सह । समासीनः सभार्योऽसावृषिभिः परिवारितः

लक्ष्मणेनाप्येवमेव दृष्टोऽसौ सीतया तथा । प्रभाते तुमुनीनांतत्सर्वमेव प्रकीर्तितम् ॥

ऋषिभिश्चतथेत्युक्तः सत्यमेतद्रघूत्तम । मृतस्य दर्शने श्राद्धं कार्यमावश्यकं स्मृतम् ॥

वृद्धिकामास्तु पितरस्तथा चैवान्नकाङ्क्षिणः । ददन्ति दर्शनं स्वप्ने भक्तियुक्तस्य राघव

अवियोगस्तु ते भ्रात्रा पित्रा च भरतेन च । चतुर्दशानां वर्षाणां भविता राघव ध्रुवम्

कुरु श्राद्धं तथा वीर राज्ञो दशरथस्य च । अमी च ऋषयः सर्वे तव भक्ताःकृतक्षणाः ॥

अहं च जमदग्निश्च भारद्वाजश्च लोमशः । देवरातः शमीकश्च षडेते वै द्विजोत्तमाः ॥

श्राद्धे च ते महाबाहो संभारांस्त्वमुपाहर । मुख्यं चेङ्गुदिपिण्याकं बदरामलकैः सह ॥

श्रीफलानि च पक्वानि मूलं चोच्चावचं बहु । मार्गेण चाथ मांसेनधान्येन विविधेन च

तृप्तिं प्रयच्छ विप्राणां श्राद्धदानेन सुव्रत । पुष्करारण्यमासाद्य नियतो नियताशनः ॥

पितॄंस्तर्पयते यस्तु सोऽश्वमेधमवाप्नुयात् ।

स्नानार्थं तु वयं राम गच्छामो ज्येष्ठपुष्करम् ॥ ८२ ॥

इत्युक्त्वा ते गताः सर्वे मुनयो राघवं नृप । लक्ष्मणं चाब्रवीद्रामो मेध्यमाहर मे मृगम्

शुद्धे क्षणं च शशकं कृष्णशाकन्तथा मधु ।
जम्बीराणि च मुख्यानि मूलानि विविधानि च ॥ ८४ ॥
पक्वानि च कपित्थानि फलान्यन्यानि यानि च ।
तान्याहरस्व वै श्राद्धे क्षिप्रमेवास्तु लक्ष्मण ॥ ८५ ॥
तथा तत्कृतवान्सर्वं रामादेशाच्च राघवः । बदरेङ्गुदिशाकानि मूलानि विविधानि च ॥
तत्राहृत्य च रामेण कूटाकारः कृतो महान् ।
परिपक्कं च जानक्या सिद्धं रामे निवेदितम् ॥ ८७ ॥
स्नात्वा रामो योगवाप्यां मुनींस्तानुपालयन् । मध्याह्नाच्चलिते सूर्ये कालेकुतपकेतथा
आयाताऋषयः सर्वे येरामेणानुमन्त्रिताः । तानागतान्मुनीन्दृष्ट्वा वैदेही जनकात्मजा ॥
रामान्तकं परित्यज्य व्रीडिताऽन्यत्रसंस्थिता । विस्मयोत्फुल्लनयना चिन्तयानाचवेपती
ब्राह्मणा नेह जानन्ति श्राद्धकाले ह्युपस्थिताः ।
रामेण भोजिता विप्राः स्मृत्युक्तेन यथाविधि ॥ ९१ ॥
वैदिक्यश्च कृतास्सर्वाः सत्क्रियायास्समीरिताः ।
पुराणोक्तो विधिश्चैव वैश्वदेविकपूर्वकः ॥ ९२ ॥
भुक्तवत्सु च विप्रेषु दत्वा पिण्डान्यथाक्रमम् । प्रेषितेषु यथाशक्ति दत्वातेषुचदक्षिणाम्
गतेषु विप्रमुख्येषु प्रियांरामोऽब्रवीदिदम् । किमर्थं सुभ्रु नष्टासि मुनीन्दृष्ट्वा त्विहागतान्
तत्सर्वं त्वमिदं तत्त्वं कारणं वद मा चिरम् । भवितव्यं कारणेन तच्च गोप्यंनमे कुरु
शापितासि मम प्राणैर्लक्ष्मणस्य शुचिस्मिते ।
एवमुक्ता तदा भर्त्रा त्रपयाऽवाङ्मुखी स्थिता ॥ ९६ ॥
विमुञ्चन्ती साऽश्रुपातं राघवं वाक्यमब्रवीत् । शृणुत्वं नाथ यद्दृष्टमाश्चर्यमिह यादृशम्
राम त्वया चिन्त्यमानो राजेन्द्रस्त्विह चागतः ।
सर्वाभरणसंयुक्तौ द्वौ चान्यौ च तथाविधौ ॥ ९८ ॥
द्विजानां देहसंयुक्तास्त्रयस्ते रघुनन्दन । पितरस्तु मया दृष्टा ब्राह्मणाङ्गेषु राघव ॥
दृष्ट्वा त्रपान्विता चाहमपत्रान्ता तवान्तिकात् ।

त्वया वै भोजिता विप्राः कृतं श्राद्धं यथाविधि ॥ १०० ॥

वल्कलाजिनसंवीता कथं राज्ञःपुरःसरा । भ्रमामि रिपुवीरघ्न सत्यमेतदुदाहृतम् ॥

कौशेयानि च वस्त्राणि कैकेय्यापहृतानिच । ततः प्रभृति चैवाहं चीरिणी तु वनाश्रयम्

ज्ञात्वाहं न वदेकिञ्चिन्मा ते दुःखं भवत्विति ।

नाहं स्मरामि वै मातुर्न पितुश्च परन्तप ॥ १०३ ॥

कदा भविष्यतीहान्तो वनवासस्य राघव । एतदेवानिशं राम चिन्तयन्त्याः पुनः पुनः

व्रजन्ति दिवसा नाथ तव पद्भ्यां शपाम्यहम् ।

स्वहस्तेन कथं राज्ञो दास्ये वै भोजनं त्विदम् ॥ १०५ ॥

दासानामपि यो दासो नोपभुञ्जीतयत्कचित् । एतादृशी कथं त्वस्मै सम्प्रदातुंसमुत्सहे

याहं राज्ञा पुरा दृष्टा सर्वालङ्कारभूषिता । वालव्यजनहस्ता च वीजयन्ती नराधिपम् ॥

सा स्वेदमलदिग्धाङ्गी कथं पश्यामि भूमिपम् ।

व्यक्तं त्रिविष्टपं प्राप्तस्त्वया पुत्रेण तारितः ॥ १०८ ॥

दृष्ट्वा मां दुःखितां बालां वने क्लिष्टामनागसम् ।

शोकः स्यात्पार्थिवस्यास्य तेन नष्टास्मि राघव ॥ १०६ ॥

भवान्प्राणसमो राम न तु गोप्यं मम त्विह । सत्येन तेन चैवाथ स्पृशामि चरणौ तव

तच्छ्रुत्वाराघवः प्रीतः प्रियां तां प्रियवादिनीम् । अङ्कमानीयसुदृढं परिष्वज्यच सादरम्

भुक्तौ भोज्यं तदा वीरौ पश्चाद्भुक्ता च जानकी ।

एवं स्थितौ तदा सा च तां रात्रिं तत्र राघवौ ॥ ११२ ॥

उदिते च सहस्रांशौ गमनाय मनो दधुः ।

प्रत्यङ्मुखं गतः क्रोशं ज्येष्ठं यावच्च पुष्करम् ॥ ११३ ॥

पूर्वभागे पुष्करस्य यावत्तिष्ठति राघवः । शुश्राव च ततो वाचं देवदूतेन भाषितम् ॥

भोभोराघवभद्रं ते तीर्थमेतत्सुदुर्लभम् । अस्मिन्स्थानेस्थितो वीर आत्मनःपुण्यतां कुरु

देवकार्यं त्वया कार्यं हन्तव्या देवशत्रवः । ततो हृष्टमना वीरो ह्यब्रवील्लक्ष्मणं वचः ॥

सौमित्रेऽनुगृहीतोऽहं देवदेवेन ब्रह्मणा । अत्राश्रमपदं कृत्वा मासमेकं च लक्ष्मण ॥

व्रतं चरितुमिच्छामि कायशोधनमुत्तमम् ।

तथेति लक्ष्मणेनोक्ते व्रतं परिसमाप्यतु ॥ ११८ ॥

पिण्डदानादिभिर्दानैः श्राद्धैश्चैव पितामहान् । पुष्करे तु तदा रामोऽतर्पयद्विधिवत्तदा

कनकप्रासुभा चैव नन्दा प्राची सरस्वती । पञ्चस्रोताः पुष्करेषु पितॄणां तुष्टिदायिनी ॥

दैनन्दिनीं पितॄणां तु पूजां तां पितृपूर्विकाम् ।

रचयित्वा तदा रामो लक्ष्मणं वाक्यमब्रवीत् ॥ १२१ ॥

एहि लक्ष्मण शीघ्रं त्वं पुष्कराज्जलमानय । पादप्रक्षालनं कृत्वा शयनं कुरु संस्तरे ॥

विभावर्यां निवृत्तायां यास्यामो दक्षिणां दिशम् ।

लक्ष्मणस्त्वब्रवीद्वाक्यं सीतया नीयतां पयः ॥ १२३ ॥

नाहं राम सर्वकाले दासभावं करोमि ते । इयं पुष्टा च सुभृशं पीवरी च ममाप्युत ॥

किं त्वं करिष्यस्यनया भार्यया वद साम्प्रतम् ।

किं वा मृतस्य वै पृष्ठ इयं यास्यति ते प्रिया ॥ १२५ ॥

रक्षसे त्वं सदाकालं सुपुष्टां चैव सर्वदा । दृष्टा चैषा क्लेशयति सततं मां रघूत्तम ॥

त्वं च क्लेशयसे राम परत्र जायते क्षतिः । त्वत्कृते च सदा चाहं पिपासां क्षुधया सह

संसहामि न सन्देहः परत्र च निशामय । मृतानां पृष्ठतः कश्चिद्गतो नैव च दृश्यते ॥

भार्य्यापुत्रौ धनं चापि एवमाहुर्मनीषिणः ।

मृतश्च ते पिता राम त्यक्त्वा राज्यमकण्टकम् ॥ १२६ ॥

विनिक्षिप्य वने त्वां च कैकेय्याः प्रियकाम्यया ।

इह स्थिता सा कैकेयी धनं सर्वं च बान्धवाः ॥ १३० ॥

महाराजो दशरथ एक एव गतोगतिम् ।

मन्येऽहं न त्वया सार्धं सीता यास्यति वै ध्रुवम् ॥ १३१ ॥

करिष्यसे किमनया वद राघव साम्प्रतम् । श्रुत्वाचाश्रुतपूर्वं हिवाक्यं लक्ष्मणभाषितम्

विमना राघवस्तस्थौ सीता चापि वरानना ।

यदुक्तं लक्ष्मणेनाथ सीता सर्वं चकार ह ॥ १३३ ॥

स्नात्वाभुक्त्वा ततो वीरौ पुष्करेपुष्करेक्षणौ। नीत्वाविभावरीं तत्र गमनाय मनो दधुः

एह्युत्तिष्ठ च सौमित्रे व्रजामो दक्षिणां दिशम्।
सौमित्रिरब्रवीद्राम नाहं यास्ये कथञ्चन ॥ १३५ ॥

व्रजत्वमनया सार्धं भार्यया कमलेक्षण। नान्यद्वनंगमिष्यामि नैवायोध्यां च राघव ॥
अस्मिन्वनेवसिष्यामि वर्षाणीहचतुर्दश। मयाविनात्वयोध्यायां यदि त्वं न गमिष्यसि
अनेनवर्त्मना भूप आगन्तव्यं त्वया विभो। यदि जीवामि तत्कालं पुनर्यास्येपितुःपुरम्

तपस्सम्भावयिष्यामि मया त्वं किं करिष्यसि।
व्रज सौम्य शिवः पन्था मा च ते परिपन्थिनः ॥ १३९ ॥

पश्यामि त्वां पुनः प्राप्तं सभार्यं कमलेक्षणम्। पितृपैतामहं राज्यमयोध्यायां नराधिप
शत्रुघ्नभरतौ चोभौ त्वदाज्ञाकरणे स्थितौ। अहं ते प्रतिकूलस्तु वनवासे विशेषतः ॥

अनारतं दिवा चाहं रात्रौ चैव परन्तप।
कर्म कर्तुं न शक्नोमि व्रज सौम्य यथासुखम् ॥ १४२ ॥

एवं ब्रुवाणं सौमित्रिमुवाच रघुनन्दनः। कथं पूर्वमयोध्याया निर्गतोऽसि मया सह ॥
वनेवत्स्यास्यहं राम:नववर्षाणिपञ्च च। न तु त्वया विरहितः स्वर्गेऽपि निवसे क्वचित्
या गतिस्ते नरव्याघ्र मम सापि भविष्यति। प्रसादः क्रियतां मह्यं नय मामपि राघव
इदानीमर्धमार्गे त्वं कथं स्थास्यसि शत्रुहन्। लक्ष्मणस्त्वब्रवीद्राम नाहं गन्ता वनेपुनः
लक्ष्मणंसंस्थितंज्ञात्वारामोवचनमब्रवीत्। मामनुव्रज सौमित्र एको यास्यामिकाननम्
द्वितीया मे त्वियंसीतारामेणोक्तस्तुलक्ष्मणः।गृहीत्वाऽथसमुत्तस्थौरामवाक्यंसलक्ष्मणः
मर्यादापर्वतं प्राप्तौ क्षेत्रसीमां परन्तपौ। अजगन्धं च देवेशं देवदेवं पिनाकिनम्॥१४९॥
अष्टाङ्गप्रणिपातेननत्वारामस्त्रिलोचनम्। तुष्टाव प्रयतः स्थित्वा शङ्करं पार्वतीप्रियम् ॥
कृताञ्जलिपुटो भूत्वा रोमाञ्चितशरीरकः। सात्त्विकं भावमापन्नो विनिर्धूतरजस्तमाः

लोकानां कारणं देवं बुबुधे विबुधाधिपम् ॥ १५२ ॥

राम उवाच।

कृत्स्नस्य योऽस्य जगतः सचराचरस्य कर्ता कृतस्य च पुनः सुखदुःखदश्च

संहारहेतुरपि यः पुनरन्तकाले तं शङ्करं शरणदं शरणं व्रजामि ॥ १५३ ॥
यं योगिनो विगतमोहरजस्तमस्का भक्त्यैकतानमनसो विनिवृत्तकामाः ।
ध्यायन्ति निश्चलधियोऽमितदिव्यभावं तं शङ्करं शरणदं शरणं व्रजामि ॥
यश्चेन्दुखण्डममलं विलसन्मयूखं बद्ध्वा सदा प्रियतमां शिरसा बिभर्ति ॥
यश्चार्धदेहमददाद्गिरिराजपुत्र्यै तं शङ्करं शरणदं शरणं व्रजामि ॥ १५५ ॥
योऽयं सकृद्विमलचारुविलोलतोयां गङ्गां महोर्मिविषमां गगनात्पतन्तीम् ।
मूर्ध्ना दधे स्रजमिव प्रविलोलपुष्पां तं शङ्करं शरणदं शरणं व्रजामि ॥१५६॥
कैलासशैलशिखरं परिकम्पमानं कैलासशृङ्गसदृशेन दशाननेन ।
यत्पादपद्मविधृतं स्थिरतां दधार तं शङ्करं शरणदं शरणं व्रजामि ॥१५७॥
येनासकृद्दनुसुताः समरे निरस्ता विद्याधरोरगगणाश्च वरैः समग्रैः ।
संयोजिता मुनिवराः फलमूलभक्षास्तं शङ्करं शरणदं शरणं व्रजामि ॥१५८॥
दक्षाध्वरे च नयने च तथा भगस्य पूष्णस्तथा दशनपङ्क्तिमपातयच्च ।
तस्तम्भ यः कुलिशयुक्तमथेन्द्रहस्तं तं शङ्करं शरणदं शरणं व्रजामि ॥१५९॥
एनः कृतोऽपि विषयेष्वपि सक्तचित्ताज्ज्ञानान्वयश्रुतगुणैरपि नैव युक्ताः ।
यं संश्रिताः सुखभुजः पुरुषा भवन्ति तं शङ्करं शरणदं शरणं व्रजामि॥१६०।
अत्रिप्रसूतिरविकोटिसमानतेजाः सन्त्रासनं विबुधदानवसत्तमानाम् ॥
यः कालकूटमपिबत्प्रसभं सुदीप्तं तं शङ्करं शरणदं शरणं व्रजामि ॥१६१।
ब्रह्मेन्द्ररुद्रमरुतां च सषण्मुखानां दद्याद्वरं सुबहुशो भगवान्महेशः ।
नन्दिं च मृत्युवदनात्पुनरुज्जहार तं शङ्करं शरणदं शरणं व्रजामि ॥१६२॥
आराधितः सुतपसा हिमवन्निकुञ्जधूमव्रतेन मनसाऽपि परैरगम्ये ।
सञ्जीवनीमकथयद् भृगवे महात्मा तं शङ्करं शरणदं शरणं व्रजामि ॥१६३॥
नानाविधैर्गजबिडालसमानवक्त्रैर्दक्षाध्वरप्रमथनैर्बलिभिर्गणेन्द्रैः ।
योऽभ्यर्चितोऽमरगणैश्च सलोकपालैस्तं शङ्करं शरणदं शरणं व्रजामि॥१६४

क्रीडार्थमेवभगवान्भुवनानि सप्त नानानदीविहगपादपमण्डितानि ।
सब्रह्मकानि व्यसृजत्सुकृताहितानि,तं शङ्करं शरणदं शरणं व्रजामि ॥१६५॥
यस्याखिलं जगदिदं वशवर्ति नित्यं योऽष्टाभिरेव तनुभिर्भुवनानि भुङ्क्ते ।
यः कारणं सुमहतामपि कारणानां तं शङ्करं शरणदं शरणं व्रजामि ॥ १६६॥
शङ्खेन्दुकुन्दधवलं वृषभप्रवीरमारुह्यः क्षितिधरेन्द्रसुतानुयातः ।
यात्यम्बरं प्रलयमेघविभूषितं च तं शङ्करं शरणदं शरणं व्रजामि ॥ १६७ ॥
शान्तिमुनिंयमनियोगपरायणैस्तैर्भीमैर्महोग्रपुरुषैः प्रतिनीयमानम् ।
भक्त्यानतं स्तुतिपरं प्रसभं ररक्ष तं शङ्करं शरणदं शरणं व्रजामि ॥ १६८ ॥
यः सव्यपाणिकमलाग्रनखेन देवस्तत्पञ्चमं प्रसभमेव पुरस्सुराणाम् ।
ब्राह्मं शिरस्तरुणपद्मनिभश्चकर्त्त तं शङ्करं शरणदं शरणं व्रजामि ॥ १६९ ॥
यस्य प्रणम्य चरणौ वरदस्य भक्त्या स्तुत्वा च वाग्भिरमलाभिरतन्द्रितात्मा ।
दीप्तस्तमांसि नुदते स्वकरैर्विवस्वांस्तं शङ्करं शरणदं शरणं व्रजामि ॥ १७० ॥
ये त्वां सुरोत्तमगुरुं पुरुषा विमूढा जानन्ति नास्य जगतः सचराचरस्य ।
ऐश्वर्यमाननिगमानुशयेन पश्चात्ते यातनामनुभवन्त्यविशुद्धचित्ताः ॥ १७१ ॥
तस्यैवं स्तुवतोऽवोचच्छूलपाणिर्वृषध्वजः । उवाच वचनं हृष्टो राघवं तुष्टमानसः ॥

रुद्र उवाच ।

राम हृष्टोऽस्मि भद्रं ते जातस्त्वं निर्मले कुले ।
त्वं चापि जगतां वन्द्यो देवो मानुषरूपधृक् ॥ १७३ ॥
त्वया नाथेन वै देवाः सुखिनः शाश्वतीः समाः ।
सेविष्यन्ते चिरं कालं गते वर्षे चतुर्दशे ॥ १७४ ॥
अयोध्यामागतं त्वां ये द्रक्ष्यन्ति भुवि मानवाः ।
सुखं तेऽत्र भजिष्यन्ति स्वर्गे वासं तथाक्षयम् ॥ १७५ ॥
देवकार्यं महत्कृत्वा आगच्छेथाः पुनः पुरीम् ।
राघवस्तु तथा देवं नत्वा शीघ्रं विनिर्गतः ॥ १७६ ॥

इन्द्रमार्गां नदीं प्राप्य जटाजूटं नियम्य च । अब्रवील्लक्ष्मणं राम इदमर्पय मे धनुः॥१७७
रामवाक्यं तु तच्छ्रुत्वा सीतां वै लक्ष्मणोऽब्रवीत् ।
किमर्थं देवि रामेण त्यक्तोऽहं कारणं विना ॥ १७८
अपराधं न जानामि कुपितो यन्महाभुजः ।
रामेणाहं परित्यक्तः प्राणांस्त्यक्ष्याम्यसंशयम् ॥ १७९ ॥
नैव मे जीवितेनार्थो धिग्धिङ्मांकुलपांसनम् । आर्यस्य येनवै मन्युर्जनितःपापकारिणा
कांस्तु लोकान्गमिष्यामि अपध्यातो महात्मना ।
उभौ हस्तौ मुखे कृत्वा साश्रुकण्ठोऽब्रवीदिदम् ॥ १८१ ॥
नापराध्यामि रामस्य कर्मणा मनसागिरा । स्पृष्टौ ते चरणौ देवि मम नान्यागतिर्भवेत्
ततःसीताऽब्रवीद्रामं त्यक्तः किमनुजस्त्वया । वैषम्यं त्यज्यतां बाले लक्ष्मणेलक्ष्मिवर्धने
राघवस्त्वब्रवीत्सीतां नाहं त्यक्ष्यामि लक्ष्मणम् ।
न कदाचिदपि स्वप्ने लक्ष्मणस्य मतं प्रिये ॥ १८४ ॥
श्रुतपूर्वं च सुश्रोणि क्षेत्रस्यास्य विचेष्टितम् ।
अत्र क्षेत्रे जनास्सत्यं सर्वे हि स्वार्थतत्पराः ॥ १८५ ॥
परस्परं न पश्यन्ति स्वात्मनश्च हितंवचः । न शृण्वन्ति पितुः पुत्राः पुत्राणांपितरस्तथा
न शिष्या हि गुरोर्वाक्यं शिष्यस्यापि तथा गुरुः ।
अर्थानुबन्धिनी प्रीतिर्नकश्चित्कस्यचित्प्रियः ॥ १८७ ॥
इत्येवं कथयन्नेव प्राप्तो रेवां महानदीम् । चक्रेऽभिषेकं काकुत्स्थः सानुजः सहसीतया
तर्पयित्वा च सलिलैः स्वान्पितॄन्दैवतान्यपि । उदीक्ष्य च मुहुः सूर्यं देवताश्च समाहितः
कृताभिषेकस्तु रराज रामः सीताद्वितीयः सहलक्ष्मणेन ।
कृताभिषेकः सहशैलपुत्र्या गुहेन सार्धं भगवानिवेशः ॥ १९० ॥
इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे मार्कण्डेयाश्रमदर्शनं नाम त्रयस्त्रिंशोऽध्यायः ।

---

# चतुस्त्रिंशोऽध्यायः

## ब्रह्मकृतयज्ञकालर्त्विग्दक्षिणादिसर्वकृत्यवर्णनम् ।

भीष्म उवाच ।

कस्मिन्काले भगवता ब्रह्मणा लोककारिणा । यज्ञैर्यष्टुमारब्धं तद्भवान्वक्तुमर्हति ॥१॥

किं नामानो ऋत्विजस्ते ब्रह्मणा ये प्रकल्पिताः ।

का च वै दक्षिणा तेषां दत्ता तेन महात्मना ॥ २ ॥

यथाभूतं यथा वृत्तं तथा त्वं मे प्रकीर्तय । सुमहत्कौतुकं जातं यज्ञं पैतामहं प्रति ॥३॥

पुलस्त्य उवाच ।

पूर्वमेव मयाख्यातं यदा स्वायम्भुवो मनुः । सृष्ट्वा प्रजापतीन्सर्वानुक्तः सृष्टिं कुरुष्व वै

स्वयं तु पुष्करं गत्वा यज्ञस्याहृत्य विस्तरम् ।

ससम्भारान्समानाय्य वह्न्यगारे स्थितोऽभवत् ॥ ५ ॥

गायन्ति नित्यं गन्धर्वा नृत्यन्त्यप्सरसां गणाः ।

ब्रह्मोद्गाता होताध्वर्युश्चत्वारो यज्ञवाहकाः ॥ ६ ॥

एकैकस्यत्रयश्चान्ये परिवाराःस्वयङ्कृताः । ब्रह्माच ब्राह्मणाच्छंसी होता चाग्नीध्रएवच

आन्वीक्षिकी सर्वविद्या ब्राह्मी ह्येषाचतुष्टयी । उद्गाता च प्रत्युद्गाता प्रतिहर्ता सुब्रह्मण्यः

चतुष्टयी द्वितीयैषा तूद्गातुश्च प्रकीर्तिता । होता च मैत्रावरुणस्तथाऽच्छावाक एव च

ग्रावस्तुच्च चतुर्थोऽत्र तृतीया च चतुष्टयी । अध्वर्युश्च प्रतिष्ठाता नेष्टोन्नेता तथैव च ॥

चतुष्टयी चतुर्थ्येषां प्रोक्ता शन्तनुनन्दन । एते वै षोडश प्रोक्ता ऋत्विजो वेदचिन्तकैः

शतानित्रीणि षष्टिश्च यज्ञाः सृष्टाःस्वयम्भुवा । एतांश्चैतेषु सर्वेषु प्रवदन्ति सदाद्विजान्

सदस्यं केचिदिच्छन्ति त्रिसामाध्वर्युमेव च ।

ब्रह्माणं नारदं चक्रे ब्राह्मणाच्छंसि गौतमम् ॥ १३ ॥

देवगर्भं च होतारमाग्नीध्रं चैव देवलम् । उद्गाताङ्गिरसः प्रत्युद्गाता च पुलहस्तथा ॥

नारायणः प्रतिहर्ता सुब्रह्मण्योऽत्रिरुच्यते। तस्मिन्यज्ञेभृगुर्होता वसिष्ठो मैत्र एव च॥
अच्छावाकः क्रतुः प्रोक्तो ग्रावस्तु च्यवनस्तथा ।
पुलस्त्योऽध्वर्युरेवासीत्प्रतिष्ठाता च वै शिविः ॥ १६ ॥
बृहस्पतिस्तत्र नेष्टा उन्नेता शांशपायनः। धर्मः सदस्यस्तत्रासीत्पुत्रपौत्रसहायवान्
भरद्वाजः शमीकश्च पुरुकुत्सो युगन्धरः। एनकस्तीर्णकश्चैव केशः कुतप एव च॥
गर्गो वेदशिराश्चैव त्रिसामाध्वर्यवः कृताः। कण्वादयस्तथाचान्येमार्कण्डो गण्डिरेवच
पुत्रपौत्रसमेताश्च सशिष्याः सहबान्धवाः। कर्माणि तत्र कुर्वाणा दिवानिशमतन्द्रिताः
मन्वन्तरे व्यतीते तु यज्ञस्यावभृथोऽभवत्। दक्षिणाब्रह्मणे दत्ता प्राची होतुस्तु दक्षिणा
अध्वर्यवे प्रतीचीतु उद्गातुश्चोत्तरा तथा। त्रैलोक्यं सकलं ब्रह्मा ददौ तेषां तुदक्षिणाम्
धेनूनां च शतं प्राज्ञैर्दातव्यं यज्ञसिद्धये। अष्टौ तु यज्ञवाहेभ्यश्चत्वारिंशाधिकास्तथा॥
द्वितीयस्थानिनां चैव चतुर्विंशत्प्रकीर्तिताः। षोड़शैव तृतीयानां देयावै धेनवः शुभाः॥
द्वादशैव तथा चान्याआग्नीध्रादिषुदापयेत्। अनयासङ्ख्ययाचैवग्रामान्दासीरजाविकम्
सहस्रभोज्यं दातव्यं स्नात्वा चावभृथे क्रतौ। यजमानेन सर्वस्वंदेयंस्वायम्भुवोऽब्रवीत्
अध्वर्यूणां सदस्यानां स्वेच्छया दानमिष्यते। विष्णुंचाहूयवैब्रह्मावाक्यमाहमुदान्वितः

ब्रह्मोवाच।

अभिप्रसाद्य सावित्रीं त्वमिहानय सुव्रत। त्वयिदृष्टेन साकोपं करिष्यति शुभानना
स्निग्धैः सानुनयैर्वाक्यैर्हेतुयुक्तैर्विशेषतः। त्वं सदा मधुराभाषी जिह्वाते स्रवतेऽमृतम्
यः करोति न ते वाक्यं त्रैलोक्ये न सदृश्यते। गन्धर्वैःसहितो गत्वाप्रियांममसमानय
त्वया प्रसादिता साध्वी तुष्टा सा त्वेष्यति ध्रुवम् ।
विलम्बो न त्वया कार्यो व्रज माधव मा चिरम् ॥ ३१ ॥
लक्ष्मीस्तेपुरतो यातुसावित्र्याःसदनंशुभा। दृष्ट्वास्त्वंपदवींगच्छसान्त्वयस्वप्रियांमम
न च ते विप्रियं देवि विविक्तं कर्तुमीहते। मुखं प्रेक्ष्य सदा कालं वर्तते तव सुन्दरि॥
एवंविधानि वाक्यानि मधुराणि बहूनि च ।
देवी श्रावयितव्या सा यथा तुष्टाऽचिराद्भवेत् ॥ ३४ ॥

पुलस्त्य उवाच ।

एवमुक्तस्तदा विष्णुर्ब्रह्मणा लोककारिणा । जगाम त्वरितो भूत्वा सावित्रीयत्रतिष्ठति
दूरादेवागच्छमानं पत्न्या सह च केशवम् । उत्तस्थौ सत्वराभूत्वाविष्णुनाचाभिवन्दिता

विष्णुरुवाच ।

नमस्ते देवदेवेशि ब्रह्मपत्नि नमोऽस्तुते । त्वां नमस्कृत्य सर्वो हि जनःपापात्प्रमुच्यते
पतिव्रतामहाभागाब्रह्मणस्त्वंहृदिस्थिता । अहर्निशंचिन्तयंस्त्वांप्रसादं तेऽभिकाङ्क्षति
तस्यैवं दुःखतप्तस्य प्रसादं कर्तुमर्हसि । सखीं चैनां प्रियां पृच्छ लक्ष्मीं भृगुसुतांसतीम्
यदि च श्रद्धधानाऽसि वाक्यादस्मात्सुलोचने ।

पुलस्त्य उवाच ।

एवमुक्त्वा ततः शौरिःसावित्र्याश्चरणद्वयम् ॥ ४० ॥
उभाभ्यां चैव हस्ताभ्यां क्षमदेवि नमोऽस्तु ते । जगद्वन्द्यजगन्मातरितिस्पृष्ट्वाभ्यवन्दत
सङ्कोच्य पादौ सा देवी स्वकरेण करौ हरेः । गृहित्वोवाचतंविष्णुंसर्वंक्षान्तंमयाच्युत

सावित्र्युवाच ।

इयं लक्ष्मीः सदा वत्सहृदये ते निवत्स्यति । विनात्वयानचान्यत्ररतिंयास्यति कर्हिचित्
भृगोः पत्न्यां समुत्पन्ना पत्न्येषा तव सुव्रता । देवदानवयत्नेन सम्भूता चोदधौ पुनः
भगवान्यत्र तत्रैषा अवतारं च कुर्वती । देवत्वे देवदेहा वै मानुषत्वे च मानुषी ॥ ४५ ॥
त्वत्सहाया न सन्देहो दाम्पत्यव्रतिनीचिरम् । यन्मयाचात्रकर्तव्यंप्रभोतन्मां वदस्ववै ॥

विष्णुरुवाच ।

यज्ञावसानं सञ्जातं प्रेषितोऽहं तवान्तिकम् । सावित्रीमानय क्षिप्रं मयास्नानंसमाचरेत्
आगच्छत्वरिता देवि याहि तत्र मुदान्विता । पश्यस्वस्वपतिंगत्वादेवैःसर्वैस्समन्वितम्

लक्ष्मीरुवाच ।

आर्ये उत्तिष्ठ शीघ्रं त्वं याहियत्र पितामहः । विना त्वयानयास्यामिस्पृष्टौपादौमयातव

पुलस्त्य उवाच ।

उत्थाप्य साग्रहीद्धस्तं दक्षिणा दक्षिणे करे । चिरायमाणांसावित्रींज्ञात्वादेवःपितामहः

समीपस्थं महादेवमिदमाह तदा वचः ।

ब्रह्मोवाच ।

गच्छ त्वमनया सार्द्धं पार्वत्या सुरभूषण ॥ ५१ ॥

गौरी त्वदग्रतो यातु पश्चात्त्वं गच्छ शङ्कर । प्रतिबोध्यानय यथा शीघ्रमायाति तत्कुरु

पुलस्त्य उवाच ।

एव मुक्तो गतोरुद्रः पार्वत्या ब्रह्मणः प्रियाम् । तथाहृष्टौ दम्पती तौ पार्वती परमेश्वरौ

देवी सा सम्मुखीताभ्यामुत्थिता परमेश्वरी । दूरादेव तु रुद्रेण ब्रह्माणी चाभिवादिता

शिव उवाच ।

ब्रह्माप्रतीक्षते देवि माविलम्बस्व शोभने । वृहत्कृत्यं त्वया तत्र करणीयं पतिव्रते ॥

पृच्छस्वेमां वरारोहां गौरीं पर्वतनन्दिनीम् । लक्ष्मींचैतांविशालाक्षीमिन्द्राणींवाशुभानने

यासां वा श्रद्धयासित्वं पृच्छ देवि नमोऽस्तुते । आशीर्वादस्तयादत्तोदेवदेवस्यशूलिनः

सावित्र्युवाच ।

शरीरार्धे च ते गौरी सदास्थास्यतिशङ्कर । अनया शोभसे देव त्वन्तु त्रैलोक्यसुन्दर ॥

सुखभागि जगत्सर्वं त्वया नाथेन शत्रुहन् ।

पुलस्त्य उवाच ।

एवं ब्रुवन्ती सावित्री गृहीता ब्रह्मणःप्रिया ॥ ५६ ॥

गौर्य्या च वामहस्ते तु लक्ष्म्या वै दक्षिणे करे । अभिवन्द्यतुतांदेवींशङ्करोवाक्यमब्रवीत्

शिव उवाच ।

एह्यागच्छ महाभागे यत्रतिष्ठति ते पतिः । तत्र गच्छ वरारोहे स्त्रीणां भर्ता परा गतिः

एषागौरी समायाता भ्रातृभार्या तवानघा । वृहदाग्रहेण देवि प्रणयाद्गन्तुमर्हसि ॥ ६२॥

लक्ष्मी सैषा पार्वती च स्थिता देवि तवाग्रतः । एतयोर्वचसा देवि आवयोश्चशुभानने

मानभङ्गो नतेकर्तुं युज्यते ब्रह्मणःप्रिये । अस्मदभ्यर्थिता देवि तत्र याहि मुदान्विता ॥

गौर्युवाच ।

अहं च ते प्रिया देवि सर्वदा वदसि स्वयम् । लक्ष्मीश्चते करे लग्ना दक्षिणे च मयाधृता

एह्यागच्छ महाभागे यत्र तिष्ठति ते पतिः ।

पुलस्त्य उवाच ।

नीता सा तु तदा ताभ्यां देवी सा मध्यतः कृता ॥ ६६ ॥

पुरस्सरौ विष्णुरुद्रौ शक्राद्याश्च तथासुराः । गन्धर्वाप्सरसश्चैव त्रैलोक्यं सचराचरम्

तत्रायाता च सा देवी सावित्री ब्रह्मणःप्रिया ।

सावित्रीं सुमुखीं दृष्ट्वा सर्वलोकपितामहः ॥ ६८ ॥

गायत्र्यासहितो ब्रह्मा इदं वचनमब्रवीत् । एषा देवी कर्मकरी अहं ते वशगःस्थितः ॥

समादिश वरारोहे यत्ते कार्यं मयात्विह । एवमुक्ता च सा देवी स्वयं देवेन ब्रह्मणा ॥

त्रपयाऽधोमुखी देवी न च किञ्चिदवोचत । पादयोः पतिता देवी गायत्री ब्रह्मचोदिता

कृतवत्यपराधं ते क्षम देवि नमोऽस्तुते ।

पुलस्त्य उवाच ।

आलिङ्ग्य सादरं कण्ठे सा परिष्वज्य पीडिताम् ॥ ७२ ॥

गायत्रीं सान्त्वयामास मान्यश्चैष पतिर्मम ।

कर्त्तव्यं वचनं तस्य स्त्रीणां प्राणेश्वरःपति ॥ ७३ ॥

उक्तं भगवता पूर्वं सृष्टिकाले विरिञ्चिना । न च स्त्रीणां पृथग्यज्ञोन व्रतं नाप्युपोषणम्

भर्ता यद्वदतेवाक्यं तत्तुकुर्यादकुत्सया । भर्तृनिन्दां या कुरुते स्वसृनिन्दां तथैव च ॥

परिवादं प्रलापं वा नरकं सा तु गच्छति । पत्यौ जीवति या नारी उपवासव्रतं चरेत्

आयुष्यं हरते भर्तुर्मृता नरकमृच्छति । एवं ज्ञात्वा त्वया भर्तुर्न कार्यं विप्रियं सति ॥

न चास्य दक्षिणं त्वङ्गं त्वया सेव्यं कथञ्चन ।

सर्वकार्ये त्वहं चास्य दक्षिणं पक्षमाश्रिता ॥ ७८ ॥

सव्यं त्वमाश्रये स्साध्वि पार्श्वे नारदपुष्करौ ।

ब्रह्मस्थानानि चान्यानि स्थितान्यायतनानि च ॥ ७९॥

लभे वै शोभमानेह यावत्सृष्टिःप्रजायते । भवत्या च मयाचैव स्थातव्यं च न संशयः ॥

पुष्करे ब्रह्मणः पार्श्वे वामं च त्वं समाश्रय । अनेन चोपदेशेन सुखं तिष्ठ मयान्विता ॥

गायत्र्युवाच ।

एवमेतत्करिष्यामि तव निर्देशकारिका । तवैवाज्ञा मया कार्या त्वं मे प्राणसमा सखी
अहं ते त्वनुजा देवि सदा मां पातुमर्हसि ।

पुलस्त्य उवाच ।

देवदेवस्तदा ब्रह्मा पुष्करे विष्णुना सह ॥ ८३ ॥
स्नानावसाने देवानां सर्वेषां प्रददौ वरान् । देवानांच पतिं शक्रं ज्योतिषांच दिवाकरम्
नक्षत्राणां तथा सोमं रसानां वरुणं तथा । प्रजापतीनां दक्षं च नदीनां चैव सागरम् ॥
कुबेरं च धनाध्यक्षं तथा चक्रेच रक्षसाम् । भूतानां चैव सर्वेषां गणानां च पिनाकिनम्
मानवानां मनुं चैव पक्षिणां गरुडं तथा । ऋषीणां च वसिष्ठं च ग्रहाणां च प्रभाकरम्
एवमादीनि वै दत्त्वा देवदेवःपितामहः । विष्णुं च शङ्करं चैव ब्रह्मा प्रोवाच सादरम् ॥

ब्रह्मोवाच ।

पृथिव्याःसर्वतीर्थेषु भवन्तौ पूज्यसत्तमौ । भवद्भ्यां न विनातीर्थं पुण्यतामेति कर्हिचित्
लिङ्गं वा प्रतिमावापि दृश्यते यत्र कुत्रचित् । तत्तीर्थं पुण्यतां याति सर्वमेव फलप्रदम्
मानवा ह्युपहारैश्च ये करिष्यन्ति पूजनम् । युष्माकं मां पुरस्कृत्य तेषां रोगभयंकुतः॥
येषु राष्ट्रेषु युष्माकमुत्सवाः पूजनादिकाः ।
प्रवत्स्यन्ति क्रियाः सर्वा यत्फलं तेषु तच्छृणु ॥ ९२ ॥
नाधयो व्याधयश्चैव नोपसर्गा न क्षुद्भयम् । विप्रयोगो न चापीष्टैरनिष्टैर्नापि सङ्गतिः
नाक्षिरोगः शिरोर्त्तिर्वा पित्तशूल भगन्दराः । नाभिचारं भयं तत्रापस्मारो न विषूचिका
वृद्धिर्निकामतस्तस्मिन्सम्यग्बुद्धिरनुत्तमा । आरोग्यं सर्वतश्चैवदीर्घायुश्च प्रजाधनम् ॥
नाकालेभविता मृत्युर्गावो नाल्पपयोमुचः । नाकालफलितावृक्षा नोत्पातभयमण्वपि
एतच्छ्रुत्वा ततो विष्णुर्ब्रह्माणं स्तोतुमुद्यतः ॥ ९७॥

विष्णुरुवाच ।

नमोऽस्त्वनन्ताय विशुद्धचेतसे स्वरूपरूपाय सहस्रबाहवे ।
सहस्ररश्मिप्रभवाय वेधसे विशालदेहाय विशुद्धकर्मणे ॥ ९८ ॥

समस्त विश्वार्तिहाराय शम्भवे समस्त सूर्यानलतिग्मतेजसे ।
नमोऽस्तु विद्यावितताय चक्रिणे समस्तधीस्थानकृते सदा नमः ॥ ९९ ॥
अनादिदेवाच्युत शेखर प्रभो भाव्युद्भवद्भूतपते महेश्वर ।
महत्पते सर्वपते जगत्पते भुवःपते भुवनपते सदा नमः ॥ १०० ॥
यज्ञेश नारायण जिष्णुशङ्कर क्षितीश विश्वेश्वर विश्वलोचन ।
शशाङ्क सूर्याच्युतवीर विश्वप्रवृत्तमूर्तेऽमृतमूर्त अव्यय ॥ १०१ ॥
ज्वलद्धुताशार्चिनिरुद्धमण्डलप्रदेश नारायण विश्वतोमुख ।
समस्त देवार्तिहरा मृताव्यय प्रपाहि मां शरणगतं तथा विभो ॥१०२॥
वक्त्राण्यनेकानि विभो तवाहं पश्यामि यज्ञस्य गतिं पुराणम् ।
ब्रह्माणमीशं जगतां प्रसूतिं नमोऽस्तु तुभ्यं प्रपितामहाय ॥ १०३ ॥
संसारचक्रक्रमणैरनेकैः क्वचिद्भवान्देववराधिदेवः ।
तत्सत्रं विज्ञानविशुद्धसत्त्वैरुपास्यसे किं प्रणमाम्यहं त्वाम् ॥ १०४ ॥
एवं भवन्तं प्रकृतेः पुरस्ताद्यो वेत्त्यसौ सर्वविदां वरिष्ठः ।
गुणान्वितेषु प्रसभं विवेद्यो विशालमूर्तिस्त्विह सूक्ष्मरूपः ॥ १०५ ॥
वाक्पाणिपादैर्विगतेन्द्रियोऽपि कथं भवान्वै सुगतिस्तुकर्मा ।
संसारबन्धे निहितेन्द्रियोऽपि पुनःकथं देववरोऽसिवेद्यः ॥ १०६ ॥
मूर्त्तादमूर्त्तं न तु लभ्यते परं परं वपुर्देव विशुद्धभावैः ।
संसारविच्छित्तिकरैर्यजद्भिरतोऽवसीयेत चतुर्मुखत्वम् ॥ १०७ ॥
परं न जानन्ति यतो वपुस्ते देवादयोऽप्यद्भुतरूपधारिन् ।
विभोऽवतारेऽग्रतरं पुराणमाराधयेद्यत्कमलासनस्थाम् ॥ १०८ ॥
न ते तत्त्वं विश्वसृजोऽपि योनिमेकान्ततो वेत्ति विशुद्धभावः ।
परं त्वहं वेद्मि कथं पुराणं भवन्तमाद्यं तपसा विशुद्धम् ॥ १०९ ॥
पद्मासनो वै जनकःप्रसिद्ध एवं प्रसिद्धिर्ह्यसकृत्पुराणात् ।
सञ्चिन्त्यते नाथ विभुं भवन्तं जानाति नैवं तपसा विहीनः ॥ ११० ॥

अस्माद्वशैश्च प्रवरैर्विबोध्यं त्वां देव मूर्खाः स्वमतिं विभज्य ।
प्रबोद्धुमिच्छन्ति न तेषु बुद्धिरुदारकीर्तिष्वपि वेदहीनाः ॥ १११ ॥
जन्मान्तरैर्वेदविवेकबुद्धिभिर्भवेद्यथा वा यदि वा प्रकाशः ।
तल्लाभलुब्धस्य न मानुषत्वं न देवगन्धर्वपतिःशिवःस्यात् ॥ ११२ ॥
न विष्णुरूपो भगवान्सुसूक्ष्मःस्थूलोऽसि देवःकृतकृत्यतायाः ।
स्थूलोऽपि सूक्ष्मःसुलभोऽसि देव त्वद्बाह्यकृत्या नरके पतन्ति ॥ ११३ ॥
विमुच्यते वा भवति स्थितेऽस्मिन्दस्त्रेन्दुवह्न्यर्कमरुन्महीभिः ।
तत्त्वैःस्वरूपैः समरूपधारिभिरात्मस्वरूपे विततस्वभावः ॥ ११४ ॥
इति स्तुतिं मे भगवन्ह्यनन्त जुषस्व भक्तस्य विशेषतश्च ।
समाधियुक्तस्य विशुद्धचेतसस्त्वद्भावभावैकमनोऽनुगस्य ॥ ११५ ॥
सदाहृदिस्थो भगवन्नमस्ते नमामि नित्यं भगवन्पुराण ।
इतिप्रकाशं तवमेतदीशस्तवं मया सर्वगति प्रबुद्ध ॥ ११६ ॥
संसारचक्रे भ्रमणादियुक्ता भीतिं पुनर्नः प्रतिपालयस्व ॥ ११७ ॥

ब्रह्मोवाच ।

सर्वज्ञस्त्वं न सन्देहो ज्ञानराशिश्च केशव । देवानां प्रथमःपूज्यःसर्वदात्वं भविष्यसि ॥
नारायणादनन्तरं रुद्रोभक्त्या विरिञ्चनम् । तुष्टाव प्रणतो भूत्वा ब्रह्माणं कमलोद्भवम् ॥
नमःकमलपत्राक्ष नमस्ते पद्मजन्मने ।
नमःसुरासुरगुरो कारिणे परमात्मने ॥ १२० ॥
नमस्ते सर्वदेवेश नमो वै मोहनाशन । विष्णोर्नाभिस्थितवते कमलासनजन्मने ॥
नमो विद्रुमरक्ताङ्गपाणिपल्लवशोभिने । शरणं त्वां प्रपन्नोऽस्मि त्राहि मां भवसंसृतेः
पूर्वं नीलाम्बुदाकारं कुड्मलंते पितामह । दृष्ट्वा रक्तमुखं भूयः पत्रकेसरसंयुतम् ॥ १२३ ॥
पद्मं चानेकपत्रान्तमसङ्ख्यातं निरञ्जनम् । तत्रस्थितेन त्वयैषा सृष्टिश्चैव प्रवर्तिता ॥
त्वां मुक्त्वा नान्यतस्त्राणं जगद्वन्द्य नमोऽस्तु ते ।
सावित्रीशापदग्धोऽहं लिङ्गं मे पतितं क्षितौ ॥ १२५ ॥

इदानींकुरु मे शान्तिं त्राहि मां सहभार्यया। ब्रह्मा वै पातु मे पादौ जङ्घे वै कमलासनः
विरिञ्चो मे कटिं पातु सृष्टिकृद्गुह्यमेव च। नाभिं पद्मनिभःपातु जठरं चतुराननः॥
उरस्तु विश्वसृक्पातुहृदयं पांतु पद्मजः। सावित्रीपतिर्मेकण्ठं हृषीकेशो मुखं मम॥
पद्मवर्णश्च नयने परमात्मा शिरो मम। एवंन्यस्य गुरोर्नाम शङ्करोनाम शङ्करः॥१२९॥
नमस्ते भगवन्ब्रह्मन्नित्युक्त्वा विररामह। ततस्तुष्टो हरं ब्रह्मा वाक्यमेतदुवाचह॥१३०॥

ब्रह्मोवाच।

कं ते कामं करोम्यद्य पृच्छ मां यद्यदिच्छसि।

रुद्र उवाच।

यदि प्रसन्नो मे नाथ वरदो यदि वा मम॥ १३१॥
तदेकं मे वद विभो यस्मिन्स्थाने भवान्स्थितः।
केषु केषु च स्थानेषु त्वां पश्यन्ति सदा द्विजाः॥ १३२॥

नाम्ना च केन ते स्थानं शोभते धरणीतले। तन्मे वदस्व सर्वेश तवभक्तिरतस्य च॥

ब्रह्मोवाच।

पुष्करेऽहं सुरश्रेष्ठो गयायां च चतुर्मुखः। कान्यकुब्जे देवगर्भो भृगुकक्षे पितामहः॥
कावेर्य्यांसृष्टिकर्ता च नन्दिपुर्य्यां बृहस्पतिः। प्रभासे पद्मजन्मा च वानर्य्यां च सुरप्रियः
द्वारवत्यां तु ऋग्वेदी वैदिशे भुवनाधिपः। पौण्ड्रके पुण्डरीकाक्षः पिङ्गाक्षो हस्तिनापुरे
जयन्त्यां विजयश्चास्मि जयन्तः पुष्करावते। उग्रेषुपद्महस्तोऽहं तमोनद्यां तमोनुदः॥

अहिच्छत्रे जयानन्दी काञ्चीपुर्यां जनप्रियः।
ब्रह्माऽहं पाटलीपुत्र ऋषिकुण्डे मुनिस्तथा॥ १३८॥

महितारे मुकुन्दश्च श्रीकण्ठःश्रीनिवासिते। कामरूपे शुभाकारो वाराणस्यां शिवप्रियः
मल्लिकाक्षे तथा विष्णुर्महेन्द्रे भार्गवस्तथा। गोनर्दे स्थविराकार उज्जयिन्यां पितामहः
कौशाम्ब्यां तु महाबोधिरयोध्यां च राघवः। मुनीन्द्रश्चित्रकूटे तु वाराहो विन्ध्यपर्वते
गङ्गाद्वारे परमेष्ठी हिमवत्यपि शङ्करः। देविकायां स्रुचाहस्तः स्रुवहस्तश्चतुर्वटे॥१४२॥
वृन्दावने पद्मपाणिः कुशहस्तश्च नैमिषे। गोप्लक्षेचैव गोपीन्द्रः सचन्द्रो यमुनातटे॥
भागीरथ्यां पद्मतनुर्जलानन्दो जलन्धरे। कौङ्कणे चैव मद्राक्षःकाम्पिल्ये कनकप्रियः॥

वेङ्कटे चान्नदाता च शम्भुश्चैव क्रतुस्थले।
लङ्कायां च पुलस्त्योऽहं काश्मीरे हंसवाहनः॥ १४५॥
वसिष्ठश्चार्बुदे चैव नारदश्चोत्पलावते। मेलके श्रुतिदाताहं प्रपाते यादसां पतिः॥१४६॥
सामवेदस्तथा यज्ञे मधुरे मधुरप्रियः। अङ्कोटे यज्ञभोक्ता च ब्रह्मवादे सुरप्रियः ॥१४७॥
नारायणश्च गोमन्ते मायापुर्यां द्विजप्रियः। ऋषिवेदे दुराधर्षो देवायां सुरमर्दनः॥
विजयायां महारूपः स्वरूपो राष्ट्रवर्द्धने। पृथूदरस्तु मालव्यां शाकम्भर्यां रसप्रियः॥
पिण्डारके तु गोपालः शङ्खोद्धारेऽङ्गवर्द्धनः।
कादम्बके प्रजाध्यक्षो देवाध्यक्षः समस्थले॥ १५०॥
गङ्गाधरो भद्रपीठे जलशाय्यहमर्बुदे। त्र्यम्बके त्रिपुराधीशः श्रीपर्वते त्रिलोचनः॥
महादेवः पद्मपुरे कापाले वैधसस्तथा। शृङ्गवेरपुरे शौरिर्नैमिषे चक्रपाणिकः॥ १५२॥
दण्डपुर्यां विरूपाक्षो गौतमो धूतपापके। हंसनाथो माल्यवति द्विजेन्द्रो वलिके तथा
इन्द्रपुर्यां देवनाथो द्यूतपायां पुरन्दरः। हंसवाहस्तु लम्बायां चण्डायां गरुडप्रियः॥
महोदये महायज्ञः सुयज्ञो यज्ञकेतने। सिद्धिस्मरे पद्मवर्णो विभायां पद्मबोधनः॥ १५६॥
देवदारुवने लिङ्गं महापत्तौ विनायकः।
त्र्यम्बको मातृकास्थाने अलकायां कुलाधिपः॥ १५६॥
त्रिकूटे चैव गोनर्दःपाताले वासुकिस्तथा। पद्माध्यक्षश्च केदारे कूष्माण्डे सुरतप्रियः॥
कुण्डवाप्यां सुभाङ्गस्तु सारण्यांतक्षकस्तथा। अक्षोटे पापहाचैव अम्बिकायांसुदर्शनः
वरदायां महावीरः कान्तारे दुर्गनाशनः। अनन्तश्चैव पर्णाटे प्रकाशायां दिवाकरः॥
विराजायां पद्मनाभःस्वरुद्रश्च वृकस्थले।
मार्कण्डो वटके चैव वाहिन्यां मृगकेतनः॥ १६०॥
पद्मावत्यां पद्मगृहो गगने पद्मकेतनः। अष्टोत्तरं स्थानशतं मया ते परिकीर्तितम्।
यत्र वै मम सान्निध्यं त्रिसन्ध्यं त्रिपुरान्तक। एतेषामपि यस्त्वेकं पश्यते भक्तिमान्नरः
स्थानं सुविरजं लब्ध्वा मोदते शाश्वतीः समाः।
मानसं वाचिकं चैव कायिकं यच्च दुष्कृतम्॥ १६३॥

तत्सर्वंनाशमायाति नात्रकार्याविचारणा। यस्त्वेतानिच सर्वाणि गत्वा मां पश्यतेनरः
भवते मोक्षभागी च यत्राहं तत्र वै स्थितः। पुष्पोपहारैर्धूपैश्च ब्राह्मणानां च तर्पणैः॥
ध्यानेन च स्थिरेणाशु प्राप्यते परमेश्वरः। तस्य पुण्यफलं चाग्र्यमन्ते मोक्षफलं तथा
स ब्रह्मलोकमासाद्य तत्कालं तत्र तिष्ठति। पुनःसृष्टौ भवेद्देवो वैराजानां महातपाः॥
ब्रह्महत्यादिपापानि इहलोके कृतान्यपि। अकामतःकामतो वा तानि नश्यन्ति तत्क्षणात्

इहलोके दरिद्रो यो भ्रष्टराज्योऽथवापुनः।
स्थानेष्वेतेषु वै गत्वा मां पश्यति समाधिना॥ १६६॥

कृत्वापूजोपहारं च स्नानंच पितृतर्पणम्। कृत्वापिण्डप्रदानं च सोऽचिराद्दुःखवर्जितः
एकच्छत्रो भवेद्राजा सत्यमेतन्नसंशयः। इहराज्यानि सौभाग्यं धनंधान्यं वरस्त्रियः
भवन्ति विविधास्तस्य यैर्यात्रा पुष्करेकृता। इदं यात्राविधानं यःकुरुते कारयेत वा॥
श्रृणोति वा सपापैस्तु सर्वैरेव प्रमुच्यते। अगम्या गमनं येन कृतं जानाति मानवः॥
ब्रह्मक्रियाया लोपेन बहुवर्षं कृतेन च। यात्रां चेमां सकृत्कृत्वा वेदसंस्कारमाप्नुयात्
किमत्र वहुनोक्तेन इदमस्तीह शङ्कर। अप्राप्यं प्राप्यते तेन पापं चापि विनश्यति॥
सर्वयज्ञफलैस्तुल्यं सर्वतीर्थफलप्रदम्। सर्वेषां चैव वेदानां समाप्तिस्तेनवै कृता॥
यःकृत्वा पुष्करे सन्ध्यां सावित्रींसमुपासिता। स्वपत्नी हस्तदत्तेन पौष्करेण जलेन तु
भृङ्गारेण वरेणैव मृण्मयेनापि शङ्कर। आनीयतज्जलं पुण्यं सन्ध्योपास्तिर्दिनक्षये १७८॥
समाधिना समाधेया सप्राणायामपूर्विका। तस्यां कृतायां यत्पुण्यं तच्छृणुष्वहराद्यमे
तेन द्वादशवर्षाणि भवेत्सन्ध्यासुवन्दिता। अश्वमेधफलं स्नाने दाने दशगुणं तथा॥
उपवासेऽप्यनन्तं च स्वयं प्रोक्तं मयाऽनघ। सावित्र्याःपुरतोयस्तु दम्पत्योर्भोजनं ददेत्
तेनाहं भोजितस्तत्र भवामीह न संशयः। द्वितीयं भोजयेद्यस्तु भोजितस्तेन केशवः॥
लक्ष्मीसहायो वरदो वरांस्तस्य प्रयच्छति। उमासहायस्तार्तीये भोजितोसि न संशयः

अथवा या कुमारीणां भक्त्यादद्याच्चभोजनम्।
तस्याःकुलेभवेद्वन्ध्या न कदाचिच्चदुर्भगा॥ १८४॥
न कन्या जननी क्वापि न भर्तुर्या न वल्लभा।

पुलस्त्य उवाच ।

तस्मात्सर्वंप्रयत्नेन सावित्र्यग्रे तु भोजनम् ॥ १८५ ॥

पारत्रमैहिकं वापि कामयद्भिर्नरैःसदा । दातव्यं सर्वदा भीष्म कटुतैल विवर्जितम् ॥

न चाम्लं न च वै क्षारं स्त्रीणां भोज्यं कदाचन ।

भक्ष्यं पञ्च प्रकारं च रसैः सर्वैस्सुसंस्कृतम् ॥ १८७ ॥

घृतपूर्यःसुपकाश्च बहुक्षीर समन्विताः । शिखरिणी तथा पेया दधिक्षीर समन्विता ॥

आह्लादकारिणी पुंसां स्त्रीणां चातीवभल्लभा । धनधान्याञ्जनोपेतनारीणां च शताकुलम्

पूपकं शष्कुलं तस्यांजायते नात्रसंशयः । न ज्वरो न च सन्तापो न दुःखं न वियोगिता

असौ तारयते स्वानां कुलानामेकविंशतिम् । बन्धुभिश्च सुतैश्चैव दासीदासैरनन्तकैः ॥

पूरितं च कुलं तस्याःपूरिकां या प्रदास्यति । एधते च चिरंकालं पुत्रपौत्र समन्वितम्

कुलं च सकलं तस्यशष्कुलं यःप्रयच्छति । पुत्रिण्यो वै दुहितरो बन्धुभिःसहितंकुलम्

शिखरिणी प्रदात्रीणां युवतीनां न संशयः । मोदते तु कुलं तस्याःसर्वसिद्धि प्रपूरितम्

मोदकानां प्रदानेन एवमाह प्रजापतिः । एतदेव तु गौरीणां भोजनं हर शस्यते १९५॥

सुभगा पुत्रिणीसाध्वी धनऋद्धि समन्विता । सहस्रभोजिनी शम्भोजन्मजन्मभविष्यति.

पूपानि चैव पुण्यानि कृतानि मधुराणि च । द्राक्षारस प्रधानं च गुडखण्ड समन्वितम्

शारदेन तु धान्येन कृत्वा खण्डंविमिश्रितम् ।

स्त्रीणां चैव तु पेयानि भक्ष्याणि च द्विजन्मनाम् ॥ १९८ ॥

इह चाविकवासांसि वर्षायोग्यानि सर्वशः । यानियानिचपेयानितानियोग्यानिदापयेत्

प्रतिपूज्य विधानेन वसुदानैः सकञ्चुकैः । कुङ्कुमेनानुलिप्ताङ्ग्याःस्रग्दामभिरलङ्कृताः

दत्त्वा तूपानहावङ्घ्रोर्नारिकेलं करेतथा । अक्ष्णोश्चैवाञ्जनं दत्त्वा सिन्दूरंचैवमस्तके

गुडं फलानि हृद्यानि वाञ्छितानिमृदूनि च ।हस्ते.दत्त्वासपात्राणिप्रणिपत्य विसर्जयेत्

स्वयंभुञ्जीत वै पश्चात्सबन्धुर्बालकैःसह । अथवानैव सम्पत्तिस्तीर्थे दानं च भाजनम्

गृहेगतः प्रदास्यामि इष्टोदेव प्रसीद मे । एवमेव पितॄणां च आगत्य स्वीयमन्दिरे॥२०४

पिण्डप्रदानपूर्वं तु श्राद्धं कुर्याद्विधानतः । पितरस्तस्य वै तृप्ता भवन्ति ब्रह्मणोदितम्

तीर्थादष्टगुणं पुण्यं स्वगृहे ददतांशिव । न च पश्यन्ति वै नीचाःश्राद्धंद्विजातिभिःकृतम्
एकान्ते तु गृहेगुप्ते पितॄणांश्राद्धमिष्यते । नीचदृष्ट्या हतं तच्च पितॄन्नैवोपतिष्ठति ॥
तस्मात्सर्वप्रयत्नेन श्राद्धंगुप्तं च कारयेत् । पितॄणां तृप्तिदं प्रोक्तं स्वयमेव स्वयम्भुवा

गौरीभक्त्याधिका या तु शस्ता ज्ञातक्रिया तु सा ।
राजसी मनसा ज्ञाता जनानां कीर्तिदायिनी ॥ २०६ ॥

गुप्तंदानं सदादेयमात्मनोहितमिच्छता । पक्वान्नं दृश्यतामेति दीयमानं जनैर्भुवि ॥
दृश्यमानं तु तत्तुष्ट्यै दृश्यते नेह कर्हिचित् । एकस्मिन्भोजते विप्रे कोटिर्भवतिभोजिता
भवनेनात्रसन्देहः सत्यं पौराणिकं वचः । तीर्थे तु ब्राह्मणं नैव परिक्षेत कथञ्चन ॥
अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत् । सक्तुभिः पिण्डदानं च संयावैः पायसेन वा
कर्त्तव्यमृषिभिर्दृष्टं पिण्याकेनेङ्गुदेन वा । तिलपिण्याककैर्देयं भक्तिमद्भिर्नरैःसदा॥२१४॥

श्राद्धं तत्र तु कर्तव्यमर्घ्यावाहनवर्जितम् ।
स्वधां तु गृध्राःकाका वा नैव दृष्ट्या हरन्ति ते ॥ २१५ ॥

श्राद्धं तत्तैर्थिकं प्रोक्तं पितॄणां तृप्तिदं परम् । कर्तव्यं तत्प्रयत्नेन भक्तिरेवात्रकारणम् ॥

भक्त्या तुष्यन्ति पितरस्तुष्टाः कामान्दिशन्ति ते ।
पुत्रं पौत्रं धनंधान्यं कामान्यान्मनसेच्छति ॥ २१७ ॥

भक्त्याचाराधितो दद्यात्तॄणांप्रीतःपितामह । अकालेऽप्यथकाले वा तीर्थे श्राद्धं सदानरैः
प्राप्तैरेव सदास्नानं कर्तव्यं पितृतर्पणम् । पिण्डदानं च कर्तव्यं पितॄणांचातिवल्लभम् ॥
पितरो हि निरीक्षन्ते गोत्रजं समुपागतम् । आशया परयायुक्ताः काङ्क्षन्तस्सलिलंचते

विलम्बो नैवकर्तव्यो नैवविघ्नं समाचरेत् ।
अच्छिन्ना सन्ततिस्तेषां सदाकालं भविष्यति ॥ २२१ ॥

पितरःपुत्रदातारो वृद्धिश्राद्धाभिकाङ्क्षिणः । तेन ते सन्ततिच्छेदं न कुर्वन्तिहिकर्हिचित्
अतःश्राद्धं पुराप्रोक्तं स्वयमेव स्वयम्भुवा । गुणोत्तरं तु यत्कार्यं द्विजैः पितृपरायणैः ॥
तीर्थे क्षेत्रे गृहे वापि सङ्क्रान्तौ ग्रहणेऽपिवा । विषुवे अयनेचापि जन्मर्क्षे च प्रपीडिते
एतान्वै श्राद्धकालांस्तु पुरास्वायम्भुवोऽब्रवीत् । कृते श्राद्धेन वै पुंसां पीडाभवतिदेहजा

तदा पुत्रकृतंवापि सर्वंत्यजति दुष्कृतम् । यथा न भविता पीड़ा ग्रहचोरनृपादिकात्
दुष्कृतं नश्यते सर्वं परत्र च गतिं शुभाम् । लभते नात्र सन्देह प्रजापति वचो यथा ॥
कृतेयुगे पुष्कराणि त्रेतायां नैमिषंस्मृतम् । द्वापरे च कुरुक्षेत्रं कलौ गङ्गां समाश्रयेत् ॥
दुष्करःपुष्करेवासो दुष्करं पुष्करेतपः । दुष्करं पुष्करेदानं दुष्करः पुष्करे जपः ॥
यदन्यत्र कृतं पापं तीर्थेतद्याति लाघवम् । न तीर्थकृतमन्यत्र क्वचित्पापं व्यपोहति ॥
सायंप्रातःस्मरेद्यस्तु पुष्कराणि कृताञ्जलिः । उपस्पृष्टं भवेत्तेन सर्वतीर्थेषु भारत ॥२३१
सायम्प्रातरुपस्पृश्य पुष्करे नियतेन्द्रियः । क्रतून्सर्वानवाप्नोति ब्रह्मलोकं च गच्छति ॥
द्वादशाब्दं द्वादशाहं मासं मासार्धमेव च । यो वसेत्पुष्करेनित्यं सगच्छेत्परमांगतिम्
सर्वेषामेव लोकानां ब्रह्मलोकोपरि स्थितः । य इच्छेत्पुष्करंगन्तुं सोऽनुसेवेतपुष्करम्

यथा लोम विलोमाभ्यां तथा व्यस्तसमस्तयोः ।
स्नातस्तु पुष्करे सम्यक्कोट्याश्च फलमश्नुते ॥ २३५ ॥

विधिवत्क्रियमाणेषु सर्वतीर्थेषु यत्फलम् । पुष्करालोकनादेव नरःप्राप्नोति तत्फलम् ॥
दशकोटिसहस्राणि तीर्थानां वै महीतले । सान्निध्यं पुष्करे तेषां त्रिसन्ध्यं कुरुनन्दन
यावत्तिष्ठन्ति गिरयो यावत्तिष्ठन्ति सागराः । तावत्पुष्करमृत्यूनां ब्रह्मलोको न संशयः
जन्मान्तरसहस्रैश्च आजन्म मरणान्तिकम् । निर्दहेद्दुष्कृतं सर्वं सकृत्स्नात्वातु पुष्करे

पुष्करं दुष्करं क्षेत्रं सर्वपापप्रणाशनम् ॥ २३६ ॥
पुष्करे वाऽजगन्धं ये प्रपश्यन्ति स्म मानवाः ।
तेऽप्यशेषाघनिर्मुक्ता यान्ति रुद्रसलोकताम् ॥ २४० ॥

तत्रोष्य रजनीमेकां भवस्य सदने शुचिः । अम्बुभक्षौ वायुभक्षःशिवसायुज्यतां व्रजेत्
अजकर्णे ह्रदे स्नात्वा दृष्ट्वा माहेश्वरं पदम् । सुवर्णमौलिमालोक्य किं पुनःपरितप्यते ॥
एकहंसं कुरुक्षेत्रे गङ्गाभेदं च नैमिषे । पुष्करे तु अजं दृष्ट्वा मुक्तिरेषा विशिष्यते ॥२४३॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे ब्रह्मयज्ञवर्णनं नाम चतुस्त्रिंशत्तमोऽध्यायः ।

---

## पञ्चत्रिंशोऽध्यायः

### क्षेमङ्कर्युत्पत्तिवर्णनम् ।

भीष्म उवाच ।

क्षेमङ्करी तु या देवी स्थिता पुष्करपर्वते । तस्या उत्पत्तिमाचक्ष्व परंकौतूहलं हि मे ॥

पुलस्त्य उवाच ।

या सा क्षेमङ्करीदेवी सर्वसत्त्वबलोत्कटा । सात्त्विकी परमाशक्तिःपुष्करं प्राप कारणे
शुभवक्त्राम्बुजा देवी नीलायतविलोचना । तस्यास्तपन्त्याःकालेन महत्त्वात्कुपितं मनः

तस्यक्रोधात्समुत्तस्थुःकुमार्यस्सौम्यलोचनाः ।
नीलकुञ्चितकेशान्ता बिम्बोष्ठाःपद्मलोचनाः ॥ ४ ॥

नितम्बरशनादामनूपुराढ्याःसुवर्चसः । एवंविधाःस्त्रियो देव्याःक्षुभिते मनसिद्रुतम् ॥
सहस्रशःसमुत्तस्थुःकोटिशोविविधामलाः । सृष्ट्वा कुमारीस्तादेवीस्तस्मिन्नेवगिरौशुभाः
तपसा निर्मितं देव्या पुरमाकाशगं महत् । विशालरथसौवर्णप्राकारेणोपशोभितम् ॥
अन्तर्जलानि वेश्मानि मणिसोपानवन्ति च । रत्नजालगवाक्षाणि आसन्नोपवनानि च

प्राधान्येन प्रवक्ष्यामि कन्यानामानि तेऽनघ ।
विद्युत्प्रभा चन्द्रकान्तिस्सूर्यकान्तिस्तथापरा ॥ ६ ॥

गम्भीरा दारुकेशी च सुकेशी चापि सुन्दरी । नीलकेशी घृताची च उर्वशी शीलमण्डना
चारुकर्णा विशालाक्षी धन्याःपीनपयोधरा । चन्द्रप्रभा गिरिसुता तथा सूर्यप्रभानना
स्वयम्प्रभा चारुमुखी सर्वदूती विभावरी । जया च विजयाचैव तथा चैवापराजिता ॥
एताश्चान्याश्च शतशःकन्यास्तस्मिन्पुरोत्तमे । देव्या अनुचर्यःसर्वाःपाशाङ्कुशधराःशुभाः
ताभिःपरिवृतादेवी सिंहासनगता स्थिता । यौवनस्था महाभागा पीनोन्नतपयोधरा ॥
चम्पकाशोकपुन्नागनागकेसरदामभिः । सचामरार्चिता देवी यावदास्ते तपोऽन्विता ॥
तावदागतवांस्तत्र नारदो ब्रह्मणःसुतः । तं दृष्ट्वा सहसाऽऽयातं ब्रह्मपुत्रं तपोनिधिम् ॥

विद्युत्प्रभामुवाचेदमासनं दीयतामिति । पाद्यमाचनीयं च क्षिप्रमस्मै प्रदीयताम् ॥१७॥
एवमुक्ता तदा देवी कन्या विद्युत्प्रभा शुभा । आसनं पाद्यमर्घ्यं च नारदाय न्यवेदयत्॥
ततःकृतासनं दृष्ट्वा प्रणतं नारदंमुनिम् । उवाच वचनं देवी हर्षेण महताऽन्विता ॥१६॥

देव्युवाच ।

स्वागतं तेमुनिश्रेष्ठकस्माल्लोकादिहागतः । किं कार्यं देवयत्कृत्यं मानःकालात्ययो भवेत्

पुलस्त्य उवाच ।

इत्येवमुक्तःसमुनिर्नारदःप्राह लोकवित् ॥ २१ ॥

नारद उवाच ।

ब्रह्मलोकादिन्द्रलोकं तस्माद्रौद्रमथाचलम् । इहस्थां त्वां च वैदेवि द्रष्टुमभ्यागतो ह्यहम्

पुलस्त्य उवाच ।

एवमुक्त्वा मुनिवरस्तां देवीं सन्निरीक्ष्य च । अहोऽभयमहोधैर्यमहोकान्तिरहोवयः ॥
अहोनिष्कामता देव्या इतिखेदमुपाययौ । देवगन्धर्वसिद्धानां यक्षकिन्नररक्षसाम् ॥
न रूपमीदृशं कापि स्त्रीष्वन्यास्विह दृश्यते । एवं सञ्चिन्त्य मनसा नारदोविस्मयान्वितः
प्रणम्य देवीं वरदामुत्पपात नभस्तलम् । गतश्च त्वरयायुक्तःपुरीं दैत्येन्द्रपालिताम् ॥

महिषाख्येन या भीष्म समुद्रान्तःस्थिता तदा ।
तत्राससाद भगवान्महिषं दानवाकृतिम् ॥ २७ ॥

दृष्ट्वा लब्धवरं वीरं देवसैन्यान्तकं महत् । स तेन पूजितो भक्त्या नारदो मुनिपुङ्गवः
प्रीतात्मा नारदस्तस्मै देव्यारूपमनुत्तमम् । आचख्यौ तद्यथान्यायं यद्दृष्टं पुष्करे तथा

नारद उवाच ।

असुरेन्द्र शृणुष्वैकं कन्यारत्नसमन्वितम् ।
येन लब्धेन लब्धं स्यात्त्रैलोक्यं सचराचरम् ॥ ३०॥

ब्रह्मलोकादहं दैत्य पुष्करारण्यमागतः । तत्र देवी पुरंदृष्टं कुमारीशतसङ्कुलम् ॥ ३१ ॥
तत्र प्रधानाया कन्या तापसी व्रतधारिणी । आदेवदैत्य यक्षाणां मध्ये काचिन्न दृश्यते

तादृशी तु शुभा दैत्य तादृग्ब्रह्माण्डमध्यतः ।

तादृशी भ्रमता दृष्टा न कदाचिन्मया सतो ॥ ३३ ॥
तस्याश्च देवगन्धर्वाःसिद्धकिन्नरचारणाः । उपासाञ्चक्रिरे सर्वे ये चान्ये देवनायकाः
तां दृष्ट्वा च शुभां देवीं त्वां द्रष्टुं समुपागतः ।
अजित्वा देवताःसर्वा न तां लभेत कर्हिचित् ॥ ३५ ॥

पुलस्त्य उवाच ।

एवमुक्त्वा क्षणं स्थित्वा तमनुज्ञाप्य नारदः ।
यथागतं ययौ धीमानन्तर्धानेन तत्क्षणात् ॥ ३६ ॥
गते तु नारदे दैत्यश्चिन्तयामासतां शुभाम् । श्रुताया नारदमुखात्स्मृत्वाविस्मितमानसः
तामेव चिन्तयञ्छर्म न लभे दैत्यसत्तमः । तत्रज्ञान्सर्वमन्त्राणां मन्त्रिणःसमुपाह्वयत् ॥
तस्याष्टौ मन्त्रिणो धीरानीतिमन्तो बहुश्रुताः । प्रघसो विघसश्चैव शङ्कुकर्णो विभावसुः
विद्युन्माली सुमाली च पर्जन्योऽक्रूर एव च । एते मन्त्रिवराः सर्वे प्राधान्येनप्रकीर्तिताः
ते दानवेन्द्रमासाद्य ऊचुःकृत्यं विधीयताम् । तेषां तद्वचनं श्रुत्वा दानवेन्द्रो महाबलः॥
उवाच कन्यालाभाय नारदावाप्तनिश्चयः ॥ ४२ ॥

महिषासुर उवाच ।

मह्यं हि कथिताबाला नारदेन सुरर्षिणा । बिम्बोष्ठी चारुसर्वाङ्गी चन्द्रकान्ततरा हि सा
स्तनौ च पीनौ कठिनौ संहतौ चारुदर्शनौ । मृणालकोमलौ बाहू नयने च सुतारके ॥
गम्भीरा वर्तुला नाभिस्त्रिवली शोभनोदरा । विस्तीर्णजघना चैव सुश्रोणी मृदुगामिनी
कदलीगर्भसङ्काशमूरुयुग्मं च शोभनम् । चरणौ सुप्रभौ तस्या धरण्यां सुप्रतिष्ठितौ ॥
परोपकारिणा तेन मुनिना भावितात्मना । एवंविधा मे कथिता श्रुता या वीर्यहारिणी
पुंसां वै श्राविते लिङ्गे दृष्टा प्राणहरा हि सा ।
अवश्यं सा मया ग्राह्या युष्माकं सन्निधौ रणे ॥ ४८ ॥
सा वाऽजित्वा सुरान्यक्षान्नलभ्येत किलाङ्गना । एतदर्थं भवन्तो मे कथयन्तु विनिश्चयम्
कथं साऽलभ्यते बाला कथंदेवाश्च निर्जिताः । भवेयुरिति ते सर्वे मन्त्रिणो दानवेश्वरम्
ऊचुःसम्मन्त्रिताःसर्वेकथयामो वयं तव । एवमुक्त्वा वचोऽवोचत्प्रघसो दानवेश्वरम् ॥

प्रघस उवाच ।

यासा ते कथिता दैत्य नारदेन महासती । सा शक्तिःपरमादेवी वैष्णवी लोकधारिणी
गुरुपत्नीं भृत्यपत्नीं तथा सामन्तयोषितः । जिघृक्षन्म्रियते राजन्नगम्यागमनेन च ॥५३॥
साग्निज्वाला तृणं त्वं च सा च त्वां निर्दहिष्यति ।
एवं ज्ञात्वा न भावं तु कर्तुमर्हसि दानव ॥ ५४ ॥
सुरर्षिणा सुरकार्यं कर्तुकामेन कीर्तिता ॥ ५५ ॥

पुलस्त्य उवाच ।

प्रघसेनैव मुक्ते तु तद्देवीं प्रतिपार्थिव । दैत्येश्वरमथाहेदं विघसो नयकोविदः ॥ ५६ ॥

विघस उवाच ।

वारणीया कदाचित्तु सर्वदा विजिगीषुभिः । अन्यतन्त्रेण कन्यायाःकार्यं कापि प्रधर्षणम्
यदि ते रोचते वाच्यं मदीयं राजसत्तम । इदानीं तां शुभां देवीं गत्वा याचतु कश्चन ॥
यो महात्मा भवेत्तस्य बन्धुस्तंयाचयामहे । साम्नैवादौ ततःपश्चात्करिष्यामःप्रयाणकम्
ततोभेदं करिष्यामस्ततो दण्डंक्रमेण वै । अनेन क्रमयोयेन यदि सा नैव लभ्यते ॥६०॥
ततःसन्नह्य गच्छाम बलाद्गृह्णाम तां तदा ।

महिषासुर उवाच ।

साधूक्तो विघसेनैष यत्नःप्रति वराननाम् ॥ ६१ ॥
तदेव क्रियतां शीघ्रं दूतस्तत्र विसृज्यताम् । यः सर्वशास्त्रनीतिज्ञःशुचिःशौचसमन्वितः
सत्यं ज्ञात्वा तु तां देवीं वर्णतो रूपतो गुणैः । पराक्रमेण शौर्येण वयसा च बलेन च
बन्धुवर्गेण सामग्र्या मानेनाभरणेन च । एवं ज्ञात्वा तु तां देवीं ततःकार्यं विधीयताम्

पुलस्त्य उवाच ।

प्रशस्य तस्य तद्वाक्यं विघसं मन्त्रिसत्तमम् । प्रशस्यसर्वे तं दूतं सन्देष्टुमुपचक्रमुः ॥
विद्युत्प्रभं महाभागं बहुमायाविदं शुभम् । विसर्जयित्वा तं दूतं विघसो वाक्यमब्रवीत्

विघस उवाच ।

सन्नह्यतां दानवेन्द्र चतुरङ्गबलेन च । क्रियतां विजयं तावद्देवसैन्यं प्रति प्रभो ॥ ६७ ॥

असुरेन्द्र सुरैर्भग्नैस्त्वत्पराक्रमभीषितः। साकन्यावश्यतामेति त्वयि शक्रत्वमागते॥
लोकपालैर्जितैःसर्वैस्तथैव मरुतांगणैः। नागैर्विद्याधरैःसिद्धैर्गन्धर्वैःसर्वतोजितैः॥६९॥
रुद्रैर्वसुभिरादित्यैस्त्वमेवेन्द्रो भविष्यसि। इन्द्रस्य ते सतःकन्या देवगन्धर्वयोषितः॥
वसमेवागमिष्यन्ति सर्वदा भयपीडिताः॥ ७०॥

पुलस्त्य उवाच।

एवमुक्तस्तदा दैत्यः सेनापतिमुवाच ह। विरूपाक्षं महामेघं नीलाञ्जनसमप्रभम्॥७१॥

महिषासुर उवाच।

आनीयतां द्रुतंसैन्यं हस्त्यश्वरथपत्तिमत्। येन देवांश्च गन्धर्वाञ्जयामो युधि दुर्जयान्

पुलस्त्य उवाच।

एवमुक्तो विरूपाक्षस्तं गृहीत्वा समूर्धनि। उवाच तं दानवेन्द्रं प्रणिपत्य प्रशस्य च॥

विरूपाक्ष उवाच।

अविरोधेनदेवानां तिष्ठराजञ्छतं समाः। जीवद्भिःप्राप्यते राज्यं भोगाःसौख्यं धनानिच
एतन्मत्वा न विरोधं सुरैर्गच्छ महाद्युते। ब्रह्मणा ते वरोदत्तस्त्वजेयस्त्वं दिवौकसाम्
अनेनैव वरेण त्वं स्वस्थाने तिष्ठ वै सुखम्। देवानां दानवानां च कन्याया रूपतोऽधिकाः
पतिस्तासां दानवेन्द्र सर्वैकर्तास्मि ते वचः। अतीवस्पर्धने लोको जेतुं स्वेन बलेन च
तेषां प्रधानभूतानां कोटयस्त्वर्वदानि च। येषां स्वबलमायाति शतकोट्यायुताधिकम्
तेषां दैत्यसहस्राणि दानवानां महात्मनाम्। संमतं चक्रुरव्यग्रास्तदा दैत्याःप्रहारिणः
प्रयाणं रोचयामास देवसैन्यजिघांसया॥ ७९॥

पुलस्त्य उवाच।

ततो महिषदैत्यस्तु कामरूपी महाबलः। मत्तं नागं समारूढो ययासुमेरुपर्वतम्॥८०॥
तत्रेन्द्रपुरमासाद्य देवैःसह शतक्रतुम्। अभिदुद्राव दैत्येन्द्रस्ततो देवाःक्रुधान्विताः॥
शितान्यादाय शस्त्राणि वाहनानि विशेषतः। अधिष्ठाय सुरानाजौ दुद्रुवुर्मुदिता भृशम्
तेषां प्रववृते युद्धं महतां भीमविक्रमम्। घोरं प्रचण्डयोधानामन्योन्यमति गर्जताम्॥
तत्राञ्जनो नीलकुक्षिर्मेघवर्णो बलाहकः। उदराक्षो ललाटाक्षो महाक्षो भीमविक्रमः॥

स्वर्भानुर्वसुरष्टौघः सर्वे दुद्रुवुराहवे ॥ ८५ ॥

यथासङ्ख्येन तद्वच्च दैत्याद्द्वादशचापरे। आदित्यान्दैत्यसङ्घास्ते तेषां प्राधान्यतःशृणु
भीमाक्षो गजकर्णश्च शङ्कुकर्णस्तथैव च। रक्ताक्षो भीमदंष्ट्रश्च विद्युज्जिह्वस्तथैव च॥
अतिकायो महाकायो दीर्घबाहुःकृतान्तकृत्। एतेद्वादशदैत्येन्द्रा आदित्यानभिदुद्रुवुः॥
स्वं स्वं बलमुपादाय तद्वदन्येऽपि दानवाः। यथासङ्ख्येन रुद्रांस्तु दुद्रुवुर्भीमविक्रमाः॥
शेषान्देवाञ्शेषदैत्या यथायोग्यमुपाद्रवन्। स्वयं महिषदैत्यस्तु इन्द्रंदुद्राव वेगतः॥
स चातिबलवान्दैत्यो ब्रह्मणो वरदर्पितः। अवध्यःपुरुषेणाजौ यद्यपिस्यात्पिनाकधृक्
आदित्यैर्वसुभिःसर्वै रुद्रैश्चापि महद्भृशम्। असुरा यातुधानाश्च सङ्ख्या पूरणकेवलाः
देवानामपि सैन्यानि निहतान्यसुरैर्युधि। एवम्भूते तदाभग्ने देवेन्द्रे विद्रुताःसुराः॥९३
अर्दिता विविधैःशस्त्रैःशूलपट्टिशमुद्गरैः। गतवन्तो ब्रह्मलोकमसुरैरर्दिताः सुराः॥९४॥

अथ विद्युत्प्रभो दैत्यस्तदा दूतो विसर्जितः।
देव्याः सकाशं गत्वा तु उवाच तनुमध्यमाम्॥ ९५ ॥

प्रणम्य प्रणतो भूत्वा कुमारीशतसङ्कुलाम्। आस्थाने विनयायत्तस्तथा वचनमब्रवीत्
देवि पूर्वमृषिस्त्वासीदादिसर्गेषु सम्भवः। संवत्सरशताज्जातः सुपार्श्वो नाम वै भुवि

तस्याभवन्महातेजाः सिन्धुद्वीपः प्रतापवान्।
स हि तीव्रं तपस्तेपे माहिष्मत्यां सुरोत्तमे।॥ ९८ ॥

कुर्वन्स्थितस्तपो घोरं निराहारस्त्वशोभने। दैत्यस्य विप्रचित्तेस्तु सुता सुरसुतोपमा
माहिष्मतीति विख्याता रूपेणासदृशीभुवि। सखीभिः सा परिवृता विरहन्तीयदृच्छया
आगता मन्दरद्रोणीं तत्रापश्यत्तपोवनम्। मुनेरम्बरसंसक्तविविधद्रुममालिकम्॥१०१॥
लतागृहैः सुविहितैर्बकुलैराम्रतिन्दुकैः। चन्दनैर्बदरैः शालैः सरलैरुपशोभितम्॥१०२॥
विचित्रवनखण्डैश्च भूषितं तन्महात्मभिः। दृष्ट्वोत्तमं वनं रम्यमासुरी कन्यकाशुभा॥

माहिष्मती वरारोहा चिन्तयामास भामिनी।
भीषयित्वाऽहमेतांस्तु तापसानाश्रमे स्वरम्॥ १०४ ॥

तिष्ठामि क्रीडती सार्धं सखीभिः परमार्चिता। एवंसंचिन्त्य सा देवी महिषी सम्बभूवह

महिषीभिः सहान्याभिस्तीक्ष्णशृङ्गाग्रधारिणी।
तमृषिं भीषितुं ताभिर्महानादं ननाद सा ॥ १०६ ॥
असौ च भीषितस्ताभिस्तां ज्ञात्वा ज्ञानचक्षुषा।
आसुरीं क्रोधसम्पन्नः शशाप च सुलोचनाम् ॥ १०७ ॥
यस्माद्भीषयसे मां त्वं महिषी रूपधारिणी। अतो भव महिष्येव पापकर्मे शतं समाः
एवमुक्ता तदा सा तु सखीभिः सह वेपती। पादयोरपतत्तस्य शापान्तं कुरु जल्पती ॥
तस्यास्तद्वचनं श्रुत्वा स मुनिःकरुणान्वितः। शापान्तमकरोत्तस्या वाक्यं चेदमुवाचह

मुनिरुवाच।

अनेनैव तु रूपेण पुत्रमेकं प्रसूयसे। शापान्तो भविता भद्रे मद्वाक्यं न मृषा भवेत् ॥

पुलस्त्य उवाच।

एवमुक्ता गता सा तु नर्मदातीरमुत्तमम्।
यत्र तेपे तपो घोरं सिन्धुद्वीपः प्रतापवान् ॥ ११२ ॥
तत्रविद्युन्मती नाम दैत्यकन्याऽतिरूपिणी। सा दृष्टा तेन मुनिना विवस्त्रा मज्जती जले
चस्कन्द च मुनिः शुक्रं शिलाद्रोण्यां महातपाः।
तच्च माहिष्मती दृष्ट्वा दिव्यगन्धि सुगन्धि च ॥ ११४ ॥
निजां सखीमुवाचेदं पिबामि च जलं शुभम्।
एवमुक्त्वा तु सा पीत्वा तच्छुक्रं मुनिसम्भवम् ॥ ११५ ॥
प्राप गर्भं मुनेर्वीर्याद्वत्सरं जठरे धृतम्। तस्याः पुत्रोऽभवच्छ्रीमान्महाबलपराक्रमः ॥
महिषेति स्मृतो नाम्ना ब्रह्मवंशविवर्धनः। सुराणामपहृत्याजौ त्रैलोक्यं सम्मतोऽनघे
आगम्य दास्यते सुभ्रु तव देवि महासुरः। तस्यात्मनः प्रदानेन कुरु देवि महत्कृतम् ॥
आत्मना स्वयमात्मानं शोचमाना सुखी भव ॥ ११८ ॥
वृथात्वं यौवनं प्राप्ता पीनौ चेमौपयोधरौ। यदि तस्याङ्गसंलग्नौ सफलं जीवितंभवेत
भवत्या न तु सन्देहः प्राप्तं वै जन्मनःफलम्। मां क्लेशय वृथा देवि वयश्चेदंसयौवनम
सभाग्या भव सुश्रोणि पतिं प्राप्नुहि दानवम्।

किमनेन तु वक्त्रेण यन्मुखे तस्य नार्प्यते ॥ १२१ ॥
सुधारसस्याभ्यधिकमास्वादं लभ शोभनम् । एवमुक्ता तदा देवी तेन दूतेन शोभना ॥
जहास परमा देवी वाचं नोवाच किञ्चना ॥ १२२ ॥
तस्या हसन्त्याः सहितं त्रैलोक्यं सचराचरम् ।
ददर्श कुक्षौ सम्भ्रान्तः तत्क्षणात्समपद्यत ॥ १२३ ॥
ततोदेव्याः प्रतीहारी जया नामासितेक्षणा । देव्या हृदि स्थितं वाक्यमुवाचतनुमध्यमा
कन्यार्थं यत्त्वया दूत वचनं समुदीरितम् । इदं नाम व्रतं चास्याःकौमारं सार्वकालिकम्
अन्या अपि कुमार्योऽत्र सन्ति देव्याः पदानुगाः ।
तासामेकापि नो लभ्या किमु देवी स्वयं शुभा ॥ १२६ ॥
या हि दूतत्वरावांस्त्वं किञ्चिदन्यद्भविष्यति ।
एवमुक्तस्ततो दूतस्तावद्व्योम्नि महामुनिः ॥ १२७ ॥
आयातो नारदस्तूर्णमेतदूचे महातपाः । देवि देवैरहं प्रीत्या प्रेषितोऽस्मि तवान्तिकम्
देवाः सर्वे जिता मेरुं विहाय ब्रह्मणोऽन्तिकम् ॥ १२८ ॥
विगता देवि दैत्येन महिषाख्येन निर्जिताः ॥ १२९ ॥
त्वां ग्रहीतुं हि यत्नं स कृतवान्देवि दैत्यराट् । एवमुक्तासि देवि त्वं योधयस्ववरानने
स्थिरीभूत्वा महादेवि तं दैत्यं प्रतिघातय ।
उक्त्वैवान्तर्हितः सद्यो नारदःस्वेच्छया ययौ ॥ १३१ ॥
देवी च कन्याकोट्यस्ताः सन्नह्यन्तामुवाच ह ।
ततः कन्या महाभागाः सर्वास्ता देवि शासनात् ॥ १३२ ॥
बभूवुर्घोररूपिण्यः खड्गचर्मधनुर्धराः । सङ्ग्रामहेतोः सन्तस्थुः सैन्यविध्वंसनाय वै ॥
तच्च देवबलं त्यक्त्वा सा वै दैत्यचमूद्रुतम् । आगता यत्र सा देवी संनद्धस्त्रीबलं महत्
ततस्ता युयुधुः कन्या दानवैः सह दर्पिताः । क्षणेन तद्बलं ताभिश्चतुरङ्गं निपातितम्
शिरांसि तत्र केषाञ्चिच्छिन्नानि पतितानि च ।
इतरेषां विदार्याशु क्रव्यादाः शोणितं पपुः ॥ १३६ ॥

अन्ये कबन्धभूतास्तु ननृतुस्तत्र दानवाः । एवं क्षणेन ते सर्वे विध्वस्ताः पापचेतसः ॥
अपरे विद्रुताः सर्वे यत्रासौ महिषासुरः । ततो हाहाकृतंसर्वंतदा दैत्यबलं महत् ॥
एवं तदा कुलं दृष्ट्वा महिषो वाक्यमब्रवीत् । सेनापते किमेतद्धि बलं भग्नं ममाग्रतः ॥
ततो यज्ञहतो नाम दैत्यो हस्तिस्वरूपवान् । उवाच हतमेतद्धि कुमारीभिः समन्ततः ॥
भवानपूर्वकन्यार्थी कथितं नारदेन ते । तया हतमिदं सर्वं मन्ये त्वां तु हनिष्यति ॥
ततोदुद्राव महिषस्तां कन्यां शुभलोचनाम् । गदामुसलहस्तश्च कन्यां दुद्राव तां बलात्
यत्र तिष्ठति सा देवी देवगन्धर्वपूजिता । तत्र बसोऽसुरः प्राप यत्र देवी व्यवस्थिता
सा तु दृष्ट्वा तमायान्तं विंशत्पाणिर्बभूव ह । धनुः खड्गं तथा शक्तिः शरःशूलं तथागदा

सहस्रारं तथा चक्रं मुसलं भिण्डिपालकम् ।
परशुर्डमरुश्चैव तथा घण्टा विशालिनी ॥ १४५ ॥

शतघ्नी मुद्गरो घोरो भुशुण्डी कुन्तमेव च । दण्डपाशौ ध्वजश्चैव पद्मं चेतीहविंशतिः
भूत्वा विंशद्भुजा देवी सिंहमास्थाय दंशिता । सस्मार रुद्रं देवेशं रौद्रं संहारकारिणम्
ततो वृषध्वजः साक्षाद्रुद्रस्तत्रैव संययौ । तया प्रणम्य विज्ञप्तः सर्वान्दैत्याञ्जयाम्यहम्
त्वयि सन्निहिते देवे विष्णौचापि परन्तप । युष्मत्सन्निधिमात्रे तु पश्य देव सनातन

एवमुक्त्वाऽसुरान्सर्वाञ्जिघांसुः परमेश्वरी ।
मुक्त्वा तमेकं महिषं वधार्थं सा तमभ्यगात् ॥ १५० ॥
तथा देवीं ततः सोऽपि दृष्ट्वा दुद्राव चेश्वरीम् ।
क्वचिद्युध्यति दैत्येन्द्रः क्वचिन्नैव पलायते ॥ १५१ ॥

क्वचित्पुनर्भृशं चक्रे क्वचित्पुनरुपागमत् । एवं वर्षसहस्राणि दश तस्य तया सह ॥१५२

देव्या विनिर्गतानि स्युर्युध्यतस्तस्य शोभने ।
बभ्राम सकलन्त्वाजौ ब्रह्माण्डं भीतमानसम् ॥ १५३ ॥

ततः कालेन महता शतशृङ्गे महागिरौ । दैत्येश्वरं च तं दृष्ट्वा देवी वचनमब्रवीत् ॥

रूपलोभात्त्वया नीच दूतो योऽसौ ममान्तिकम् ।
प्रेषितो यत्त्वया तस्य सन्दिष्टं तद्वदस्व मे ॥ १५५ ॥

न मया तच्छ्रुतपूर्वमिदानीं त्वन्मुखात्पुनः ।
श्रोतुमिच्छामि तद्वाक्यं भवाननुभविष्यति ॥ १५६ ॥
पद्भ्यामाक्रम्य शूलेन निहतोदैत्यसत्तमः । छिन्ने शिरसि खड्गेन तत्कण्ठादुत्थितःपुमान्
रौद्रोऽपि सगतः स्वर्गं देव्या शस्त्रनिपातितः ॥ १५७ ॥
ततो देवगणाः सर्वे महिषं वीक्ष्य निर्जितम् । सेन्द्राद्यास्तु स्तुतिंचक्रुर्देव्यास्तुष्टेनचेतसा

देवा ऊचुः ।

नमो देवि महाभागे गम्भीरे भीमदर्शने । नयस्थे स्थितिसिद्धान्ते त्रिनेत्रे विश्वतोमुखि
विद्याविद्ये जपेजाप्ये महिषासुरमर्दिनि । सर्वगेसर्वविद्येशि विश्वरूपिणि वैष्णवि ॥
वीतशोके ध्रुवे देवि पद्मपत्रायतेक्षणे । शुद्धसत्वव्रतस्थे च चण्डरूपे विभावरि ॥१६१॥
ऋद्धिसिद्धिप्रदे देवि सर्वसत्वमये ध्रुवे । विद्या पुराणशिल्पानां जननि भूतधारिणि ॥
सर्वदेवरहस्यानां सर्वसत्त्ववतां शुभे । नमोऽस्तु ते महादेवि नमोऽस्तु परमेश्वरि ॥
नमोऽस्तु सर्वभूतानां मातर्नित्येऽक्षयेऽव्यये । न तेषां जायते किञ्चिदशुभं रणसङ्कटे ॥
ये तु व्याघ्रभये घोरे चौरराजभये तथा । सर्वभूताभया देवी क्षेम्याक्षेमङ्करीति च ॥
विभावरी भावरी च सर्वस्थितिकरी तथा । सर्वासां भगवान्रुद्रः सर्वगत्वात्पतिःस्मृतः
यावत्यस्तु महाशक्त्यस्तावद्रूपस्तु शङ्करः ।
निगडस्थोऽपि यो देवि त्वां स्मरिष्यति मानवः ।
सोऽपि बन्धात्प्रमुच्येत स सुखं वसते सुखी ॥ १६७ ॥

पुलस्त्य उवाच ।

एवं स्तुता सुरैर्देवी प्रणिपातपुरस्कृता । उवाच देवी सुश्रोणी वृणुध्वं वरमुत्तमम् ॥

देवा ऊचुः ।

देवि पुष्करसंस्थां त्वां स्तुवन्त्यनेन भक्तितः । ते सर्वकामसम्पन्ना भवन्तु वर एषवै

पुलस्त्य उवाच ।

एवमस्त्विति तान्देवानुक्त्वा देवी परावराम् । विसर्जयित्वा तान्देवीस्वयंतत्रैवसंस्थिता
एवं यः शृणुते जन्म देव्याः कुरुकुलोद्वह । सदा सेवेत विरज इदं प्राप्नोत्यनामयम् ॥

यः क्षेमङ्करिवृत्तान्तं ब्रह्मशक्तिसमुद्भवम् । स पुत्रपौत्रपशुमान्समृद्धिमुपगच्छति ॥१७२॥
यश्चेदं शृणुयाद्भक्त्या देवीस्तोत्रमनुत्तमम् । सर्वबाधाविनिर्मुक्तं पदं निर्वाणमृच्छति ॥

य एतां वेद वै देव्या उत्पत्तिं त्रिविधां स्थिताम् ।
सर्वपापविनिर्मुक्तः पदं निर्वाणमृच्छति ॥ १७४ ॥

भ्रष्टराज्यपदो राजा सप्तम्यां नियतः शुचिः । अष्टम्यां च नवम्यां च उपवासी नरोत्तम
संवत्सरेण लभते राज्यं निष्कण्टकं नृपः । या सा त्रिवेदसम्भूता वेदशक्तिः परावरा ॥

एषा ज्ञानात्मिका सर्वा सात्त्विकी ब्रह्मसंज्ञिता ।
एषैव रक्ता राजसी वैष्णवी परिकीर्तिता ॥ १७७ ॥

एषैव कृष्णा तामसी रौद्री देवी प्रकीर्तिता । परमात्मा यथा देव एक एव त्रिधा स्थितः
अपरा च परा चैव तथैवान्या परावरा । त्रिधा व्यवस्थिता शक्तिरेकैका त्रिविधा भवेत्
य एवं शृणुयात्सर्वं क्षेम्यायाः परमं शिवम् । सर्वपापविनिर्मुक्तः पदं निर्वाणमाप्नुयात्
यश्चैवं पठते भक्त्या नवम्यां नियतः शुचिः । सराज्यापत्यलाभेन भयेभ्यः परिमुच्यते
यत्रैवं लिखिता गेहे सदा तिष्ठति धारिता । न तत्राग्निभयं घोरं चौर्यसर्पादिकं नृप ॥
यश्चैतत्पूजयेद्भक्त्या पुस्तके लिखितं बुधः । तेन चेष्टं भवेत्सर्वं त्रैलोक्यं सचराचरम् ॥

जायन्ते पशवः पुत्रास्तथा धान्यं वरस्त्रियः ।
रत्नान्यश्वा गजा भृत्या ग्रामाश्चाशु भवन्त्युत ॥ १८४ ॥

यस्येदं तिष्ठते गेहे तस्याप्येतद् ध्रुवं भवेत् । एतदेव रहस्यं मे कीर्तितं नृपसत्तम ॥
क्षेमङ्करीभवं ते तु सर्वंक्षेमङ्करं शुभम् । क्षेम्या क्षेमङ्करी देवी सर्वेषां भयनाशिनी ॥

रुद्रस्य खलु माहात्म्यं देवीनां सम्भवस्तथा ।
नवकोट्यस्तु चामुण्डा भेदभिन्ना व्यवस्थिताः ॥ १८७ ॥
या रौद्री तामसी शक्तिः सा चामुण्डा प्रकीर्तिता ।
अष्टादश तथा कोट्यो वैष्णव्या भेद उच्यते ॥ १८८ ॥
या सा तु राजसी शक्तिः पालने चैव वैष्णवी ।
या ब्राह्मी शक्तिः सत्त्वस्था सा चानन्ता प्रकीर्तिता ॥ १८९ ॥

क्षेमङ्कर्या न सङ्ख्या तु ब्राह्मी शक्तिः परावरा ।
ब्रह्माणी सा भुवि ज्ञेया सृष्टिरूपा जगत्स्थिता ॥ १६० ॥
एतासां सर्वभेदेषु पृथगेकैकशोभनाः । सर्वासां भगवान्रुद्रः सर्वगत्वात्पतिः स्मृतः ॥
यावत्यस्ता महाशक्त्यस्तावद्रूपाणि शङ्करः । कृत्तिवासास्तु भजते पतिरूपेण सर्वदा ॥
यश्चाराधयते तास्तु तस्य रुद्रोऽपि तुष्यति ।
सिध्यन्ते तास्तदा देव्यो मन्त्रिणो नात्र संशयः १६३ ॥
इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे क्षेमङ्कर्युत्पत्तिर्नाम पञ्चत्रिंशत्तमोऽध्यायः ।

---

## षट्त्रिंशोऽध्यायः

### वैष्णवीचामुण्डारूपरुद्रशक्तिविहितदैत्यवधवर्णनम् ।

भीष्म उवाच ।

या सम्भूता शरीरात्तु ब्रह्मणोऽव्यक्तजन्मनः ।
गायत्र्यष्टभुजा भूत्वा ख्याता विंशभुजा तथा ॥ १ ॥
सैव चान्याभवद्देवी देवकार्यचिकीर्षया । महिषाख्यासुरवधं कुर्वती ब्रह्मणो रता ॥२॥
वैष्णव्या निहतो दैत्यः कतमो यो महाबलः । चामुण्डया रुद्रशक्त्या कतमो दानवो हतः

पुलस्त्य उवाच ।

इदं जगत्स्थितं भीष्म गङ्गा सिकतसङ्ख्यया । यत्किञ्चिद्भवते वृत्तं तत्सर्वं वेद सर्ववित्
स्वायम्भुवो हतो दैत्यो वैष्णव्या मन्दरे गिरौ ।
महिषाख्योऽभिभाष्यश्च स च वैवस्वते पुनः ॥ ५ ॥
नन्दया निहतो विन्ध्ये महाबलपराक्रमः । अथवा ज्ञानशक्तिश्च महिषोऽज्ञानमूर्तिमान् ॥
अज्ञानं ज्ञानसाध्यं तु भवतोह न संशयः । मूर्तिपक्षे चेतिहासो मन्मूर्तिः स्वेनबाध्यत ॥
ख्याप्यते वेदवादैस्तु अहन्तैर्वेदवादिभिः ॥ ८ ॥

इदानीं शृणु मे राजन्पञ्चपातकनाशनम् । यजनं देवदेवस्य ब्रह्मपुत्र वसुप्रदम् ॥ ६ ॥

इह जन्मनि दारिद्र्यव्याधिकुष्ठादिपीडितः ।
अलक्ष्मीवानपुत्रस्तु यो भवेत्पुरुषो भुवि ॥ १० ॥
तस्य सद्यो भवेल्लक्ष्मीरायुः पूर्णं सुतास्सुखम् ।
कृत्वा तु मण्डलगतं लोकपालसमन्वितम् ॥ ११ ॥

ब्रह्माणं तु परं देवं यः पश्यति विधानतः । पूजितं नवनाभेन मन्त्रमूर्तिमयोनिजम् ॥
कार्तिके मासि शुक्लायां पौर्णमास्यां विशेषतः । सर्वासु वायजेद्देवं पूर्णिमासु विधानतः
सङ्क्रान्तौ च महाबाहो चन्द्रसूर्यग्रहेऽपिवा । यः पश्यति विभुं देवं पूजितं गुरुणा नृप॥
तस्य सद्यो भवेत्तुष्टिः पापध्वंसश्च जायते । स मान्यो देवतानां च भवतीह नराधिप ॥
ब्राह्मणक्षत्रियविशां भक्तानां तु परीक्षणम् । संवत्सरं गुरुः कुर्याज्जातिशौचक्रियादिभिः
उपपन्नमिति ज्ञात्वा हृदयेनावधारयेत् । तेऽपि भक्तियुता ध्यात्वा त्वाचार्यं परमेश्वरम्
संवत्सरं गुरौ भक्तिं कुर्युर्विष्णो यथा तथा । प्रसादयेयुश्च ततः पूर्णे संवत्सरे गुरुम् ॥
भगवंस्त्वत्प्रसादेन संसारार्णवतारणम् । परब्रह्मोपासनेन विरिञ्च्याराधनेन च ॥१६॥
सहस्रशीर्षजप्येन मण्डलब्राह्मणेन च । ध्यानेन स्यात्तथास्माकमुपदेशः प्रदीयताम् ॥२०

इच्छामो वैदिकीं लक्ष्मीं विशेषेण प्रसाद्यताम् ।
अभ्यर्थितो गुरुस्त्वेवं मेधावी तैस्तदा ततः ॥ २१ ॥
यथाविधि समभ्यर्चेद् ब्रह्माणं विष्णुमग्रतः ।
ते बद्धनेत्राः स्वाप्यास्तु कार्तिकस्य चतुर्दशीम् ॥ २२ ॥

ब्राह्मे मुहूर्ते चोत्थाय बद्धपद्मासनास्तु ते । ध्यात्वा गुरुं सहस्रारे श्वेतवस्त्रोपवीतकम्
श्वेतमाल्याम्बरधरं श्वेतगन्धानुलेपनम् । निर्गम्य च बहिर्नद्यां ययुर्नित्यमतन्द्रिताः ॥
क्षीरवृक्षोत्थमाचार्यो दापयेद्दन्तधावनम् । ते च तं भक्षयेयुर्हि नदीं गत्वा समुद्रगाम् ॥
इतरद्वा तटाकं वा गृहे वापि विधानतः । तद्भक्षयेयुर्मन्त्रेण मन्त्रितं परमेष्ठिनः ॥ २६ ॥

आपोहिष्ठेति मन्त्रेण सप्तकृत्वोऽभिमन्त्रितम् ।
देवस्य त्वेति वै जप्त्वा युञ्जानेति करे न्यसेत् ॥ २७ ॥

इरावत्येति प्रक्षाल्य ब्रह्मोदनेति वै मुखे। भक्षयित्वा क्षिपेद्दूरं पतितं च निरीक्षयेत् ॥
सम्मुखं प्राङ्मुखं वापि विदिशं चापि वागतम्।
संमुखे देवता लब्धिर्मन्त्रसिद्धिश्च जायते ॥ २९ ॥
पराङ्मुखे दन्तकाष्ठे सर्वेदेवाः पराङ्मुखाः। उत्तरेण गते तस्मिन्सिद्धिर्भवति वा नवा
दक्षिणेन भवेन्मृत्युर्गुरोस्तस्य न संशयः। प्रेक्ष्याशुभं स्वपेद्भूमौ देवदेवस्य सन्निधौ ॥
स्वप्नान्दृष्ट्वागुरोरग्रेश्रावयेयुर्विचक्षणाः। ततः शुभाशुभं तत्र लक्षयेत्परमो गुरुः ॥ ३२ ॥
पौर्णमास्यामथ स्नात्वा ततो देवालयं व्रजेत्।
गुरुश्च मण्डलं भूमौ कल्पितायां तु वर्तयेत् ॥ ३३ ॥
लक्षणैर्विविधैर्भूमिं लक्षयित्वा विधानतः। षोडशारं लिखेत्पद्मं नवधारमथापिवा ॥
अष्टपत्रमथो वापि लिखित्वा दर्शयेद् बुधः। नेत्रबन्धं तु कुर्वीत सितवस्त्रेण यत्नतः ॥
वर्णानुक्रमतः शिष्यान्पुष्पहस्तान्प्रवेशयेत्। नवनाभं यदा कुर्यान्मण्डलं वर्णकैर्बुधः ॥
इन्द्राणीपूर्वकं देवमिन्द्रमैन्द्र्यां तु पूजयेत्। लोकपालैः समं तद्वदग्निंसम्पूजयेन्नृपः ॥
दिशि वह्नेर्यमं याम्यां नैर्ऋत्यां चैव निर्ऋतिम्।
वरुणं वारुणाशायां वायुं वायव्यगोचरे ॥ ३८ ॥
धनदं चोत्तरे न्यस्य रुद्रमीशानगोचरे। कमण्डलुं पूर्वतो हि स्रुचं वै दक्षिणे तथा ॥
हंसं वै पश्चिमायांतु उत्तरायां स्रुवं तथा। आग्नेय्यां च बृसीं दद्यान्नैर्ऋत्यां पादुकेतथा
वायव्यां योगपट्टं च ऐशान्यां च गलन्तिकाम्।
विष्णुस्तु पूर्वतः पूज्यो दक्षिणे चापि शङ्करः ॥ ४१ ॥
पश्चिमे तु रविर्देव ऋषयश्चोत्तरे तथा। मध्येस्वयं पद्मजन्मा सावित्री दक्षिणे तथा ॥
उत्तरे चैव गायत्री देवी पद्मदलेक्षणा। ऋग्वेदं पूर्वतो न्यस्य यजुर्वेदं च दक्षिणे ॥४३॥
पश्चिमे सामवेदं च अथर्वं चोत्तरे तथा। इतिहासपुराणानि च्छन्दो ज्यौतिषमेव च
धर्मशास्त्राणि चान्यानि इन्द्रादि दिक्षु विन्यसेत्।
पूर्वपत्रे बलं पूज्य प्रद्युम्नं दक्षिणे दले ॥ ४५ ॥
पश्चिमे चानिरुद्धं च वासुदेवमथोत्तरे। पूर्वतो वामदेवं च सद्यो जातं तु दक्षिणे ॥४६

ईशानं पश्चिमे स्थाप्यतत्पुरुषं चोत्तरे तथा। अघोरस्सर्वतः पूज्य एषा पूजा तु मण्डले
पूर्वतो भास्करं पूज्य दक्षिणेन दिवाकरम्। प्रभाकरं पश्चिमे तु ग्रहराजमथोत्तरे॥४८॥
एवं पूज्य विधानेन ब्रह्माणं परमेश्वरम्। दिङ्मण्डले तु विन्यस्य अष्टौ कुम्भान्विधानतः
ब्राह्मं तु कलशं मध्ये नवमं तत्र कल्पयेत्। स्नापयेन्मुक्तिकामं तु ब्रह्मणो वै घटेन तु॥
श्रीकामं वैष्णवेनेह कलशेन तु पार्थिव। राज्यार्थिनं स्नापयेच्च ऐन्द्रेण कलशेन च॥
द्रव्यप्रतापकामं तु आग्नेयघटवारिणा। मृत्युञ्जयविधानाय याम्येन स्नापयेन्नरम्॥५२
दुष्टप्रध्वंसनायालं नैर्ऋतेन विधीयते। स्नापयेद्वारुणेनाशु पापनाशाय मानवम्॥५३॥
शरीरारोग्यकामं तु वायव्येनाभिषेचयेत्। द्रव्यसम्पत्तिकामस्य कौवेरेण विधीयते॥
रौद्रेण ज्ञानकामस्य लोकपालघटास्त्विमे। एकैकेन नरः स्नात्वा सर्वदोषविवर्जितः॥
जायते ब्रह्मसदृशो राजा सद्योऽथवा नरः। अथवा दिक्षु सर्वासु यथा सङ्ख्येन लोकपान्

पूजयेत्तु स्वनाम्ना तु कुम्भैरेव विधानतः।
एवं सम्पूज्य देवास्तु लोकपालान्प्रसन्नधीः॥५७॥
पश्चात्परीक्षिताञ्छिष्यान्बद्धनेत्रान्प्रवेशयेत्।
दग्ध्वाग्नेय्या धारणया वायुना विधुनेत्ततः॥५८॥
सोमेनाप्यायितान्कृत्वा श्रावयेत्समयांस्ततः।
न निन्द्याद् ब्राह्मणान्देवान्विष्णुं ब्राह्मणमेव च॥५९॥

इन्द्रमादित्यमग्निं च लोकपालान्ग्रहांस्तथा। गुरुं च ब्राह्मणं चापि मुनीन्द्रं पूर्वदीक्षितम्

एवं तु समयाञ्श्राव्य पश्चाद्धोमं तु कारयेत्।
ॐनमो भगवतेब्रह्मणे सर्वरूपिणे हुं फट् स्वाहा॥६१॥

षोडशाक्षरमन्त्रेण होमयेज्ज्वलितेऽनले। गर्भाधानादिकास्सर्वा आहुतीस्सम्प्रदापयेत्
तिसृभिस्तु व्याहृतिभिर्देवदेवस्य सन्निधौ। होमान्ते दीक्षितः पश्चाद्दापयेद्गुरुदक्षिणाम्
हस्त्यश्वयानशकटहेमधान्यादिकं नृप। दापयेद्गुरवे प्राज्ञो मध्यमे मध्यमं तथा॥६४॥
दापयेदपरे युग्मं सहिरण्यन्तु तद्गुरोः। एवं कृते तु यत्पुण्यं महत्सञ्जायते तथा॥६५॥
तन्न शक्यं निगदितुमपि वर्षशतैरपि। दीक्षितोऽथ पुरा भूत्वा पाद्मं वै शृणुयाद्यदि॥

तेन वेदाः पुराणानि सर्वमन्त्रास्त्रसङ्ग्रहाः ।
जप्तास्स्युः पुष्करे तीर्थे प्रयागे सिन्धुसागरे ॥ ६७ ॥
देवह्रदे कुरुक्षेत्रे वाराणस्यां विशेषतः । ग्रहणे विषुवे चैव यत्फलं जपतां भवेत् ॥६८॥
फलं शतगुणं तच्च पुष्करस्थं पितामहम् । दृष्ट्वाप्राप्नोति विविधान्कामान्कामयते यदि
पूजां वैधानिकीं कृत्वा दीक्षितो यः शृणोति च ।
देवा अपि तपः कृत्वा ध्यायन्ति च वदन्ति च ॥ ७० ॥
कदा मे भारतेवर्षे जन्मस्यादिति पार्थिव । दीक्षिताश्चभविष्यामः पाद्मं श्रोष्यामहे कदा
पाद्मं तु षोडशात्मानं न्यस्य देहे कदा वयम् ।
यास्यामस्तु परं स्थानं यद्गत्वा न पुनर्भवेत् ॥ ७२ ॥
एवं जल्पन्ति विबुधा मनसा चिन्तयन्ति च । ब्रह्मयज्ञं च कार्तिक्यांकदाद्रक्ष्यामहे नृप
एवं ते विधिरुद्दिष्टो मयाऽयं कुरुसत्तम । देवगन्धर्वयक्षाणां सर्वदा दुर्लभो ह्यसौ ॥
एवं यो वेत्ति तत्त्वेन यश्च पश्यति मण्डलम् । यश्चेमं शृणुयाच्चैव सर्वे मुक्ता इति श्रुतिः
अतः परं प्रवक्ष्यामि रहस्यमिदमुत्तमम् । येन लक्ष्मीर्धृतिस्तुष्टिःपुष्टिश्चापि भवेन्नृणाम्
सर्वे ग्रहास्सदा सौम्या जायन्ते येन पार्थिव । आदित्यवारं हस्तेन पूर्वमादाय भक्तितः
भक्तैकेन क्षिपेत्तावद्यावत्सप्त च संख्यया । ततस्तु सप्तमे पूर्णे कुर्याद्ब्राह्मणभोजनम् ॥
आदित्यं चैव सौवर्णं कृत्वा यत्नेन मानवः । रक्तवस्त्रयुगच्छन्नं छत्रिकां पादुके तथा
उपानहौ च दातव्ये स्थापयेत्ताम्रभाजने । घृतेन स्नपनं कृत्वा सम्पूर्णाङ्गं द्विजातये ॥
दापयेत्कृत्यविदुषे ब्राह्मणाय विशेषतः । एवं कृतौ फलं तस्य भवेदारोग्यमुत्तमम् ॥
द्रव्यसम्पत्समग्राप्तिरिति पौराणिकी क्रिया ।
अविसंवादिनी चेयं शान्तिपुष्टिप्रदा नृणाम् ॥ ८२ ॥
तद्वच्चित्रासु सङ्गृह्य सोमवारं विचक्षणः । रात्रिभक्षः क्षिपेदष्टौ सोमवारान्प्रयत्नतः ॥
प्रत्येकं ब्राह्मणा भोज्या यथाशक्ति विचक्षणाः ।
नवमे तु ततः पूर्णे कुर्याद् ब्राह्मणभोजनम् ॥ ८४ ॥
वस्त्रयुग्मं च दातव्यं ततः सोमं प्रदापयेत् । कांस्यभाजनसंस्थं तु क्षीरसम्पूरितं ततः

तद्वच्छत्रं पादुके च तथोपानत्समन्वितम् । सम्पूर्णाङ्गाय दातव्यं ब्राह्मणाय विशेषतः ॥
स्वात्यामङ्गारकं पूज्य क्षपयेन्नक्तभोजनैः । अष्टावेवं च यावच्च कुर्याद् ब्राह्मणभोजनम्
अङ्गारकं च सौवर्णं स्थापितं ताम्रभाजने । दापयेद्ब्राह्मणायाथ सम्पूर्णाङ्गाय चैव हि
नक्षत्रानुक्रमेणैव क्षिपेन्नक्तानि सप्त वै । अष्टमे तु क्रमात्खेटान्सौवर्णान्दापयेद् बुधः ॥
अग्निकार्यं च कुर्वीत यथा दृष्टं विधानतः । एवं कृते भवेद्यद्वै तन्निबोध नराधिप ॥
असौम्याश्चग्रहास्सर्वेसौम्यरूपा भवन्ति च । सर्वेरोगा विनश्यन्ति तुष्टिमायान्तिदेवताः

न विरुन्धन्ति तं नागाः पितरस्तर्पितास्तथा ।
दुस्स्वप्ननाशो भवति शृण्वतां पठतां तथा ॥ ६२ ॥

यदि भौमो रविसुतो भास्करोराहुणासह । केतुश्चमूर्ध्नि तिष्ठन्ति रौद्राःपीडाकराग्रहाः
अनेन कृतमात्रेण ससौभाग्या भवन्ति हि । य एवं कुरुते राजन्सदा भक्तिसमन्वितः ॥

तस्य सानुग्रहाःसर्वे शान्तिं गच्छन्ति नान्यथा ।
शनैश्चरं राहुकेतू लोहपात्रेषु विन्यसेत् ॥ ६५ ॥
लोहेन कारयेच्चैनान्ब्राह्मणेभ्यश्च दापयेत् ।
कृष्णं वस्त्रयुगं देयमेतेषां प्रीणनाय वै ॥ ६६ ॥
सौवर्णाङ्गाश्च दातव्याः शान्तिश्रीविजयेप्सुभिः ।
व्रतान्ते सर्व एते हि ग्रहास्सौवर्णका नृप ॥ ६७ ॥
दातव्याः शन्तिमिच्छद्भिर्व्रतान्ते द्विजभोजनम् ।
यथाशक्ति दक्षिणा च ग्रहाणां प्रीतये तथा ॥ ६८ ॥
अल्पायासेन राजेन्द्र सर्वान्कामानवाप्नुयात् ।
शङ्कराज्ज्ञानमन्विच्छेदारोग्यं भास्करात्तथा ॥ ६६ ॥
हुताशनाद्धनं हीच्छेद् गतिमिच्छेज्जनार्दनात् ।
ब्राह्मयं पितामहाच्चैव सर्वजन्तुप्रशान्तिदम् ॥१०० ॥

भीष्म उवाच ।

यस्त्वयाकथितोयज्ञो यज्वनां तु फलं महत् । तथायुषस्स्वल्पतयाअन्यैःप्राप्तुंनशक्यते

स्वल्पायासेन यत्पुण्यं संवत्सरमुपोषणम्। भवेत्तन्मे मुनिश्रेष्ठ कथयस्व महाफलम्॥

पुलस्त्य उवाच।

इदमर्थं महाराज श्वेतो राजा महायशाः। वसिष्ठं पृष्टवान्प्रश्नं क्षुधया पीडितो भृशम्॥
आसीदिलावृते वर्षे श्वेतो राजा महाबलः। स महीं सकलां जिग्ये सप्तद्वीपां सपत्तनाम्
ब्रह्मपुत्रो वसिष्ठश्च आसीत्तस्य पुरोहितः। सकदाचिन्नृपश्रेष्ठो जित्वा परमधार्मिकः॥
पुरोहितमुवाचेदं वसिष्ठं जपतां वरम्।

श्वेत उवाच।

भगवन्नश्वमेधानां सहस्रं कर्तुमुत्सहे॥ ६॥
सुवर्णरूप्यरत्नानां दानं कर्तुं द्विजातिषु। पृथिव्यामन्नदानं तु दातुन्नेच्छामि वै गुरो
नान्नेन किंचिद्दत्तेन दत्ते हेम्नि द्विजे प्रभो।

पुलस्त्य उवाच।

न किंचिद्वस्त्विति ज्ञात्वा न दत्तं तत्कदाचन॥ ८॥
रक्तवस्त्रमलङ्कारं ग्रामांश्च नगराणि च। अददाद्ब्राह्मणेभ्योऽसौ श्वेतो राजामहायशाः
नान्नं जलं तेन राज्ञा दत्तमासीत्कदाचन। ततोऽश्वमेधैर्बहुभिर्यज्वाऽसौ नृपसत्तम॥
स्वर्गं गतः पुण्यजिततपस्तप्त्वार्बुदत्रयम्। ब्राह्मीं सलोकतां प्राप्तःसर्वालङ्कारभूषितः॥
नृत्यन्त्यप्सरसस्तत्र गायन्ते सिद्धयोषितः। तुम्बुरुर्नारदस्तत्र द्वावप्यनुगतौ सदा॥
अगायेतां महाप्राज्ञौ मुनयश्च तपोऽन्विताः। वेदोक्तमन्त्रैः स्तुन्वन्ति अनेकक्रतुयाजिनम्
एवं विभवयुक्तस्य राज्ञस्तस्य महात्मनः। क्षुधया पीड्यते देहं तृष्णया च विशेषतः॥
स तया पीड्यमानस्तुक्षुधयाराजसत्तमः। विमानेनाप्यसौ स्वर्गंत्यक्त्वाऽगादृक्षपर्वतम्
यत्रात्ममूर्तिस्तत्रागात्पुरा दग्धा महावने। तत्रास्थीनि स्वयं गृह्य लिहन्नास्तेसपार्थिवः
पुनर्विमानमारुह्य ययौ नाकं नराधिपः। अथ कालेन महता स राजा संशितव्रतः॥
स्वान्यस्थीनि लिहन्दृष्टोवसिष्ठेनपुरोधसा। उक्तश्च किन्नुराजेन्द्रस्वास्थिभक्षोनराधिप
एवमुक्तस्ततो राजा वसिष्ठेन महर्षिणा। उवाच वचनं चेदं श्वेतो राजाऽथ तं मुनिम्
भगवंस्तृट्क्षुधार्तोऽहमन्नदानं पुरा मया। न दत्तं मुनिशार्दूल तेन मांक्षुत्प्रबाधते॥

एवमुक्तस्तदा राज्ञा वसिष्ठो मुनिपुङ्गवः। उवाच तं नृपं भूयो वाक्यमेतन्महामुनिः ॥
किं ते करोमि राजेन्द्र क्षुधितस्य विशेषतः। वस्तु कस्यापि किञ्चिद्धि नादत्तमुपतिष्ठति
रत्नहेमप्रदानेन भोगवाञ्जायते नरः। अन्नदानप्रदानेन सर्वकामैः प्रदीपितः।
तन्न दत्तं त्वया राजन्स्तोकं मत्वा नराधिप ॥ १२३ ॥

श्वेत उवाच।

अदत्तस्य च सम्भूतिर्यथा भवति मे गुरो। वसिष्ठ त्वत्प्रसादेन तन्ममाचक्ष्व पृच्छतः ॥

वसिष्ठ उवाच।

अस्त्येकं कारणं येन जायते नात्र संशयः। तच्छृणुष्व नरव्याघ्र कथ्यमानं मया तव ॥
आसीद्राजा पुरा कल्पे विनीताश्वेति कीर्तितः। स चाश्वमेधमारेभे यज्ञं कर्तुं वरं नृप ॥
यजनान्ते द्विजेन्द्रेभ्यो दत्तं गोऽश्वादि याचितम्।
नान्नं दत्तं तेन किञ्चित्स्वल्पं मत्वा यथा त्वया ॥ १२७ ॥
ततः कालेन महता मृतोऽसौ जाह्नवीतटे। मायापुर्यां विनीताश्वः सार्वभौमोऽभवन्नृप
स्वर्गं च गतवान्सोऽपि यथा राजा भवान्प्रभो।
असावपि क्षुधाविष्ट एवमेवागतोऽभवत् ॥ १२९ ॥
मर्त्यलोके नदीतीरे गङ्गायां नीलपर्वते। विमानेनार्कवर्णेन भास्वता देववन्नृप ॥१३०॥
ददर्श तत्स्वकं देहं तथा स्वं च पुरोहितम्। होतारं ब्राह्मणं नाम यजन्तं जाह्नवीतटे ॥
तं दृष्ट्वासावपि पुनः पर्यपृच्छद्द्विजोत्तमम्। क्षुधायाः कारणं राजन्सहोता तमुवाच ह
तिलधेनुं च वै राजन्घृतधेनुं च सत्तम। जलधेनुं च धेनुं च रसधेनुं च पार्थिव ॥१३३॥
देहि शीघ्रं येन भवांस्तृट्क्षुधावर्जितो दिवि। रमेत यावदादित्यस्तपते दिवि चन्द्रमाः
एवमुक्तस्ततो राजा तं पुनः पृष्टवानिदम्। तिलधेनुस्थितिं ब्रूहि तथा कृत्वा ददाम्यहम्

पुरोहित उवाच।

विधानं तिलधेनोस्तु तच्छृणुष्व नराधिप।
धेनुस्स्यात्षोडशाढक्या चतुर्भिर्वत्सको भवेत् ॥ १३६ ॥
इक्षुदण्डमयाः पादा दन्ताः पुष्पमयाःशुभाः। नासा गन्धमयी तस्या जिह्वा गुडमयीतथा

पुच्छेस्तककल्पनीयास्याद्घण्टाभरणभूषिता। ईदृशीं कल्पयित्वातु स्वर्णशृङ्गींतु कल्पयेत्
रौप्यखुरां कांस्यदोहां पूर्वधेनुविधानतः। कृत्वा तां ब्राह्मणायाशु दापयेन्मन्त्रतो नृप
स्थितां कृष्णाजिने धेनुं वासोभिर्गोपितां शुभाम्।
सूत्रेणासूत्रितां कृत्वा पञ्चरत्नसमन्विताम्॥ १४०॥
सर्वौषधिसमायुक्तांमन्त्रपूतांतुदापयेत्। अन्नंमेजायतां सद्यःपानंसर्वरसास्तथा ॥१४१॥
कामान्सम्पादयास्माकं तिलधेनो द्विजेऽर्पिता।
गृह्णामि देवि त्वां भक्त्या कुटुम्बार्थे विशेषतः॥ १४२॥
देहिकामान्वितान्सर्वांस्तिलधेनो नमोऽस्तुते। एवंविधानतो दत्त्वा तिलधेनुर्नृपोत्तम॥
सर्वकामसमावाप्तिं कुरुते नात्र संशयः। जलधेनुस्तथैवेह कुम्भैरेव प्रकल्पिता॥१४४॥
दत्ता तु विधिनाकामान्सद्यःसर्वान्प्रयच्छति। धेनुशतं तथा दत्तं पूर्णिमानियमेन हि॥
सावित्री इव वै स्वर्गे सर्वकामप्रदा भवेत्। घृतधेनुस्तथा दत्ता विधानेन विचक्षणैः॥
सर्वकामसमावाप्तिं कुरुते कान्तिदा भवेत्। रसधेनुस्तथा दत्ता कार्तिकेमासि पार्थिव
सर्वान्कामान्प्रयच्छेत्तु नित्यं सा गतिदा भवेत्।
एतत्ते सर्वमाख्यातं समासाद्बहुविस्तरम्॥ १४८॥
अपारं फलमुद्दिष्टं ब्रह्मणा सर्वकर्मणा। तृष्णया क्षुधया यद्वा पीडितो राजसत्तम॥
तद्दानं कार्तिके देयं पूर्वंदेहि नराधिप। ब्रह्माण्डं सर्वसम्पन्नं भूतरत्नौषधीयुतम्॥१५०॥
देवदानवयक्षैश्च युक्तमेतत्सदा विभो। एतत्तु सकलं कृत्वा सर्वतो रजतान्वितम्॥१५१
सुरत्नसूर्यचन्द्राढ्यं कार्तिके द्वादशीदिने। अथवा पञ्चदश्यां तु कार्तिकस्यैव नान्यतः॥
पुरोहिताय गुरवे दापयेद्भक्तिमान्नरः। ब्रह्माण्डोदरवर्तीनि यानि भूतानि पार्थिव॥१५३
तानि दत्तानि वै तेन समासात्कथितं तव। यद्यज्ञैर्यजतो राजन्समाप्तवरदक्षिणैः॥१५४
सर्वं फलं तत्खण्डस्य ब्रह्माण्डस्य विशेषतः। यःपुनःसकलं चेदं ब्रह्माण्डंप्रदिशेन्नरः॥
तेन जप्तं हुतं दत्तं पठितं कीर्तितं भवेत्।

राजोवाच।

विधिं ब्रह्माण्डदानस्य कृत्वा तन्मोक्षभाग्भवेत्॥ १५६॥

कालं देशं विप्रतीर्थं सर्वं त्वं वद मेऽनघ। कृतेन येन सर्वस्य फलभागी भवाम्यहम् ॥
कुत्सितस्यास्य भावस्य क्षमस्मास्यादचिराच्च मे।
वसिष्ठ उवाच।
एवं श्रुत्वा ततो राजन्पुरोधास्तस्य स द्विजः ॥ ५८ ॥
ब्रह्माण्डं कारयामास सौवर्णं सर्वधातुभिः। युतं निष्कसहस्रेण पद्मं तत्र ह्यकल्पयत्
तत्र ब्रह्मातस्य मध्ये पद्मरागैरलङ्कृतः। सावित्र्या चैव गायत्र्या ऋषिभिर्मुनिभिःसह ॥
नारदाद्याःसुताःसर्वं इन्द्राद्याश्च दिवौकसः। सौवर्णविग्रहाःसर्वे ब्रह्मणस्तु पुरःसराः ॥
वराहरूपी भवगवाँल्लक्ष्म्यासह सनातनः। नीलं मरकतं चैव भूषायां तस्य कारयेत् ॥
गोमेदैस्तस्य वैशोभां कारयेत च बुद्धिमान्।
मौक्तिकैश्चापि सोमस्य शोभां वज्रैर्दिवाकरे ॥ १६३ ॥
ग्रहाणां चैव सर्वेषां सुवर्णानिच दापयेत्। स्वर्णात्सप्तगुणंरौप्यं रौप्यात्ताम्रं तथाविधम्
ततःसप्तगुणं कार्यं कांस्यंसप्तगुणं तथा। कांस्यात्सप्तगुणं कार्यं त्रपु चैव नराधिप ॥
त्रपुसप्तगुणं सीसं सीसाल्लोहं च कारयेत्। सप्तद्वीपाससमुद्राश्च सप्तवै कुलपर्वताः ॥
अनयासङ्ख्यया कृत्वा निपुणैःशिल्पिभिस्ततः पादपादीनि भूतानि राजतान्येव कारयेत
आरण्यानि च सत्त्वानि सौवर्णानि च कारयेत्।
वृक्षान् वनस्पतीन्गुल्मतृणपर्णानि वीरुधः ॥ १६८ ॥
सर्वं प्रकल्प्य विधिवत्तीर्थे देयं विचक्षणः। कुरुक्षेत्रे गयायां च प्रयागेऽमरकण्टके ॥
द्वारवत्यां प्रभासे च गङ्गाद्वारे च पुष्करे। तीर्थेष्वेतेषु वै देयं ग्रहणे शशिसूर्ययोः ॥
दिनच्छिद्रेषु सर्वेषु अयने दक्षिणोत्तरे। व्यतीपाते बहुगुणं विषुवे च विशेषतः ॥
दातव्यमेतद्राजेन्द्र विचारं नैव कारयेत्। शालाग्निहोत्रिणं कृत्वा सुरूपं च गुणान्वितम्
सपत्नीकं च सम्पूज्य भूषयित्वा च भूषणैः। पुरोहितं मुख्यतमं कृत्वान्ये च तथाद्विजाः
चतुर्विंशद्गुणोपेताःसपत्नीका निमन्त्रिताः। अङ्गुलीयानि च तथा कर्णवेष्टं च दापयेत्
एवंविधांस्तु तान्पूज्य तेषामग्रे सुसंस्थितः। अष्टाङ्गप्रणिपातेन प्रणम्य च पुनःपुनः ॥
पुरोहिताय पुरतः कृत्वा वै करसम्पुटम्। यूयं वै ब्राह्मणाःप्रीता मैत्रत्वेनानुगृह्णत ॥१७६

सौमुख्येन द्विजश्रेष्ठा भूयःपूततरस्त्वह । भवतां प्रीतियोगेन स्वयं प्रीतःपितामहः ॥१७७॥
ब्रह्माण्डेन तु दत्तेन तोषं यातु जनार्दनः । पिनाकपाणिर्भगवाञ्छक्रश्च त्रिदशेश्वरः ॥
एते तोषं समायान्तु अनुध्यानाद्द्विजोत्तमाः ।
एवं स्तुत्वा ततो राजा ब्राह्मणान्वेदपारगान् ॥ १७९ ॥
ब्रह्माण्डं तु गुरोःप्रादात्सविधानं पुनःक्षणात् । सर्वकामैस्ततस्तृप्तो ययौ स्वर्गं नराधिप
तेनैव गुरुणा तच्च विभक्तं ब्राह्मणैःसह । दत्तं तेनापि चान्येभ्यो ब्रह्माण्डं च नराधिप ॥
ब्रह्माण्डे भूमिदाने च ग्राही चैकोन वै भवेत् । गृह्णन्दोषमवाप्नोति ब्रह्महत्यां न संशयः ॥
सर्वेषां चैव प्रत्यक्षं दातव्यं परिकीर्त्य वै । दीयमानं च पश्यन्ति तेऽपि पूता भवन्ति हि
दर्शनादेव ते मुक्ता भवन्त्येव न संशयः । या भीमद्वादशी प्रोक्ता स्वर्णतोय मृगाजिनम्
एतानि कृत्वा पश्यन्तु दृष्टैरेतैःक्रियाफलम् । अयत्नादेव लभ्येत कर्तुश्चैव सलोकता ॥
सदा गावःप्रणम्याश्च मन्त्रेणानेन पार्थिव । नमो गोभ्यःश्रीमतीभ्यःसौरभेयीभ्य एव च
नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ।
मन्त्रस्य चास्यस्मरणाद्गोदानफलमाप्नुयात् ॥ १८७ ॥
तस्मात्त्वमपि राजेन्द्र पुष्करे तीर्थ उत्तमे । कार्तिक्यां तु विशेषेण गोदान फलमाप्स्यसि
यत्किञ्चिद्विद्यते पापं स्त्रियो वा पुरुषस्य वा । पुष्करे स्नानमात्रेण तदशेषं प्रणश्यति ॥
पृथिव्यां यानि तीर्थानि आसमुद्रात्तु भारत ।
पुष्करे तान्युपायान्ति कार्तिक्यां तु विशेषतः ॥ १९० ॥
इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे ब्रह्माण्डदानं नामषट्त्रिंशत्तमोऽध्यायः ॥

---

## सप्तत्रिंशत्तमोऽध्यायः

### अन्नदानमाहात्म्यवर्णनप्रस्तावाद्रामकथानकवर्णनम् ।

भीष्म उवाच ।

उक्तं भगवता सर्वं पुराणाश्रयसंयुतम् । तथा श्वेतेन ब्रह्माण्डं गुरवे प्रतिपादितम् ॥१॥

श्रुत्वैतत्कौतुकं जातं यथा तेनास्थिलेहनम् । कृतंक्षुधापनोदार्थं अन्नदानाद्विना द्विज ॥
तदहं श्रोतुमिच्छामि पृथिव्यां ये च पार्थिवाः । अन्नदानाद्दिवंप्राप्ताःकृतयश्चान्नमूलकाः
कथं तस्यमतिर्नष्टा श्वेतस्य च महात्मनः । न दत्तं तेनान्नदानमृषिभिर्वा न दर्शितम् ॥
अहो माहात्म्यमन्नस्य इह दत्तस्य यत्फलम् । परत्रभुज्यते पुम्भिःस्वर्गश्चाक्षयतां व्रजेत्
अन्नदानं परंविप्राःकीर्तयन्ति सदोत्थिताः । अन्नदानात्सुरेन्द्रेण त्रैलोक्यमिह भुज्यते ॥
शतक्रतुरिति प्रोक्तः सर्वैरेव द्विजोत्तमैः । तेनावस्थां तत्सदृशीं प्राप्तावांस्त्रिदशेश्वरः ॥
दानादेव गतःस्वर्गं त्वत्तःसर्वंश्रुतं दयाः । अपरं च पुरावृत्तं निवृत्तं यदि कर्हिचित् ॥

भूयोऽपि श्रोतुमिच्छामि तन्मे वद महामते ।

पुलस्त्य उवाच ।

एतदाख्यानकं पूर्वमगस्त्येन महात्मना ॥ ९ ॥
रामाय कथितं राजंस्तत्ते वक्ष्यामि साम्प्रतम् ।

भीष्म उवाच ।

कस्मिन्वंशसमुत्पन्नो रामोऽसौ नृपसत्तमः ॥ १० ॥
यस्यागस्त्येन कथितश्चेतिहासःपुरातनः ।

पुलस्त्य उवाच ।

रघुवंशे समुत्पन्नो रामो नाम महाबलः ॥ ११ ॥

देवकार्यं कृतं तेन लङ्कायां रावणो हतः । पृथिवी राज्यसंस्थस्य ऋषयोऽभ्यागता गृहे
प्राप्तास्ते तु महात्मानो राघवस्य निवेशनम् । प्रतीहारस्ततो राममगस्त्यवचनाद्द्रुतम्
आवेदयामास ऋषीन्प्राप्तांस्तांश्च त्वरान्वितः । दृष्ट्वा रामं द्वारपालःपूर्णचन्द्रमिवोदितम्

द्वारपाल उवाच ।

कौसल्यासुत भद्रं ते सुप्रभाताद्यशर्वरी । द्रष्टुमभ्युदयन्तेऽद्य सम्प्राप्तो रघुनन्दन ॥१५॥

अगस्त्यो मुनिभिःसार्धं द्वारि तिष्ठति ते नृप ।

पुलस्त्य उवाच ।

श्रुत्वा प्राप्तान्मुनीन्रामस्तान्भास्करसमद्युतीन् ॥ १६ ॥

प्राह वाक्यं तदा द्वाःस्थं प्रवेशय त्वरान्वितः ।
किमर्थं तु त्वया द्वारि निरुद्धा मुनिसत्तमाः ॥ १७ ॥
रामवाक्यान्मुनींस्तांस्तु प्रावेशयद्यथासुखम् ।
दृष्ट्वा तु तान्मुनीन्प्राप्तान्प्रत्युवाच कृताञ्जलिः ॥ १८ ॥
रामोऽभिवाद्य प्रणत आसनेषु न्यवेशयत् । ते तु काञ्चनचित्रेषु स्वास्तीर्णेषु सुखेषु च
कुशोत्तरेषु चासीनाःसमन्तान्मुनिपुङ्गवाः । पाद्यमाचमनीयं च ददौ चार्घ्यं पुरोहितः ॥
रामेण कुशलं पृष्टा ऋषयःसर्व एव ते । महर्षयो वेदविद इदं वचनमब्रुवन् ॥ २१ ॥

ऋषय ऊचुः ।

कुशलं नो महाबाहो सर्वत्र रघुनन्दन । त्वां तु दिष्ट्या कुशलिनं पश्यामो हतविद्विषम्
हृता सीताऽतिपापेन रावणेन दुरात्मना । पत्नी ते रघुशार्दूल तस्या एवौजसा हतः ॥
असहायेन चैकेन त्वया राम रणे हतः । यादृशं ते कृतं कर्म तस्य कर्ता न विद्यते ॥२४
इह सम्भाषितुं प्राप्ता दृष्ट्वा पूताःस्म साम्प्रतम् । दर्शनात्तव राजेन्द्र सर्वेजातास्तपस्विनः
रावणस्य वधात्तेऽद्य कृतमश्रुप्रमार्जनम् । दत्त्वा पुण्यामिमां वीर जगत्यभयदक्षिणाम्
दिष्ट्या वर्धसि काकुत्स्थ जयेनामितविक्रम ।
दृष्टस्सम्भाषितश्चासि यास्यामश्चाश्रमान्स्वकान् ॥ २७ ॥
अरण्यं ते प्रविष्टस्य मया चेन्द्रशरासनम् । अर्पितं चाक्षयौ तूणौ कवचं च परन्तप ॥
भूयोऽप्यागमनं कार्यमाश्रमे मे रघूद्वह ।

पुलस्त्य उवाच ।

एवमुक्त्वा तु ते सर्वे मुनयोऽन्तर्हिता भवन् ॥ २९ ॥
गतेषु मुनिमुख्येषु रामो धर्मभृतांवरः । चिन्तयामास तत्कार्यं किं स्यान्मे मुनिनोदितम्
भूयोऽप्यागमनं कार्यमाश्रमे रघुनन्दन । अवश्यमेवगन्तव्यं मयागस्त्यस्यसन्निधौ ॥
श्रोतव्यं देवगुह्यं तु कार्यमन्यच्च यद्वदेत् । एवं चिन्तयतस्तस्य रामस्यामिततेजसः ॥
करिष्ये नियतं धर्मं धर्मोहि परमा गतिः । स तु वर्षसहस्राणि दशराज्यमकारयत् ॥
ददतो जुह्वतश्चैव जग्मुस्तान्येकवर्षवत् । प्रजाः पालयतस्तस्य राघवस्य महात्मनः ॥३४

एतस्मिन्नेवदिवसे वृद्धो जानपदो द्विजः। मृतं पुत्रमुपादाय राजद्वारमुपागतः॥ ३५॥
उवाच विविधं वाक्यं स्नेहाक्षरसमन्वितम्।

ब्राह्मण उवाच।

दुष्कृतं किन्नु मे पुत्र पूर्वदेहान्तरे कृतम्॥ ३६॥
त्वामेकपुत्रं यदहं पश्यामि निधनं गतम्। अप्राप्तयौवनं बालं पञ्चवर्षं गतायुषम्॥३७॥
अकाले कालमापन्नं दुःखाय ममपुत्रक। अकृत्वा पितृकार्याणि गतो वैवस्वतक्षयम्॥
रामस्य दुष्कृतं व्यक्तं येन ते मृत्युरागतः। बालवध्या ब्रह्मवध्या स्त्रीवध्या चैव राघवम्
प्रवेक्ष्यति न सन्देहःसभार्ये तु मृते मयि।

पुलस्त्य उवाच।

शुश्राव राघवःसर्वं दुःखशोकसमन्वितम्॥ ४०॥
निवार्य तं द्विजं रामो वसिष्ठं वाक्यमब्रवीत्।

राम उवाच।

किं मयाद्य च कर्तव्यं कार्यमेवंविधे स्थिते॥ ४१॥
प्राणानहं जुहोम्यग्नौ पर्वताद्वा पते ह्यहम्। कथं शुद्धिमहंयामि श्रुत्वा ब्राह्मणभाषितम्

पुलस्त्य उवाच।

वसिष्ठस्याग्रतःस्थित्वा राज्ञोदीनस्य नारदः। प्रत्युवाच श्रुतंवाक्यमृषीणां सन्निधौ तदा

नारद उवाच।

शृणु रामयथाऽकाले प्राप्तो वै बालसंक्षयः। पुराकृतयुगे राम सर्वत्र ब्राह्मणोत्तरम्॥
अब्राह्मणो न वै कश्चित्तपस्तपति राघव। अमृत्यवस्तदा सर्वे जायन्ते चिरजीविनः॥
त्रेतायुगे पुनःप्राप्ते ब्रह्मक्षत्रमनुत्तमम्। अधर्मो द्वापरे तेषां वैश्याञ्छूद्रांस्तथाविशत्॥
एवं निरन्तरं जुष्टमुद्भूतमनृतं पुनः। अधर्मस्य त्रयःपादा एको धर्मस्य चागतः॥४७॥
ततःसर्वे भृशंत्रस्ता वर्णा ब्राह्मणपूर्वकाः। भूयःपादस्तु धर्मस्य द्वितीयःसमपद्यत॥
तस्मिन्द्वापरसंज्ञेतु तपो वैश्यं समाविशत्। युगत्रयस्य वै धर्म्यं धर्मस्य प्रतितिष्ठति
कलिसंज्ञे ततः प्राप्ते वर्तमाने युगेऽन्तिमे। अधर्मश्चानृतं चैव ववृधाते नरर्षभ॥ ५०॥

न शूद्रो लभते कर्तुं तपउग्रं नरर्षभ । भविता शूद्रयोन्यां तु तपश्चर्या कलौयुगे ॥ ५१ ॥
स ते विषयपर्यन्ते राजन्नुग्रतरन्तपः । शूद्रस्तपति दुर्बुद्धिस्तेन बालवधःकृतः ॥ ५२ ॥
यस्याधर्ममकार्यं वा विषये पार्थिवस्य हि । पुरे वा राजशार्दूल कुरुते दुर्मतिर्नरः ॥
क्षिप्रं स नरकं याति यावदाभूतसम्प्लवम् । चतुर्थं तस्य पापस्य भागमश्नाति पार्थिवः
स त्वं पुरुषशार्दूल गच्छस्व विषयं स्वकम् । दुष्कृतं यत्र पश्येथास्तत्र यत्नं समाचर॥
एवं ते धर्मवृद्धिश्च बलस्य वर्धनं तथा । भविष्यति नरश्रेष्ठ बालस्यास्य च जीवनम् ॥

पुलस्त्य उवाच ।

नारदेनैवमुक्तस्तु साश्चर्यो रघुनन्दनः । प्रहर्षमतुलं लेभे लक्ष्मणं चेदमब्रवीत् ॥ ५७ ॥

राम उवाच ।

गच्छ सौम्य द्विजश्रेष्ठं समाश्वासय लक्ष्मण ।
बालस्य च शरीरं त्वं तैलद्रोण्यां निधापय ॥ ५८ ॥
गन्धैश्च परमोदारैस्तैलैश्चैव सुगन्धिभिः ।
यथा न शीर्यते बालस्तथा सौम्य विधीयताम् ॥ ५९ ॥
यथा शरीरं गुप्तं स्याद्बालस्याक्लिष्टकर्मणः । विपत्तिःपरिभेदो वा न भवेत्तत्तथा कुरु

पुलस्त्य उवाच ।

तथा सन्दिश्य सौमित्रिं लक्ष्मणं शुभलक्षणम् ।
मनसा पुष्पकं दध्यावागच्छेति महायशाः ॥ ६१ ॥
इङ्गितं तत्तु विज्ञाय कामगं हेमभूषितम् । आजगाम मुहूर्त्तात्तु समीपं राघवस्य हि ॥
सोऽब्रवीत्प्राञ्जलिर्वाक्यमहमस्मि नराधिप । अग्रे तव महाबाहो किङ्करःसमुपस्थितः ॥
भाषितं सुचिरं श्रुत्वा पुष्पकस्य नराधिप । अभिवाद्यमहर्षींस्तान्विमानंसोऽध्यरोहत
धनुर्गृहीत्वा तूणौ च खड्गं चापि महाप्रभम् । निक्षिप्य नगरेवीरौसौमित्रि भरतावुभौ
प्रायात्प्रतीचीं त्वरितो विचिन्वन्सुसमाहितः। उत्तरामगमत्पश्चाद्दिशंहिमवदाश्रिताम् ॥
पूर्वामपि दिशां गत्वा तथापश्यन्नराधिपः ।
सर्वां शुद्धसमाचारामादर्शमिव निर्मलाम् ॥ ६७ ॥

ततो दिशं समाक्रामद्दक्षिणां रघुनन्दनः। शैलस्य चोत्तरे पार्श्वे ददर्श सुमहत्सरः॥
तस्मिन्सरसि तप्यन्तं तापसं सुमहत्तपः। ददर्श राघवो भीमं लम्बमानमधोमुखम्॥
तमुपागम्य काकुत्स्थस्तप्यमानं तु तापसम्। उवाच राघवो वाक्यं धन्यस्त्वममरप्रभ
कस्यां योनौ तपोवृद्धिर्वर्तते दृढनिश्चय। अहं दाशरथी रामःपृच्छामि त्वां कुतूहलात्

कोऽर्थो व्यवसितस्तुभ्यं स्वर्गलोकोऽथवेतरः।
किमर्थं तप्यसे वा त्वं श्रोतुमिच्छामि तापस॥ ७२॥
ब्राह्मणो वाऽसि भद्रं ते क्षत्त्रियो वाथ दुर्जयः।
वैश्यस्तृतीयवर्णो वा शूद्रो वा सत्यमुच्यताम्॥ ७३॥

तपःसत्यात्मकं नित्यं स्वर्गलोकपरिग्रहे। सात्विकं राजसं चैवतच्चसत्यात्मकं तपः॥
जगदुपकारहेतुर्हि सृष्टं तद्वै विरिञ्चिना। रौद्रक्षत्त्रियतेजोजं तत्तु राजसमुच्यते॥
परस्योत्सादनार्थाय तच्चासुरमुदाहृतम्। अङ्गानि निहुते यो वा असृग्दिग्धानि भागशः
पञ्चाग्निं साधयेद्वापि सिद्धिं वा मृत्युमेव वा। आसुरो ह्येष ते भावो नच मेत्वंद्विजोमतः
सत्यं ते वदतःसिद्धिरनृते नास्तिजीवितम्। तस्यतद्भाषितं श्रुत्वा रामस्याक्लिष्टकर्मणः

अवाक्छिरास्तथा भूतो वाक्यमेतदुवाच ह।

शूद्रतापस उवाच।

स्वागतं ते नृपश्रेष्ठ चिराद्दृष्टोऽसि राघव॥ ७६॥

पुत्रभूतोऽस्मि ते चाहं पितृभूतोऽसि मेऽनघ। अथवा नैतदेवं हि सर्वेषां नृपतिः पिता
सत्वमर्च्योऽसिभोराजन्वयंते विषये तपः। चरामस्तत्रभागोऽस्ति पूर्वंसृष्टःस्वयम्भुवा
न धन्याःस्मोवयंरामधन्यस्त्वमसिपार्थिव। यस्य ते विषयेह्येवंसिद्धिमिच्छन्तितापसाः
तपसा त्वं मदीयेन सिद्धिमाप्नुहि राघव। यदेतद्भवता प्रोक्तं योनौ कस्यां तु ते तपः
शूद्रयोनिप्रसूतोऽहं तपउग्रं समास्थितः। देवत्वं प्रार्थये राम स्वशरीरेण सुव्रत॥८४॥
न मिथ्याहं वदे भूपदेवलोकजिगीषया। शूद्रं मां विद्धि काकुत्स्थ शम्बूकं नामनामतः

पुलस्त्य उवाच।

भाषतस्तस्य काकुत्स्थःखड्गंतु रुचिरप्रभम्। निष्कृष्यकोशाद्विमलंशिरश्चिच्छेदराघव

तस्मिञ्छूद्रेहतेदेवाःसेन्द्राश्चाग्निपुरोगमाः । साधुसाध्विति काकुत्स्थंप्रशशंसुर्मुहुर्मुहुः ॥
पुष्पवृष्टिश्चमहतीदेवानांसुसुगन्धिनी । आकाशाद्विप्रमुक्तातु राघवं सर्वतोऽकिरम् ॥
सुप्रीताश्चाब्रुवन्देवा रामं वाक्यविदांवरम् ।

देवा ऊचुः ।

सुरकार्यमिदंसौम्य कृतं ते रघुनन्दन ॥ ८९ ॥
गृहाण च वरं राम यमिच्छसि महाव्रत ।

पुलस्त्य उवाच ।

देवानां भाषितं श्रुत्वा राघवःसुसमाहितः ॥ ९० ॥
उवाव प्राञ्जलिर्वाक्यं सहस्राक्षं पुरन्दरम् ।

राम उवाच ।

यदि देवाःप्रसन्ना मे वराहो यदि वाप्यहम् ॥ ९१ ॥
कर्मणा यदि मे प्रीता द्विजपुत्रः स जीवतु । वरमेतद्धि भवतां कांक्षितं परमं हि मे ॥
ममापराधाद्बालोऽसौ ब्राह्मणस्यैकपुत्रकः । अप्राप्तकालःकालेन नीतो वैवस्वतक्षयम्
तं जीवयत भद्रं वो नानृतीस्यामहं गुरोः । द्विजस्य संश्रुतो ह्यर्थो जीवयिष्यामि तेसुतम्
मदीयेनायुषाबालं पादेनार्द्धेन वा सुराः । जीवेदयं वरो मह्यं वरकोऽस्त्यधिकोवृतः ॥९५॥

पुलस्त्य उवाच ।

राघवस्य तु तद्वाक्यं श्रुत्वा विबुधसत्तमाः ।
प्रत्यूचुस्ते महात्मानं प्रीताःप्रीतिसमन्विताः ॥ ९६ ॥

देवा ऊचुः ।

निर्वृतो भव काकुत्स्थ ब्राह्मणस्यैकपुत्रकः । जीवितं प्राप्तवान्भूयःसमेतश्चापिबन्धुभिः
यस्मिन्मुहूर्ते काकुत्स्थ शूद्रोऽयं विनिपातितः । तस्मिन्मुहूर्ते सहसा जीवेन समयुज्यत
स्वस्ति प्राप्नुहि भद्रं ते साधयामःपरंतपः । अगस्त्यस्याश्रमपदे द्रष्टारस्महामुनिम् ॥
स तथेति प्रतिज्ञाय देवानां रघुनन्दनः । आरुरोह विमानं तं पुष्पकं हेमभूषितम् ॥
इति श्री पाद्मपुराणेप्रथमेसृष्टिखण्डेशूद्रतापसवधो नाम सप्तत्रिंशोऽध्यायः ।

# अष्टत्रिंशोऽध्यायः

## रामस्यागस्त्याश्रमगमनवर्णनम् ।

पुलस्त्य उवाच ।

ततो देवाःप्रयातास्तैर्विमानैर्बहुभिस्तदा । रामोऽप्यनुजगामाशु कुम्भयोनेस्तपोवनम् ॥
उक्तं भगवता तेन भूयोऽप्यागमनं कृथाः । पूर्वमेव सभायां च यो मां द्रष्टुं समागतः
तदहं देवतादेशात्तत्कार्यार्थे महामुनिम् । पश्यामि तं मुनिं गत्वा देवदानवपूजितम् ॥
उपदेशं च मे तुष्टःस्वयं दास्यति सत्तमः । दुःखी येन पुनर्मर्त्ये न भवामि कदाचन ॥४॥
पिता दशरथो मह्यं कौसल्या जननी तथा । सूर्यवंशे समुत्पन्नस्तथाप्येवं सुदुःखितः ॥
राज्यकाले वनेवासो भार्यया चानुजेन च । हरणं चापि भार्याया रावणेन कृतं मम ॥
असहायेनतु मया तीर्त्वा सागरमुत्तमम् । रुद्ध्वातु तां पुरीं सर्वां कृत्वातस्यकुलक्षयम्
दृष्टा सीता मया त्यक्ता देवानां तु पुरस्तदा । शुद्धांतांमां तथोचुस्ते मया सीतातथागृहम्
समानीता प्रीतिमता लोकवाक्याद्विसर्जिता । वने वसति सा देवी पुरेचाहं वसामि वै
जातोऽहमुत्तमे वंश उत्तमोऽहं धनुष्मताम् । उत्तमं दुःखमापन्नो हृदयं नैव भिद्यते ॥
वज्रसारस्य सारेण धात्राहं निर्मितो ध्रुवम् । इदानीं ब्राह्मणादेशाद्भ्रमामि धरणीतले ॥

तपःस्थितस्तु शूद्रोऽसौ मया पापो निपातितः ।
देववाक्यात्तु मे भूयः प्राणो मे हृदि संस्थितः ॥ १२ ॥

पश्यामि तं मुनिं वन्द्यं जगतोऽस्य हिते रतम् । दृष्टेन मे तथा दुःखं नाशमेष्यति सत्वरम्
उदयेनसहस्रांशोर्हिमं यद्वद्विलीयते । तद्वन्मे दुःखसम्प्राप्तिः सर्वथा नाशमेष्यति ॥१४॥

दृष्ट्वा च देवान्सम्प्राप्तानगस्त्यो भगवानृषिः ।
अर्घ्यमादाय सुप्रीतः सर्वांस्तानभ्यपूजयत् ॥ १५ ॥

ते तु गृह्य ततः पूजां सम्भाष्यचमहामुनिम् । जग्मुस्ते त्रिदशा हृष्टा नाकपृष्ठं सहानुगाः
गतेषु तेषु काकुत्स्थः पुष्पकादवरुह्य च । अभिवादयितुं प्राप्तः सोऽगस्त्यमृषिमुत्तमम्

राम उवाच ।

सुतो दशरथस्याहं भवन्तमभिवादितुम् । आगतो वै मुनिश्रेष्ठ सौम्येनेक्षस्व चक्षुषा ॥
निर्धूतपापस्त्वां दृष्ट्वा भवामीह न संशयः ।

पुलस्त्य उवाच ।

एतावदुक्त्वा स मुनिमभिवाद्य पुनः पुनः ॥ १६ ॥
कुशलं भृत्यवर्गस्य मृगाणां तनयस्य च । भगवद्दर्शनाकांक्षी शूद्रं हत्वा त्विहागतः ॥

अगस्त्य उवाच ।

स्वागतं ते रघुश्रेष्ठ जगद्वन्द्य सनातन । दर्शनात्तव काकुत्स्थ पूतोऽहं मुनिभिः सह ॥
त्वत्कृते रघुशार्दूल गृहाणार्घं महाद्युते। स्वागतं नरशार्दूल दिष्ट्या प्राप्तोऽसि शत्रुहन् ॥
त्वं हि नित्यं वहुमतो गुणैर्वहुभिरुत्तमैः । अतस्त्वं पूजनीयो वै मम नित्यं हृदि स्थितः
सुरा हि कथयन्ति त्वां शूद्रघातिनमागतम् । ब्राह्मणस्य च धर्मेण त्वयावैजीवितःसुतः
उष्यतां चेह भगवन्सकाशे मम राघव । प्रभाते पुष्पकेणासि गन्ताऽयोध्यां महामते ॥
इदं चाभरणं सौम्य सुकृतं विश्वकर्मणा । दिव्यं दिव्येन वपुषा दीप्यमानं स्वतेजसा ॥
प्रतिगृह्णीष्व राजेन्द्र मत्प्रियं कुरु राघव । लब्धस्य हि पुनर्दाने सुमहत्फलमुच्यते ॥
त्वं हि शक्तः परित्रातुं सेन्द्रानपि सुरोत्तमान् ।
तस्मात्प्रदास्ये विधिवत्प्रतीच्छस्व नरर्षभ ॥ २८ ॥

पुलस्त्य उवाच ।

अथोवाच महाबाहुरिक्ष्वाकूणां महारथः । कृताञ्जलिर्मुनिश्रेष्ठं स्वं च धर्ममनुस्मरन् ॥

श्रीराम उवाच ।

प्रतिग्रहो वै भगवंस्तव मेऽत्र विगर्हितः । क्षत्रियेण कथं विप्र प्रतिग्राह्यं विजानता ॥
ब्राह्मणेन तु यद्दत्तं तन्मे त्वं वक्तुमर्हसि । सपुत्रो गृहवानस्मि समर्थोऽस्मि महामुने ॥
आपदा च न चाक्रान्तः कथं ग्राह्यः प्रतिग्रहः ।
भार्या मे सुचिरं नष्टा न चान्या मम विद्यते ॥ ३२ ॥
केवलं दोषभागी च भवामीह न संशयः । कष्टां चैव दशांप्राप्यक्षत्रियोऽपि प्रतिग्रहम्

कुर्वन्नदोषमाप्नोति मनुरेवात्र कारणम् । वृद्धौचमातापितरौसाध्वी भार्या शिशुःसुतः ॥
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् । नाहं प्रतीच्छे विप्रर्षे त्वया दत्तं प्रतिग्रहम् ॥
न च मे भवता कोपः कार्यो वै सुरपूजित ॥ ३६ ॥

अगस्त्य उवाच ।

न च प्रतिग्रहे दोषो गृहीतपार्थिवैर्नृप । भवान्वैतारणे शक्तस्त्रैलोक्यस्यापि राघव ॥
तारय ब्राह्मणं राम विशेषेण तपस्विनम् । तस्मात्प्रदास्य विधिवत्प्रतीच्छस्व नराधिप

राम उवाच ।

क्षत्रियेण कथं विप्र प्रतिग्राह्यं विजानता । ब्राह्मणेन यथा दत्तं तन्मे त्वं वक्तुमर्हसि ॥

अगस्त्य उवाच ।

आसन्कृतयुगे राम ब्रह्मभूते पुरातने ॥
अपार्थिवाः प्रजाः सर्वाः पुराणां च चतुर्मुखम् ॥ ४० ॥

ताः प्रजा देवदेवेशं राजार्थं समुपागमन् । सुराणां विद्यते राजा देवदेवःशतक्रतुः ॥
श्रेयसेऽस्मासु लोकेश पार्थिवं कुरु साम्प्रतम् । यस्मिन्पूजां प्रयुञ्जानाःपुरुषाभुञ्जतेमहीम्
ततो ब्रह्मा सुरश्रेष्ठो लोकपालान्सवासवान् ।
समाहूयाब्रवीत्सर्वांस्तेजोभागोऽत्र युज्यताम् ॥ ४३ ॥

ततो ददुर्लोकपालाश्चतुर्भागं स्वतेजसा । अक्षयश्च ततो ब्रह्मा यतो जातोऽक्षयोनृप ॥
तं ब्रह्मा लोकपालानामंशं पुंसामयोजयत् । ततो नृपस्तदा तासां प्रजानां क्षेमपण्डितः
तत्रैन्द्रेण तु भागेन सर्वानाज्ञापयेन्नृपः । वारुणेनचभागेनसर्वान्पुष्णातिदेहिनः ॥४६ ॥
कौबेरेणतथांशेनत्वर्थान्दिशतिपार्थिवः । यश्चयाम्योनृपेभागस्तेनशास्ति च वै प्रजाः ॥
तत्र चैन्द्रेण भागेन नरेन्द्रोऽसि रघूत्तम । प्रतिगृह्णीष्वाभरणं तारणार्थे मम प्रभो ॥

पुलस्त्य उवाच ।

ततो रामः प्रजग्राह मुनेर्हस्तान्महात्मनः । दिव्यमाभरणं चित्रं प्रदीप्तमिव भास्करम् ॥
प्रतिगृह्य ततोऽगस्त्याद्राघवः परवीरहा । निरीक्ष्य सुचिरं कालं विचार्य च पुनः पुनः
मौक्तिकानि विचित्राणि धात्रीफलसमानि च । जाम्बूनदनिबद्धानि वज्रविद्रुमनीलकैः ॥

पद्मरागैः सगोमेधैर्वैडूर्यैः पुष्परागकैः ।
सुनिबद्धं सुविभक्तं सुकृतं विश्वकर्मणा ॥ ५२ ॥
दृष्ट्वा प्रीतिसमायुक्तो भूयश्चेदं व्यचिन्तयत् ।
नेदृशानि च रत्नानि मया दृष्टानि कानिचित् ॥ ५३ ॥

उपशोभानि बद्धानि पृथ्वीमूल्यसमानि च । विभीषणस्य लङ्कायां न दृष्टानि मया पुरा
इति सञ्चिन्त्य मनसा राघवस्तमृषिंपुनः । आगमं तस्य दिव्यस्य प्रष्टुं समुपचक्रमे ॥

राम उवाच ।

अत्यद्भुतमिदं ब्रह्मन्नप्राप्यं च महीक्षिताम् । कथं भगवता प्राप्तं कुतो वा केन निर्मितम्
कुतूहलवशाच्चैव पृच्छामि त्वां महामते । करतले स्थिते रत्ने करमध्यं प्रकाशते ॥
अधमं तद्विजानीयात्सर्वशास्त्रेषु गर्हितम् । दिशः प्रकाशयेद्यत्तन्मध्यमं मुनिसत्तम ॥
ऊर्द्ध्वगं त्रिशिखं यत्स्यादुत्तमं तदुदाहृतम् । एतान्युत्तमजातीनि ऋषिभिःकीर्तितानितु

आश्चर्याणां बहूनां हि दिव्यानां भगवान्निधिः ।
एवं वदति काकुत्स्थे मुनिर्वाक्यमथाब्रवीत् ॥ ६० ॥

अगस्त्य उवाच ।

शृणु राम पुरावृत्तं पुरात्रेतायुगेमहत् । द्वापरे समनुप्राप्ते वने यद्दृष्टवानहम् ॥ ६१ ॥
आश्चर्यं सुमहाबाहो निबोध रघुनन्दन । पुरा त्रेतायुगे ह्यासीदरण्यं बहुविस्तरम् ॥६२॥
समन्ताद्योजनशतं मृगव्याघ्रविवर्जितम् । तस्मिन्निष्पुरुषेऽरण्ये चिकीर्षुस्तप उत्तमम् ॥
अहमाक्रमितुं सौम्य तदरण्यमुपागतः । तस्यारण्यस्य मध्यं तु युक्तं मूलफलैः सदा ॥
शाकैर्बहुविधाकारैर्नानारूपैःसुकाननैः । तस्यारण्यस्य मध्ये तु पञ्चयोजनमायतम् ॥६५
हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् । तत्राश्चर्यं मयादृष्टं सरः परमशोभितम् ॥
विसारिकच्छपाकीर्णं बकपङ्क्तिगणैर्युतम् । समीपे तस्य सरसस्तपस्तप्तुं गतः पुरा ॥
देशं पुण्यमुपेत्यैवं सर्वहिंसाविवर्जितम् । तत्राहमवसं रात्रिं नैदाघीं पुरुषर्षभ ॥ ६८ ॥
प्रभाते पुनरुत्थाय सरस्तदुपचक्रमे । अथापश्यं शवमहमस्पृष्टजरसं क्वचित् ॥ ६९ ॥
तिष्ठन्तं परया लक्ष्म्या सरसो नातिदूरतः । तदर्थं चिन्तयानोऽहं मुहूर्तमिव राघव ॥७०

अस्य तीरे न वै प्राणी को वाप्येष सुरर्षभः ।
मुनिर्वा पार्थिवो वापि क्व मुनिः पार्थिवोऽपि वा ॥ ७१ ॥
अथवा पार्थिवसुतस्तस्यैवं सम्भवः कृतः । अतीतेऽहनि रात्रौ वा प्रातर्वापि मृतो यदि
अवश्यं तु मया ज्ञेया सरसोऽस्य विनिष्क्रिया ।
यावदेवं स्थितश्चाहं चिन्तयानो रघूत्तम ॥ ७३ ॥
अथापश्यं मुहूर्तात्तु दिव्यमद्भुतदर्शनम् । विमानं परमोदारं हंसयुक्तं मनोजवम् ॥७४॥
पुरस्तत्र सहस्रं तु विमानेऽप्सरसां नृप । गन्धर्वाश्चैव तत्संख्या रमयन्ति वरं नरम् ॥
गायन्ति दिव्यगेयानि वादयन्ति तथापरे । अथापश्यं नरं तस्माद्विमानादवरुह्य तु ॥७६।
शवमांसं भक्षयन्तं स्नात्वा रघुकुलोद्वह । ततो भुक्त्वा यथाकामं समांसं बहुपीवरम् ॥
अवतीर्य सरः शीघ्रमारुरोह दिवं पुनः । तमहं देवसङ्काशं श्रिया परमयान्वितम् ॥७८॥
भोभोस्वर्गिन्महाभाग पृच्छामि त्वां कथं त्विदम् ।
जुगुप्सितस्तवाहारो गतिश्चेयं तवोत्तमा ॥ ७९ ॥
यदि गुह्यं न चैतत्ते कथय त्वद्य मे भवान् । कामतः श्रोतुमिच्छामि किमेतत्परमं वचः
को भवान्वदसन्देहमाहारश्चविगर्हितः । त्वयेदं भुज्यते सौम्य किमर्थं क्व च वर्तसे ॥
कस्यायमैश्वरो भावः शवत्वेन विनिर्मितः ।
आहारं च कथं निन्द्यं श्रोतुमिच्छामि तत्त्वतः ॥ ८२ ॥
श्रुत्वा च भाषितं तत्र मम राम सतांवर । प्राञ्जलिः प्रत्युवाचेदं सस्वर्गी रघुनन्दन ॥

श्वेत उवाच ।

शृणुष्वाद्य यथावृत्तं ममेदं सुखदुःखजम् । कामो हि दुरतिक्रम्यः शृणु यत्पृच्छसे द्विज
पुरा वैदर्भको राजा पिता मे हि महायशाः। वासुदेव इति ख्यातस्त्रिषु लोकेषु धार्मिकः
तस्य पुत्रद्वयं ब्रह्मन्द्वाभ्यां स्त्रीभ्यामजायत ।
अहं श्वेत इति ख्यातो यवीयान्सुरथोऽभवत् ॥ ८६ ॥
पितर्युपरते तस्मिन्पौरा मामभ्यषेचयन् । तत्राहं कारयन्राज्यं धर्मे चासं समाहितः ॥
एवं वर्षसहस्राणि बहूनि समुपाव्रजन् । मम राज्यं कारयतः परिपालयतः प्रजाः ॥८८।

सोऽहं निमित्ते कस्मिंश्चिद्वैराग्येण द्विजोत्तम। मरणं हृदये कृत्वा तपोवनमुपागमम्॥
सोऽहं वनमिदं रम्यं भृशं पक्षिविवर्जितम्। प्रविष्टस्तप आस्थातुमस्यैव सरसोऽन्तिके
राज्येऽभिषिच्य सुरथं भ्रातरं तं नराधिपम्।
इदं सरः समासाद्य तपस्तप्तं सुदारुणम्॥ ९१ ॥
दशवर्षसहस्राणि तपस्तप्त्वा महावने। शुभं तु भवनं प्राप्तो ब्रह्मलोकमनामयम्॥९२॥
स्वर्गस्थमपि मां ब्रह्मन्क्षुत्पिपासे द्विजोत्तम। अबाधेतां भृशं चाहमभवं व्यथितेन्द्रियः
ततस्त्रिभुवनश्रेष्ठमवोचं वै पितामहम्। भगवन्स्वर्गलोकोऽयं क्षुत्पिपासाविवर्जितः॥
कस्येयं कर्मणः पक्तिः क्षुत्पिपासे यतो हि मे। आहारः कश्च मे देव ब्रूहि त्वं श्रीपितामह
ततः पितामहः सम्यक्चिरं ध्यात्वा महामुने।
मामुवाच ततो वाक्यं नास्ति भोज्यं स्वदेहजम्॥ ९६ ॥
ऋते स्वानि तु मांसानि भक्षय त्वं तु नित्यशः। स्वशरीरं त्वया पुष्टं कुर्वता तपउत्तमम्
नादत्तं जायते तात श्वेत पश्य महीतले। आग्रहाद्वीक्षमाणाय भिक्षापि प्राणिने पुरा॥
न हि दत्ता गृहे भ्रान्त्या मोहादतिथये तदा। तेन स्वर्गगतस्यापि क्षुत्पिपासे तवाधुना
स त्वं प्रपुष्टमाहारैः स्वशरीरमनुत्तमम्। भक्षयस्व च राजेन्द्र सा ते तृप्तिर्भविष्यति॥
एवमुक्तस्ततो देवं ब्रह्माणमहमुक्तवान्। भक्षिते च स्वके देहे पुनरन्यन्न मे विभो॥
क्षुधानिवारणे नैव देहस्यास्य विनोदनम्। खादामि ह्यक्षयं देव प्रियं मे न हि जायते॥
ततोऽब्रवीत्पुनर्ब्रह्मा तव देहोऽक्षयः कृतः। दिने दिने ते पुष्टात्मा शवः श्वेत भविष्यति
यावद्वर्षशतं पूर्णं स्वमांसं खाद भो नृप। यदागच्छति चागस्त्यः श्वेतारण्ये महातपाः
भगवानतिदुर्धर्षस्तदा कृच्छ्राद्विमोक्ष्यसे। स हि तारयितुं शक्तः सेन्द्रानपि सुरासुरान्
आहारं कुत्सितं चेमं राजर्षे किं पुनस्तव। सुरकार्यं महत्तेन सुकृतं तु महात्मना॥
उदधिं निर्जलं कृत्वा दानवाश्च निपातिताः। विन्ध्यश्चादित्यविद्वेषाद्वर्धमानो निवारितः
लम्बमाना मही चैषा गुरुत्वेनाधिवासिता।
दक्षिणादिग्दिवं याता त्रैलोक्यं विषमं स्थितम्॥ १०८ ॥
मया गत्वा सुरैः सार्द्धं प्रेषितो दक्षिणां दिशम्।

समां कुरु महाभोग गुरुत्वेन जगत्समम् ॥ १०६ ॥

एवं च तेन मुनिना स्थित्वा सर्वा धरा समा । कृता राजेन्द्र मुनिना एवमद्यापिदृश्यते
सोऽहं भगवतः श्रुत्वा देवदेवस्य भाषितम् । भुञ्जे च कुत्सिताहारं स्वशरीरमनुत्तमम् ॥
पूर्णं वर्षशतं चाद्य भोजनं कुत्सितं च मे । क्षयं नाभ्येति तद्विप्रतृप्तिश्चापि ममोत्तमा ॥
तं मुनिं कृच्छ्रसन्तप्तश्चिन्तयामि दिवानिशम् । कदा वै दर्शनं मह्यं समुनिर्दास्यतेवने ॥
एवं मे चिन्तयानस्य गतंवर्षशतन्त्विह । सोऽगस्त्यो हि गतिर्ब्रह्मन्मुनिर्मे भविताध्रुवम्
न गतिर्भविता मह्यं कुम्भयोनिमृतेद्विजम् । श्रुत्वेत्थं भाषितं राम दृष्ट्वाहारं च कुत्सितम्
कृपयापरया युक्तस्तं नृप स्वर्गगामिनम् । करोम्यहं सुधाभोज्यं नाशयामि च कुत्सितम्
चिन्तयन्नित्यवोचं तमगस्त्यः किं करिष्यति । अहमेतत्कुत्सितं तेनाशयामि महामते ॥

ईप्सितं प्रार्थयस्वास्मान्मनः प्रीतिकरं परम् ।
सस्वर्गी मां ततः प्राह कथं ब्रह्मवचोऽन्यथा ॥ ११८ ॥

कर्तुं मुने मया शक्यं न चान्यस्तारयिष्यति । ऋते वै कुम्भयोनिं तं मैत्रावरुणसम्भवम्
अपृष्टोऽपि मया ब्रह्मन्नेवमूचे पितामहः । एवं ब्रुवाणं तं श्वेतमुक्तवानहमस्मि सः ॥

आगतस्तव भाग्येन दृष्टोऽहं नात्र संशयः ।
ततः स्वर्गी समां ज्ञात्वा दण्डवत्पतितो भुवि ॥ १२१ ॥
तमुत्थाप्य ततो रामाब्रवं किं ते करोम्यहम् ।

राजोवाच ।

आहारात्कुत्सिताद्ब्रह्मंस्तारयस्वाद्यदुष्कृतात् ॥ १२२ ॥

येन लोकोऽक्षयः स्वर्गी भविता त्वत्कृतेन मे। ततः प्रतिग्रहो दत्तो जगद्वन्द्यनृपेण हि ॥
भवान्मामनुगृह्णातु प्रतीच्छस्व प्रतिग्रहम् । इदमाभरणं सौम्य तारणार्थं द्विजोत्तम ॥
ब्रह्मर्षे प्रतिगृह्णीष्व प्रसादं कर्तुमर्हसि । इह गाश्च सुवर्णं च धनं वस्त्रसमन्वितम् ॥

भक्ष्यं भोज्यं च विप्रर्षे ददाम्याभरणं त्वहम् ।
सर्वकामप्रदं तुभ्यं सर्वान्भोगांश्च ते द्विज ॥ १२६ ॥
तारणे तु भवान्मह्यं प्रसादं कर्तुमर्हति ।

तस्याहं स्वर्गिणो वाक्यं श्रुत्वा दुःखसमन्वितम् ॥ १२७ ॥
कृता मतिस्तारणाय न लोभाद्रघुनन्दन । गृहीते भूषणे राम ममहस्तगते तदा ॥१२८॥
मानुषः पौर्विको देहस्तदा नष्टोऽस्यभूपते । प्रनष्टे तु शरीरे च राजर्षिः परया मुदा ॥
मयोक्तोऽसौ विमानेन जगाम त्रिदिवं पुनः । तेन मे शक्रतुल्येन दत्तमाभरणं शुभम् ॥
तस्मिन्निमित्ते काकुत्स्थ दत्तमद्भुतकर्मणा । श्वेतो वैदर्भको राजा तदाभूद्गतकल्मषः ॥
इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे रामागस्त्यसंवादो नामाष्टात्रिंशोऽध्यायः ॥

---

## ऊनचत्वारिंशोऽध्यायः

### दण्डकारण्योत्पत्तिवर्णने दण्डराजाकथानकम् ।

पुलस्त्य उवाच ।

तदद्भुततमं वाक्यं श्रुत्वा च रघुनन्दनः । गौरवाद्विस्मयाच्चापि भूयः प्रष्टुं प्रचक्रमे ॥१॥

राम उवाच ।

भगवंस्तद्वनं घोरं यत्रासौ तप्तवांस्तपः । श्वेतो वैदर्भको राजा तदद्भुतमभूत्कथम् ॥२॥
विषमं तद्वनं राजा शून्यं मृगविवर्जितम् । प्रविष्टस्तपआस्थातुं कथंवद महामुने ॥३॥
समन्ताद्योजनशतं निर्मनुष्यमभूत्कथम् । भवान्कथं प्रविष्टस्तद्येन कार्येण तद्वद ॥ ४ ॥

अगस्त्य उवाच ।

पुरा कृतयुगे राजा मनुर्दण्डधरः प्रभुः । तस्यपुत्रोऽथ नाम्नासीदिक्ष्वाकुरमितद्युतिः ॥५
तं पुत्रं पूर्वजं राज्ये निक्षिप्य भुवि संमतम् । पृथिव्यां राजवंशानां भव राजेत्युवाच ६
तथेति च प्रतिज्ञातं पितुः पुत्रेण राघव । ततः परमसंहृष्टः पुनस्तं प्रत्यभाषत ॥ ७ ॥

मनुरुवाच ।

प्रीतोऽस्मि परमोदारकर्मणा तेन संशयः । दण्डेन च प्रजा रक्ष नच दण्डमकारणम्॥८
अपराधिषु यो दण्डः पात्यते मानवैरिह । स दण्डो विधिवन्मुक्तःस्वर्गं नयतिपार्थिवम्
तस्माद्दण्डे महाबाहो यत्नवान्भव पुत्रक । धर्मस्ते परमो लोके कृत एवं भविष्यति ॥

अगस्त्य उवाच ।

इति तं बहु संदिश्य मनुपुत्रं समाधिना । जगाम त्रिदिवं हृष्टोब्रह्मलोकमनुत्तमम् ॥११

जनयिष्ये कथं पुत्रानिति चिन्तापरोऽभवम् ।

कर्मभिर्बहुभिस्तैस्तैस्ससुतैस्संयुतोऽभवत् ॥ १२ ॥

तोषयामास पुत्रैस्सपितॄन्देवसुतोपमैः । सर्वेषामुत्तमस्तेषां कनीयान्रघुनन्दन ॥ १३॥

शूरश्च कृतविद्यश्चगुरुश्च जनपूजया । नाम तस्याथ दण्डेति पिता चक्रे सबुद्धिमान् ॥१४

भविष्यद्दण्डपतनं शरीरे तस्य वीक्ष्य च । सम्पश्यमानस्तं दोषंघोरं पुत्रस्य राघव ॥१५

सविन्ध्यनीलयोर्मध्ये राज्यमस्य ददौ प्रभुः । सदण्डस्तत्रराजाभूद्रम्ये पर्वतमूर्द्धनि ॥

पुरं चाप्रतिमं तेन निवेशाय तथा कृतम् । नाम तस्य पुरस्याथ मधुमत्तमिति स्वयम् ॥

तथा देशेन सम्पन्नः शूरो वासमथाकरोत् । एवं राजा स तद्राज्यं चकार स पुरोहितः

प्रहृष्टसुप्रजाकीर्णं देवराजौ यथा दिवि । ततः सदण्डः काकुत्स्थ बहुवर्षगणायुतम् ॥

अकारयत्तु धर्मात्मा राज्यं निहतकण्टकम् ।

अथ काले तु कस्मिंश्चिद्राजा भार्गवमाश्रमम् ॥ २० ॥

रमणीयमुपाक्रामच्चैत्रमासे मनोरमे । तत्रभार्गवकन्यांतुरूपेणाप्रतिमांभुवि ॥ २१ ॥

विचरन्तींवनोद्देशेदण्डोऽपश्यदनुत्तमाम् । उत्तुङ्गपीवरींश्यामांचन्द्राभवदनांशुभाम् ।२२।

सुनासां चारुसर्वाङ्गीं पीनोन्नतपयोधराम् ।

मध्ये क्षामां च विस्तीर्णां दृष्ट्वा तां कुरुते मुदम् ॥ २३ ॥

एकवस्त्रां वने चैकां प्रथमे यौवने स्थिताम् । स तां दृष्ट्वा त्वधर्मेण अनङ्गशरपीडितः ॥

अभिगम्य सुविश्रान्तां कन्यां वचनमब्रवीत् ।

दण्ड उवाच ।

कुतस्त्वमसि सुश्रोणि कस्य चासि सुशोभने ॥ २५ ॥

पीडितोऽहमनङ्गेन पृच्छामि त्वां सुशोभने । त्वया मेऽपहृतं चित्तंदर्शनादेव सुन्दरि ॥

इदं ते वदनं रम्यं मुनीनां चित्तहारकम् । यद्यहं न लभे भोक्तुं मृतं मामवधारय ॥२७ ॥

त्वया हृता मम प्राणा मां जीवय सुलोचने ।

दासोऽस्मि ते वरारोहे भक्तं मां भज शोभने ॥ २८ ॥

अगस्त्य उवाच ।

तस्यैवं तु ब्रुवाणस्य मदोन्मत्तस्य कामिनः । भार्गवी प्रत्युवाचेदं वचः सविनयं नृपम्

अरजोवाच ।

भार्गवस्य सुतां विद्धि शुक्रस्याक्लिष्टकर्मणः । अरजां नाम राजेन्द्र ज्येष्ठामाश्रमवासिनः

शुक्रः पिता मे राजेन्द्र त्वं च शिष्यो महात्मनः । धर्मतो भगिनी चाहं भवामि नृपनन्दन

एवं विधं वचो वक्तुं नत्वमर्हसि पार्थिव ।

अन्येभ्योऽपि सुदुष्टेभ्यो रक्ष्या चाहं सदा त्वया ॥ ३२ ॥

क्रोधनो मे पिता रौद्रोभस्मत्वं त्वां समानयेत् ।

अथवा राजधर्मेणासम्बन्धं कुरुषे बलात् ॥ ३३ ॥

पितरं याचयस्वत्वं धर्मदृष्टेन कर्मणा । वरयस्व नृपश्रेष्ठ पितरं मे महाद्युतिम् ॥३४॥

अन्यथा विपुलं दुःखं तव घोरं भवेद्ध्रुवम् । क्रुद्धो हि मे पिता सर्वं त्रैलोक्यमभिनिर्दहेत्

अगस्त्य उवाच ।

ततोऽशुभं महाघोरं श्रुत्वादण्डः सुदारुणम् । प्रत्युवाच मदोन्मत्तः शिरसाभिनतः पुनः

दण्ड उवाच ।

प्रसादं कुरु सुश्रोणि कामोन्मत्तस्य कामिनि । त्वया रुद्धाममप्राणाविशीर्यन्तेशुभानने

त्वां प्राप्य वैरं मेऽत्रास्तु वधो वापि महत्तरः । भक्तंभजस्व मांभीरुत्वयिभक्तिर्हिमेपरा

अगस्त्य उवाच ।

एवमुक्त्वा तु तां कन्यां बलात्सङ्गृह्य बाहुना । अन्येन राज्ञाहस्तेनविवस्त्रासातथाकृता

अङ्गमङ्गे समाश्लिष्य मुखेचैव मुखं कृतम् । विस्फुरन्तीं यथाकामंमैथुनायोपचक्रमे ॥

तमनर्थं महाघोरं दण्डः कृत्वा सुदारुणम् । नगरं स्वं जगामाशु मदोन्मत्त इव द्विपः ॥

भार्गवी रुदती दीना आश्रमस्याविदूरतः । प्रत्यपालयदुद्विग्ना पितरं देवसम्मितम् ॥

स मूहूर्तादुपस्पृश्य देवर्षिरमितद्युतिः । स्वमाश्रमं शिष्यवृतं क्षुधार्तः सन्न्यवर्तत ॥

सोऽपश्यदरजां दीनां रजसा समभिप्लुताम् । चन्द्रस्यघनसंयुक्तांज्योत्स्नामिवपराजिताम्

तस्य रोषः समभवत्क्षुधार्तस्यमहात्मनः । निर्दहन्निवलोकांस्त्रींस्ताञ्शिष्यान्समुवाचह

भार्गव उवाच ।

पश्यध्वंविपरीतस्य दण्डस्यादीर्घदर्शिनः । विपत्तिं घोरसङ्काशां दीप्तामग्निशिखामिव

यन्नाशं दुर्गतिं प्राप्तस्सानुगश्च न संशयः । यस्तु दीप्तहुताशस्य अर्चिः संस्पृष्टवानिह ॥

यस्मात्सकृतवान्पापमीदृशं घोरसम्मितम् ।

तस्मात्प्राप्स्यति दुर्मेधाः पांसुवर्षमनुत्तमम् ॥ ४८ ॥

कुराजादेशसंयुक्तः सभृत्यबलवाहनः । पापकर्मसमाचारो वधंप्राप्स्यतिदुर्मतिः ॥

समन्ताद्योजनशतं विषयं चास्य दुर्मतेः । धुनोतु पांसुवर्षेण महता पाकशासनः ॥

सर्वसत्त्वानि यानीह जङ्गमस्थावराणिवै । सर्वेषां पांसुवर्षेण क्षयः क्षिप्रं भविष्यति ॥

दण्डस्य विषयोयावत्तावत्सवनमाश्रमम् । पांसुवर्षमिवाकस्मात्सप्तरात्रं भविष्यति

अगस्त्य उवाच ।

इत्युक्त्वा क्रोधसन्तप्तस्तमाश्रमनिवासिनम् । जनं जनपदस्यान्ते स्थीयतामित्युवाच ह

उक्तमात्रे उशनसा आश्रमावसथो जनः । क्षिप्रं तु विषयात्तस्मात्स्थानं चक्रे च बाह्यतः

तं तथोक्त्वा मुनिजनमरजामिदमब्रवीत् ।

भार्गव उवाच ।

आश्रमे त्वं सुदुर्मेधे वस चेह समाहिता ॥ ५५ ॥

इदं योजनपर्यन्तमाश्रमं रुचिरप्रभम् । अरजेविरजास्तिष्ठ कालमत्र समाश्वतम् ॥

अगस्त्य उवाच ।

श्रुत्वा नियोगं विप्रर्षेररजा भार्गवी तदा । तथेति पितरं प्राह भार्गवं भृशदुःखिता ॥

इत्युक्त्वा भार्गवो वासं तस्मादन्यमुपाक्रमत् । सप्ताहे भस्मसाद्भूतं यथोक्तंब्रह्मवादिना

तस्माद्दण्डस्य विषयो विन्ध्यशैलस्य मानुष । शप्तो ह्युशनसा राम तदाभूद्धर्षणकृते ॥

ततः प्रभृति काकुत्स्थ दण्डकारण्यमुच्यते । एतत्ते सर्वमाख्यातं यन्मां पृच्छसि राघव

सन्ध्यामुपासितुं वीर समयो ह्यतिवर्तते । एते महर्षयो राम पूर्णकुम्भाः समन्ततः ॥

कृतोदका नरव्याघ्र पूजयन्ति दिवाकरम् । सर्वैर्ऋषिभिरभ्यस्तैः स्तोत्रैर्ब्रह्मादिभिःकृतैः

रविरस्तं गतो राम गत्वोदकमुपस्पृश ।

पुलस्त्य उवाच ।

ऋषेर्वचनमादाय रामः सन्ध्यामुपासितुम् ॥ ६३ ॥

उपचक्रामतत्पुण्यं स सरो रघुनन्दनः । अथ तस्मिन्वनोद्देशे रम्ये पादपशोभिते ॥
नदीपुण्ये गिरिवरे कोकिलाशतमण्डिते । नानापक्षिरवोद्याने नानामृगसमाकुले ॥
सिंहव्याघ्रसमाकीर्णे नानाद्विजसमावृते । गृध्रोलूकौप्रवसितौ बहून्वर्षगणानपि ॥
अथोलूकस्य भवनं गृध्रः पापविनिश्चियः । ममेदमिति कृत्वासौ कलहं तेन चाकरोत्
राजासर्वस्यलोकस्य रामो राजीवलोचनः । तं प्रपद्यावहै शीघ्रं कस्यैतद्भवनं भवेत् ॥
गृध्रोलूकौ प्रपद्येतां जातकोपावमर्षिणौ । रामं प्रपद्यतौ शीघ्रं कलिव्याकुलचेतसौ ॥
तौ परस्परविद्वेषौ स्पृशतश्चरणौ तथा । अथ दृष्ट्वा राघवेन्द्रं गृध्रो वचनमब्रवीत् ॥

गृध्रउवाच ।

सुराणामसुराणां च त्वं प्रधानो मतो मम । बृहस्पतेश्च शुक्राच्च त्वंविशिष्टो महामतिः
परावरज्ञो भूतानां मर्त्ये शक्र इवापरः । दुर्निरीक्ष्यो यथासूर्यो हिमवानिव गौरवे ॥

सागरश्चासि गाम्भीर्ये लोकपालो यमोह्यसि ।

क्षान्त्या धरण्या तुल्योऽसि शीघ्रत्वे ह्यनिलोपमः ॥ ७३ ॥

गुरुस्त्वं सर्वसम्पन्नो विष्णुरूपोऽसि राघव । अमर्षी दुर्जयो जेतासर्वास्त्रविधिपारगः
शृणु त्वं मम देवेश विज्ञाप्यं नरपुङ्गव । ममालयं पूर्वकृतं बाहुवीर्येण वै प्रभो ॥ ७५॥
उलूको हरतेराजंस्त्वत्समीपे विशेषतः । ईदृशोऽयं दुराचारस्त्वदाज्ञालङ्घको नृप ॥
प्राणान्तिकेन दण्डेन राम शासितुमर्हसि । एवमुक्ते तु गृध्रेण उलूकोवाक्यमब्रवीत् ॥
शृणु देव मम ज्ञाप्यमेकचित्तो नराधिप । सोमाच्छक्राच्च सूर्याच्च धनदाच्च यमात्तथा ॥
जायतेवैनृपो राम किञ्चिद्भवति मानुषः । त्वं तु सर्वमयो देवो नारायणपरायणः ॥

प्रोच्यते सोमता राजन्सम्यक्कार्ये विचारिते ।

सम्यग्रक्षसि तापेभ्यस्तमोघ्नो हि यतो भवान् ॥ ८० ॥

दोषे दण्डात्प्रजानां त्वं यतः पापभयापहः ।

दाता प्रहर्ता गोप्ता च तेनेन्द्र इव नो भवान् ॥ ८१

अधृष्यः सर्वभूतेषु तेजसा चानलो मतः । अभीक्ष्णं तपसे पापांस्तेन त्वं रामभास्करः

साक्षाद्वित्तेशतुल्यस्त्वमथवा धनदाधिकः ।

चित्तायत्ता तु पत्नी श्रीर्नित्यं ते राजसत्तम ॥ ८३ ॥

धनदस्य तु कोशेन धनदस्तेन वै भवान् । समः सर्वेषु भूतेषु स्थावरेषु चरेषु च ॥

शत्रौ मित्रे च ते दृष्टिः समन्ताद्याति राघव । धर्मेण शासनं नित्यं व्यवहारविधिक्रमैः

यस्य रुष्यसि वै राम मृत्युस्तस्याभिधीयते ।

गीयसे तेन वै राजन्यमइत्यभिविश्रुतः ॥ ८६ ॥

यश्चासौ मानुषो भावो भवतो नृपसत्तम । आनृशंस्यपरो राजा सर्वेषु कृपयान्वितः ॥

दुर्बलस्यत्वनाथस्य राजा भवति वै बलम् । अचक्षुषो भवेच्चक्षुरमतेषु मतिर्भवेत् ॥

अस्माकमपि नाथस्त्वं श्रूयतां मम धार्मिक । भवता तत्र मन्तव्यं यथैते किल पक्षिणः

योऽस्मन्नाथः स पक्षीन्द्रो भवतो विनियोज्यकः ।

अस्वास्थ्यं देवनास्माकं सन्निधौ भवतः प्रभो ॥ ९० ॥

भवतैव कृतं पूर्वंभूतग्रामं चतुर्विधम् । ममालयप्रविष्टस्तु गृध्रो मां बाधते नृप ॥ ९१ ॥

भवान्देवमनुष्येषु शास्ता वै नरपुङ्गव ।

पुलस्त्य उवाच ।

एतच्छ्रुत्वा तु वै रामः सचिवानाह्वयत्स्वयम् ॥ ९२ ॥

विष्टिर्जयन्तो विजयः सिद्धार्थो राष्ट्रवर्धनः । अशोको धर्मपालश्च सुमन्त्रश्च महाबलः ॥

एते रामस्य सचिवा राज्ञो दशरथस्य च । नीतियुक्तामहात्मानः सर्वशास्त्रविशारदाः॥

सुशान्ताश्च कुलीनाश्च नयेमन्त्रे च कोविदाः । तानाहूय सधर्मात्मा पुष्पकादवरुह्य च

गृध्रोलूकौ विवदन्तौ पृच्छतिस्म रघूत्तमः ।

राम उवाच ।

कति वर्षाणि भो गृध्र तवेदं निलयं कृतम् ॥ ९६ ॥

एतन्मे कौतुकंब्रूहियदि जानासि तत्त्वतः । एतच्छ्रुत्वावचोगृध्रोबभाषे राघवंस्थितम्

गृध्र उवाच ।

इयं वसुमती राम मानुषैर्बहुबाहुभिः । उच्छ्रितैराचिता सर्वा तदा प्रभृति मद्‌गृहम् ॥
उलूकस्त्वब्रवीद्रामं पादपैरुपशोभिता । यदैव पृथिवी राजंस्तदाप्रभृति मे गृहम् ॥९९॥
एतच्छ्रुत्वा तु रामो वै सभासद उवाच ह ॥ १०० ॥

राम उवाच ।

न सा सभा यत्र न सन्ति वृद्धाः वृद्धा न ते ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न चास्ति सत्यं न तत्सत्यं यच्छलमभ्युपैति ॥१०१॥
ये तु सभ्याः सभां गत्वा तूष्णीं ध्यायन्त आसते ।
यथा प्राप्तं न ब्रुवते सर्वे तेऽनृतवादिनः ॥ १०२ ॥
न वक्ति च श्रुतं यश्च कामक्रोधात्तथाभयात् । सहस्रं वारुणाःपाशाःप्रतिमुञ्चन्तितं नरम्
तेषां संवत्सरे पूर्णे पाश एकः प्रमुच्यते । तस्मात्सत्यं तु वक्तव्यं जानता सत्यमञ्जसा
एतच्छ्रुत्वा तु सचिवा राममेवाब्रुवंस्तदा । उलूकःशोभते राजन्नतु गृध्रो महामते ॥
त्वं प्रमाणं महाराज राजा हि परमा गतिः । राजमूलाः प्रजाःसर्वा राजा धर्मःसनातनः
शास्ता राजा नृणां येषां न ते गच्छन्ति दुर्गतिम् ।
वैवस्वतेन मुक्ताश्च भवन्ति पुरुषोत्तमाः ॥ १०७ ॥
सचिवानां वचः श्रुत्वा रामो वचनमब्रवीत् । श्रूयतामभिधास्यामि पुराणं यदुदाहृतम्
द्यौः सचन्द्रार्कनक्षत्रासपर्वतमहीद्रुमम् । सलिलार्णवसंमग्नं त्रैलोक्यं सचराचरम् ॥
एकमेव तदाह्यासीत्सर्वमेकमिवाम्बरम् । पुनर्भूःसहलक्ष्म्या च विष्णोर्जठरमाविशत् ॥
तां निगृह्य महातेजाः प्रविश्य सलिलार्णवम् । सुष्वाप हि कृतात्मा स बहुवर्षशतान्यपि
विष्णौ सुप्ते ततो ब्रह्मा विवेश जठरं ततः । बहुस्रोतं च तं ज्ञात्वामहायोगीसमाविशत्
नाभ्यां विष्णोः समुद्भूतं पद्मं हेमविभूषितम् ।
स तु निर्गम्य वै ब्रह्मा योगी भूत्वा महाप्रभुः ॥ ११३ ॥
सिसृक्षुः पृथिवीं वायुं पर्वतांश्च महीरुहान् । तदन्तराः प्रजाःसर्वा मानुषांश्चसरीसृपान्
जरायुजाण्डजान्सर्वान्ससर्ज स महातपाः । तस्य गात्रसमुत्पन्नः कैटभो मधुनासह ॥

दानवौ तौ महावीर्यौ घोरौ लब्धवरौ तदा। दृष्ट्वा प्रजापतिं तत्र क्रोधाविष्टावुभौनृप
वेगेनमहताभोक्तुं स्वयम्भुवमधावताम्। दृष्ट्वासत्त्वानिसर्वाणिनिस्सरन्ति पृथक्पृथक्
ब्रह्मणा संस्तुतो विष्णुर्हत्वा तौ मधुकैटभौ। पृथिवीं वर्धयामास स्थित्यर्थं मेदसातयोः
मेदो गन्धा तु धरणी मेदिनीत्यभिधांगता। तस्मान्नगृध्रस्य गृहमुलूकस्य तदाऽभवत्

तस्माद्गृध्रस्त्वसत्यो वै पापकर्मा परालयम्।
स्वीयं करोति पापात्मा दण्डनीयो न संशयः॥ १२०॥

ततोऽशरीरिणी वाणी अन्तरिक्षात्प्रभाषते। मा वधी राम गृध्रं त्वंपूर्वं दग्धं तपोबलात्
पुरा गौतमदग्धोऽयं प्रजानाथो जनेश्वर। ब्रह्मदत्तस्तु नामैष शूरः सत्यव्रतः शुचिः॥
गृहमागत्यविप्रोऽस्य भोजनं प्रत्ययाचत। साग्रं वर्षशतं चैव भुक्तवान्नृपसत्तम॥१२३
ब्रह्मदत्तस्तु वै तस्य पाद्यमर्घ्यं स्वयं ततः। आत्मनैवाकरोत्सम्यग्भोजनार्थं महाद्युते॥
समाविश्य गृहं तस्य आहारे तु महात्मनः। नारीं पूर्णस्तनीं दृष्ट्वाहस्तेनाथपरामृशत्
अथ क्रुद्धेन मुनिना शापो दत्तः सुदारुणः। गृध्रत्वं गच्छवैमूढ राजा मुनिमथाब्रवीत्
कृपां कुरु महाभाग शापोद्धारो भविष्यति। दयालुस्तद्वचः श्रुत्वा पुनराह नराधिप॥
उत्पत्स्यते रघुकुले रामो नाम महायशाः। इक्ष्वाकूणां महाभागो राजाराजीवलोचनः
तेन दृष्टो विपापस्त्वं भविता नरपुङ्गव। दृष्टो रामेण तच्छ्रुत्वा बभूव पृथिवीपतिः॥
गृध्रत्वं त्यज्य वै शीघ्रं दिव्यगन्धानुलेपनः। पुरुषो दिव्यरूपोऽसौ बभाषे तं नराधिपम्
साधुराघव धर्मज्ञत्वत्प्रसादहं विभो। विमुक्तो नरकाद्घोरादपापस्तु त्वया कृतः॥
विसर्जितं मया गार्ध्यं नररूपी महीपतिः। उलूकं प्राह धर्मज्ञ स्वगृहं विश कौशिक॥

अहं सन्ध्यामुपासित्वा गमिष्ये यत्र वै मुनिः।
अथोदकमुपस्पृश्य सन्ध्यामन्वास्य पश्चिमाम्॥ १३३॥

आश्रमं प्राविशद्रामः कुम्भयोनेर्महात्मनः। तस्यागस्त्यो बहुगुणं फलमूलं च सादरम्

रसवन्ति च शाकानि भोजनार्थमुपाहरत्।
सभुक्तवान्नरव्याघ्रस्तदन्नममृतोपमम्॥ १३५॥

प्रीतश्च परितुष्टश्च तां रात्रिं समुपावसत्। प्रभाते कल्यमुत्थाय कृत्वाऽऽह्निकमरिन्दम॥

ऋषिंसमभिचक्राम गमनाय रघूत्तमः । अभिवाद्याब्रवीद्रामो महर्षिं कुम्भसम्भवम् ॥
आपृच्छे साधये ब्रह्मन्ननुज्ञातुं त्वमर्हसि । धन्योऽस्म्यनुगृहीतोऽस्मि दर्शनेन महामुने

दिष्ट्या चाहं भविष्यामि पावितात्मा महात्मनः ।
एवं ब्रुवति काकुत्स्थे वाक्यमद्भुतदर्शनम् ॥ १३९ ॥

उवाच परमप्रीतो बाष्पनेत्रस्तपोधनः । अत्यद्भुतमिदं वाक्यं तव राम शुभाक्षरम् ॥१४०
पावनं सर्वभूतानां त्वयोक्तं रघुनन्दन । मुहूर्तमपि राम त्वां मैत्रेणेक्षन्ति ये नराः ॥
पाविताः सर्वसूक्तैस्तेकथ्यन्तेत्रिदिवौकसः । ये च त्वां घोरचक्षुर्भिरीक्षन्तेप्राणिनो भुवि
ते हता ब्रह्मदण्डेन सद्यो नरकगामिनः । ईदृशस्त्वं रघुश्रेष्ठ पावनःसर्व देहिनाम् ॥१४३॥
कथयन्तश्चलोकास्त्वां सिद्धिमेष्यन्तिराघव । गच्छस्वानातुरोऽविघ्नंपन्थानमकुतोभयः
प्रशाधि राज्यं धर्मेण गतिस्तु जगतां भवान् । एवमुक्तस्तु मुनिना प्राञ्जलिप्रग्रहो नृपः

अभिवादयितुं चक्रे सोऽगस्त्यमृषिसत्तमम् ।
अभिवाद्य मुनिश्रेष्ठांस्तांश्च सर्वांस्तपोऽधिकान् ॥ १४६ ॥

अथारोहत्तदा व्यग्रः पुष्पकं हेमभूषितम् । तं प्रयान्तं मुनिगणा आशीर्वादैस्समन्ततः ॥
अपू पुजन्नरेन्द्रं तं सहस्राक्षमिवामराः । ततोऽर्धदिवसे प्राप्ते रामः सर्वार्थकोविदः ॥
अयोध्यांप्राप्यकाकुत्स्थःपद्भ्यांकक्षामवातरत् । ततोविसृज्यरुचिरं पुष्पकंकामवाहितम

कक्षान्तराद्विनिष्क्रम्य द्वास्स्थान्राजाऽब्रवीदिदम् ।
लक्ष्मणं भरतं चैव गच्छध्वं लघुविक्रमाः ॥ १५० ॥

ममागमनमाख्याय समानयत मा चिरम् । श्रुत्वाऽथभाषितंद्वास्स्था रामस्याक्लिष्टकर्मणः
गत्वा कुमारावाहूय राघवाय न्यवेदयन् । द्वास्स्थैः कुमारावानीतौ राघवस्य निदेशतः
दृष्ट्वा तु राघवः प्राप्तौ प्रियौ भरतलक्ष्मणौ । समालिङ्ग्य तु रामस्तौ वाक्यंचेदमुवाच ह
कृतं मया यथातथ्यं द्विजकार्यमनुत्तमम् । धर्महेतुमतो भूयः कर्तुमिच्छामि राघवौ ॥
भवद्भ्यामात्मभूताभ्यां राजसूयं क्रतूत्तमम् । सहितो यष्टुमिच्छामि यत्र धर्मश्च शाश्वतः
पुष्करस्थेन वै पूर्वं ब्रह्मणा लोककारिणा । शतत्रयेण यज्ञानामिष्टं षष्ट्यधिकेन च ॥

इष्ट्वा हि राजसूयेन सोमो धर्मेण धर्मवित् ।

प्राप्तः सर्वेषु लोकेषु कीर्तिस्थानमनुत्तमम् ॥ १५७
इष्ट्वा हि राजसूयेन मित्रः शत्रुनिबर्हणः । मुहूर्तेन सुशुद्धेन वरुणत्वमुपागतः ॥ १५८ ॥
तस्माद्भवन्तौ सञ्चिन्त्य कार्येऽस्मिन्वदतं हितम् ।

भरत उवाच ।

त्वं धर्मः परमः साधो त्वयि सर्वा वसुन्धरा ॥ १५६ ॥
प्रतिष्ठिता महाबाहो यशश्चामितविक्रम । महीपालाश्च सर्वे त्वां प्रजापतिमिवामराः ॥
निरीक्षन्ते महात्मानो लोकनाथ तथावयम् । प्रजाश्चपितृवद्राजन्पश्यन्ति त्वां महामते
पृथिव्यां गतिभूतोऽसि प्राणिनामिह राघव । सत्वमेवंविधं यज्ञं नाहर्त्तासि परन्तप ॥
पृथिव्यां सर्वभूतानां विनाशो दृश्यते यतः । श्रूयते राजशार्दूल सोमस्य मनुजेश्वर ॥
ज्योतिषां सुमहद्युद्धं सङ्ग्रामे तारकामये । तारावृहस्पतेर्भार्या हृता सोमेन कामतः ॥
तत्र युद्धं महद्वृत्तं देवदानवनाशनम् । वरुणस्य क्रतौ घोरे सङ्ग्रामे मत्स्यकच्छपाः ॥
निवृत्ते राजशार्दूल सर्वे नष्टा जलेचराः । हरिश्चन्द्रस्य यज्ञान्ते राजसूयस्य राघव ॥
आडीवकं महद्युद्धं सर्वलोकविनाशनम् ।
पृथिव्यां यानि सत्त्वानि तिर्यग्योनिगतानि वै ॥ १६७ ॥
दिव्यानां पार्थिवानां च राजसूये क्षयः श्रुतः ।
स त्वं पुरुषशार्दूल बुद्ध्या सञ्चिन्त्य पार्थिव ॥ १६८ ॥
प्राणिनां च हितं सौख्यं पूर्णं धर्मं समाचर । भरतस्य वचः श्रुत्वा राघवः प्राह सादरम्

राम उवाच ।

प्रीतोऽस्मि तव धर्मज्ञ वाक्येनानेन शत्रुहन् । निवर्तिता राजसूयान्मतिर्मे धर्मवत्सल ॥
पूर्णं धर्मं करिष्यामि कान्यकुब्जे च वामनम् ।
स्थापयिष्याम्यहं वीर सा मे ख्याति दिवंगता ॥ १७१ ॥
भविष्यति न सन्देहो यथा गङ्गा भगीरथात् ॥ १७२ ॥
इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे यज्ञनिवारणं नामैकोनचत्वारिंशोऽध्यायः ।

———

# चत्वारिंशोऽध्यायः

## विभीषणवृत्तजिज्ञासयाभरतेन सह रामस्यलङ्कांप्रतिगमनम् ।

भीष्म उवाच ।

कथं रामेण विप्रर्षे कान्यकुब्जे तु वामनः ।
स्थापितः क्व च लब्धोऽसौ विस्तरान्मम कीर्तय ॥ १ ॥

तथाहि मधुरा चैषा या वाणी रामकीर्तने । कीर्तिता भगवन्मह्यं मनः कर्णसुखावहा ॥
अनुरागेण तं लोकाः स्नेहात्पश्यन्तिराघवम् । धर्मज्ञश्च कृतज्ञश्च बुद्ध्या च परिनिष्ठितः
प्रशास्तिपृथवीं सर्वां धर्मेणसुसमाहितः । तस्मिञ्शासति वै राज्यं सर्वकामफलाद्रुमाः
रसवन्तः प्रभूताश्च वासांसि विविधानि च । अकृष्टपच्या पृथिवी निःसपत्नामहात्मनः

देवकार्यं कृतं तेन रावणो लोककण्टकः ।
सपुत्रोऽमात्यसहितो लीलयैव निपातितः ॥ ६ ॥

तस्य बुद्धिस्समुत्पन्ना पूर्णे धर्मे द्विजोत्तम । तस्याहं चरितं सर्वं श्रोतुच्छामि वै मुने

पुलस्त्य उवाच ।

कस्यचित्त्वथ कालस्य रामो धर्मपथे स्थितः । यच्चकार महाबाहो शृणुष्वैकमना नृप
सस्माराराघवेन्द्रस्तु कथं राजाविभीषणः । लङ्कायांसंस्थितो राज्यं करिष्यतिचराक्षसः

गीर्वाणेषु प्रातिकूल्यं विनाशस्य तु लक्षणम् ।
मया तस्य तु तद्दत्तं राज्यं चन्द्रार्ककालिकम् ॥ १० ॥
तस्याविनाशतः कीर्तिः स्थिरा मे शाश्वती भवेत् ।
रावणेन तपस्तप्तं विनाशायात्मनस्त्विह ॥ ११ ॥

विध्वस्तः स च पापिष्ठोदेवकार्यैमयाधुना । तदिदानींमयान्वेष्यः स्वयं गत्वाविभीषणः
सन्देष्टव्यं हितं तस्य येन तिष्ठेत्सशाश्वतम् । एवं चिन्तयतस्तस्य रामस्यामिततेजसः
आजगामाथ भरतो रामं दृष्ट्वाऽब्रवीदिदम् । किं त्वं चिन्तयसे देव न रहस्यं वदस्व मे

देवकार्ये धरायां वा स्वकार्ये वा नरोत्तम। एवं ब्रुवन्तं भरतं ध्यायमानमवस्थितम् ॥
अब्रवीद्राघवो वाक्यं रहस्यं तु न वै तव। भवान्वहिश्चरः प्राणो लक्ष्मणश्च महायशाः
अवेद्यं भवतो नास्ति मम सत्यं विधारय। एषा मे महती चिन्ता कथं देवैर्विभीषणः
वर्तते यद्धितार्थं वै दशग्रीवो निपातितः। गमिष्ये तदहं लङ्कां यत्र चासौ विभीषणः॥

तं च दृष्ट्वा पुरीं तां तु कार्यमुक्त्वा च राक्षसम्।
आलोक्य सर्ववसुधां सुग्रीवं वानरेश्वरम् ॥ १९ ॥

महाराजं च शत्रुघ्नं भ्रातृपुत्रांश्च सर्वशः। एवं वदति काकुत्स्थे भरतः पुरतः स्थितः ॥
उवाच राघवं वाक्यं गमिष्ये भवता सह। एवं कुरु महावाहो सौमित्रिरिह तिष्ठतु ॥
इत्युक्त्वा भरतं रामस्सौमित्रिं चाह वै पुरे। रक्षाकार्या त्वया वीर यावदागमनं हि नौ
एवं लक्ष्मणमादिश्य ध्यात्वा वै पुष्पकं नृप। आरुरोह स वै यानं कौसल्यानन्दवर्धनः
पुष्पकं तु ततःप्राप्तं गान्धारविषयो यतः। भरतस्य सुतौ दृष्ट्वा जगन्नीतिं निरीक्ष्य च
पूर्वां दिशं ततोगत्वा लक्ष्मणस्य सुतौ यतः। पुरेषु तेषु षड्रात्रमुषित्वा रघुनन्दनौ ॥

गतौ तेन विमानेन दक्षिणामभितो दिशम्।
गङ्गायामुनसम्भेदं प्रयागमृषिसेवितम् ॥ २६ ॥

अभिवाद्य भरद्वाजमत्रेराश्रमममीयतुः। सम्भाष्य च मुनींस्तत्र जनस्थानमुपागतौ ॥

राम उवाच।

अत्रपूर्वं हृता सीता रावणेन दुरात्मना। हत्वा जटायुषं गृध्रं योऽसौ पितृसखोहि नौ
अत्रास्माकं महद्युद्धं कबन्धेन कुबुद्धिना। हतेन तेन दग्धेन सीतास्ते रावणालये ॥
ऋष्यमूके गिरिवरे सुग्रीवो नाम वानरः। स ते करिष्यते साह्यं पम्पांव्रज सहानुजः

पम्पासरःसमासाद्य शवरीं गच्छ तापसीम्।
इत्युक्तो दुःखितो वीर निराशो जीविते स्थितः ॥ ३१ ॥

इयं सा नलिनी वीर यस्यांवै लक्ष्मणोऽवदत्। माकृथाः पुरुषव्याघ्रशोकं शत्रुविनाशन

आज्ञाकारिणि भृत्ये च मयि प्राप्स्यसि मैथिलीम्।
अत्र मे वार्षिका मासा गता वर्षशतोपमाः ॥ ३२ ॥

अत्रैव निहतो वाली सुग्रीवार्थे परन्तप। एषा सादृश्यते नूनं किष्किन्धावालिपालिता
यस्यां वै सहिधर्मात्मा सुग्रीवो वानरेश्वरः। वानरैःसहितोवीर तावदास्ते समाःशतम्
वानरैस्सह सुग्रीवो यावदास्ते सभांगतः। तावत्तत्रागतौ वीरौ पुर्यां भरतराघवौ॥

दृष्ट्वा सभ्रातरौ प्राप्तौ प्रणिपत्याब्रवीदिदम्।

क्व युवां प्रस्थितौ वीरौ कार्यं किंतु करिष्यथः॥ ३७॥

विनिवेश्यासने तौ च ददावर्घ्यं स्वयंतदा। एवं सभास्थिते तत्र धर्मिष्ठे रघुनन्दने॥
अङ्गदोऽथ हनूमांश्च नलोनीलश्च पाटलः। गजो गवाक्षो गवयःपनसश्च महायशाः॥
पुरोधसो मन्त्रिणश्च दैवज्ञो दधिवक्त्रकः। नीलश्शतबलिर्मैन्दो द्विविदो गन्धमादनः
वीरबाहुस्सुबाहुश्च वीरसेनो विनायकः। सूर्याभःकुमुदश्चैव सुषेणो हरियूथपः॥
ऋषभो विनतश्चैव गवाख्यो भीमविक्रमः। ऋक्षराजश्च धूम्रश्च सहसैन्यैरुपागताः॥
अन्तःपुराणि सर्वाणि रुमातारातथैव च। अवरोधोऽङ्गदस्यापि तथान्याःपरिचारिकाः
प्रहर्षमतुलंप्राप्य साधुसाध्विति चाब्रुवन्। वानराश्च महात्मानःसुग्रीवसहितास्तदा॥
वानर्यश्च महाभागास्ताराद्यास्तत्र राघवम्। अभिप्रेक्ष्याश्रुकण्ठ्यश्च प्रणिपत्येदमब्रुवन्

क्व सा देवी त्वया देव या विनिर्जित्य रावणम्।

शुद्धिं कृत्वा हिते वह्नौ पितुरग्र उमापतेः॥ ४६॥

त्वयानीतां पुरीं राम न तां पश्यामि तेऽग्रतः। न विना त्वं तया देव शोभसे रघुनन्दन

त्वया विनापि साध्वी सा क्वनु तिष्ठति जानकी।

अन्यां भार्यां न ते वेद्मि भार्याहीनो न शोभसे॥४६॥

क्रौञ्चयुग्मं मिथोयद्वच्चक्रवाकयुगं यथा। एवंवदन्तीं तां तारांताराधिपसमाननाम्॥४६॥
प्राह प्रवचसां श्रेष्ठो रामो राजीवलोचनः। चारुदंष्ट्रे विशालाक्षि कालो हि दुरतिक्रमः
सर्वं कालकृतं विद्धि जगदेतच्चराचरम्। विसृज्यताःस्त्रियःसर्वाःसुग्रीवोऽभिमुखःस्थितः

सुग्रीव उवाच।

भवन्तौ येन कार्येण इहायातौ नरेश्वरौ। तच्चापि कथ्यतां शीघ्रं कृत्यकालोहि वर्तते॥
ब्रुवाणमेवं सुग्रीवं भरतो रामचोदितः। आचचक्षे च गमनं लङ्कायां राघवस्य तु॥

तौ चाब्रवीच्च सुग्रीवो भवद्भ्यां सहितःपुरीम् ॥५३ ॥

गमिष्ये राक्षसं देव द्रष्टुं तत्रविभीषणम् । सुग्रीवेणैवमुक्ते तु गच्छस्वेत्याह राघवः ॥
सुग्रीवो राघवौ तौ च पुष्पकेतुस्थितास्त्रयः । तावत्प्राप्तेविमानं तु समुद्रस्योत्तरंतटम् ॥
अब्रवीद्भरतं रामोह्यत्र मे राक्षसेश्वरः । चतुर्भिःसचिवैःसार्धं जीवितार्थे विभीषणः ॥
प्राप्तस्ततोलक्ष्मणेन लङ्काराज्येऽभिषेचितः । अत्रचाहं समुद्रस्य परेपारेस्थितस्त्र्यहम् ॥
दर्शनं दास्यते मेऽसौ ज्ञातिकार्यं भविष्यति । तावन्नदर्शनं मह्यं दत्तमेतेन शत्रुहन् ॥
ततःकोपःसमुद्भूतश्चतुर्थेऽहनि राघव । धनुरायस्य वेगेन दिव्यमस्त्रं करे धृतम् ॥५९॥

दृष्ट्वा मां शरणान्वेषी भीतो लक्ष्मणमाश्रितः ।
सुग्रीवेणानुनीतोऽस्मि क्षम्यतां राघव त्वया ॥ ६० ॥

ततोमयोत्क्षिप्तशरो मरुदेशह्यपाकृतः । ततस्समुद्रराजेन भृशं विनयशालिना ॥ ६१ ॥
उक्तोऽहं सेतुबन्धेन लङ्कां त्वं व्रजराघव । लङ्घयित्वा नरव्याघ्र वारिपूर्णं महोदधिम् ॥
एष सेतुर्मयाबद्धःसमुद्रे वरुणालये । त्रिभिर्दिनैःसमाप्तिं वै नीतो वानरसत्तमैः ॥६३ ॥
प्रथमेदिवसे बद्धो योजनानि चतुर्दश । द्वितीयेऽहनि षट्त्रिंशत्तृतीयेऽर्धशतं तथा ॥
इयं सा दृश्यते लङ्का स्वर्णप्राकारतोरणा । अवरोधो महानत्र कृतो वानरसत्तमैः ॥
चैत्रशुक्लचतुर्दश्यां महद्युद्धमभूदिह । अष्टचत्वारिंशद्दिनं यत्रासौ रावणोहतः ॥ ६६॥
अत्रप्रहस्तो नीलेन हतो राक्षसपुङ्गवः । हनूमता च धूम्राक्षो ह्यत्रैव विनिपातितः ॥
महोदरातिकायौ च सुग्रीवेण महात्मना । हतोमया कुम्भकर्णो लक्ष्मणेनेन्द्रजित्तथा ॥
मया चात्र दशग्रीवो हतो राक्षसपुङ्गवः । अत्र सम्भाषितुं प्राप्तो ब्रह्मा लोकपितामहः ॥
पार्वत्यासहितोदेवःशूलपाणिर्वृषध्वजः । महेन्द्राद्याःसुरगणाःसगन्धर्वाःसकिन्नराः ॥
पिता मे च समायातो महाराजस्त्रिविष्टपात् । वृतश्चाप्सरसांसङ्घैर्विद्याधरगणैस्तथा ॥
तेषां समक्षं सर्वेषां जानकीशुद्धिमिच्छता । उक्ता सीता हव्यवाहं प्रविष्टाशुद्धिमागता ॥
असुरैश्च सुरैर्दृष्टा गृहीता पितृशासनात् । अथाप्युक्तोऽथ राज्ञाऽहमयोध्यां गच्छपुत्रक

न मे स्वर्गो बहुमतस्त्वया हीनस्य राघव ।
तारितोऽहं त्वया पुत्र प्राप्तोऽस्मीन्द्रसलोकताम् ॥ ७४ ॥

लक्ष्मणं चाब्रवीद्राजा पुत्र पुण्यं त्वयार्जितम् ।
भ्रात्रा सममथो दिव्यांल्लोकान्प्राप्स्यसि चोत्तमान् ॥ ७५ ॥

आहूय जानकीं राजा वाक्यं चेदमुवाच ह । न च मन्युस्त्वयाकार्यो भर्तारंप्रतिसुव्रते
ख्यातिर्भविष्यत्येवाग्र्या भर्तुस्ते शुभलोचने । एवं वदति रामे तु पुष्पके च व्यवस्थिते

तत्र ये राक्षसवरास्ते गत्वा ऽऽशु विभीषणम् ।
प्राप्तो रामः ससुग्रीवश्चारा इत्थं तदाऽवदन् ॥ ७८ ॥

विभीषणस्तु तच्छ्रुत्वा रामागमनमन्तिके । चारांस्तान्पूजयामास सर्वकामधनादिभिः
अलङ्कृत्य पुरीं तां तु निष्क्रान्तः सचिवैः सह । दृष्ट्वारामंविमानस्थंमेराविव दिवाकरम्
अष्टाङ्गप्रणिपातेन नत्वा राघवमब्रवीत् । अद्य मे सफलंजन्म प्राप्ताःसर्वेमनोरथाः॥
यद्दृष्टौ देवचरणौजगद्वन्द्यावनिन्दितौ । कृतःश्लाघ्योऽस्म्यहंदेवशक्रादीनांदिवौकसाम्
आत्मानमधिकंमन्ये त्रिदशेशात्पुरन्दरात् । देवस्यदर्शनात्तेऽद्य स्पृहणीयो दिवौकसाम्
अभिवन्द्य सरामं तु आलिङ्ग्य भरतंहरिम् । लङ्कां प्रवेशयामास विशिष्टायात्रिविष्टपात्
रावणस्य गृहे दीप्ते सर्वरत्नोपशोभिते । उपविष्टे तु काकुत्स्थे अर्घंदत्त्वा विभीषणः॥
उवाच प्राञ्जलिर्भूत्वा सुग्रीवं भरतं तथा । इहागतस्य रामस्य यद्दास्येन तदस्ति मे ॥
इयं च लङ्का रामेण रिपुंत्रैलोक्यकण्टकम् । हत्वा तु पापकर्माणं दत्तापूर्वं पुरीमम ॥
इयंपुरी इमेदारा अमीपुत्रास्तथाह्यहम् । सर्वमेतन्मयादत्तं सर्वमक्षयमस्तु ते ॥ ८८ ॥
ततःप्रकृतयःसर्वालङ्कावासिजनाश्च ये । आजग्मू राघवं द्रष्टुं कौतूहलसमन्विताः ॥८९॥
उक्तो विभीषणस्तैस्तु रामं दर्शय नःप्रभो । विभीषणेन कथिता राघवाय महात्मने ॥
तेषामुपायनंसर्वं भरतो रामचोदितः । जग्राह वानरेन्द्रश्च धनरत्नौघसञ्चयम् ॥ ९१ ॥
एवं तत्रत्र्यहं रामोह्यवसद्राक्षसालये । चतुर्थेऽहनि सम्प्राप्ते रामेचापिसभास्थिते ॥
केकसी पुत्रमाहेदं रामं द्रक्ष्यामि पुत्रक । वधूभिस्सहितागत्वा त्वं विज्ञापयपुत्रक ॥
दृष्टे तस्मिन्महत्पुण्यं प्राप्यतेमुनिसत्तमैः । विष्णुरेष महाभागश्चतुर्मूर्तिस्सनातनः ॥

सीतालक्ष्मीर्महाभाग न बुद्धा साग्रजेन ते ।
पित्रा ते पूर्वमाख्यातं देवानां दिविसङ्गमे ॥ ९५ ॥

कुले रघूणां वै विष्णुः पुत्रो दशरथस्य तु। भविष्यतिविनाशाय दशग्रीवस्य रक्षसः॥

विभीषण उवाच।

एवं कुरुष्व वै मातर्गृहाण नवमम्बरम्। पात्रं चन्दनसंयुक्तं दधिक्षौद्राक्षतैःसह॥
दूर्वयार्घं सह कुरु राजपुत्रस्य दर्शनम्। सरमामग्रतःकृत्वा याश्चान्या देवकन्यकाः॥
व्रजस्व राघवाभ्याशं तस्मादग्रे व्रजाम्यहम्। एवमुक्त्वा गतं रक्षो यत्ररामो व्यवस्थितः
उत्सार्य दानवान्सर्वान्रामं द्रष्टुं समागतान्।
सभां तां विमलां कृत्वा रामं स्वाभिमुखेस्थितम्॥ १०० ॥

विभीषण उवाच।

विज्ञाप्यं शृणु मे देव वदतश्च विशांपते। दशग्रीवं कुम्भकर्णं यावमां चाप्यजीजनत्॥
इयं सा देवमातानःपादौ ते द्रष्टुमिच्छति। तस्यास्तु त्वं कृपां कृत्वा दर्शनं दातुमर्हसि

राम उवाच।

अहं तस्याःसमीपं तु मातृदर्शनकाङ्क्षया। गमिष्ये राक्षसेन्द्र त्वं शीघ्रंयाहि ममाग्रतः
प्रतिज्ञाय तु तं वाक्यमुत्तस्थौ च वरासनात्। मूर्ध्निचाञ्जलिमाधाय प्रणाममकरोद्विभुः
अभिवादयेऽहं भवतीं माताभवसि धर्मतः। महता तपसाचापि पुण्येन विविधेन च॥
इमौते चरणौ देवि मानवो यदिपश्यति। पूर्णस्स्यात्तदहं प्रीतो दृष्ट्वेमौपुत्रवत्सले॥
कौशल्या मे यथामाता भवती च तथामम। केकसी चाब्रवीद्रामं चिरंजीव सुखीभव
भर्त्रा मे कथितं वीर विष्णुर्मानुषरूपधृत्। अवतीर्णो रघुकुले हितार्थे त्रिदिवौकसाम्
दशग्रीव विनाशायमूर्तिंदातुं विभीषणे। वालिनो निधनंचैव सेतुबन्धं च सागरे॥
पुत्रो दशरथस्यैव सर्वं स च करिष्यति। इदानीं त्वं मयाज्ञातःस्मृत्वा तद्भर्तृभाषितम्
सीतालक्ष्मीर्भवान्विष्णुर्देवा वै वानरास्तथा। गृहं पुत्रगमिष्यामि स्थिरकीर्तिमवाप्नुहि

सरमोवाच।

इहैव वत्सरं पूर्णमशोकवनिकास्थिता। सेविता जानकीदेवी सुखंतिष्ठति ते प्रिया॥
नित्यं स्मरामि वै पादौ सीतायास्तु परन्तप।
कदा द्रक्ष्यामि तां देवीं चिन्तयानात्वहर्निशम्॥ ११२ ॥

किमर्थं देवदेवेन नानीता जानकीत्विह । एकाकी नैवशोभेथा योषिता च तयाविना ॥
समीपे शोभते सीता त्वं च तस्याःपरन्तप । एवंब्रुवन्त्यां भरतः केयमित्यब्रवीद्वचः ॥
ततश्चेङ्गितविद्रामो भरतंप्राह सत्वरम् । विभीषणस्य भार्या वै सरमानाम नामतः ॥
प्रियासखी महाभागा सीतायास्सुदृढंमता । सर्वंकालकृतंपश्य न जाने किंकरिष्यति ॥
गच्छत्वं सुभगेभर्तृगेहंपालय शोभने । मां त्यक्त्वा हि गता देवीभाग्यहीनं गतिर्यथा
तया विरहितःसुभ्रु रतिंविन्दे न कर्हिचित् । शून्या एवदिशःसर्वाःपश्यामीह पुनर्भ्रमन्,

विसृज्य तां च सरमां सीतायास्तु प्रियांसखीम् ।
गतायामथ केकस्यां रामःप्राह विभीषणम् ॥ १२० ॥

दैवतेभ्यःप्रियंकार्यं नापराध्यास्त्वयासुराः । आज्ञयाराजराजस्य वर्तितव्यं त्वयाऽनघ॥
लङ्कायांमानुषोयोवै समागच्छेत्कथञ्चन । राक्षसैर्न च हन्तव्योऽद्रष्टव्योसौ यथात्वहम्

विभीषण उवाच ।

आज्ञयाहं नरव्याघ्र करिष्ये सर्वमेव तु । विभीषणे हि वदति वायू राममुवाच ह॥
इहास्ति वैष्णवीमूर्तिःपूर्वंबद्धो बलिर्यया । तां नयस्व महाभागे कान्यकुजे प्रतिष्ठय ॥
विदित्वातदभिप्रायं वायुनासमुदाहृतम् । विभीषणस्त्वलङ्कृत्य रत्नैःसर्वैश्च वामनम् ॥
आनीयचार्पयद्रामे वाक्यं चेदमुवाच ह । यदा वै निर्जितःशक्रो मेघनादेन राघव ॥
तदा वै वामनस्त्वेष आनीतो जलजेक्षण । नयस्व तमिमं देव देवदेवं प्रतिष्ठय ॥१२७॥

तथेति राघवःकृत्वा पुष्पकं च समारुहत् ।
धनं रत्नमसङ्ख्येयं वामनं च सुरोत्तमम् ॥ १२८ ॥

गृह्य सुग्रीवभरतावारूढौ वामनादनु । व्रजन्नेवाम्बरे रामस्तिष्ठेत्याह विभीषणम् ॥
राघवस्य वचःश्रुत्वा भूयोऽप्याह सराघवम् । करिष्येसर्वमेतद्धि यदाज्ञप्तं विभोत्वया
सेतुनानेन राजेन्द्र पृथिव्यां सर्वमानवाः । आगत्य प्रतिबाधेरन्नाज्ञाभङ्गो भवेत्तव ॥
कोऽत्र मे नियमोदेव किन्तुकार्यं मयाविभो । श्रुत्वैतद्राघवो वाक्यंराक्षसोत्तमभाषितम्

कार्मुकं गृह्य हस्तेन रामःसेतुं द्विधाऽच्छिनत् ।
त्रिर्विभज्य च वेगेन मध्ये वै दशयोजनम् ॥ १३३ ॥

छित्त्वा तु योजनं चैकमेकंखण्डत्रयंकृतम् । वेलावनं समासाद्य रामःपूजामुमापतेः ॥
कृत्वा रामेश्वरंनाम्ना देवदेवं जनार्दनम् । अभिषिच्याथ संगृह्य वामनं रघुनन्दनः ॥
दक्षिणादुदधेश्चैव निर्जगाम त्वरान्वितः । अन्तरिक्षाद्भूद्वाणी मेघगम्भीरनिःस्वना ॥

रुद्र उवाच ।

भोभो रामास्तु भद्रं ते स्थितोऽहमिह साम्प्रतम् । यावज्जगदिदंराम यावदेषा धरास्थिता
तावदेव च ते सेतुतीर्थं स्थास्यति राघव । श्रुत्वैवं देवदेवस्य गिरंताममृतोपमाम् ॥

राम उवाच ।

नमस्ते देवदेवेश भक्तानामभयङ्कर । गौरीकान्त नमस्तुभ्यं दक्षयज्ञविनाशन ॥ १३९ ॥
नमो भवाय शर्वाय रुद्राय वरदाय च । पशूनांपतये नित्यं चोग्राय च कपर्दिने ॥१४०॥
महादेवाय भीमाय त्र्यम्बकाय दिशांपते । ईशानाय भगघ्नाय नमोऽस्त्वन्धकघातिने
नीलग्रीवाय घोराय वेधसेवेधसास्तुत । कुमारशत्रुनिघ्नाय कुमारजननाय च ॥१४२॥
विलोहिताय धूम्राय शिवाय क्रथनाय च । नमो नीलशिखण्डाय शूलिने दैत्यनाशिने ॥
उग्राय च त्रिनेत्राय हिरण्यवसुरेतसे । अनिन्द्यायाम्बिकाभर्त्रे सर्वदेवस्तुताय च ॥
अभिगम्याय काम्याय सद्योजाताय वै नमः । वृषध्वजाय मुण्डाय जटिने ब्रह्मचारिणे ॥
तप्यमानाय तप्याय ब्रह्मण्याय जयाय च । विश्वात्मने विश्वसृजे विश्वमावृत्य तिष्ठते
नमोनमोऽस्तु दिव्याय प्रपन्नार्तिहराय च । भक्तानुकम्पिनेदेव विश्वतेजो मनोगते ॥

पुलस्त्य उवाच ।

एवं संस्तूयमानस्तु देवदेवो हरोनृप । उवाच राघवं वाक्यं भक्तिनम्रं पुरःस्थितम् ॥

रुद्र उवाच ।

भोभो राघव भद्रं ते ब्रूहि यत्ते मनोगतम् । यावदेव प्रयच्छामि नास्त्यदेयं मया हि ते
पुष्कराक्ष महादेव देवदेवस्सनातनः । भवान्नारायणो नूनं गूढो मानुषयोनिषु ॥१५०॥
अवतीर्णो देवकार्यं कृतं तच्चानघ त्वया । इदानीं स्वं व्रजस्थानं कृतकार्योऽसि शत्रुहन्
त्वयाकृतं परंतीर्थं सेत्वाख्यं रघुनन्दन । आगत्य मानवा राजन्पश्येयुरिहसागरे ॥१५२
महापातकयुक्ता ये तेषां पापं विलीयते । ब्रह्मवध्यादि पापानि यानिकष्टानि कानिचित्

दर्शनादेव नश्यन्ति नात्रकार्या विचारणा। गच्छत्वं वामनं स्थाप्य गङ्गातीरे रघूत्तम

पृथिव्यां सर्वशः कृत्वा भागानष्टौ परन्तप।

श्वेतद्वीपं स्वकं स्थान व्रज देव नमोऽस्तु ते॥ १५५॥

पुलस्त्य उवाच।

प्रणिपत्य ततो रामस्तीर्थं प्राप्तश्च पुष्करम्।

विमानं तु न यात्यूर्ध्वं वेष्टितं तत्तु राघवः॥ १५६॥

किमिदं वेष्टितं यानं निरालम्बेऽम्बरे स्थितम्।

भवितव्यं कारणेन पश्येत्याह स्म वानरम्॥ १५७॥

सुग्रीवो रामवचनादवतीर्य धरातले। स च पश्यति ब्रह्माणं सुरसिद्धसमन्वितम्॥

ब्रह्मर्षिसङ्घसहितं चतुर्वेदसमन्वितम्। दृष्ट्वाऽऽगत्याब्रवीद्रामं सर्वलोकपितामहः॥

सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः। तं देव पुष्पकं नैव लङ्घयेद्धि पितामहम्॥

अवतीर्य ततो रामःपुष्पकाद्धेमभूषितात्। नत्वा विरिञ्चिनंदेवं गायत्र्या सह संस्थितम्

अष्टाङ्गप्रणिपातेन पञ्चाङ्गालिङ्गितावनिः। तुष्टाव प्रणतो भूत्वा देवदेवं विरिञ्चनम्॥

राम उवाच।

नमामि लोककर्तारं प्रजापतिसुरार्चनम्। देवनाथं लोकनाथं प्रजानाथं जगत्पतिम्॥

नमस्ते देवदेवश सुरासुरनमस्कृत। भूतभव्यभवन्नाथ हरिपिङ्गललोचन॥ १६४॥

बालस्त्वं वृद्धरूपी च मृगचर्मासनाम्बरः। तारणश्चासि देवस्त्वं त्रैलोक्यप्रभुरीश्वरः॥

हिरण्यगर्भ पद्मगर्भ वेदगर्भ स्मृतिप्रद। महासिद्धो महापद्मी महादण्डी च मेखली॥

कालश्च कालरूपी च नीलग्रीवो विदांवरः। वद कर्ताभको नित्यःपशूनां पतिरव्ययः

दर्भपाणिर्हंसकेतुः कर्ता हर्ता हरो हरिः। जटी मुण्डी शिखी दण्डी लगुडीचमहायशाः

भूतेश्वरः सुराध्यक्षः सर्वात्मा सर्वभावनः। सर्वगः सर्वहारी च स्रष्टा च गुरुरव्ययः

कमण्डलुधरो देवः स्रुक् स्रुवादिधरस्तथा। हवनीयोऽर्चनीयश्च ओंकारो ज्येष्ठसामगः

मृत्युश्चैवामृतश्चैव पारियात्रश्च सुव्रतः। ब्रह्मचारीव्रतधरो गुहावासी सुपङ्कजः॥१७१

अमरो दर्शनीयश्च बालसूर्यनिभस्तथा। पद्मवासी च भगवान्सावित्रीपतिरच्युतः॥

वरप्रदो दानवानां विष्णोर्लंघवरस्तथा । कर्मकर्ताऽधर्महर्ता अभयहस्त एव च ॥
अग्निमुखोह्यग्निकेतुर्मुनिरूपो दिशांपतिः । उत्सवो वेदस्रष्टासिचतुर्वर्गाधिपस्तथा ॥
दक्षिणे वामतश्चापि पत्नीभ्यामुपसेवितः । भिक्षुश्च भिक्षुरूपश्च त्रिजटी लब्धनिश्चयः ॥
चित्तवृत्तिकरः कामो मधुर्मधुकरस्तथा । वानप्रस्थोवनगत आश्रमी पूजितस्तथा ॥

जगद्धाता च कर्त्ता च पुरुषः शाश्वतो ध्रुवः ।
धर्माध्यक्षो विरूपाक्षस्त्रिधर्मो भूतभावनः ॥ १७७ ॥

त्रिवेदो बहुरूपश्च सूर्यायुतसमप्रभः । मोहको बन्धकश्चैव दानवानां विशेषतः ॥१७८
देवदेवश्च पद्माङ्कस्त्रिनेत्रोऽब्जजटस्तथा । हरिश्मश्रुर्धनुर्धारीभीमो धर्मपराक्रमः ॥१७९॥

पुलस्त्य उवाच ।

एवं स्तुतस्तु रामेण ब्रह्मा ब्रह्मविदांवरः । उवाच प्रणतं रामं करे गृह्य पितामहः ॥

ब्रह्मोवाच ।

विष्णुस्त्वं मानुषे देहेऽवतीर्णो वसुधातले । कृतं तद्भवता सर्वं देवकार्यं महाविभो ॥
संस्थाप्य वामनं देवं जाह्नव्या दक्षिणेतटे । अयोध्यां स्वपुरींगत्वा सुरलोकं व्रजस्वच

पुलस्त्य उवाच ।

विसृष्टो ब्रह्मणा रामः प्रणिपत्य पितामहम् । आरूढः पुष्पकं यानं सम्प्राप्तो मधुरांपुरीम्
समीक्ष्य पुत्रसहितं शत्रुघ्नं शत्रुघातिनम् । तुतोष राघवः श्रीमान्भरतः स हरीश्वरः ॥
शत्रुघ्नो भ्रातरौ प्राप्तौ शक्रोपेन्द्राविवागतौ । प्रणिपत्य ततोमूर्ध्नापश्चाङ्गालिङ्गितावनिः
उत्थाप्य चाङ्कमारोप्य रामो भ्रातरमञ्जसा । भरतश्च ततः पश्चात्सुग्रीवस्तदनन्तरम् ॥
उपविष्टोऽथ रामाय सोऽर्घमादाय सत्वरम् । राज्यं निवेदयामास चाग्राङ्गं राघवे तदा
श्रुत्वा प्राप्तं ततो रामं सर्वा वै माथुरो जनः । वर्णा ब्राह्मणभूयिष्ठा द्रष्टुमेनं समागताः

सम्भाष्य प्रकृतीः सर्वा नैगामान्ब्राह्मणैः सह ।
दिनानि पञ्चोषित्वाऽत्र रामो गन्तुं मनो दधे ॥ १८६ ॥

शत्रुघ्नश्च ततो रामे वाजिनोऽथ गजांस्तथा । कृताकृतं च कनकं तत्रोपायनमाहरत् ॥
रामस्त्वाह ततः प्रीतः सर्वमेतन्मया तव । दत्तं पुत्रौ तेऽभिषिञ्च राजानौ माथुरे जने

एवमुक्त्वा ततो रामः प्राप्तो मध्यन्दिने रवौ। महोदयं समासाद्य गङ्गातीरे स वामनम्
प्रतिष्ठाप्य द्विजानाह भाविनः पार्थिवांस्तथा। मया कृतोऽयं धर्मस्य सेतुर्भूतिविवर्धनः

प्राप्ते काले पालनीयो न च लोप्यः कथञ्चन।
प्रसारितकरेणैव प्रार्थनैषा मया कृता॥ १६४॥

नृपाः कृते मयार्थित्वे यत्क्षेमं क्रियतामिह। नित्यं दैनन्दिनी पूजा कार्या सर्वैरतन्द्रितैः

ग्रामान्दत्त्वा धनं तच्च लङ्कायाा आहृतं च यत्।
प्रेषयित्वा च किष्किन्धां सुग्रीवं वानरेश्वरम्॥ १६६॥
अयोध्यामागतो रामः पुष्पकं तमथाब्रवीत्।
नागन्तव्यं त्वया भूयस्तिष्ठ यत्र धनेश्वरः।
कृतकृत्यस्ततो रामः कर्तव्यं नाप्यमन्यत॥ १६७॥

पुलस्त्य उवाच।

एवंते भीष्म रामस्यकथायोगेनपार्थिव। उत्पत्तिर्वामनस्योक्ता किं भूयःश्रोतुमिच्छसि
कथयामि तु तत्सर्वं यत्र कौतूहलं नृप। सर्वं ते कीर्त्तयिष्यामि येनार्थी नृपनन्दन॥

इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे वामनप्रतिष्ठा नाम चत्वारिंशोऽध्यायः।

---

## एकचत्वारिंशोऽध्यायः

### भीष्मस्य पुलस्त्यं प्रति विष्णोर्नाभिपद्मोत्पत्तिवर्णनम्।

भीष्म उवाच।

कथितं वामनस्यैव माहात्म्यं विस्तरेण वै। पुनस्तस्यैव माहात्म्यमन्यद्विष्णोरतो वद
पद्मं कथमभूद्देव नाभौ येनाभवज्जगत्। कथं च वैष्णवी सृष्टिः पद्ममध्येऽभवत्पुरा॥
कथं पाद्मे महाकल्पेऽभवत्पद्ममयं जगत्। जलार्णवगतस्येह नाभौ जातं जलानुगम्॥
प्रभावं पद्मनाभस्य स्वपतः सागराम्भसि॥ पुष्करे तु कथं जाता देवा ऋषिगणाः पुरा

एतदाख्याहि निखिलं योगं योगविदां वर। श्रृण्वतस्तस्य मे कीर्तिं न तृप्तिरुपजायते
कियताचैव कालेन शोभतेपुरुषोत्तमः। कियन्तं वै स्वपिति च कति कालस्यसम्भवाः

कियता वाथ कालेन प्रोत्तिष्ठति महायशाः।
कथं चोत्थाय भगवान्सृजते निखिलं जगत् ॥ ७ ॥

के प्रजापतयस्तावद्वासन्पूर्वे महामुने। कथं निर्मितवांस्तत्र चैतं लोकं सनातनम् ॥ ८ ॥
कथमेकार्णवे शून्ये नष्टे स्थावरजङ्गमे। भूगोलके प्रदग्धे तु प्रनष्टोरगराक्षसे ॥ ९॥
नष्टानलानिलाकाशे नष्टधर्मे महीतले। केवले गह्वरीभूते महाभूतविपर्यये ॥ १० ॥

किंनु विश्वपतिः साक्षान्महातेजा महाद्युतिः।
आस्ते यथाध्याननिष्ठो विधिमास्थाय योगवित् ॥ ११ ॥

श्रृण्वतः परया भक्त्या ब्रह्मन्नेतदशेषतः। वक्तुमर्हसि धर्मज्ञ यशो नारायणात्मकम् ॥
श्रद्धिनः सूपविष्टस्य भगवन्वक्तुमर्हसि ॥ १३ ॥

पुलस्त्य उवाच।

नारायणस्य यशसः श्रवणे या तव स्पृहा। सद्वंशान्वयपूतस्य न्याय्यं कुरुकुलोद्वह ॥
श्रृणुष्वादिपुराणेषु देवेभ्यश्च यथाश्रुति। ब्राह्मणानां च वदतां श्रुत्वा वै सुमहात्मनाम्

यथा च तपसा दृष्ट्वा वृहस्पतिसमद्युतिः।
पराशरसुतः श्रीमान्गुरुर्द्वैपायनोऽब्रवीत् ॥ १६ ॥

तत्तेऽहं कथयिष्यामि यथाभक्ति यथाश्रुति। यद्विज्ञातं मया सम्यगृषिमार्गेण सत्तम ॥
कः समुत्सहते ज्ञातुं परं नारायणात्मकम्। विश्वावितारं ब्रह्मायं न वेदयति तत्त्वतः
तत्कर्मविश्वदेवानां तद्रहस्यं महर्षिषु। स इज्यस्सर्वयज्ञानां स तत्त्वं तत्त्वदर्शिनाम् ॥
अध्यात्ममध्यात्मविदां नरकं च विकर्मिणाम्। अधिदैवं च तद्दैवमधिदैवतसंज्ञितम् ॥
अधिभूतं च तद्भूतं परं च परमार्थिनाम्। स यज्ञो वेदनिर्दिष्टस्तत्तपः कवयो विदुः॥
यः कर्त्ता कारको बुद्धिर्यतः क्षेत्रज्ञ एवच। प्रणवः पुरुषः शास्ता एकश्चेति विभाव्यते
प्राणः पञ्चविधश्चैव ध्रुवमक्षरमेव च। कालः पाकश्च यज्ञश्च यष्टा चाधीतमेव च ॥
उच्यते विविधैर्भावैः स एवायं तु तत्परम्। स एव भगवान्सर्वं करोति न करोतिच

सोऽस्मिन्कारयते सर्वं स्थानिनां च कृतिः कृता ।
यजामहे तमेवाद्यं स एवोत्थाननिर्वृतः ॥ २५ ॥
योवक्ता यच्च वक्तव्यं यश्चाहं तद्ब्रवीमि ते । श्रूयतेयच्च वैश्राव्यं यच्चान्यत्परिजल्पितम्
या कथा याश्च श्रुतयो यो धर्मोधर्मतत्परः । विश्वंविश्वपतिर्यश्च स तु नारायणःस्मृतः
यत्सत्यं यदनृतमादिमध्यभूतं यच्चान्त्यं निरवधिकं च यद्भविष्यम् ।
यत्किञ्चिच्चरमचरं यदस्ति चान्यत्सर्वंतत्पुरुषवरः प्रधानभूतः ॥ २८ ॥
चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ।
तस्य तावच्छती सन्ध्या द्विगुणा कुरुनन्दन ॥ २९ ॥
यत्र धर्मश्चतुष्पादस्त्वधर्मः पादविग्रहः । स्वधर्मनिरताः शान्ता जायन्ते यत्र मानवाः
विप्राः स्थिता धर्मपरा राजवृत्तिस्थिता नृपाः ।
कृष्यामभिरता वैश्याः शूद्राः शुश्रूषवस्तथा ॥ ३१ ॥
तदा सत्यं च सत्वं च धर्मश्चैव विवर्धत । सद्भिराचरितो धर्मोयेन लोकः प्रवर्त्तते ॥
एतत्कृतयुगे वृत्तं सर्वेषामेव पार्थिव । प्राणिनां धर्मसंज्ञानां नराणां नीचजन्मनाम् ॥
त्रीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते ।
तस्य तावच्छती सन्ध्या द्विगुणा परिकीर्तिता ॥ ३४ ॥
द्वाभ्यामधर्मः पादाभ्यां त्रिभिर्धर्मो व्यवस्थितः ।
यत्र सत्यं च सत्वं च क्रिया धर्मो विधीयते ॥ ३५ ॥
त्रेतायां विकृतिं यान्ति वर्णा लोभेन संवृताः ।चातुर्वर्ण्यस्य वैकृत्यं क्षान्तिर्दौर्बल्यमेव च
एषा त्रेतायुगगतिर्विचित्रा देवनिर्मिता । द्वापरं द्विसहस्रं तु वर्षाणां कुरुनन्दन ॥ ३७॥
तस्य तावच्छती सन्ध्या द्विगुणंयुगमुच्यते । तत्राप्यतीवार्थपराः प्राणिनो रजसाहताः
शठा नैष्कृतिकाः क्षुद्रा जायन्ते कुरुनन्दन ।
द्वाभ्यां धर्मः स्थितः पद्भ्यामधर्मस्त्रिभिरुत्थितः ॥ ३९ ॥
विपर्ययशतैर्धर्मः क्षयमेति कलौ युगे । ब्रह्मण्यभावश्च्यवते तथास्तिक्यं विवर्ज्यते ॥
व्रतोपवासास्त्यज्यन्ते कलौ वै युगपर्यये । तदा वर्षसहस्रं तु वर्षाणां द्वे शते तथा ॥

सन्ध्यया सहसङ्ख्यातः क्रूरः कलियुगस्तथा ।
यत्राधर्मश्चतुष्पादो धर्मः पादपरिग्रहः ॥ ४२ ॥
कामिनस्तापसाः क्षुद्रा जायन्ते यत्र मानवाः ।
न चावसायिकः कश्चिन्न साधुर्न च सत्यवाक् ॥ ४३ ॥
नास्तिका ब्राह्मणा भक्ता जायन्ते तत्र मानवाः ।
अहंकारगृहीताश्च प्रक्षीणस्नेहबन्धनाः ॥ ४४ ॥

विप्राः शूद्रसमाचारास्सन्ति सर्वे कलौ युगे । आश्रमाणां विपर्यासःकलौ सम्प्रतिवर्तते
वर्णानां चैव सन्देहो युगान्ते कुरुनन्दन । एषा द्वादशसाहस्री युगाख्या पूर्वनिर्मिता ॥
सहस्रयुगपर्यन्तं तदहर्ब्राह्ममुच्यते । ततोऽहनि गते तस्मिन्सर्वेषामेव जीविनाम् ॥

शरीरनिर्वृतिं दृष्ट्वा कालः संहारबुद्धिमान् ।
देवतानां च सर्वेषां ब्राह्मणानां महीपते ॥ ४८ ॥
दैत्यानां दानवानां च यक्षराक्षसपक्षिणाम् ।
गन्धर्वाणामप्सरसां भुजङ्गानां च पार्थिव ॥ ४९ ॥

पर्वतानां नदीनां च पशूनां चैव सत्तम । तिर्यग्योनिगतानां च क्रिमीणां दंशिनां तथा
सर्वभूतपतिः पश्च भूत्वा भूतानि भूतकृत् । जगत्संहरणार्थाय कुरुते वैशसं महत् ॥

भूत्वा सूर्यश्चक्षुषी आददानो भूत्वा वायुः प्राणिनां प्राणिजातम् ।
भूत्वा वह्निर्निर्दहन्सर्वलोकान्भूत्वा मेघो भूय उग्रोऽभ्यवर्षत् ॥ ५२ ॥

भूत्वा नारायणो योगी सर्वमूर्तिर्विभावसुः। गभस्तिभिःप्रदीप्ताभिःसंशोषयति सागरान्
ततः पीत्वार्णवान्सर्वान्नदीकूपांश्च सर्वतः । पर्वतानां च सलिलं सर्वमादाय योगवित्॥
भूत्वा चैव सहस्रार्चिर्महीं भित्वा रसातले । रमते जलमादाय पिबन्रसमनुत्तमम् ॥
मूर्त्तामूर्त्तं तदन्यच्च यदस्ति प्राणिषु ध्रुवम् । तत्सर्वमरविन्दाक्ष आदत्ते पुरुषोत्तमः ॥

वायुश्च बलवान्भूत्वा विधुन्वानोऽखिलं जगत् ।
प्राणापानं समासाद्य वायुनाक्रमते हरिः ॥ ५७ ॥
ततो देवगणानां च सर्वेषां चैव देहिनाम् ।

पञ्चेन्द्रियगुणास्सर्वे भूतान्येव च यानि च ॥ ५८ ॥
घ्रेयं घ्राणं शरीरं च पृथिवीं संश्रिता गुणाः । लोकयात्रा भगवता मुहूर्तेन विनाशिता ॥
जिह्वा रसश्च स्नेहश्च संश्रिताः सलिले गुणाः । रूपंचक्षुर्विभागश्चनेत्रं ज्योतिःश्रितागुणाः
स्पर्शः प्राणश्च चेष्टा च पवनं संश्रिता गुणाः । शब्दः श्रोत्रे च श्रवणं गगनं संश्रितागुणाः
मनोबुद्धिश्च चित्तं च क्षेत्रज्ञं चेति संश्रिताः । परेण परमेष्ठी च हृषीकेशमुपाश्रिताः ॥
ततो भगवतस्तस्य रश्मिभिः परिवारिताः । वायुना परिनुन्नाश्च भूमिशाखामपाश्रिताः
तेषां संहरणोद्भूतः पावकः शतधाज्वलन् । प्रदहन्नखिलं विश्वं वृत्तः संवर्त्तकोऽनलः
सपर्वतद्रुमान्गुल्मांल्लतावल्लीस्तृणानि च । विमानानि च दिव्यानि पुराणिविविधानि च
यानि चाश्रयणीयानि सर्वाण्यप्यदहद् भृशम् ।
भस्मीकृत्य तु तान्सर्वा ल्लोकाँल्लोकगुरोर्गुरुः ॥ ६६ ॥
स भूतिं धारयामास युगान्ते लोकसंभवाम् ।
सहस्रवृष्टिः शतधा भूत्वा कृष्णो महाघनः ॥ ६७ ॥
दिव्यतोयेन हविषातर्पयामास मेदिनीम् । ततः क्षीरनिकाशेन स्वादुना परमाम्भसा ॥
शिशिरेण च पुण्येन मही निर्वाणमागमत् । तेन तोयेन सम्पृक्ता पयस्साधर्म्यतो धरा
एकार्णवजलीभूता सर्वसत्त्वविवर्जिता । महासत्त्वान्यपि विभुं प्रविष्टान्यमितौजसम् ॥
नष्टार्कपवनाकाशे सूक्ष्मेजगतिसंवृते । संशोषमात्मना कृत्वा समुद्राणां च देहिनः ॥
दग्ध्वा सङ्कोच्य च तथा स्वपित्येकः सनातनः ।
पौराणां रूपमास्थाय स्वपित्यमितविक्रमः ॥ ७२ ॥
एकार्णवजले व्यापी योगी योगमुपासितः ।
अनेकानि सहस्राणि युगान्येकार्णवाम्भसि ॥ ७३ ॥
न चैव कश्चिदव्यक्तं व्यक्तो वेदितुमर्हति । कश्चैष पुरुषो नाम किंयोगः कश्च योगवान्
न पृष्ठे नैवमभितो नैव पार्श्वे न चाग्रतः । कश्चिद्विज्ञायते तस्य दृश्यते देवसत्तमः ॥
नभः क्षितिंपवनमपः प्रकाशनं प्रजापतिं भुवनधरं सुरेश्वरम् ।
पितामहं श्रुतिनिलयं मुनिं प्रभुं समापयञ्छयनमरोचयत्प्रभुः ॥ ७६ ॥

एवमेकार्णवीभूते शेते लोके महाद्युतिः । प्रच्छाद्य सलिलेनोर्वीं हंसो नारायणायते ॥
महतो रजसो मध्ये महार्णवसमस्य वै । वारिजाक्षो महाबाहुरक्षयं ब्रह्म यद्विदुः ॥
आत्मरूपसरूपेण तमसा संवृतः प्रभुः । मनः सात्विकमादाय यत्र तत्सत्वमाहितम् ॥
याथातथ्यं परं ज्ञानं भूताय ब्रह्मणे ततः । रहस्यं च तथोद्दिष्टं यथोपनिषदां स्मृतम् ॥
पुरुषो यज्ञ इत्येतत्परमं परिकीर्तितम् । यश्चान्यः पुरुषाख्यः स्यात्स एव पुरुषोत्तमः
ये च यज्ञकरा विप्रा य ऋत्विज इति स्मृताः। अस्मादेव पुरा भूतावक्त्रेभ्यःश्रूयते तथा
ब्रह्माणं प्रथमं वक्त्रादुद्गातारं च सामगम् । होतारं च तथाद्ध्वर्युं बाहुभ्यामसृजत्प्रभुः
ब्रह्माणं ब्राह्मणाच्छंसि स्तोतारौ चैव सर्वशः । मेढ्राच्चमैत्रावरुणं प्रतिष्ठातारमेवच ॥

उदरात्प्रतिहर्तारं पोतारं चैव पार्थिव ।
पाणिभ्यामथ चाग्नीध्रमुन्नेतारं च याजुषम् ॥ ८५ ॥

अच्छावाकमथोरुभ्यां सुब्रह्मण्यं च सामगम् । एवमेवं स भगवान्षोडशैताञ्जगत्पतिः ॥
स्वयम्भूः सर्वयज्ञानामृत्विज्ञोऽसृजदुत्तमान् । तदाचैष महायोगी पुरुषो यज्ञसंज्ञितः ॥
वेदाश्चैव तथा सर्वे सहाङ्गोपनिषत्क्रियाः । स्वपित्येकार्णवे चैव यदाश्चर्यमभूत्पुरा ॥
श्रूयतां तु तदा विप्रो मार्कण्डेयः कुतूहलात् । जीर्णो भगवतातेन कुक्षावासीन्महामुनिः
बहुवर्षसहस्रायुस्तस्यैव वरतेजसः । अटंस्तीर्थप्रसङ्गेन पृथिवी तीर्थगोचरः ॥ ९० ॥

आश्रमाणि च पुण्यानि देवतायतनानि च ।
देशान्राष्ट्राणि चित्राणि पुराणि विविधानि च ॥ ९१ ॥
जपहोमपराः शान्तास्तपोभिरमलाःस्मृताः ।
मार्कण्डेयस्ततस्तस्य शनैर्वक्त्राद्विनिर्गतः ॥ ९२ ॥

निष्क्रामन्तं न चात्मानं जानीते देवमायया । निष्क्रम्य तस्य उदरादेकार्णवमथोजगत्

सर्वतस्तमसाच्छन्नं मार्कण्डेयोऽन्ववैक्षत ।
तस्योत्पन्नं भयं तीव्रं व्यत्ययं चात्मजीवितम् ॥ ९४ ॥

देवदर्शनसंहृष्टो विस्मयं परमं गतः । सोऽचिन्तयदमोघात्मा मार्कण्डेयोऽथ शङ्कितः ॥
किं नु स्याच्चित्तसंमोहः किं नु स्वप्नोऽनुभूयते । व्यक्तमन्यतरो भाव एतयोर्भवितामम

न हि स्वप्नोह्ययं सत्ययुक्तं यत्सत्यमर्हति । नष्टचन्द्रार्कपवनो नष्टपर्वतभूतलः ॥ ९७ ॥
कतमः स्यादयं लोक इति शोकमुपागतः । ददर्श चापि पुरुषं स्वपन्तं पर्वतोपमम् ॥
सलिलेऽर्धमथोमग्नं जीमूतमिव सागरे । तपन्तमिवतेजोभिरामुक्तशशिभास्करम् ॥

गाम्भीर्यात्सागरमिव भासमानम्महौजसा ।
देवं द्रष्टुमिहायातः को भवानिति विस्मयात् ॥ १०० ॥

तथैव च मुनिः कुक्षिं पुनरेव प्रवेशितः । स प्रविष्टः पुनः कुक्षिं मार्कण्डेयः सविस्मयम्
तथैव च पुनर्भूयो विजानन्स्वप्नदर्शनम् । स तथैव यथा पूर्वं पृथिवीमटते वनम् ॥
पुण्यतीर्थजलोपेतं विविधान्याश्रमाणि च । क्रतुभिर्यजमानांश्च समाप्तगुरुदक्षिणैः ॥
अपश्यद्देवकुक्षिस्थान्यज्ञस्थाञ्छतशो द्विजान् । सद्वृत्तमाश्रिताःसर्वेवर्णाब्राह्मणपूर्वकाः
चत्वार आश्रमाः सम्यग्यथापूर्वंविलोकिताः । एवं वर्षशतं साग्रं मार्कण्डेयेन धीमता ॥
चरता पृथिवी सर्वातत्कुक्षौ हि समीक्ष्यते । ततः कदाचिदथ वै पुनः कुक्षेर्विनिर्गतः ॥
सुप्तं न्यग्रोधशाखायां बालमेकं निरीक्ष्य च । तथैवैकार्णवजले नीहारेणावृतान्तरे ॥
अव्यक्तक्रीडिते लोके सर्वभूतविवर्जिते । स मुनिर्विस्मयाविष्टः कौतूहलसमन्वितः ॥

बालमादित्यसङ्काशं न शक्नोत्यभिवीक्षितुम् ।
सोऽप्यचिन्तयदेकान्ते स्थित्वा सलिलसन्निधौ ॥ १०६ ॥

पूर्वदृष्टमिदं मेने शङ्कितो देवमायया । अगाधे सलिले शेते मार्कण्डेयः सविस्मयः ॥
पूर्ववृत्तमथो द्रष्टुमव्रजत्त्रस्तलोचनः । स तस्मै भगवानाह स्वागतं बाल भो इति ॥
बभाषे मेघतुल्येन स्वरेण पुरुषोत्तमः । मार्कण्डेय न भेतव्यमागच्छस्व ममान्तिकम् ॥

मार्कण्डेय उवाच ।

को नाम्ना कीर्तयति मां कुर्वन्परिभवं मम । दिव्यवर्षसहस्राख्यं धर्षयंश्चैव मे वयः
न ह्येष च सदाचारो देवेष्वपि ममोचितः । मां ब्रह्मापि हि सस्नेहो दीर्घायुरितिभाषते

कस्तपो घोरमासाद्य ममाद्य त्यक्तजीवितः ।
मार्कण्डेयेति मामुक्त्वा मृत्युमीक्षितुमर्हसि ॥ ११५ ॥

एवं प्रक्षुभितः क्रोधान्मार्कण्डेयो महामुनिः । तदैनं भगवान्भूयो बभाषे मधुसूदनः ॥

श्रीभगवानुवाच ।

अहंते जनको वत्स हृषीकेशः पितागुरुः । आयुःप्रदाता पौराणः किं मां त्वं नोपसर्पसि

मां पुत्रकामः प्रथमं त्वत्पिताऽङ्गिरसो मुनिः ।

पूर्वमाराधयामास तपस्तीव्रं समाश्रितः ॥ ११८ ॥

तं दृष्ट्वा घोरतपसं त्रिदशोत्तमतेजसम् । दत्तवांस्त्वामहं पुत्रं महर्षिममितौजसम् ॥

कस्समुत्सहते चान्यो योगिभूतात्मगात्मकम् ।

द्रष्टुमेकार्णवगतं क्रीडन्तं योगमायया ॥ १२० ॥

ततः प्रहृष्टहृदयो विस्मयोत्फुल्ललोचनः ।

मूर्ध्नि बद्धाञ्जलिपुटो मार्कण्डेयो महातपाः ॥ १२१ ॥

नामगोत्रे तु सम्प्रोच्य दीर्घायुर्लोकपूजितः । तस्मै भगवते भक्त्या नमस्कारमथाकरोत्

मार्कण्डेय उवाच ।

इच्छामि तत्त्वतो ज्ञातुमिमां मायां तवानघ ।

यदेकार्णवमध्यस्थः शेषे त्वं बालरूपवान् ॥ १२३ ॥

किं संज्ञश्चैव भगवाँल्लोके विज्ञायसे प्रभो ।

तर्कयेऽहं महात्मानं को ह्यन्यः स्थातुमर्हसि ॥ १२४ ॥

श्रीभगवानुवाच ।

अहं नारायणो ब्रह्मन्सर्वभूतविनाशनः । अहं सहस्रशीर्षास्यः सहस्रपदसंयुतः ॥१२५॥

आदित्यवर्णः पुरुषो मुखे ब्रह्ममयो ह्यहम् । अहमग्निर्हव्यवहः सप्तसप्तभिरन्वितः ॥१२६

अहमिन्द्रपदः शक्र ऋतूनां परिवत्सरः । अहं योगिषु साङ्ख्याख्यो युगान्तावर्त एव च

अहं सर्वाणि सत्त्वानि दैवतान्यखिलानि च ।

भुजगानामहं शेषस्तार्क्ष्योऽहं सर्वपक्षिणाम् ॥ १२८ ॥

कृतान्तः सर्वभूतानां विज्ञेयः कालसंज्ञितः । अहं धर्मस्तपश्चाहं सर्वाश्रमनिवासिनाम् ॥

अहं दयापरो धर्मः क्षीरोदोऽहं महार्णवः । यत्सत्यं तत्परं त्वेक अहमेव प्रजापतिः ॥

अहं साङ्ख्यमहं योगो ह्यहं तत्परमं पदम् । अ मि या क्रिया चाहमहं विद्याधिपःस्मृतः

अहं ज्योतिरहं वायुरहं भूमिरहं जलम् । आकाशोऽहं समुद्राश्च नक्षत्राणि दिशो दश ॥
अहं वर्षमहं सोमः पर्जन्योऽहमहं रविः । अहं पुराणं परमं तथैवाहं परायणम् ॥१३३॥
भविष्ये चापि सर्वत्र भविष्यत्सर्वसङ्ग्रहः ।
यत्किञ्चित्पश्यसे विप्र यच्छृणोषि च किञ्चन ॥ १३४ ॥
यच्चानुभवसे लोके तत्सर्वं मामनुस्मर । विश्वं सृष्टं मया पूर्वं सृजेऽद्यापि च पश्यमाम्
युगे युगे च रक्षामि मार्कण्डेयाखिलं जगत् ।
तदेतत्कथितं सर्वं मार्कण्डेयावधारय ॥ १३६ ॥
शुश्रूषुरपि धर्मेषु कुक्षौ चर सुखं मम । मम ब्रह्मा शरीरस्थो देवाश्च ऋषिभिः सह ॥
व्यक्तमव्यक्तयोगं मामवगच्छ मुरद्विषम् । अहमेकाक्षरो मन्त्रस्त्र्यक्षरश्च पितामहः ॥
परस्त्रिवर्ग ओंकारः परमात्मप्रदर्शनः । एवमादिपुराणं च वदते मां महामते ॥ १३९ ॥

पुलस्त्य उवाच ।

वक्त्रमाहृतवानीशो मार्कण्डेयमथो हरिः । ततो भगवतः कुक्षिं प्रविष्टो मुनिसत्तमः ॥
यदक्षयं विविधमुपाश्रितं तु तन्महार्णवे व्यपगतचन्द्रभास्करे ।
शनैश्चरन्प्रभुरथ हंससञ्ज्ञतः सिसृजञ्जगद्विहरति कालपर्यये ॥ १४१ ॥
अथचैवं शुचिर्भूत्वा चचार स तु वै तपः । छादयित्वाऽऽत्मनो देहं पयसाम्बुजसम्भवः
ततो महात्मातिबलोमर्त्यलोकविसर्जने । महतां चैव भूतानां विश्वो विश्वमचिन्तयत्
तस्य चिन्तयमानस्य नियते संस्थितेऽर्णवे ।
निराकाशे तोयमये सूक्ष्मे जगति संक्षये ॥ १४४ ॥
ईशः संक्षोभयामास सोऽर्णवं सलिलं गतः । अथान्तरादपां सूक्ष्ममथच्छिद्रमभूत्पुरा
शब्दं प्रति ततो भूतो मारुतश्छिद्रसम्भवः । संलब्ध्वान्तरसंक्षोभं व्यवर्धत समीरणः ॥
नभस्वता बलवता वेगाद्विक्षोभितोऽर्णवः ।
तस्यार्णवस्य क्षुब्धस्य तस्मिन्नम्भसि मथ्यतः ॥ १४७ ॥
कृष्णवर्त्मा समभवत्प्रभुर्वैश्वानरो महान् ।
ततः संशोषयामास पावकः सलिलं बहु ॥ १४८ ॥

समस्तजलधिश्छिद्रमभवद्विस्तृतं नभः। आत्मतेजोभवाः पुण्या आपोऽमृतरसोपमाः
आकाशं छिद्रसम्भूतं वायुराकाशसम्भवः। अथ सङ्घर्षसम्भूतं पावकं चास्य सम्भवम्
दृष्ट्वा पितामहो देवो महाभूतविभावनः। दृष्ट्वा भूतानि भगवाँल्लोकसृष्ट्यर्थमुत्तमम्
ब्रह्मणो जन्मसहितं बहुरूपो ह्यचिन्तयत्। चतुर्युगानां संख्यातं सहस्रं युगपर्यये॥

यत्पृथिव्यां द्विजेन्द्राणां तपसा भावितात्मनाम्।
बहु जन्म विशुद्धात्मा ब्रह्मणो हरिरुच्यते॥ १५३॥
ज्ञानं दृष्ट्वा तु विश्वात्मा योगिनां याति योग्यताम्।
तं योगवन्तं विज्ञाय सम्पूर्णैश्वर्यमुत्तमम्॥ १५४॥

पदे ब्रह्मणि विश्वस्य न्ययोजयत योगवित्। ततस्तस्मिन्महातोये महेशो हरिरच्युतः
जलक्रीडां च विधिवत्स चक्रे सर्वलोककृत्। पद्मं नाभ्युद्भवं चैकं समुत्पादितवांस्ततः

सहस्रवर्णं विरजं भास्कराभं हिरण्मयम्॥ १५७॥
हुताशनज्वलितशिखोज्ज्वलप्रभं समुत्थितं शरदमलार्कतेजसम्।
विराजते कमलमुदारवर्चसं महात्मनस्तनुरुहचारुशैवलम्॥ १५८॥

इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे पद्मप्रादुर्भावो नामैकचत्वारिंशोऽध्यायः।

---

## द्विचत्वारिंशोऽध्यायः

### पद्ममध्याद् ब्रह्मण उत्पत्तिकथनम्।

पुलस्त्य उवाच।

अथ योगवतां श्रेष्ठमसृजद्भूरिवर्चसम्। स्रष्टारं सर्वलोकानां ब्रह्माणं सर्वतोमुखम्॥
तस्मिन्हिरण्मये पद्मे बहुयोजनविस्तृते। सर्वतेजोगुणमये पार्थिवैर्लक्षणैर्वृते॥ २॥
तच्च पद्मं पुराभूतं पृथिवीरूपमुत्तमम्। नारायणसमुद्भूतं प्रवदन्ति महर्षयः॥ ३॥

यत्पद्मं सा रसा देवी पृथिवी परिकथ्यते।

ये पद्मकेशरा मुख्यास्तान्दिव्यान्पर्वतान्विदुः ॥ ४ ॥
हिमवन्तं च नीलं च मेरुं निषधमेवच । कैलासं शृङ्गवन्तं च तथाद्रिं गन्धमादनम् ।
पुण्यं त्रिशिखरं चैव कान्तं मन्दरमेवच । उदारं पिञ्जरं चैव विन्ध्यमस्तं च पर्वतम् ॥
एत एव गणानां च सिद्धानां च महात्मनाम् ।
आश्रयाः पुण्यशीलानां सर्वकामफलप्रदाः ॥ ७ ॥
एतेषामन्तरे द्वीपो जम्बूद्वीप इतिस्मृतः । जम्बूद्वीपस्य संस्थानं यज्ञिया यत्र च क्रियाः
तेभ्योयद्द्रवते तोयं दिव्यामृतरसोपमम् । दिव्यतीर्थशताधाराः सरस्यः सर्वतःस्मृताः
यान्येतानीह पद्मस्य केसराणि समन्ततः । असंख्येयाः पृथिव्यां ते विविधाश्चैवपर्वताः
यानि पर्णानि पद्मस्य भूरि पूर्वाणिपार्थिव । ते दुर्गमाःशलचिताश्म्लेच्छदेशाःप्रकीर्तिताः
यान्यधोभागपत्राणि तानि वासास्तु भागशः ।
दैत्यानामसुराणां च पन्नगानां च पार्थिव ॥ १२ ॥
तेषां मध्येऽन्तरं यत्तु तद्रसातलसंज्ञितम् । महापातककर्माणो मज्जन्ते यत्र मानवाः ॥
पद्मस्य चान्तरे पद्म एकार्णवगता मही । चतुर्दिशासु सङ्ख्याताश्चत्वारः सलिलाकराः
एवंनारायणस्यार्थे मही पुष्करसम्भवा । प्रादुर्भावोऽप्ययं तस्मान्नाम्ना पुष्करसंज्ञितः
एतस्मात्कारणाद्यज्ञे पुराणैः परमर्षिभिः । यज्ञियैर्वेददृष्टान्तैर्यज्ञैर्यूपचितिः कृता ॥१६॥
एवं भगवता तेन विश्वं व्याप्यधराचिता । पर्वतानां नदीनां च रचना चैव निर्मिता ॥
विश्वस्य यश्चाप्रतिमप्रभावः प्रभाकराभो वरुणोऽमितद्युतिः ।
शनैः स्वयम्भूर्व्यसृजत्सुषुप्तं जगन्मयः पद्मनिधिं महार्णवे ॥ १८ ॥
विघ्नस्तपसि सम्भूतो मधुर्नाम महासुरः । तेनैव च सहोद्भूतो ह्यसुरो नाम कैटभः ॥
तौरजस्तमसोर्भूतौ सम्भूतौ तामसौ गणौ । एकार्णवं जगत्सर्वं क्षोभयेतां महाबलौ
दिव्यरक्ताम्बरधरौ श्वेतदीप्तोग्रदंष्ट्रिणौ । किरीटमुकुटोदग्रौकेयूरवलयोज्ज्वलौ ॥२१॥
महाविवृत्तताम्राक्षौ पीनोरस्कौ महाभुजौ । महागिरेः संहननौ जङ्गमाविवपर्वतौ ॥
नवमेघप्रतीकाशावादित्यप्रतिमाननौ विपुलाभोगकेयूरकराभ्यामतिभीषणौ ॥ २३ ॥
पादसञ्चारविन्यासैर्विक्षपन्ताविवार्णवम् । कम्पयन्तौ हरिमिव शयानं मधुसूदनम् ॥

तौ तत्र विचरन्तौ तु पुष्करे विश्वतोमुखौ। योगिनां श्रेष्ठमत्यन्तं दीप्तं ददृशतुस्तदा

नारायणं समाज्ञातं सृजन्तमखिलाः प्रजाः।
दैवतानि च विश्वानि मानसांश्च सुतानृषीन् ॥ २६ ॥

ततस्तावूचतुस्तत्र ब्रह्माणमसुरोत्तमौ। दुष्टौ युयुत्सू सङ्क्रुद्धौ क्रोधव्याकुलितेक्षणौ

कस्त्वंपुष्करमध्यस्थः सितोष्णीषश्चतुर्भुजः। आवामगणयन्मोहादास्से त्वं विगतस्पृहः

एह्यागच्छावयोर्युद्धं देहि त्वं कमलोद्भव। आवाभ्यां परमेशाभ्यामशक्तःस्थातुमर्णवे ॥

तत्रकश्च भवेत्तुभ्यं येन चात्रनियोजितः। कः स्रष्टा कश्च ते गोप्ता केन नाम्नाभिधीयते

ब्रह्मोवाच।

ईश्वरःप्रोच्यते लोकेविष्णुश्चानन्तशक्तिधृत्। तत्सकाशात्तुजातं मां स्रष्टारमवगच्छतम्

मधुकैटभावूचतुः।

नावयोःपरमं लोके किंचिदस्तिमहामुने। आवाभ्यां छाद्यते विश्वं तमसा रजसा च वै

रजस्तमोमयावावामृषीणामतिलङ्घिनौ। धर्मशीलं छादयन्तौ नाशकौ सर्वदेहिनाम् ॥

आवाभ्यां युज्यते लोको दुस्तराभ्यां युगे युगे।
आवामर्थश्च कामश्च यज्ञस्सर्वपरिग्रहः ॥ ३४ ॥

सुखंयत्र मदो यत्र यत्र श्रीः कीर्तिरेव च। येषांयत्काङ्क्षितं किञ्चित्तत्तदावांविचिन्तय

ब्रह्मोवाच।

आवाभ्यांसंहतौद्दृष्टा युवां पूर्वंपराजितौ। तं समाधाय गुणिनं सत्वं चास्मिसमाश्रितः

यः परो योगयुक्तात्मा योऽक्षरः स त्वमेव च।
रजसस्तमसश्चैव यः स्रष्टा विश्वसम्भवः ॥ ३७ ॥

ततो भूतानि जायन्ते सात्विकानीतराणि च। स एव युवयोर्नाशं वासुदेवः करिष्यति

स्वपन्नेव ततो देवो बहुयोजनविस्तृतौ। बाहू नारायणो ब्रह्मकृतवानात्ममायया ॥

कृष्यमाणौ ततस्तस्य बाहुभ्यां बाहुशालिनौ।
चेरतुस्तौ विगलितौ शकुनाविव पीवरौ ॥ ४० ॥

ततस्तावाहतुर्गत्वा वासुदेवं सनातनम्। पद्मनाभं हृषीकेशं प्रणिपत्य नतावुभौ ॥ ४१ ॥

जानीवस्त्वां विश्वयोनिं त्वामेकं पुरुषोत्तमम् ।
आवयोश्चैव हेतुं त्वां जानन्तौ बुद्धिकारणम् ॥ ४२ ॥

अमोघदर्शनंसत्यंयतस्त्वांविद्मशश्वतम् । ततस्त्वामभितो देवकाङ्क्षावःप्रसमीक्षितुम्
अमोघदर्शनोऽसि त्वं नमस्ते समितिञ्जय । तमिच्छावोवरं देव त्वया हितमरिन्दम ॥

श्रीभगवानुवाच ।

किमर्थंमामनुब्रूथ युवामसुरसत्तमौ । गतायुष्कौ युवां भूयस्त्वहो जीवितुमिच्छथः ॥

मधुकैटभावूचतुः ।

यस्मिन्नकश्चिन्मृतवान्देव तस्मिन्वधं प्रभो । इच्छावः पुत्रतां चैव भवतः सुमहातपः

श्रीभगवानुवाच ।

युवयोर्बाढमेतत्स्याद्भविष्ये कलिसम्भवे । भविष्यथो न सन्देहः सत्यमेतद्ब्रवीमि वाम्

पुलस्त्य उवाच ।

वरं प्रदायाथ महासुराभ्यां सनातनो विश्वधरः सुरोत्तमः ।
रजस्तमोजौ तु तदाञ्जनोपमौ ममर्दतावूरुतलेऽमरप्रभुः ॥ ४८ ॥
स्थित्वा तस्मिंस्तु कमले ब्रह्मा ब्रह्मविदांवरः ।
ऊर्ध्ववाहुर्महातेजास्तपोघोरं समाश्रितः ॥ ४६ ॥

प्रज्वलन्निव तेजोभिर्भाभिःस्वाभिस्तमोनुदः । बभासे स तुधर्मात्मासहस्रांशुरिवांशुभिः
अथान्यद्रूपमास्थाय प्रभुर्नारायणोऽव्ययः । आजगाम महातेजा योगाचार्यो महायशाः
साङ्ख्याचार्यश्च मतिमान्कपिलो ब्रह्मणांवरः । उभावपि महात्मानौ पूजितौतत्रतत्परौ
तौप्राप्तावूचतुस्तत्र ब्रह्माणममितौजसम् । परावरविशेषज्ञौ पूजितौ च महर्षिभिः ॥
ब्रह्मसम्परिवेद्यन्ते विशालं जगदास्थितौ । ग्रामणीस्सर्वभूतानां ब्रह्मा त्रैलोक्यपूजितः
तयोस्तद्वचनं श्रुत्वा विबोध्य गतयोः परम् । त्रीनिमान्कृतवाँल्लोकान्यथेयं ब्रह्मणःश्रुतिः
पुत्रं स्वसम्भवं चैकं समुत्पादितवान्भुवम् । तदाग्रे चागतस्तस्य ब्रह्ममानससम्भवः ॥

उत्पन्नमात्रो ब्रह्माणमुक्तवान्मानसःसुतः ।
किंकुर्मस्तव साहाय्यं ब्रवीतु भगवानिति ॥ ५७ ॥

ब्रह्मोवाच ।

यदेष कपिलो नाम ब्रह्मनारायणस्तथा । वदतो भवतस्त्वं तु तत्कुरुष्व महामते ॥
ब्रह्मणा स तथोक्तस्तौ प्राहभूप समुत्थितः । शुश्रूषुरस्मि युवयोः किंकरोमि कृताञ्जलिः

श्रीभगवानुवाच ।

यत्सत्यमक्षरं ब्रह्म अष्टादशविधं च तत् । यत्सत्यममृतं तत्तु परंपदमनुस्मर ॥ ६० ॥
एतद्वचो निशम्यैवं स ययौ दिशमुत्तराम् । गत्वा च तत्र स ब्रह्म अगमज्ज्ञानचक्षुषा ॥
ततो ब्रह्मा भुवर्नामद्वितीयमसृजत्प्रभुः । सङ्कल्पयित्वा मनसा तमेव च महामना ॥
ततः सोऽप्यब्रवीद्वाक्यं किंकरोमिपितामह । पितामहसमाज्ञातो ब्रह्माणं समुपस्थितः
ब्राह्मणस्यामृतरसोऽनुभूतस्तेन वै ततः । प्राप्तः स परमं स्थानं सतयोः पार्श्वमागतः

तस्मिन्नपि गते सोऽथ तृतीयमसृजत्प्रभुः ।
मोक्षप्रवृत्तिकुशलं सुवर्नामयुतं प्रभुः ॥ ६५ ॥

सोऽपितं धर्ममास्थाय तयोरेवागमद्गतिम् । एवं पुत्रास्त्रयोऽप्येतेगताःशम्भोर्महात्मनः
तान्गृहीत्वा सुतांस्तस्य तौगतावूर्जितां गतिम् । नारायणश्च भगवान्कपिलश्च यतीश्वरः
यं कालं ते गता ब्रह्म ब्रह्मा तं कालमेवच । तपोघोरतरं भूयः संश्रितः परमं पदम् ॥
न च शक्तस्ततो ब्रह्मा प्रभुरेकस्तपश्चरन् । शरीरार्धात्ततो भार्यामुत्पादयति तच्छुभाम्
आत्मनः सदृशान्पुत्रानसृजद्वै पितामहः । विश्वेप्रजानां पतयो येभ्यो लोकाविनिःसृताः

विश्वेशं प्रथमं तावन्महात्मातपसात्मजम् ।
सर्वत्र संहतं पुण्यं नाम्ना धर्मं स सृष्टवान् ॥ ७१

दक्षं मरीचिमत्रिं च पुलस्त्यं पुलहंक्रतुम् । वसिष्ठंगौतमं चैव भृगुमङ्गिरसं मुनिम् ॥
अत्यद्भुतास्स्वकृत्येन ज्ञेयास्तेतु महर्षयः । त्रयोदशगुणारम्भा ये वंशास्तु महर्षिणाम् ॥
अदितिर्दितिर्दनुः काला अनायुः सिंहिकाखसा । प्राची क्रोधाचसुरसाविनताकद्रूरेवच
दक्षस्यापत्यमेतद्वै कन्यद्वादशपार्थिव । नक्षत्राणि च चन्द्रस्यविंशतिस्सप्त चोर्जिताः ॥
मरीचेः कश्यपः पुत्रस्तपसा निर्मितः किल । तस्मै द्वादशकन्याश्च दक्षस्ताश्चान्वमन्यत
नक्षत्राणि च सोमाय तथैवं दत्तवानृषिः । रोहिण्यादीनि सर्वाणि पुण्यानि कुरुनन्दनः

तथैव दशधर्माय दत्ताश्चापिमनोरमाः। लक्ष्मीस्सरस्वती सन्ध्याविश्वेशा च महायशाः
देवी सरस्वती चैव ब्रह्मणा निर्मिताः पुरा ॥ ७८ ॥
एताः पञ्चवरिष्ठा वै सुरश्रेष्ठाय पार्थिव । दत्ता धर्माय भद्रं ते ब्रह्मणा दृष्टकर्मणा ॥
यारूपार्धवती पत्नी ब्रह्मणः कामरूपिणी । सुरभिः सहसा भूत्वा ब्रह्माणं समुपस्थिता
ततस्तामगमद्ब्रह्मा मैथुने लोकपूजितः । लोकसर्जनहेतुज्ञो गवामर्थाय सत्तम ॥ ८१ ॥
जज्ञे चैकादश सुतान्विपुलान्धर्मसंज्ञिताम् । रक्तसंध्याभ्रसङ्काशान्महतस्तिग्मतेजसः ॥
ते रुदन्तो द्रवन्तश्च गतवन्तः पितामहम् । रोदनाद्द्रवणाच्चैव रुद्रा एवेति तेस्मृताः ॥
निर्ऋतिश्चैव सन्ध्यश्च तृतीयश्चाप्ययोनिजः ।
मृगव्याधः कपर्दी च महाविश्वेश्वरश्च यः ॥ ८४ ॥
अहिर्बुध्न्यश्च भगवान्कपाली चैव पिङ्गलः । सेनानाश्च महातेजा रुद्राश्चैकादशस्मृताः
तस्यामेव सुरभ्यां च गावोजाताः सुराश्चये । अजश्चैव तु हंसश्च तथैवनृपसत्तम ॥
ओषध्यः प्रवरायाश्च सुरभ्यास्तास्समुत्थिताः ।
धर्माल्लक्ष्मीस्तथा कामं साध्यान्साध्या व्यजायत ॥ ८७ ॥
भवं च प्रभवंच व कृशाश्वंसुवहं तथा । अरुणं वरुणंचैव विश्वामित्रचलध्रुवौ ॥ ८८ ॥
हविष्मन्तं तनूजं च विधानाभिमतावपि । वत्सरं चैव भूतिं च सर्वासुरनिषूदनम् ॥
सुपर्वाणं वृहत्कान्तिं महालोकनमस्कृतम् । वासवानुगता देवी जनयामास वै सुरान्
धरं वै प्रथमं देवं द्वितीयं ध्रुवमव्ययम् । विश्वावसुं तृतीयं च चतुर्थं सोममीश्वरम् ॥
ततोऽनुरूपमायं च यमं तस्मादनन्तरम् । सप्तमं च तथा वायुमष्टमं निर्ऋतिंतथा ॥
धर्मस्यापत्यमेतद्वै सुरभ्यां तदजायत । विश्वेदेवाश्च विश्वायां धर्माज्जाता इतिस्मृता
दक्षश्चैव महाबाहुः पुष्करस्तम एव च । चाक्षुषश्च ततोऽत्रिश्च तथाभद्रमहोरगौ ॥
विश्वान्तकवसुर्बालो निकुम्भश्च महायशाः । रुरुदुश्चातिसिद्धौजा भास्करप्रमितद्युतिः
विश्वान्देवान्देवमाता विश्वेषां जनयत्सुतान् ।
मरुत्वती मरुत्वतो देवानजनयत्सुतान् ॥ ९६ ॥
अग्निश्चक्षूरविर्ज्योतिः सावित्री मित्रमेव च । अमरं शरवृष्टिं च सुकर्षं च महत्तरम् ॥

विराजं चैव राजं च विश्वायुं सुमतिं तथा। अश्वगं चित्ररश्मिं च तथा च निषधं नृपम्
भूय एवं चात्मविधिं चारित्रं पादमात्रगम्।
बृहन्तं वै बृहद्रूपं तथा चैव सनाभिगम् ॥ ६६ ॥
मरुत्वती प्रजा जज्ञे ज्येष्ठान्तं मरुतां गणम्। अदितिः कश्यपाज्जज्ञे आदित्यान्द्वादशैवहि
इन्द्रो विष्णुर्भगस्त्वष्टा वरुणोंऽशोऽर्यमा रविः।
पूषा मित्रश्च वरदो धाता पर्जन्य एव हि ॥ १०१ ॥
इत्येते द्वादशादित्यावरिष्ठास्त्रिदिवौकसाम्। आदित्यस्यसरस्वत्यां जज्ञाते द्वौसुतौवरौ
तपःश्रेष्ठौ गुणश्रेष्ठौ त्रिदिवस्यातिसंमतौ। दनुस्तु दानवाञ्जज्ञे दितिर्दैत्यान्व्यजायत ॥
काला तु कालकेयांस्तानसुरान्राक्षसांस्तथा। अनायुषायास्तनया व्याधयश्च महाबलाः
सिंहिका ग्रहमाता च गन्धर्वजननी मुनिः। प्राचीत्वप्सरसां माता पुण्यानां भारतेतरा
क्रोधाद्याः सर्वभूतानि पिशाचायाश्च पार्थिव।
जज्ञे यक्षगणांश्चैव राक्षसांश्च विशांपते ॥ १०६ ॥
चतुष्पदानि सत्त्वानि एता गाश्चैव सौरभी। पुराणपुरुषश्चैव मायां विष्णुर्हरिः प्रभुः
कथितस्तेऽनुपूर्वेण संस्तुतश्च महर्षिभिः ॥ १०८ ॥
यश्चेदमग्र्यं शृणुयात्पुराणं सदा नरः पर्वसु चेत्पठेत।
अवाप्य लोकं स हि वीतरागः परत्र च स्वर्गफलानि भुङ्क्ते ॥ १०६ ॥
चक्षुषामनसा वाचाकर्मणा च चतुर्विधम्। प्रसादयति यः कृष्णं तस्य कृष्णः प्रसीदति
राज्यं च लभते राजा निर्धनश्चोत्तमं धनम्।
क्षीणायुर्लभते चायुः पुत्रकामोऽथ सन्ततिम् ॥ १११ ॥
यज्ञार्थिनस्तथा कामांस्तपांसि विविधानि च।
यं यं कामयते कामं तं तं लोकेश्वराल्लभेत् ॥ ११२ ॥
सर्वं विहाय य इमं पठेद्वै पौष्करं हरेः। प्रादुर्भावं नरश्रेष्ठ न तस्य ह्यशुभं भवेत् ॥११३
एष पौष्करको नाम प्रादुर्भावो महात्मनः। कीर्तितस्तु महाराज व्यासश्रुतिनिदर्शनात्
विष्णुत्वं शृणु मे विष्णोर्हरित्वं च कृतेयुगे। वैकुण्ठत्वं च देवेषु कृष्णत्वं मानुषेषु च

ईश्वरस्य हितस्यैषा कर्मणां गहना गतिः । साम्प्रतं भूतभव्यं च शृणु राजन्यथातथम् ॥
अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान्प्रभुः ।
नारायणो ह्यनन्तात्मा प्रभवोऽव्यय एव च ॥ ११७ ॥
एष नारायणो भूत्वा हरिरासीत्सनातनः । ब्रह्मा वायुश्च सोमश्च धर्मः शक्रो बृहस्पतिः
अदितेरपि पुत्रत्वमेत्यजः कुरुनन्दन । एष विष्णुरिति ख्यात इन्द्रस्यावरजो विभुः ॥
प्रसादनं तस्य विभोरदित्याः पुत्रकारणम् । वधार्थं सुरशत्रूणां दैत्यदानवरक्षसाम् ॥
प्रधानात्मा पुरा ह्येष ब्रह्माणमसृजत्प्रभुः । ससर्जाथ सुरान्कल्पे ब्रह्माणं च प्रजापतीन्
असृजन्मानसांस्तत्र ब्रह्मवंशाननुत्तमान् । तेभ्योऽभवन्महात्मभ्यः परं ब्रह्म सनातनम् ॥
एतदाश्चर्यभूतस्य विष्णोः कर्मानुकीर्तितम् ।
कीर्त्तनीयस्य लोकेषु कीर्त्यमानं निबोध मे ॥ १२३ ॥
वृत्ते वृत्रवधे भीष्म वर्तमाने कृते युगे । आसीत्त्रैलोक्यविख्यातः सङ्ग्रामस्तारकामयः
यत्र ते दानवा घोराः सर्वे सङ्ग्रामदुर्जयाः । घ्नन्ति देवासुरान्सर्वान्सयक्षोरगराक्षसान्
ते वध्यमाना विमुखाश्छिन्नप्रहरणा रणे । त्रातारं मनसा जग्मुर्देवं नारायणं प्रभुम् ॥
एतस्मिन्नन्तरे मेघा निर्वाणाङ्गारवर्चसः । सार्कचन्द्रग्रहगणं छादयन्तो नभस्तलम् ॥
चण्डविद्युद्गणोपेता घोरनिर्ह्रादकारिणः । अन्योन्यवेगाभिहताः प्रववुः सप्तमारुताः ॥
दीप्ततोयाः सनिर्घातैःसहवज्रानलानिलैः । रवेस्सुघोरैरुत्पातैर्दह्यमानमिवाम्बरम् ॥१२६
पेतुरुल्कासहस्राणि निपेतुः खचराण्यपि ।
दैवानि च विमानानि प्रपतन्त्युत्पतन्ति च ॥ १३० ॥
चतुर्युगान्तसमये लोकानां यद्भयं भवेत् । अरूपवति रूपाणि तस्मिन्नुत्पातलक्षणे ॥
तस्माद्दुष्प्रथितं सर्वं न प्राज्ञायत किंचन । तिमिरौघपरिक्षिप्ता न रेजुश्च दिशो दश ॥
विवेश रूपिणी काली कालमेघावगुण्ठिता । द्यौर्नभात्यभिभूतार्का घोरेण तमसा वृता
तान्घनौघान्सतिमिरान्दोर्भ्यामाच्छिद्य स प्रभुः । वपुःस्वंदर्शयामासदिव्यंकृष्णवपुर्हरिः
बलाहकाञ्जननिभं बलाहकतनूरुहम् । तेजसा वपुषा चैव कृष्णं कृष्णमिवाचलम्॥१३५॥
दीप्तं पीताम्बरधरं तप्तकाञ्चनभूषणम् ।

धूम्रान्धकारवपुषं युगान्ताग्निमिवोत्थितम् ॥ १३६ ॥
वृत्तद्विगुणपीनांसं किरीटाच्छन्नमूर्धजम् । बभौ चामीकरप्रख्यैरायुधैरुपशोभितम् ॥
चन्द्रार्ककिरणोद्योतं गिरिकूटमिवोच्छ्रितम् ।
नन्दकानन्दितकरं कौस्तुभोद्भासितोरसम् ॥ १३८ ॥
शक्तिचित्रफलोदग्रं शङ्खचक्रगदाधरम् । विष्णुशैलं क्षमाशीलं श्रीवत्सं शार्ङ्गपाणिनम् ॥
त्रिदशोदारफलदं स्वर्गस्त्रीचारुवल्लभम् । सर्वलोकमनः कान्तं सर्वसत्वमनोहरम्॥१४०॥
मायाविशालविटपं तोयदौघसमप्रभम् । विद्याहङ्कारमानाढ्यमहाभूतप्ररोहणम् ॥१४१॥
विशेषपत्रैर्निचितंग्रहनक्षत्रपुष्पितम् । दैत्यलोकमहास्कन्धं मर्त्यलोकप्रकाशितम्॥१४२॥
सागराकारनिर्ह्रादं रसातलतलाश्रयम् । नागेन्द्रपाशैर्विततं पक्षिजन्तुसमन्वितम्॥१४३॥
शीलानाहार्यगन्धाढ्यं सर्वलोकमहाद्रुमम् । अव्यक्तानन्दसलिलं व्यक्ताहङ्कारफेनिलम् ॥
महाभूतकरौघौघं ग्रहनक्षत्रबुद्बुदम् । विमानवाहनैर्व्याप्तं तोयदाडम्बराकुलम् ॥१४५॥
जन्तुमत्स्यगणाकीर्णं शैलशङ्खकुलैर्युतम् । त्रैगुण्यविषयावर्तं सर्वलोकतिमिङ्गिलम् ॥
वीरवृक्षलतागुल्मं भुजगोत्सृष्टशैवलम् । द्वादशार्कमहाद्वीपं रुद्रैकादशपत्तनम् ॥ १४७ ॥
वस्वष्टपर्वतोपेतंत्रैलोक्याम्भोमहोदधिम् । सन्ध्यासन्ध्योर्मिसलिलमापूर्णानिलशोभितम्
दैत्ययक्षगणग्रामं रक्षोगणझषाकुलम् । पितामहमहावीर्यं स्वर्गस्त्रीरत्नसङ्कुलम् ॥१४६॥
श्रीकीर्तिकान्तिलक्ष्मोभिर्नदीभिश्च समाकुलम् । कालयोगमहावर्षप्रलयोत्पत्तिवेगितम्
सत्संयोगमहापारं नारायणमहार्णवम् । देवातिदेवं वरदं भक्तानां भक्तवत्सलम्॥१५१॥
अनुग्रहकरं देवं प्रशान्तिकरणं शुभम् । हर्यश्वरथसंयुक्तसुपर्णध्वजशोभिते ॥ १५२ ॥
चन्द्रार्कचक्ररचित उदाराक्षवृतान्तरे । अनन्तरश्मिसंयुक्ते दुर्दर्शे मेरुकूबरे ॥ १५३ ॥
तारकाचित्रकुसुमे ग्रहनक्षत्रवन्धुरे । भयेष्वभयदे व्योम्नि देवदैत्यापराजिते ॥ १५४ ॥
हर्यश्वरथसंयुक्तमुक्ताशोभसमन्वितम् । ददृशुस्ते स्थितं देवं दिव्यलोकमयेरथे ॥१५५॥
ते कृताञ्जलयः सर्वे देवा इन्द्रपुरोगमाः । जयशब्दं पुरस्कृत्य शरण्यं शरणं गताः॥१५६॥
एतेषां च गिरः श्रुत्वा स विष्णुर्देवदैवतः । मनश्चक्रे विनाशाय दानवानां महामृधे ॥
आकाशे तु स्थितो विष्णुरुत्तमं वपुराश्रितः । उवाच देवताः सर्वाः सप्रतिज्ञमिदं वचः

विष्णुरुवाच ।

शान्तिं व्रजत भद्रं वो माभैष्ट मरुतां गणाः ।
जिता मे दानवाः सर्वे त्रैलोक्यं परिगृह्यताम् ॥ १५९ ॥

पुलस्त्य उवाच ।

ततोऽस्य सत्यसन्धस्य विष्णोर्वाक्येन तोषिताः ।
देवाः प्रीतिं परां जग्मुः प्राश्यामृतमिवोत्तमम् ॥ १६० ॥
ततस्तमश्च संहृत्य विनेशुश्च बलाहकाः । प्रववुश्च शिवा वाताः प्रसन्नाश्च दिशो दश ॥
शुद्धप्रायाणिज्योतींषिसोमं चक्रुःप्रदक्षिणम् । न विग्रहंग्रहाश्चक्रुः प्रसन्नाश्चापिसिन्धवः
विरजा अभवन्मार्गा लोकाः स्वर्गादयस्त्रयः । यथार्थमूहुस्सरितश्चुक्षुभे न तथार्णवः ॥
आसञ्छुभानीन्द्रियाणि नराणामन्तरात्मसु । महर्षयो वीतशोका वेदानुच्चैरधीयत ॥
यज्ञेषु च हविः पाकं शिवमाप च पावकः । प्रवृत्तधर्मसंवृत्ता लोका मुदितमानसाः ॥
विष्णोः सत्यप्रतिज्ञस्य श्रुत्वारिनिधना गिरः ।
ततोऽभयं विष्णुमुखाच्छ्रुत्वा दैतेयदानवाः ॥ १६६ ॥
उद्योगं विपुलं चक्रुर्युद्धाय विजयाय च । मयस्तु काञ्चनमयं त्रिनल्वान्तरमव्ययम् ॥
चतुश्चक्रं सुविपुलं सुकल्पितमहायुधम् । किङ्किणीजालनिर्घोषं द्वीपिचर्मपरिष्कृतम् ॥
रुचिरं रश्मिजालैश्च हैमजालैश्च शोभितम् ।
ईहामृगगणाकीर्णं पक्षिसङ्घविराजितम् ॥ १६९ ॥
दिव्यास्त्रशस्त्ररुचिरं पयोधरनिनादितम् । स्वक्षं रथवरोदारं सूपस्थं गगनोपमम् ॥१७०
गदापरिघसम्पूर्णं मूर्तिमन्तमिवार्णवम् । हेमकेयूरवलयं चन्द्रमण्डलकूबरम् ॥ १७१ ॥
सपताकं ध्वजोपेतं सादित्यमिव मन्दरम् । गजेन्द्राभोगवपुषं क्वचित्केसरवर्चसम् ॥
युक्तमृक्षसहस्रेण सुधाराम्बुदनादितम् । दीप्तमाकाशगं दिव्यं रथं पररथारुजम् ॥१७३
अध्यतिष्ठद्रणाकाङ्क्षी मेरुं दीप्तमिवांशुमान् ।
तारस्तु क्रोशविस्तारमायामे च तथाविधम् ॥ १७४ ॥
शैलकूबरसङ्काशं नीलाञ्जनचयोपमम् । काललोहस्यरत्नानां समूहाबद्धकूबरम् ॥ १७५॥

तिमिरोद्गारकिरणं गर्जन्तमिवतोयदम्। लोहजालेन महता सगवाक्षेण दंशितम्॥ आयसैः परिघैः पूर्णंक्षेपणीयैश्च मुद्गरैः। प्रासैःपाशैश्च विततैरसंयुक्तैश्च कण्टकैः॥ शोभितं त्रासनीयश्च तोमरैः सपरश्वधैः। उद्यतं द्विषतां हेतोर्द्वितीयमिव मन्दरम्॥ युक्तं खरसहस्रेण सोऽध्यारोहद्रथोत्तमम्। विरोचनस्तु सङ्क्रुद्धो गदापाणिरवस्थितः प्रमुखे तस्य सैन्यस्य दीप्तशृङ्ग इवाचलः। युक्तं हयसहस्रेण हयग्रीवस्तु दानवः॥ व्यूहितं दानवव्यूहं परिचक्राम वीर्यवान्। विप्रचित्तिसुतः श्वेतः श्वेतकुण्डलभूषणः॥ स्यन्दनं वाहयामास परानीकस्य मर्दनः। व्यायतं किष्कुसाहस्रं धनुर्विस्फारयन्महत् स चाहवमुखे तस्थौ स प्ररोह इवाचलः। खरस्तु विकिरन्क्रोधान्नेत्राभ्यां रोषजं जलम्॥

स्फुरद्दन्तोष्ठनयनः सङ्ग्रामं सोऽभ्यकाङ्क्षत।
त्वष्टा त्वष्टादशहयं यानमास्थाय दानवः॥ १८४॥
श्वेतमेघप्रतीकाशो युद्धायाभिमुखः स्थितः।
अरिष्टो बलिपुत्रश्च वरिष्ठो दुर्धरायुधः॥ १८५॥
युद्धायाभिमुखस्तस्थौ धराधरविकम्पनः।
किशोरस्त्वतिसंहर्षात्किशोर इव चोदितः॥ १८६॥

अभवद्दैत्यमध्ये स ग्रहमध्ये यथा रविः। लम्बस्तु नवमेघाभः प्रलम्बाम्बरभूषणः॥ दैत्यव्यूहगतो भाति सनीहार इवांशुमान्। वसुन्धराभस्तदनु दशनौष्ठेक्षणायुधः॥ हसंस्तिष्ठति दैत्यानां मध्ये क्रूरमहाग्रहः। अन्ये हयगतास्तत्र मत्तेभेन्द्रगताः परे॥ सिंहव्याघ्रगताश्चान्ये वराहर्क्षेषु चापरे। केचित्खरोष्ट्रयातारः केचित्तोयदवाहनाः॥१९०

पत्तयश्चापरे दैत्या भीषणा विकृताननाः।
एकपादास्त्वपादाश्च ननृतुर्युद्धकाङ्क्षिणः॥ १९१॥

आस्फोटयन्तो बहवः स्वनन्तश्च तथापरे। दृप्तशार्दूलनिर्घोषा नेदुर्दानवपुङ्गवाः॥१९२ ते गदापरिघैर्घोरैः शिलामुद्गरपाणयः। बाहुभिः परिघाकारैस्तर्जयन्ति स्म देवताः॥ प्रासैः खड्गैश्च पाशैश्च तोमराङ्कुशपट्टिशैः। चिक्रीडुस्ते शतघ्नीभिः शतधारैश्च मुद्गरैः खड्गैः शूलैश्च शैलैश्च परिघैश्चोद्यतायुधैः। युक्तं बलाहकगणैः सर्वतः संवृतं नभः॥

एवं तद्दानवं सैन्यं सर्वसत्त्वमदोत्कटम् । देवताभिमुखं तस्थौ मेघानीकमिवोदितम् ॥

रेजे च तद्दैत्यसहस्रगाढं वाय्वग्निशैलाम्बुदतोयकल्पम् ।

बलं बलौघाकुलमभ्युदीर्णं युयुत्सयोन्मत्तमिवावभासे ॥ १६७ ॥

श्रुतस्ते दैत्यसैन्यस्य विस्तारः कुरुनन्दन । सुराणामपि सैन्यस्य विस्तरं वैष्णवं शृणु

इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे दैत्यसेनावर्णनं नाम द्विचत्वारिंशत्तमोऽध्यायः ।

---

# त्रिचत्वारिंशत्तमोऽध्यायः

## देवसैन्यानां तारकासुरसैन्यैः सह युद्धवर्णनम् ।

पुलस्त्य उवाच ।

आदित्या वसवोरुद्रा अश्विनौ च महाबलौ ।

सबलाः सानुगाश्चैव समनह्यन्यथाक्रमम् ॥ १ ॥

पुरुहूतश्च पुरतो लोकपालः सहस्रदृक् । ग्रामणीः सर्वदेवानामारुरोह वरद्विपम् ॥ २ ॥

सव्ये चास्य रथः पार्श्वे पक्षिप्रवरकेतनः । सुचारु चक्रचरणो हैमच्छत्रपरिष्कृतः ॥३॥

देवगन्धर्वयक्षौघैरनुयातः सहस्रशः । दीप्तिमद्भिश्च स्वर्गस्थैर्ब्रह्मर्षिभिरभिष्टुतः ॥ ४ ॥

वज्रविस्फारितोद्भूतै विद्युदिन्द्रायुधप्रभैः । युक्तं बलाहकगणैः पर्वतैरिव कामगैः ॥

यमारूढः सभगवान्पर्येति सकलंजगत् । हविर्दानेषु गायन्ति विप्रा मखमुखेस्थिताः ॥

स्वर्गसङ्ग्रामयातेषु देवतूर्यनिनादिषु । सदा यमुपनृत्यन्ति शतशोह्यप्सरोगणाः ॥

केतुना नागराजेन राजमानो यथा रविः । युक्तोहयसहस्रेण मनोमारुतरंहसा ॥ ८ ॥

सम्यग्रथ वरो भाति युक्तो मातलिना तदा । कृत्स्नः परिवृतो मेरुर्भास्करस्येवतेजसा

यमस्तु दण्डमुद्यम्य कालयुक्तं च मुद्गरम् । तस्थौ सुरगणानीके दैत्यानां चैवदर्शयन् ॥

चतुर्भिः सागरैर्युक्तो लेलिहानैश्च पन्नगैः । शङ्खमुक्ताङ्गदधरो बिभ्रत्तोयमयं वपुः ॥११॥

कालपाशान्समाविध्य हयैः शशिकरोपमैः ।

वाय्वीरितजलाकारैः कुर्वंल्लीलाःसहस्रशः ॥ १२ ॥

पाण्डुरोद्धूतवसनः प्रवालरुचिराङ्गदः । मणिश्यामोत्तमवपुर्हारकेणार्चितोदरः ॥ १३ ॥

वरुणः पाशधृन्मध्ये देवानीकस्य तस्थिवान् ।

युद्धवेलामभिलषन्भिन्नवेल इवार्णवः ॥ १४ ॥

यक्षराक्षससैन्येन गुह्यकानां गणैरपि । युक्तश्च शंखपद्माभ्यां निधीनामधिपःप्रभुः ॥

राजराजेश्वरः श्रीमान्गदापाणिरदृश्यत । विमानयोधी धनदो विमाने पुष्पकेस्थितः ॥

स राजराजः शुशुभे यक्षेशो नरवाहनः । ईक्षमाणः स्वसङ्ग्रामं साक्षादिव शिवःस्थितः

पूर्वपक्षे सहस्राक्षः पितृराजश्च दक्षिणे । वरुणः पश्चिमे पक्ष उत्तरे नरवाहनः ॥ १८ ॥

चतुष्पक्षाश्च चत्वारो लोकपाला महाबलाः ।

आत्मदिक्षु चरन्तश्च तस्य देवबलस्य ते ॥ १६ ॥

सूर्यः सप्ताश्वयुक्तेन रथेनानिलगामिना । श्रियाजाज्वल्यमानेन दीप्यमानैश्च रश्मिभिः ॥

उदयास्तमयौ चक्रे मेरुपर्यन्तगामिना । त्रिदिवद्वारचक्रेण तपसा लोकमव्ययम् ॥२१॥

सहस्ररश्मियुक्तेन भ्राजमानेन तेजसा । चचार मध्ये देवानां द्वादशात्मा दिवाकरः ॥

सोमः श्वेतहयो भाति स्यन्दने शीतरश्मिमान् ।

हिमतोयप्रपूर्णाभिर्भाभिराह्लादयञ्जगत् ॥२३ ॥

तमृक्षयोगानुगतं शिशिरांशुं द्विजेश्वरम् । शशच्छायाङ्कितनुं नैशस्य तमसः क्षयम् ॥

ज्योतिषामीश्वरं व्योम्नि रसदं प्रभुमव्ययम् ।

ओषधीनां पवित्राणां निधानममृतस्य च ॥ २५ ॥

जगतः परमं भागं सौम्यं सर्वमयं रसम् । ददृशुर्दानवाः सोमं हिमप्रहरणं स्थितम् ॥

यः प्राणः सर्वभूतानां पञ्चधा भिद्यते नृषु । सप्तस्कन्धगतो लोकांस्त्रीन्दधार चकारच

यमाहुरग्निकर्त्तारं सर्वप्रभवमीश्वरम् । सप्तस्वरगता यस्य योनिर्गीभिरुदीर्यते ॥ २८ ॥

यं वदन्ति चलं भूतं यं वदन्त्यशरीरिणम् । यमाहुराकाशगमं शीघ्रगं शब्दयोनिजम् ॥

स वायुः सर्वभूतायुरुद्धतः स्वेन तेजसा । ववौ प्रव्यथयन्दैत्यान्प्रतिलोमं स तोयदः ॥

मारुतो देवगन्धर्वैर्विद्याधरगणैःसह । चिक्रीड रश्मिभिश्शुभ्रैर्निर्मुक्तैरिव पन्नगैः ॥३१॥

सृजन्तः सर्पपतयस्तीव्रं रोषमयं विषम् । शरभूता विलग्नाश्च चेरुर्व्यात्ताननां दिवि ॥
पर्वताश्च शिलाशृङ्गैः शतशाखैश्च पादपैः । उपतस्थुः सुरगणान्प्रहर्तुं दानवं बलम् ॥
यः स देवो हृषीकेशः पद्मनाभस्त्रिविक्रमः ।
युगान्ते कृष्णवर्मा च विश्वस्य जगतः प्रभुः ॥ ३४ ॥
सर्वयोनिः स मधुहा हव्यभुक्क्रतुसंस्थितः ।
भूम्यम्बुव्योम भूतात्मा श्यामः शान्तिकरोऽरिहा ॥ ३५ ॥
सोमार्काग्निमयं चक्रमुग्रस्योत्तमतेजसम् । अविघ्नममरादीनां चक्रे चक्रगदाधरः ॥३६॥
सव्येनालम्ब्य महतीं सर्वायुधविनाशिनीम् । करेण कालींवपुषा शत्रुकालप्रदां गदाम्
शेषैर्भुजैः प्रदीप्ताभैर्भुजगारिध्वजः प्रभुः । दधारायुधजालानि शार्ङ्गादीनि महाबलः ॥
स कश्यपस्यात्मभवं द्विजं भुजगभोजनम् ।
भुजगेन्द्रेण वदने निविष्टेन विराजितम् ॥ ३९ ॥
अमृतारम्भसंयुक्तं मन्दराद्रिमिवोच्छ्रितम् । देवासुरविमर्देषु बहुशो दृष्टविक्रमम् ॥४०॥
महेन्द्रेणामृतस्यार्थे वज्रेण कृतलक्षणम् । विचित्रपत्रवसनं धातुमन्तमिवाचलम् ॥४१॥
स्फीतक्रोधावलम्बेन शीतांशुसमतेजसा । भोगिभोगावसक्तेन मणिरत्नेन भास्वता ॥
पक्षाभ्यां चारु पत्राभ्यामावृतं दिवि लीलया ।
युगान्ते सेन्द्रचापाभ्यां तोयदाभ्यामिवाम्बरम् ॥ ४३ ॥
नीललोहितपीताभिः पताकाभिरलङ्कृतम् । अरुणावरजं श्रीमानारुह्य समरे प्रभुः ॥
सुवर्णवर्णवपुषं सुपर्णं खेचरोत्तमम् । तमन्वयुः सुरगणा मुनयश्च समाहिताः ॥ ४५ ॥
गीर्भिः परममन्त्राभिस्तुष्टुवुश्च गदाधरम् । तद्वैश्रवणसंश्लिष्टं वैवस्वतपुरःसरम् ॥४६॥
वारिराजपरिक्षिप्तं देवराजविराजितम् । पवनाबद्धनिर्घोषं सम्प्रदीप्तहुताशनम् ॥ ४७ ॥
विष्णोर्जिष्णोः सहिष्णोश्च भ्राजिष्णोस्तेजसा वृतम् ।
बलं बलवदुद्रिक्तं युद्धाय समवर्तत ॥ ४८ ॥
स्वस्त्यस्तु देवेभ्य इति बृहस्पतिरभाषत । स्वस्त्यस्तु दैत्येभ्य इति उशना वाक्यमाददे
ताभ्यां बलाभ्यां संजज्ञे तुमुलो विग्रहस्तथा । सुराणामसुराणां च परस्परजयैषिणाम्

दानवा दैवतैः सार्द्धं नानाप्रहरणोद्यमाः । समीयुर्युध्यमाना वै पर्वता इव पर्वतैः ॥५१॥
तत्सुरासुरसंयुक्तं युद्धमत्यद्भुतं बभौ । धर्माधर्मसमायुक्तं दर्पेण विनयेन च ॥ ५२ ॥
ततो हयैः प्रजवितैर्वारणैश्च प्रचोदितैः । उत्पतद्भिश्च गगने सासिहस्तैः समन्ततः ॥

क्षिप्यमाणैश्च मुसलैः सम्पतद्भिश्च सायकैः ।
चापैर्विस्फार्यमाणैश्च पात्यमानैः सुदारुणैः ॥ ५४ ॥

तद्युद्धमभवद्घोरं देवदानवसंकुलम् । जगतस्त्रासजनं युगसंवर्तकोपमम् ॥ ५५ ॥
स्वहस्तमुक्तैः परिघैर्मुद्गरैश्चैव पर्वतैः । दानवास्समरे जघ्नुर्देवानिन्द्रपुरोगमान् ॥ ५६ ॥
ते वध्यमाना बलिभिर्दानवैर्जितकाशिभिः । विषण्णवदना देवा जग्मुरार्तिंपरां मृधे ॥
ते चास्त्रशूलमथिताः परिघैर्भिन्नमस्तकाः । भिन्नोरस्कादितिसुतैः स्रवद्रक्ता रणे बहु ॥

सूदिताः शरजालैश्च निर्यत्नाश्च शरैः कृताः ।
प्रविष्टा दानवीं मायां न शेकुस्ते विचेष्टितुम् ॥ ५९ ॥

उत्तम्भितमिवाभाति निष्प्राणसदृशाकृति । बलं सुराणामसुरैर्निष्प्रयत्नायुधं कृतम् ॥

दैत्यचापच्युतान्घोरांश्छित्त्वा वज्रेण ताञ्शरान् ।
शक्रो दैत्यबलं घोरं विवेश बहुलोचनः ॥ ६१ ॥

स दैत्यप्रमुखान्सर्वान्हत्वा दैत्यबलं महत् । तामसेनास्त्रजालेन तमोभूतमथाकरोत् ॥

तेऽन्योन्यं नान्वबुध्यन्त दैत्यानां वाहनानि च ।
घोरेण तमसाविष्टाः पुरुहूतस्य तेजसा ॥ ६३ ॥

मायापाशैर्विमुक्तास्तु यत्नवन्तः सुरोत्तमाः । शिरांसिदैत्यसङ्घानां तमोभूतान्यपातयन् ॥
अपध्वस्ताविसंज्ञाश्च तमसानीलवर्चसा । पेतुस्ते दानवास्सद्यश्छिन्नपक्षा इवाद्रयः ॥
तत्राभिभूतदैत्येन्द्रमन्धकारमिवान्तरम् । दानवं देहसदनं तमोभूतमिवाभवत् ॥ ६६ ॥
तथासृजन्महामायां मयस्तां तामसीं दहन् । युगान्तोद्योतजननीं सृष्टामौर्वेण वह्निना ॥

सा ददाह च तां शाक्रीं मायामयविकल्पिताम् ।
दैत्याश्चादित्यवपुषा सद्य उत्तस्थुराहवे ॥ ६८ ॥

मायामौर्वींसमासाद्यदह्यमानादिवौकसः । भेजिरेचन्द्रविषयंशीतांशुसलिलं ह्रदम् ॥६९॥

तेदह्यमानाऔर्वेणवह्निनानष्टचेतसः । शशंसुर्वज्रिणंदेवाः सन्तप्ताः शरणैषिणः ॥ ७० ॥
सन्तप्ते मायया सैन्ये हन्यमाने च दानवैः । चोदितो देवराजेन वरुणो वाक्यमब्रवीत्

वरुण उवाच ।

पुरा ब्रह्मार्षिजः शक्रतपस्तेपे सुदारुणम् । उर्वः स पूर्वं तेजस्वी सदृशो ब्रह्मणोगुणैः
तं तपन्तमिवादित्यं तपसा जगदव्ययम् । उपतस्थुर्मुनिगणा देवा देवर्षिभिः सह ॥७३॥
हिरण्यकशिपुश्चैव दानवो दानवेश्वरः । ऋषिं विज्ञापयामास पुरा परमतेजसम्॥७४॥
ऊचुर्ब्रह्मर्षयस्ते तु वचनं धर्मसंहितम् । ऋषिवंशेषु भगवंश्छिन्नमूलमिदं कुलम् ॥७५॥

एकस्त्वमनपत्यश्च गोत्रायान्यो न विद्यते ।
कौमारं व्रतमास्थाय क्लेशमेवानुवर्तसे ॥ ७६ ॥
बहूनि विप्र गोत्राणि मुनीनां भावितात्मनाम् ।
एकदेहानि तिष्ठन्ति विविक्तानि विना प्रजाः ॥ ७७ ॥
एवम्भूतेषु सर्वेषु पुत्रैर्मे नास्ति कारणम् ।
भवांश्च तापसश्रेष्ठः प्रजापतिसमद्युतिः ॥ ७८ ॥

तत्प्रवर्तस्व वंशाय वर्धयात्मानमात्मना । समाधत्स्वोर्जितं तेजोद्वितीयां कुरु वै तनुम्
स एवमुक्तो मुनिभिर्मुनिर्मनसि ताडितः । जगर्ह तानृषिगणान्वचनं चेदमब्रवीत् ॥
यथा हि विहितोधर्मो मुनीनांशाश्वतःपुरा । आर्षं हि केवलं कर्मवन्यमूलफलाशिनः ॥
ब्रह्मयोनौ प्रसूतस्य ब्राह्मणस्यात्मवर्तिनः । ब्रह्मचर्यं सुचरितं ब्रह्माणमपि चालयेत् ॥
जनानांवृत्तयस्तिस्रो येगृहाश्रमवासिनः । अस्माकं च वने वृत्तिर्वनाश्रमनिवासिनाम् ॥
अब्भक्षा वायुभक्षाश्च दन्तोलूखलिनस्तथा । अश्मकुट्टा दयो यत्र पञ्चाग्नितपसश्च ये ॥

एते तपसि तिष्ठन्तो व्रतैरपि सुदुश्चरैः ।
ब्रह्मचर्यं पुरस्कृत्य प्रार्थयन्ति परां गतिम् ॥ ८५ ॥

ब्रह्मचर्याद्ब्राह्मणस्य ब्राह्मणत्वं विधीयते । एवमाहुः परेलोके ब्रह्मचर्यविदो जनाः ॥
ब्रह्मचर्ये स्थितो धर्मो ब्रह्मचर्ये स्थितं तपः । ये स्थिता ब्रह्मचर्येतुब्राह्मणादिवितेस्थिताः

नास्ति योगं विनासिद्धिर्नास्ति योगं विना यशः ।

नास्ति लोके यशो मूलं ब्रह्मचर्यात्परन्तप ॥ ८८ ॥
यो निगृह्येन्द्रियग्रामं भूतग्रामं च पञ्चकम् । ब्रह्मचर्यं समाधत्ते किमतः परमं तपः ॥
अयोगकेशधरणमसङ्कल्पव्रतक्रिया । अब्रह्मचर्या चर्या च त्रयं स्याद्दम्भसंज्ञितम् ॥
क्व दाराः क्व च संयोगः क्व च भावविपर्ययः । नन्वियं ब्रह्मणा सृष्टा मनसा मानसीप्रजा
यद्यस्ति तपसो वीर्यं युष्माकं विजितात्मनाम् ।
सृजध्वं मानसान्पुत्रान्प्राजापत्येन कर्मणा ॥ ९२ ॥
मनसा निर्मिता योनिराधातव्या तपस्विभिः । नोदारयोगं वीजं चव्रतमुक्तंतपस्विनाम्
यदिदं लुप्तधर्माख्यं युष्माभिरिह निर्भयैः । व्याहृतं सद्भिरत्यर्थमसद्भिरिव संमतम् ॥
वपुर्दीप्तान्तरात्मानमेष कृत्वा मनोमयम् । दारयोगं विनास्रक्ष्ये पुत्रमात्मतनूरुहम् ॥
एवमात्मानमात्मामे द्वितीयं जनयिष्यति । प्राजापत्येन विधिना दिधक्षन्तमिव प्रजाः

वरुण उवाच ।

उर्वस्तु तपसा विष्टो निवेश्योरुं हुताशने । ममन्थैकेन दर्भेण पुत्रस्य प्रसवारणिम् ॥
तस्योरुं सहसा भित्त्वा वरोऽसौ ह्यग्निरुत्थितः ।
जगतो दहनाकाङ्क्षी पुत्रोऽग्निस्समपद्यत ॥ ९८ ॥
उर्वस्योरुं विनिर्भिद्य और्वो नामान्तकोऽनलः । दिधक्षुरिवलोकांस्त्रीञ्जज्ञे परमकोपनः
उत्पद्यमानश्चोवाचपितरं दीनयागिरा । क्षुधा मे बाधते तात जगद्भक्षे त्यजस्व माम् ॥
त्रिदिवारोहिभिर्ज्वालैर्जृम्भमाणो दिशो दश । निर्दहन्सर्वभूतानि ववृधे सोऽन्तकोपमः
एतस्मिन्नन्तरे ब्रह्मा मुनिमुर्वंसमागतः । उवाच वार्यतां पुत्रो जगतस्त्वं दयां कुरु ॥
अस्यापत्यस्य ते विप्रकरिष्ये साह्यमुत्तमम् । तथ्यमेतद्वचः पुत्र शृणु त्वं वदतांवर ॥

और्व उवाच ।

धन्योऽस्म्यनुगृहीतोऽस्मि यन्मे त्वं भगवञ्शिशोः ।
मतिमेतां ददासीह परमात्मन्हिताय वै ॥ १०४ ॥
प्रभातकाले सम्प्राप्ते काङ्क्षितव्ये समागमे ।
भगवंस्तर्पितः पुत्रः कैर्हव्यैःप्राप्स्यते सुखम ॥ १०५॥

कुत्र चास्य निवासः स्याद्भोजनं तु किमात्मकम् ।
विधास्यतीह भगवान्वीर्यतुल्यं महौजसः ॥ १०६ ॥

ब्रह्मोवाच ।

वडवामुखे च वसतिः समुद्रे वै भविष्यति । मम योनिर्जलं विप्र तस्यामेयं व्रजत्वयम्
तत्रायमास्ते नियतं पिबन्वारिमयं हविः । तद्वारि विस्तरं विप्र विसृजास्यालयं च तम्
ततो युगान्ते भूतानामेष चाहं च पुत्रक । सहितो विचरिष्यावो निष्पुराणकराविह ॥
एषोऽग्निरन्तकाले तु सलिलाशी मया कृतः । दहनः सर्वभूतानां स देवासुररक्षसाम् ॥
एवमस्त्विवतितं सोग्निः संवृतज्वालमण्डलः । प्रविवेशार्णवमुखं नत्वोर्वं पितरं प्रभुम् ॥
प्रतियातस्ततो ब्रह्मा ते च सर्वे महर्षयः । और्वस्याग्नेःप्रभावज्ञाःस्वां स्वांगतिमुपागताः
हिरण्यकशिपुर्दृष्ट्वा तदातन्महदद्भुतम् । उर्वं प्रणतसर्वाङ्गो वाक्यमेतदुवाच ह ॥ ११३ ॥

हिरण्यकशिपुरुवाच ।

भगवन्नद्भुतमिदं सं वृत्तं लोकसाक्षिकम् । तपसा ते मुनिश्रेष्ठ परितुष्टः पितामहः ॥
अहं तु तव पुत्रस्य तव चैव महाव्रत । भृत्य इत्यवगन्तव्यः श्लाघ्यस्त्वमिह कर्मणा ॥
तन्मां पश्य समापन्नं तवैवाराधनेरतम् । यदिसीदेन्मुनिश्रेष्ठ तवैव स्यात्पराजयः ॥

उर्व उवाच ।

धन्योऽस्म्यनुगृहीतोऽस्मि यस्यतेऽहं गुरुर्मतः ।
नास्ति ते तपसानेन भयं चैवेह सुव्रत ॥ ११७ ॥

तामेव मायां गृह्णीष्व ममपुत्रेण निर्मिताम् । निरिन्धनामग्निमयीं दुस्पर्शां पावकैरपि ॥
एषा ते स्वस्य वंशस्य वशगारिविनिग्रहे । रक्षिष्यत्यात्मपक्षं च विपक्षं च प्रधक्ष्यति

वरुण उवाच ।

एषा दुर्विषहा माया देवैरपि दुरासदा । और्वेण निर्मिता पूर्वं पावकेनोर्वसूनुना ॥
तस्मिंस्तुव्यथिते दैत्ये निवार्यैषा न संशयः। शापो ह्यस्याः पुरादत्तःसृष्टा येनैव तेजसा
यद्येषा प्रतिहन्तव्या कर्तव्यो भगवान्सुखी । दीयतां मे सखा शक्र तोययोनिर्निशाकरः
तेनाहं सहसङ्गम्य यादोभिश्च समावृतः । मायामेतां हनिष्यामि त्वत्प्रसादान्न संशयः

पुलस्त्य उवाच ।

एवमस्त्विति संतुष्टः शक्रस्त्रिदशवर्धनः । सन्दिदेशाग्रतः सोमं युद्धाय शिशिरायुधम्

इन्द्र उवाच ।

गच्छ सोमसहायस्त्वं भवपाशधरस्य वै । असुराणां विनाशाय जयार्थं त्रिदिवौकसाम्
त्वमतः प्रतिवीर्यश्च ज्योतिषामपिचेश्वरः । त्वन्मयान्सर्वलोकेषु रसान्वेदविदो विदुः ॥
त्वया समो न लोकेऽस्मिन्विद्यते शिशिरायुधः। क्षयवृद्धी तवाव्यक्ते सागरे चैव चाम्बरे
प्रवर्तयस्यहोरात्रात्कालं संमोहयञ्जगत् । लोकच्छायामयं लक्ष्म तवाङ्कः शशविग्रहः ॥

न विदुः सोम ते मायां ये च नक्षत्रयोनयः ।
त्वमादित्यपथादूर्ध्वं ज्योतिषां चोपरि स्थितः ॥ १२६ ॥

तमः प्रोत्सार्य सहसा भासयस्यखिलं जगत् । शीतभानुर्हिमतनुर्ज्योतिषामधिपः शशी

अपि तत्कालयोगात्मा इज्यो यज्ञरथोऽव्ययः ।
ओषधीशः क्रियायोनिरपां योनिरनुष्णगुः ॥ १३१ ॥

शीतांशुरमृताधारश्चपलः श्वेतवाहनः । त्वं कान्तिःकान्तवपुषां त्वंसोमःसोमपायिनाम्

सौम्यस्त्वं सर्वभूतानां तिमिरघ्नस्त्वमृक्षराट् ।
तद्गच्छ त्वं महासेन वरुणेन वरूथिना ॥ १३३ ॥
शमयस्वासुरीं मायां यया दह्यामहे रणे ॥ १३४ ॥

सोम उवाच ।

यन्मां वदसि युद्धार्थं देवराजवरप्रद । एष वर्षामि शिशिरं दैत्यमायापकर्षणम् ॥१३५॥
एतान्मे शीतनिर्दग्धान्पश्यस्व हिमवेष्टितान् । विमायान्विमदांश्चैव दैत्यसङ्घान्महाहवे
तथा हिमकरोत्सृष्टाः स पाशा हिमवृष्टयः । वेष्टयन्ति च तान्दैत्यान्वायुर्मेघगणानिव ॥
तौ पाशशीतांशुधरौ वरुणेन्दू महाबलौ । जघ्नतुर्हिमपातैश्च पाशपातैश्च दानवान् ॥

द्वावम्बुनाथौ समरे तौ पाशहिमयोधिनौ ।
मृधे चेरतुरम्भोभिः क्षुब्धाविव महार्णवौ ॥ १३९ ॥

ताभ्यामापरितं सर्वं तद्दानवबलं महत् । जगत्संवर्त्तकाम्भोदैः प्रवर्षैरिवसंवृतम्॥१४०॥

तावुद्यतावम्बुनाथौ शशाङ्कवरुणावुभौ । शमयामासतुस्तां तु मायां दैत्येन्द्रनिर्मिताम्
शीतांशुजालनिर्दग्धाःपाशैश्चास्कन्दिता रणे । न शेकुश्चलितुं दैत्या विशिरस्का इवाद्रयः
शीतांशुनिहतास्ते तु दैत्यास्सर्वे निपातिताः । हिमप्लावितसर्वाङ्गा निरूष्माण इवाग्नयः

तेषां तु दिवि दैत्यानां निपतन्ति शुभानि वै ।
विमानानि विचित्राणि निपतन्त्युत्पतन्ति च ॥ १४४ ॥

तान्पाशहस्तग्रथितांश्छादिताञ्शीतरश्मिभिः । मयो ददर्श मायावी दानवान्दिविदानवः

सशैलजालां विततां खड्गपट्टिशहासिनीम् ।
पादपोत्करकूटस्थां कन्दराकीर्णकाननाम् ॥ १४६ ॥

सिंहव्याघ्रगणाकीर्णां नदद्भिर्द्विपयूथपैः । ईहामृगगणाकीर्णां पवनाघूर्णितद्रुमाम् ॥१४७॥

निर्मितां स्वेन पुत्रेण कूजन्तीं दिवि कामगाम् ।
प्रथितां पार्वतीं मायां ससृजे स समन्ततः ॥ १४८ ॥

सासिशब्दैश्शिलावर्षैः सम्पतद्भिश्च पादपैः । जघान देवसङ्घांस्तान्दानवानभ्यजीवयत् ॥
नैशाकरी वारुणी च माये अन्तर्हिते तदा । अभवद्घोरसञ्चारा पृथिवीपर्वतैरिव ॥१५०॥
अश्मप्रहरणेनापि न शिलाभिर्वशीकृतः । न चारुद्धो द्रुमगणैर्देवोऽदृश्यत कश्चन ॥१५१॥
तदपध्वस्तधनुषं भग्नप्रहरणाविलम् । निष्प्रयत्नं सुरानीकं वर्जयित्वा गदाधरम् ॥१५२॥

सहि युद्धगतः श्रीमानीशो न स्म व्यकम्पत ।
सहिष्णुत्वाज्जगत्स्वामी न चुक्रोध गदाधरः ॥ १५३ ॥

कालज्ञः कालमेघाभः समीक्षन्कालमाहवे । देवासुरविमर्दं च द्रष्टुकामस्तदा हरिः ॥१५४
ततो भगवतादिष्टौ रणे पावकमारुतौ । चोदितौ विष्णुवाक्येन ततो मायां व्यकर्षताम्

ताभ्यामुद्भ्रान्तवेगाभ्यां प्रवृद्धाभ्यां महाहवे ।
दग्धा सा पार्वती माया भस्मीभूता ननाश ह ॥ १५६ ॥
सोऽनिलोऽनलसंयुक्तस्सोऽनलश्चानिलाकुलः ।
दैत्यसेनां ददहतुर्युगान्तेष्विव मूर्च्छितौ ॥ १५७ ॥

वायुः प्रजवितस्तत्र पश्चादग्निश्च मारुतात् । चेरतुर्दानवानीके क्रीडन्तावनलानिलौ ॥

भस्मीभूतेषु भूतेषु प्रपतत्सूत्पतत्सु च। दानवानां विमानेषु निपतत्सु समन्ततः॥
वातस्कन्धापविद्धेषु कृतकर्मणि पावके। मायावधेप्रवृत्ते तु स्तूयमाने गदाधरे ॥१६०॥

निष्प्रयत्नेषु दैत्येषु त्रैलोक्ये मुक्तबन्धने।
प्रहृष्टेषु च देवेषु साधुसाध्विति जल्पिषु॥ १६१ ॥

जये दशशताक्षस्य दैत्यानां च पराजये। दिक्षु सर्गासु शुद्धासु प्रवृत्ते धर्मविस्तरे॥
अपावृत्ते चन्द्रपथे स्वस्थानस्थे दिवाकरे। प्रवृत्तिस्थेषु भूतेषु नृषु चारित्रवत्सु च॥
अभिन्नबन्धने मृत्यौ हूयमाने हुताशने। यज्ञशोभिषु देवेषु स्वर्गमार्गं दिशत्सु च॥
लोकपालेषु सर्वेषु दिक्षु सन्धानवर्तिषु। भावे तपसि सिद्धानामभावे पापकर्मणाम्॥
देवपक्षे प्रमुदिते दैत्यपक्षे विषीदति। त्रिपादविग्रहे धर्मेऽधर्मे पादपरिग्रहे॥ १६६॥
अपावृत्ते महाद्वारे वर्तमाने च सत्पथे। लोकेषु धर्मवृत्तेषु प्रवृत्तेष्वाश्रमेषु च॥ १६७॥
प्रजारक्षणयुक्तेषु राजमानेषु राजसु। प्रशान्तेषु च लोकेषु शान्ते तमसि दानवे॥१६८॥

अग्निमारुतयोस्तस्मिन्वृत्ते सङ्ग्रामकर्मणि।
तन्मया विमला लोकास्ताभ्यां जयकृतक्रियाः॥ १६९ ॥

तीव्रं दैत्यभयं श्रुत्वा मारुताग्निकृतंमहत्। कालनेमीति विख्यातो दानवः प्रत्यदृश्यत॥
भास्कराकारमुकुटः शिञ्जिताभरणाङ्गदः। मन्दराद्रिप्रतीकाशो महारजतसंवृतः॥१७१॥
शतप्रहरणोदग्रः शतबाहुः शताननः। शतशीर्षः स्थितः श्रीमाञ्छतशृङ्ग इवाचलः॥१७२॥
कक्षे महति संवृद्धो निदाघ इव पावकः। धूम्रकेशो हरिश्मश्रुर्दन्तुरो विकटाननः॥

त्रैलोक्यान्तरविस्तारं धारयन्विपुलं वपुः।
बाहुभिस्तुलयन्व्योमक्षिपन्पद्भ्यां महीधरान्॥ १७४॥

ईरयन्मुखनिश्वासैर्वृष्टिकारान्बलाहकान्। तिर्यगायतरक्ताक्षं मन्दरोदग्रवर्चसम्॥१७५॥
दिधक्षन्तमिवायान्तं सर्वान्देवगणान्मृधे। तर्जयन्तं सुरगणांश्छादयन्तं दिशो दश॥
संवर्तकाले हृषितं दृष्टं मृत्युमिवोत्थितम्। सुतलेनोच्छ्रयवता विपुलाङ्गुलिपर्वणा॥
लम्बाभरणपूर्णेन किंचिच्चलितकर्मणा। उच्छ्रितेनाग्रहस्तेन दक्षिणेन वपुष्मता॥१७८॥
दानवान्देवनिहतान्ब्रुवन्तं तिष्ठतेति च। तं कालनेमिं समरेद्विषतां कालनेमिनाम्॥१७९

वीक्षन्तेस्मसुराः सर्वेभयविह्वललोचनाः । तंवीक्षन्तेस्मभूतानिग्रसन्तंकालनेमिनम् ॥
त्रिविक्रमं विक्रमन्तं नारायणमिवापरम् ।
सोऽभ्युच्छ्रयं पुनः प्राप्तो मारुताघूर्णिताम्बरः ॥ १८१ ॥
प्राक्रामदसुरो योद्धुं त्रासयन्सर्वदेवताः । समेयिवान्सुरेन्द्रेण परिष्वक्तो भ्रमन्रणे ॥
कालनेमिर्बभौ दैत्यः सविष्णुरिव मन्दरः । अथ विव्यथिरे देवाः सर्वे शक्रपुरोगमाः ॥
कालनेमिनमायान्तं दृष्ट्वा कालमिवापरम् । दानवाननुपिप्रीषुः कालनेमिर्महासुरः ॥१८४॥
व्यवर्धत महातेजास्तपान्ते जलदोयथा । तं त्रैलोक्यान्तरगतं दृष्ट्वा ते दानवेश्वराः ॥
उत्तस्थुरपरिश्रान्ताः पीत्वेवामृतमुत्तमम् । ते वीतभयसन्त्रासा मयतारपुरोगमाः ॥१८६
तारकामयसङ्ग्रामे सततं जितकाशिनः । रेजुरायोधनगता दानवा युद्धकाङ्क्षिणः ॥
मन्त्रमभ्यसतां तेषां व्यूहं च परिधावताम् ।
प्रेक्षतां चाभवत्प्रीतिर्दानवं कालनेमिनम् ॥ १८८ ॥
ये तु तत्र मयस्यासन्मुख्या युद्धपुरस्सराः ।
ते तु सर्वे भयं त्यक्त्वा हृष्टा योद्धुमुपस्थिताः ॥ १८९ ॥
मयस्तारो वराहश्च हयग्रीवश्च दानवः । विप्रचित्तिसुतः श्वेतः खरलम्बावुभावपि ॥
अरिष्टो बलिपुत्रश्च किशोराख्यस्तथैव च । स्वर्भानुश्चामरप्रख्यश्चक्रयोधी महासुरः ॥
एतेऽस्त्रवेदिनः सर्वे सर्वेतपसि सुस्थिताः । दानवाः कृतिनोजग्मुः कालनेमिनमुद्धतम् ॥
ते गदाभिस्सुगुर्वीभिश्चक्रैरथपरश्वधैः । कालकल्पैश्च मुसलैः क्षेपणीयैश्च मुद्गरैः ॥
अश्मभिश्चाद्रिसदृशैस्तथा शैलैश्च दारुणैः । पट्टिशैर्भिण्डिपालैश्च परिघैश्चोत्तमायसैः ॥
घातिनीभिश्च गुर्वीभिः शतघ्नीभिस्तथैव च ।
युगैर्यन्त्रैश्च निर्मुक्तैर्लाङ्गलैरुग्रताडितैः ॥ १९५ ॥
दोर्भिरायतमानैश्च पाशैश्च परिघादिभिः । भुजङ्गवक्त्रैर्लेलिहानैर्विसर्पद्भिश्च सायकैः ॥
वज्रैः प्रहरणीयैश्च दीप्यमानैश्च तोमरैः । विकोशैरसिभिस्तीक्ष्णैः शूलैश्च शितनिर्मलैः
दैत्यैः सन्दीप्यमानैश्च प्रगृहीतशरासनैः । ततः पुरस्कृत्य तदा कालनेमिनमाहवे ॥१९६॥
सादीप्तशस्त्रप्रवरा दैत्यानां रुरुचे चमूः । यैर्निमीलितसर्वाङ्गा घनालीवाम्बुदागमे ॥

देवतानामपि चमूर्मुमुदे शक्रपालिता । उपेता शिशिरोष्णाभ्यां तेजोभ्यां चन्द्रसूर्ययोः
वायुवेगवती सौम्या तारागणपताकिनी । तोयदावद्धवसना ग्रहनक्षत्रहासिनी ॥२०२॥
यमेन्द्रधनदैर्गुप्ता वरुणेन च धीमता । सा प्रदीप्ताग्निपवना नारायणपरायणा ॥ २०३॥
सासमुद्रौघसदृशी दीप्यमाना महाचमूः । रराजास्त्रवती भीमा यक्षगन्धर्वशालिनी ॥

तयोश्चम्वोस्तदानीं तु बभूव स समागमः ।
द्यावापृथिव्योः संयोगो यथास्याद्युगपर्यये ॥ २०५॥

तद्युद्धमभवद्घोरं देवदानवसङ्कुलम् । क्षमापराक्रमपरं सदर्पं विनयस्य च ॥ २०६॥

निश्चक्रमुर्बलाभ्यां तु भीमाभ्यां च सुरासुराः ।
पूर्वापराभ्यां संरब्धाः सागराभ्यामिवाम्बुदाः ॥ २०७॥
ताभ्यां बलाभ्यां संहृष्टाश्चेरुस्ते देवदानवाः ।
वनाभ्यां पार्वतीयाभ्यां पुष्पिताभ्यां यथा नगाः ॥ २०८॥

समाजघ्नुस्तथा भेरीः शङ्खान्दध्मुरनेकशः । ब्रह्माण्डं च भुवं चैव दिशश्च समपूरयन् ॥
ज्याघाततलनिर्घोषो धनुषां कूजितानि च । दुन्दुभीनां चनिर्ह्रादोदैत्यमन्तर्दधुःस्वनम्
तेऽन्योन्यमभिसम्पेतुर्पातयन्तः परस्परम् । बभञ्जुर्बाहुभिर्बाहुद्वन्द्वमन्ये युयुत्सवः ॥

देवानामशनीघोराः परिघांश्चोत्तमायुधान् ।
निस्त्रिंशान्ससृजुः सङ्ख्ये गदागुर्वीश्च दानवाः ॥ २१२ ॥

गदानिपातैर्भग्नाङ्गबाणैश्च शकलीकृताः । परिपेतुर्भृशं केचित्पुनः केचित्तु जघ्निरे ॥
ततो रथैश्च तुरगैर्विमानैश्च गजादिभिः । समीयुस्तेऽतिसंरब्धा रोषादन्योन्यमाहवे ॥
संवर्त्तमानास्समरे सन्दष्टौष्ठपुटाननाः । रथारथैर्नियुध्यन्ते पादाताश्च पदातिभिः ॥
तेषांरथानां तुमुलः सशब्दः शब्दवाहिनाम् । नभोनभस्वान्हि यथा नभस्ये जलदस्वनैः
बभञ्जिरे रथान्केचित्केचित्संमृदिता रथैः । सम्बाधमन्ये सम्प्राप्ता नशेकुश्चलितुं रथाः

अन्योन्यमध्ये समरे दोर्भ्यामुत्क्षिप्य दंशिताः ।
संह्लादमानास्सबला जघ्नुस्तत्रासिचर्मिणः ॥ २१८॥

अस्त्रैरन्येविनिर्भिन्ना रक्तंवेमुर्हता युधि । क्षरज्जलानां सदृशाजलदानां समागताः ॥

तदस्त्रशस्त्रप्रथितं क्षिप्ताक्षिप्तगदाविलम् । देवदानवसङ्घुष्टं सङ्कुलं युद्धमाबभौ ॥
तद्दानवमहामेघं देवायुधविराजितम् । अन्योन्यबाणवर्षेण युद्धदुर्दिनमाबभौ ॥ २२१ ॥
एतस्मिन्नन्तरे क्रुद्धः कालनेमिस्सदानवः । अवर्धत समुद्रौघैः पूर्णमाण इवाम्बुदः ॥
तस्य विद्युल्लता पीडाः प्रदीप्ताशनिवर्षिणः । गात्रैर्नगगिरिप्रख्यैर्विनिपेतुर्वलाहकाः ॥
क्रोधान्निश्वसतस्तस्य भ्रूभेदस्वेदवर्षिणः । साग्निस्फुलिङ्गाः प्रततामुखान्निश्चेरुरर्चिषः

तिर्यगूर्ध्वं च गगने ववृधुस्तस्य बाहवः ।
पर्वतादिव निष्क्रान्ताः पञ्चास्या इव पन्नगाः ॥ २२५ ॥

सोऽस्त्रजालैर्बहुविधैर्धनुभिः परिघैरपि । दिव्यमाकाशमावव्रे पर्वतैरुच्छ्रितैरिव ॥

सोऽनिलोद्भूतवसनस्तस्थौ सङ्ग्रामलालसः ।
सन्ध्यातपग्रस्तशिलः साक्षान्मेरुरिवाचलः ॥ २२७ ॥

ऊरुवेगप्रमथितैः शृङ्गशैलाग्रपादपैः । अपातयद्देवगणान्वज्रेणेव महागिरीन् ॥ २२८ ॥

बाहुभिश्च सनिस्त्रिंशैश्छिन्नभिन्नशिरोरुहाः ।
न शेकुश्चलितुं देवाः कालनेमिहता युधि ॥ २२९ ॥

मुष्टिभिर्निहताः केचित्केचिच्च द्विदलीकृताः । यक्षगन्धर्वपतगाः समहोरगकिन्नराः ॥
तेन वित्रासिताःपेतुः समरे कालनेमिना । न शेकुर्यत्नवन्तोऽपि यत्नं कर्तुं विचेतसः
तेन शक्रः सहस्राक्षोऽस्पन्दितः शरबन्धनैः । निष्प्रयत्नः कृतः सङ्ख्ये चलितुंनशशाकह
निर्जलाम्भोदसदृशो निर्जलार्णवसप्रभः । निर्व्यापारः कृतस्तेन विपाशो वरुणो मृधे॥

रणे वैश्रवणस्तेन परीतः कालरूपिणा ।
विलपँल्लोकपालेशस्त्याजितो धनदः क्रियाम् ॥ २३४ ॥

यमः सर्वहरस्तेन मृत्युप्रहरणो रणे । याम्यामवस्थां सन्त्यज्य भीतःस्वांदिशमाविशत्
सलोकपालानुत्सार्य हत्वा तेषां च कर्मतत् । दिक्षु सर्वासु देहं स्वं चतुर्धाविदधेतदा
स नक्षत्रपथं गत्वा दिव्यं स्वर्भानुदर्शितम् । जहार लक्ष्मीं सोमस्यचचास्यविषयंमहत्
चालयामास दीप्तांशुं धर्मद्वारा सभास्करम् । शासनं चास्य विषयं जहार दिनकर्म च
सोऽग्निंदेवमुखं जित्वा चकारात्ममुखाश्रयम् । वायुं च तरसाजित्वाचकारात्मवशानुगम्

ससमुद्रात्समानीयसमस्ताःसरितोबलात् । चकाराभिमुखावीर्याद्देवभूताश्चसिन्धवः ॥
अपःस्ववशगाःकृत्वा दिविजा याश्च भूमिजाः ।
छादयामास जगतीं सुगुप्तां धरणीधरैः ॥ २४१ ॥
सस्वयम्भूरिवाभाति महाभूतपतिर्महान् । सर्वलोकमयो दैत्यः सर्वलोकभयावहः ॥
सलोकपालैकवपुश्चन्द्रसूर्यग्रहात्मवान् । पावकानिलसम्भूतो रराज युधि दानवः ॥
पारमेष्ठ्ये स्थितः स्थाने लोकानां प्रभवोपमे । तं तुष्टुवुर्दैत्यगणा देवा इव पितामहम्
पञ्च तं नाभ्यवर्तन्त विपरीतेन कर्मणा । वेदोधर्मः क्षमा सत्यं श्रीश्च नारायणाश्रया ॥
स तेषामनुपस्थानात्सक्रोधो दानवेश्वरः । वैष्णवं पदमन्विच्छन्सगतो देवता यतः ॥
सदर्श सुपर्णस्थं शङ्खचक्रगदाधरम् । दानवानां विनाशाय भ्रामयन्तं गदां शुभाम् ॥
सजलाम्भोदसदृशं विद्युत्सदृशवाससम् । आरूढं स्वर्णपत्राढ्यं खेचरं काश्यपं खगम्
दुष्टदैत्यविनाशाय दृष्ट्वा खस्थमिव स्थितम् ।
दानवो विष्णुमक्षोभ्यं बभाषे क्षुब्धमानसः ॥ २४६ ॥

कालनेमिरुवाच ।

अयं स रिपुरस्माकं पूर्वेषां प्राणनाशनः । अर्णवावासिनश्चैव मधोश्च कैटभस्य च ॥
अयं स रिपुरस्माकमसमः किल कथ्यते । अनेकसंयुगेऽनेन दानवा बहवो हताः ॥२५१
अयं स निर्घृणो लोके स्त्रीबालनिरपत्रपः ।
येन दानवनारीणां सीमन्तोद्धरणं कृतम् ॥ २५२ ॥
अयं स विष्णुर्देवानां वैकुण्ठश्च दिवौकसाम् ।
अनन्तो भोगिनां मध्ये स्वयम्भूश्च स्वयम्भुवः ॥ २५३ ॥
अयं स नाथो देवानामस्माभिर्विप्रकृष्यते । अस्य क्रोधं समासाद्य हिरण्यकशिपुर्हतः ॥
अस्य च्छायामुपाश्रित्य देवा मखमुखे स्थिताः ।
आज्यं महर्षिभिर्दत्तमश्नुवन्ति त्रिधाहुतम् ॥ २५५ ॥
अयं स निधने हेतुः सर्वेषाममरद्विषाम् । अस्य चक्रप्रविष्टानि कुलान्यस्माकमाहवे ॥
अयं स किल युद्धेषु सुरार्थे त्यक्तजीवितः । स विभुस्तेजसा युक्तं चक्रंक्षिपतिशत्रुषु ॥

अयं स कालो दैत्यानां कालभूते मयि स्थिते ।
अतिक्रान्तस्य कालस्य फलंप्राप्स्यति केशवः ॥ २५८ ॥
दिष्ट्येदानीं समक्षं मे विष्णुरेष समागतः। निष्पिष्टो बहुनासङ्ख्ये मय्येव प्रणशिष्यति
यास्याम्यपचितिं दिष्ट्या पूर्वेषामद्य संयुगे । इमं नारायणं हत्वा दानवानां भयावहम्
क्षिप्रमेव हनिष्यामि रणेऽमरगणानहम् । जात्यन्तरगतोऽप्येष बाधतेदानवान्मृधे ॥
एषोऽनन्तः पुरा भूत्वा पद्मनाभ इति श्रुतः । जघानैकार्णवे घोरे तावुभौ मधुकैटभौ ॥
द्विधा भूतं वपुः कृत्वा सिंहस्यार्द्धं नरस्य च । पितरं मे जघानैको हिरण्यकशिपुं पुरा॥
यं सुतं गर्भमाधत्त ह्यदितिर्देवतारणिः । त्रीँल्लोकानाजहारैकः क्रममाणस्त्रिभिःक्रमैः
भूयस्त्विदानीं सम्प्राप्ते सङ्ग्रामे तारकामये ।
मया सह समागम्य स देवो विनशिष्यति ॥ २६५ ॥

पुलस्त्य उवाच ।

एवमुक्त्वा बहुविधं क्षिप्रं नारायणं रणे । वाग्भिरप्रतिरूपाभिर्युद्धमेवाभ्यरोचयत् ॥
क्षिप्यमाणोऽसुरेन्द्रेण न चुकोप गदाधरः । क्षमाबलेन महता सस्मितं चेदमब्रवीत् ॥

नारायण उवाच ।

अल्पं दर्पबलं दैत्यस्थिरमक्रोधजं बलम् । हतस्त्वं दर्पजैर्दोषैर्हित्वा यो भाषसेक्षमाम्
अधमस्त्वं मम मतो धिगेतत्तववाग्बलम् । के तत्र पुरुषाः सन्ति यत्र गर्जन्ति योषितः
अहं त्वां दैत्य पश्यामि पूर्वेषां मार्गगामिनम् ।
प्रजापतिकृतं सेतुं त्यक्त्वा कः स्वस्तिमान्भवेत् ॥ २७० ॥
अद्य त्वां नाशयिष्यामि देवव्यापारघातकम् ।
स्वेषु स्वेषु च स्थानेषु स्थापयिष्यामि देवताः ॥ २७१ ॥

पुलस्त्य उवाच ।

एवं ब्रुवति वाक्यं तु मृधे श्रीवत्सधारिणि ।
जहास दानवः क्रोधाद्धस्तांश्चक्रे च सायुधान् ॥ २७२ ॥
स बाहुशतमुद्यम्य सर्वायुधगणान्रणे । क्रोधाद्द्विगुणरक्ताक्षो विष्णोर्वक्षस्यपातयत् ॥

दानवाश्चापि समरे मयतारपुरोगमाः । उद्यतायुधनिस्त्रिंशा विष्णुमभ्यद्रवन्रणे ॥२७४
स ताड्यमानोऽतिबलैर्दैत्यैः सर्वायुधोद्यतैः । न चचाल ततो युद्धे कम्प्यमान इवाचलः
संयुक्तश्च सुपर्णेन कालनेमिर्महासुरः ।ःसर्वप्राणेन महतीं गदामुद्यम्य बाहुभिः ॥२७६॥
घोरां ज्वलन्तीं मुमुचे संरब्धो गरुडोपरि । कर्मणातेन दैत्यस्य विष्णुर्विस्मयमागमत्
तदा तेन सुपर्णस्य पातिता मूर्ध्नि सा गदा ।सुपर्णं व्यथितं दृष्ट्वा क्षतं च वपुरात्मनः ॥
क्रोधसंरक्तनयनो वैकुण्ठश्चक्रमाददे । व्यवर्द्धत च वेगेन सुपर्णेन समं विभुः ॥ २७६ ॥
भुजाश्चास्य व्यवर्धन्त व्याप्तवन्तो दिशो दश । विदिशश्चैव खंचापिगांचैव प्रत्यपूरयन्
ववृधे स पुनर्लोकान्क्रान्तुकाम इवौजसा । तं जयाय सुरेन्द्राणां वर्द्धमानं नभस्तले ॥
ऋषयः सहगन्धर्वास्तुष्टुवुर्मधुसूदनम् । स द्यां किरीटेन लिखञ्छिरसा भास्वरेण च ॥

पद्भ्यामाक्रम्य वसुधां दिशः प्रच्छाद्य बाहुभिः ।
सहस्रकरतुल्याभं सहस्रारमरिक्षयम् ॥ २८३ ॥

दीप्ताग्निसदृशं घोरं दर्शनेन सुदर्शनम् । सुवर्णरेणुपर्यन्तं वज्रनाभं भयावहम् ॥२८४॥
मेदोऽस्थिमज्जारुधिरैः सिक्तं दानवसम्भवैः । अद्वितीयं प्रहरणं क्षुरपर्यन्तमण्डलम् ॥

स्रग्दाममालानिचितं कामगं कामरूपिणम् ।
स्वयं स्वयम्भुवा सृष्टं भयदं सर्वविद्विषाम् ॥ २८६ ॥

दधार रोषेणाविष्टं नित्यमाहवदर्पितम् । क्षपणाद्यस्य मुह्यन्ति लोकाःसस्थाणुजङ्गमाः
क्रव्यादानिच भूतानि तृप्तिं यान्ति महामृधे । तमप्रतिमकर्माणं समानं सूर्यवर्चसा ॥
चक्रमुद्यम्य समरे कोपदीप्तो गदाधरः । प्रनष्टं दानवं तेजः कुर्वाणं स्वेन तेजसा ॥
चिच्छेद बाहूंस्तेनैव समरे कालनेमिनः । तच्च वक्त्रशतं घोरंसाग्निचूर्णाट्टहासि वै ॥
तस्य दैत्यस्य चक्रेण प्रममाथ बलाद्धरिः । सच्छिन्नबाहुर्विशिरानप्राकम्पत दानवः ॥

कबन्धावस्थितः सङ्ख्ये विशाख इव पादपः ।
तं वितत्य महापक्षौ वायोः कृत्वा समं जवम् ॥ २६२ ॥

उरसाताडयामास गरुडः कालनेमिनम् । सतस्यदेहोऽभिमुखो विबाहुः खात्परिभ्रमन्
निपपात दिवं त्यक्त्वा क्षोभयन्धरणीतलम् । तस्मिन्निपतितेदैत्येदेवाःसर्षिगणास्तथा

साधुसाध्विति वैकुण्ठं समेताः प्रत्यपूजयन् । अपरे ये तु दैत्या वै युद्धे दृष्टपराक्रमाः
ते सर्वे बाहुभिर्व्याप्ता नशेकुश्चलितुं रणे। कांश्चित्केशेषु जग्राहकांश्चित्कण्ठेष्वपीडयत्
चकर्त कस्यचिद्वक्त्रं मध्येऽगृह्णात्तथापरम् । ते गदाचक्रनिर्दग्धा गतसत्त्वा गतासवः॥
गगनाद्भ्रष्टसर्वाङ्गा निपेतुर्धरणीतले। तेषु सर्वेषु दैत्येषु हतेषु पुरुषोत्तमः॥ २९८॥
शक्रप्रियंततः कृत्वा कृतकर्मा गदाधरः । तस्मिन्विमर्दे संवृत्ते सङ्ग्रामे तारकामये॥
तं च देशं जगामाशु ब्रह्मा लोकपितामहः । सर्वैर्ब्रह्मर्षिभिः सार्द्धं गन्धर्वाप्सरसांगणैः

देवदेवं हरिं देवः पूजयन्वाक्यमब्रवीत्॥ ३०१ ॥

ब्रह्मोवाच ।

कृतं देव महत्कर्म सुराणां शल्यमुद्धृतम् । निधनेन च दैत्यानां वयं च परितोषिताः॥

योऽयं त्वया हतो विष्णो कालनेमिर्महासुरः ।
त्वामेतस्य ऋते ह्यस्मिञ्शास्ता कश्चिन्न विद्यते ॥ ३०३ ॥

एष देवान्परिभवँल्लोकांश्च सचराचरान् । ऋषीणां कदनं कृत्वा मामपि प्रतिगर्जति॥
तदनेन त्वदीयेन परितुष्टोऽस्मि कर्मणा । यदयं कालकल्पस्ते कालनेमिर्निपातितः॥
तदागच्छस्व भद्रंते गच्छाम दिवमुत्तमाम् । ब्रह्मर्षयस्त्वां तत्रस्थाःप्रतीक्षन्ते सदोगताः
कं चाहं तव दास्यामि वरं वरभृतांवर । स्वस्थानस्थेषु देवेषु तेषां च वरदो भवान्॥
निर्यातमेतत्त्रैलोक्यं स्फीतं निहतकण्टकम् । अस्मिन्नेव मृधे विष्णो शक्राय सुमहात्मने

पुलस्त्य उवाच ।

एवमुक्तो भगवता ब्रह्मणा हरिरव्ययः। देवाञ्छक्रमुखान्सर्वानुवाच शुभया गिरा॥

विष्णुरुवाच ।

श्रूयतां त्रिदशास्सर्वे यावन्तोऽत्र समागताः । सुपर्णसहितैस्तत्र पुरस्कृत्य पुरन्दरम्॥
अस्माभिः समरे सर्वैः कालनेमिमुखाहताः । दानवा विक्रमोपेताः शक्रादपि महत्तराः॥
अस्मिन्महति सङ्ग्रामे द्वावेव तु विनिस्सृतौ । विरोचनस्तु दैतेयः स्वर्भानुश्चमहाबलः
स्वां दिशं भजतां शक्रो दिशं वरुण एव च । याम्यां यमः पालयतामुत्तरां च धनाधिपः
ऋक्षैः सह सदा योगं गच्छतां चन्द्रमास्तथा । अयमृतुमुखं सूर्यो भजतामयनैः सह॥

आज्यभागाः प्रवर्तन्तां सदस्यैरभिपूजिताः । हूयन्तामग्नयो विप्रैर्वेददृष्टेन कर्मणा ॥
देवाश्च बलिहोमेन स्वाध्यायेन महर्षयः । श्राद्धेन पितरश्चैव तुष्टिं यान्तु यथासुखम् ॥

वायुश्चरतु मार्गस्थस्त्रिधा दीप्यतु पावकः ।
त्रयो वर्णाश्च लोकांस्त्रींस्तर्पयन्त्वात्मजैर्गुणैः ॥ ३१७ ॥

क्रतवः सम्प्रवर्तन्तां दीक्षणीयैर्द्विजातिभिः । दक्षिणाश्चोपपद्यन्तां याज्ञिकैश्चपृथक्पृथक्
गाश्च सूर्यो रसान्सोमो वायुःप्राणांश्च प्राणिषु । तर्पयन्तः प्रवर्तन्तामेते सौम्यैःस्वकर्मभिः
यथावदनुपूर्वेण महेन्द्रमलयोद्भवाः । त्रैलोक्यमातरः सर्वाः समुद्रं यान्तु सिन्धवः ॥

दैत्येभ्यस्त्यज्यतां भीश्च शान्तिं व्रजत देवताः ।
स्वस्ति वोऽस्तु गमिष्यामि ब्रह्मलोकं सनातनम् ॥ ३२१ ॥

स्वगृहे स्वर्गलोके वा सङ्ग्रामे वा विशेषतः। विश्वस्तैश्च न गन्तव्यंनित्यंक्षुद्रा हि दानवाः
छिद्रेषु प्रहरन्त्येते न तेषां संस्थितिर्ध्रुवा । सौम्यानां निजभावानां भवतामार्जवे मनः

पुलस्त्य उवाच ।

एवमुक्त्वा सुरगणान्विष्णुस्सत्यपराक्रमः । जगाम ब्रह्मणा सार्द्धं ब्रह्मलोकं महायशाः

देवानां महतीं प्रीतिमुत्पाद्य भगवान्प्रभुः ॥ ३२५ ॥

एतदाश्चर्यमभवत्सङ्ग्रामे तारकामये । दानवानां च विष्णोश्च यन्मांत्वं परिपृच्छसि ॥

इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे पद्मोद्भवदेवासुरयुद्धो नाम
त्रिचत्वारिंशत्तमोऽध्यायः ।

---

# चतुश्चत्वारिंशोऽध्यायः

## शङ्करमाहात्म्यवर्णनारम्भः ।

भीष्म उवाच ।

श्रुतः पद्मोद्भवो ब्रह्मन्विस्तरेण त्वयेरितः । समासाद्भवमाहात्म्यमुत्पत्तिं च गुहस्य च ॥

श्रोतुमिच्छामि ते ब्रह्मन्यथाभूतः कृतं च यत्। तारकश्च कथम्भूतो दानवो बलवत्तरः॥
कार्तिकेयेन स ब्रह्मन्कथं ध्वस्तो महासुरः। कथं रुद्रेण मुनयः प्रेषिता मन्दरं गिरिम्॥
कथं लब्धा उमा तत्र रुद्रेण परमेष्ठिना। एतदाख्याहि मे सर्वं यथाभूतं महामुने॥ ४॥

पुलस्त्य उवाच।

कश्यपेन पुरा प्रोक्ता दितिर्दैत्यारणिः शुभा। वज्रसारमयैश्चाङ्गैः पुत्रो देवि भविष्यति
वज्राङ्गो नाम पुत्रस्तु भविता धर्मवत्सलः। सा च लब्धवरा देवी सुषुवे वज्रदुश्छिदम्
स जातमात्र एवाभूत्सर्वशास्त्रार्थपारगः। उवाच मातरं भक्त्या मातः किंकरवाण्यहम्
तस्योवाच ततो हृष्टादितिर्दैत्याधिपस्य तु। बहवो मे हताः पुत्राः सहस्राक्षेण पुत्रक॥

तेषामपचितिं कर्तुं गच्छ शक्र वधाय तु।
बाढमित्येव तां चोक्त्वा जगाम त्रिदिवं बलात्॥ ९॥

बद्ध्वा ततः सहस्राक्षं पाशेनामोघवर्चसा। मातुरन्तिकमागच्छद्व्याघ्रः क्षुद्रमृगं यथा
एतस्मिन्नन्तरे ब्रह्मा कश्यपश्च महातपाः। आगतौ तत्र यत्रास्तां माता पुत्रावभीतकौ॥
दृष्ट्वा तु तावुवाचेदं ब्रह्मा कश्यप एव च। मुञ्चैनं पुत्र देवेन्द्रं किमनेन प्रयोजनम्॥

अवमानो वधः प्रोक्तः पुत्रसम्भावितस्य तु।
अस्मद्वाक्येन यो मुक्तस्त्वद्धस्तान्मृत एव सः॥ १३॥

परस्य गौरवान्मुक्तः शत्रूणां शत्रुराहवे। स जीवन्नेव हि मृतो दिवसे दिवसे पुनः॥

एतच्छ्रुत्वा तु वज्राङ्गः प्रणतो वाक्यमब्रवीत्।
न मे कृत्यमनेनास्ति मातुराज्ञा कृता हि मे॥ १५॥

त्वं सुरासुरनाथो वै मान्यश्च प्रपितामहः। करिष्ये त्वद्वचो देव एष मुक्तः शतक्रतुः॥
तपसे मे रतिर्देवानिर्विघ्नं तच्च मे भवेत्। त्वत्प्रसादेन भगवन्नित्युक्त्वा विरराम ह॥

तस्मिंस्तूष्णीं स्थिते दैत्ये प्रोवाचेदं पितामहः।

ब्रह्मोवाच।

तपस्त्वं कुरु मापन्नः सोऽस्मच्छासनसंस्थितः॥ १८॥
अनया चित्तशुद्ध्या हि पर्याप्तं जन्मनः फलम्।

इत्युक्त्वा पद्मजः कन्यां ससर्जायतलोचनाम् ॥ १९ ॥
तामस्मै प्रददौ देवः पत्न्यर्थे पद्मसम्भवः । वराङ्गीति च नामास्याः कृत्वा यातः पितामहः
वज्राङ्गोऽपि तया सार्द्धं जगाम तपसे वनम् ।
ऊर्द्ध्वबाहुस्सदैत्येन्द्रोऽचरद्वर्षसहस्रकम् ॥ २१ ॥
कालं कमलपत्राक्षः शुद्धबुद्धिर्महातपाः । तावच्चाधोमुखः कालं तावत्पञ्चाग्निमध्यगः ॥
निराहारो घोरतपास्तपोराशिरजायत । ततः सोऽन्तर्जले चक्रे वासं वर्षसहस्रकम् ॥
जलान्तरं प्रविष्टस्य तस्य पत्नी महाव्रता । तस्यैव तीरे सरसः स्थिताऽसौ मौनमाश्रिता
निराहारं तपोघोरं प्रविवेश महाद्युतिः । तस्यां तपसि वर्तन्त्यामिन्द्रश्चक्रे विभीषिकाम्
गत्वा तु मर्कटाकारस्तदाश्रमपदं महत् । वृसीं चकर्ष बलवान्गन्धाद्यर्चाकरण्डकम् ॥
ततस्तु सिंहरूपेण भीषयामास भामिनीम् । ततो भुजङ्गरूपेणाप्यदशच्चरणद्वयम् ॥ २७ ॥
तपो बलवशात्सा तु न वध्यत्वं जगाम ह । भीषिकाभिरनेकाभिः क्लेशयन्पाकशासनः
विरराम यदा नैव वज्राङ्गमहिषी तदा । शैलस्य दुष्टतां मत्वा शापं दातुं समुद्यता ॥
तां शापाभिमुखीं दृष्ट्वा शैलः पुरुषविग्रहः । उवाच तां वरारोहां वराङ्गीं भीतलोचनः ॥

शैल उवाच ।

नाहं महाव्रते दुष्टः सेव्योऽहं सर्वदेहिनाम् । विप्रियेतं करोत्येष रुषितः पाकशासनः
एतस्मिन्नन्तरे जातः कालो वर्षसहस्रकः । तस्मिञ्ज्ञात्वा तु भगवान्काले कमलसम्भवः
तुष्टः प्रोवाच वज्राङ्गं तदागत्य जलाशयम् ।

ब्रह्मोवाच ।

ददामि सर्वकामं त उत्तिष्ठ दितिनन्दन ॥ ३३ ॥
एवमुक्तस्तदोत्थाय स दैत्येन्द्रस्तपोनिधिः ।
उवाच प्राञ्जलिर्वाक्यं सर्वलोकपितामहम् ॥ ३४ ॥

वज्राङ्ग उवाच ।

आसुरो मास्तु मे भावः सन्तु लोका ममाक्षयाः ।
तपस्यभिरतिर्मेऽस्तु शरीरस्यास्य वर्तनम् ॥ ३५ ॥

एवमस्त्विति तं देवो जगाम स्वकमालयम् ।
वज्राङ्गोऽपि समाप्ते तु तपसि स्थिरसंयमः ॥ ३६ ॥
सङ्गन्तुमिच्छन्स्वां भार्यां न ददर्शाश्रमे स्वके । क्षुधाविष्टः सशैलस्य गहनं प्रविवेश ह
आदातुं फलमूलानि स च तस्मिन्व्यलोकयत् ।
रुदन्तीं स्वां प्रियां दीनां तरुप्रच्छादिताननाम् ॥ ३८ ॥
तां विलोक्य ततो दैत्यः प्रोवाच परिसान्त्वयन् ।

वज्राङ्ग उवाच ।

केन तेऽपकृतं भद्रे यमलोकं यियासुना ॥ ३९ ॥
कं वा कामं प्रयच्छामि शीघ्रं प्रब्रूहि मानिनि ।

वराङ्ग्युवाच ।

त्रासितास्म्यपविद्धास्मि ताडिता पीडितास्मि च ॥ ४० ॥
रौद्रेण देवराजेन नष्टनाथेव भूरिशः । दुःखस्यान्तमपश्यन्ती प्राणांस्त्यक्तुं व्यवस्थिता
पुत्रं मे तारकं देहि तस्माद्दुःखमहार्णवात् । एवमुक्तस्तु दैत्येन्द्रः कोपव्याकुललोचनः
शक्तोऽपि देवराजस्य प्रतिकर्तुं महासुरः । तप एव पुनश्चर्तुं व्यवस्यत महाबलः॥४३॥
ज्ञात्वा तस्य तु सङ्कल्पं ब्रह्मा क्रूरतरं पुनः । आजगामत्वरायुक्तो यत्रासौ दितिनन्दनः

ब्रह्मोवाच ।

किमर्थं पुत्रभूयस्त्वं कर्तुं नियममुद्यतः । तदहं ते पुनर्दास्ये काङ्क्षितं पुत्रमोजसा ॥

वज्राङ्ग उवाच ।

उत्थितेन मया दृष्टा समाधानात्त्वदाज्ञया । त्रासितेन्द्रेण मामाह सा वराङ्गी सुतार्थिनी
पुत्रं मे तारकं देहि तुष्टो मे त्वं पितामह ।

ब्रह्मोवाच ।

अलं ते तपसा वीर मा क्लेशे दुस्तरे विश ॥ ४७ ॥
पुत्रस्तु तारको नाम भविष्यति महाबलः । देवसीमन्तिनीनां तु धम्मिल्लकविमोक्षकः
इत्युक्तो दैत्यनाथस्तु प्रणम्य प्रपितामहम् ।

गत्वा तां नन्दयामास महिषीं कर्शितान्तराम् ॥ ४९ ॥
तौ दम्पती कृतार्थौ तु जग्मतुः स्वाश्रमं तदा । आहितं तु तदा गर्भं वराङ्गी वरवर्णिनी
पूर्णवर्षसहस्रं तु दधारोदर एव हि । ततो वर्षसहस्रान्ते वराङ्गी सात्वसूयत ॥ ५१ ॥
जायमाने तु दैत्ये तु तस्मिँल्लोकभयङ्करे । चचाल सर्वा पृथिवी प्रोद्भूताश्च महार्णवाः
चेलुर्धराधराश्चापि ववुर्वाताश्च भीषणाः । जेपुर्जप्यं मुनिवरा नेदुर्व्यालमृगा अपि ॥५३
जहौ कान्तिश्चन्द्रसूर्यौ नीहारच्छादितादिशः। जाते महासुरे तस्मिन्सर्वे चापिमहासुराः
आजग्मुर्हर्षितास्तत्र तथा चासुरयोषितः । जगुर्हर्षसमाविष्टा ननृतुश्चाप्सरोगणाः ॥
ततो महोत्सवे जाते दानवानां महाद्युते । विषण्णमनसो देवाः सहेन्द्रा अभवंस्तदा ॥
वराङ्गी तु सुतं दृष्ट्वा हर्षेणापूरिता तदा । बहु मेने च दैत्येन्द्रो विजातं तं तदा तया ॥
जातमात्रस्तु दैत्येन्द्रस्तारकश्चोग्रविक्रमः ।
अभिषिक्तोऽसुरैर्मुख्यैः कुजम्भमहिषादिभिः ॥ ५८ ॥
सर्वासुरमहाराज्ये पृथिवीतुलनक्षमे । स तु प्राप्तमहाराज्यस्तारको नृपसत्तम ॥ ५९ ॥
उवाच दानवश्रेष्ठो युक्तियुक्तमिदं वचः ।

तारक उवाच ।

शृणुध्वमसुराः सर्वे वाक्यं मम महाबलाः ॥ ६० ॥
वंशक्षयकरा देवाः सर्वेषामेव दानवाः । अस्माकं जातिधर्मेण विरूढं वैरमक्षयम् ॥६१॥
वयं तपश्चरिष्यामः सुराणां निग्रहाय तु । स्वबाहुबलमाश्रित्य सर्वं एवन संशयः ॥६२

पुलस्त्य उवाच ।

तच्छ्रुत्वा संमतं कृत्वा पारियात्रं ययौगिरिम् । निराहारःपञ्चतपाःपत्रभुग्वारिभोजनः
शतं शतं समानां तु तपांस्येतान्यथाकरोत् । एवं तु कर्शिते देहे तपो राशित्वमागते ॥
ब्रह्माऽऽगत्याह दैत्येन्द्रं वरं वरय सुव्रत । स वव्रे सर्वभूतेभ्यो न मे मृत्युर्भवेदिति ॥
तमुवाच ततो ब्रह्मा देहिनां मरणं ध्रुवम् । यतस्ततोऽपि वरय मृत्युं यस्मान्न शङ्कसे ॥
ततः सञ्चिन्त्य दैत्येन्द्रः शिशोर्वै सप्तवासरात् । वव्रे महासुरो मृत्युं मोहितोह्यवलेपतः
जगामोमित्युदाहृत्य ब्रह्मा दैत्यो निजं गृहम् ।

अथाह मन्त्रिणस्तूर्णं बलं मे सम्प्रयुज्यताम् ॥ ६८ ॥
यदि वो मत्प्रियं कार्यं निग्राह्याः सुरसत्तमाः । निगृहीतेषु मेप्रीतिर्जायतेचातुलाऽसुराः
तारकस्य वचः श्रुत्वा ग्रसनो नाम दानवः ॥
सेनानीर्दैत्यराजस्य सज्जं चक्रे बलं च तत् ॥ ७० ॥
आहत्य भेरीं गम्भीरां दैत्यानाहूय सत्वरः। दशकोटीश्वरा दैत्या दैत्यानांचण्डविक्रमाः
तेषामग्रेसरो जम्भः कुजम्भोऽनन्तरोऽसुरः । महिषः कुञ्जरो मेघः कालनेमिर्निमिस्तथा
मन्थनो जम्भकः शुम्भो दैत्येन्द्रा दशनायकाः ।
अन्ये च शतशस्तत्र पृथिवीतुलनक्षमाः ॥ ७३ ॥
गरुडानां सहस्रेण चक्राष्टकविभूषितः । स कूबरपरीवारश्चतुर्योजनविस्तृतः ॥ ७४ ॥
स्यन्दनस्तारकस्यासीद्व्याघ्रसिंहखरार्वभिः ।
युक्ता रथास्तु ग्रसनजम्भकौजम्भकुम्भिनाम् ॥ ७५ ॥
मेघस्य द्वीपिभिर्युक्तःकूष्माण्डैः कालनेमिनः । पर्वताभश्चतुर्दंष्ट्रो निमेश्चैव महागजः ॥
शतहस्ततुरङ्गस्थो मन्थनो नामदैत्यराट् । जम्भकस्तू ष्ट्रमारूढो गिरीन्द्राभं महाबलः ॥
शुम्भो मेषं समारूढोऽन्येऽप्येवं चित्रवाहनाः ।
प्रचण्डाश्चित्रवर्माणःकुण्डलोष्णीषभूषिताः ॥ ७८ ॥
तद्बलंदैत्यसिंहस्यभीमरूपंव्यजायत । प्रमत्तमत्तमातङ्गतुरङ्गरथसङ्कुलम् ॥ ७६ ॥
प्रतस्थेऽमरयुद्धाय बहुपत्तिपताकिकम् । एतस्मिन्नन्तरे वायुर्देवदूतोऽसुरालये ॥ ८० ॥
दृष्ट्वा तद्दानवबलं जगामेन्द्रस्यशंसितुम् । स गत्वा तु सभां दिव्यां महेन्द्रस्यमहात्मनः
शशंसमध्ये देवानां तत्कार्यंसमुपस्थितम् । तच्छ्रुत्वा देवराजस्तु निमीलितविलोचनः
बृहस्पतिमुवाचेदं वाक्यं काले महाभुजः ।

इन्द्र उवाच ।

सम्प्राप्नोति विमर्दोऽयं देवानां दानवैः सह ॥ ८३ ॥
कार्यंकिमत्र तद्ब्रूहि नीत्युपायोपबृंहितम् । एतच्छ्रुत्वा तु वचनं महेन्द्रस्य गिरांपतिः
इत्युवाच महाभागो बृहस्पतिरुदारधीः ।

बृहस्पतिरुवाच ।

सामपूर्वा श्रुता नीतिश्चतुरङ्गा पताकिनी ॥ ८५ ॥

जिगीषतां सुरश्रेष्ठ स्थितिरेषा सनातनी । सामभेदस्तथादानं दण्डश्चाङ्गचतुष्टयम् ॥

न सान्त्वगोचरैर्लुब्धा नभेद्यास्त्वेकधर्मिणः । न दानमत्र संसिद्ध्यैप्रसह्यैवापहारिणाम्

एकोऽभ्युपायो दण्डोऽत्र भवतां यदि रोचते । एवमुक्तः सहस्राक्ष एवमेतदुवाचह ॥

कर्त्तव्यतां च सञ्चिन्त्य प्रोवाचामरसंसदि ।

इन्द्र उवाच ।

अवधाने न मे वाचं शृणुध्वं नाकवासिनः ॥ ८६ ॥

भवन्तो यज्ञभोक्तारो दिव्यात्मानो हि सान्वयाः ।

स्वे महिम्नि स्थिता नित्यं जगतः पालने रताः ॥ ६० ॥

क्रियतांसमरोद्योगः सैन्यं संयोज्यतांमम । आह्रियन्तांच शस्त्राणि पूज्यन्तांशस्त्रदेवताः

वाहनानि विमानानि योजयध्वं ममेश्वराः ।

यमंसेनापतिं कृत्वा शीघ्रमेव दिवौकसः ॥ ६२ ॥

पुलस्त्य उवाच ।

इत्युक्तास्समनह्यन्त देवानां ये प्रधानतः । वाजिनामयुतेनाजौ हेमघण्टापरिष्कृतम् ॥

नानाश्चर्यगुणोपेतं सम्प्राप्तं देवदानवैः । रथं मातलिना युक्तं देवराजस्य दुर्जयम् ॥

यमो महिषमास्थाय सेनाग्रे समवर्त्तत । चण्डकिङ्करवृन्देन सर्वतः परिवारितः ॥६५॥

कल्पकालोद्गतज्वालापूरितोऽम्बरगोचरः । हुताशनस्त्वजारूढः शक्तिहस्तो व्यवस्थितः

पवनोऽङ्कुशहस्तश्च विस्तारितमहाजवः । भुजगेन्द्रसमारूढो जलेशो भगवान्स्वयम् ॥

नरयुक्ते रथे देवो राक्षसेशो वियच्चरः । तीक्ष्णखड्गयुतो भीमः समरे समवस्थितः ॥

महासिंहरथे देवो धनाध्यक्षो गदायुधः । चन्द्रादित्यावश्विनौ च चतुरङ्गबलान्विताः

सेनान्योदेवराजस्य दुर्जया भुवनत्रये । कोटयस्तास्त्रयस्त्रिंशद्देवदेवनिकायिनाम् ॥

हिमाचलाभे सितचारुचामरे सुवर्णपद्मामलसुन्दरस्रजि ।

कृताभिरामोज्ज्वलकुङ्कुमाङ्कुरे कपोललीलालिकदम्बसङ्कुले ॥ १०१ ॥

अथाह मन्त्रिणस्तूर्णं बलं मे सम्प्रयुज्यताम् ॥ ६८ ॥
यदि वो मत्प्रियं कार्यं निग्राह्याः सुरसत्तमाः । निगृहीतेषु मेप्रीतिर्जायतेचातुलाऽसुराः
तारकस्य वचः श्रुत्वा ग्रसनो नाम दानवः ॥
सेनानीर्दैत्यराजस्य सज्जं चक्रे बलं च तत् ॥ ७० ॥
आहत्य भेरीं गम्भीरां दैत्यानाहूय सत्वरः। दशकोटीश्वरा दैत्या दैत्यानांचण्डविक्रमाः
तेषामग्रेसरो जम्भः कुजम्भोऽनन्तरोऽसुरः । महिषः कुञ्जरो मेघः कालनेमिर्निमिस्तथा
मन्थनो जम्भकः शुम्भो दैत्येन्द्रा दशनायकाः ।
अन्ये च शतशस्तत्र पृथिवीतुलनक्षमाः ॥ ७३ ॥
गरुडानां सहस्रेण चक्राष्टकविभूषितः । स कूबरपरीवारश्चतुर्योजनविस्तृतः ॥ ७४ ॥
स्यन्दनस्तारकस्यासीद्व्याघ्रसिंहखरार्वभिः ।
युक्ता रथास्तु ग्रसनजम्भकौजम्भकुम्भिनाम् ॥ ७५ ॥
मेघस्य द्वीपिभिर्युक्तःकूष्माण्डैः कालनेमिनः । पर्वताभश्चतुर्दंष्ट्रो निमेश्चैव महागजः ॥
शतहस्ततुरङ्गस्थो मन्थनो नामदैत्यराट् । जम्भकस्तू ष्ट्रमारूढो गिरीन्द्राभं महाबलः ॥
शुम्भो मेषं समारूढोऽन्येऽप्येवं चित्रवाहनाः ।
प्रचण्डाश्चित्रवर्माणःकुण्डलोष्णीषभूषिताः ॥ ७८ ॥
तद्बलंदैत्यसिंहस्यभीमरूपंव्यजायत । प्रमत्तमत्तमातङ्गतुरङ्गरथसङ्कुलम् ॥ ७९ ॥
प्रतस्थेऽमरयुद्धाय बहुपत्तिपताकिकम् । एतस्मिन्नन्तरे वायुर्देवदूतोऽसुरालये ॥ ८० ॥
दृष्ट्वा तद्दानवबलं जगामेन्द्रस्यशंसितुम् । स गत्वा तु सभां दिव्यां महेन्द्रस्यमहात्मनः
शशंसमध्ये देवानां तत्कार्यंसमुपस्थितम् । तच्छ्रुत्वा देवराजस्तु निमीलितविलोचनः
बृहस्पतिमुवाचेदं वाक्यं काले महाभुजः ।

इन्द्र उवाच ।

सम्प्राप्नोति विमर्दोऽयं देवानां दानवैः सह ॥ ८३ ॥
कार्यंकिमत्र तद्ब्रूहि नीत्युपायोपबृंहितम् । एतच्छ्रुत्वा तु वचनं महेन्द्रस्य गिरांपतिः
इत्युवाच महाभागो बृहस्पतिरुदारधीः ।

बृहस्पतिरुवाच ।

सामपूर्वा श्रुता नीतिश्चतुरङ्गा पताकिनी ॥ ८५ ॥

जिगीषतां सुरश्रेष्ठ स्थितिरेषा सनातनी । सामभेदस्तथादानं दण्डश्चाङ्गचतुष्टयम् ॥
न सान्त्वगोचरैर्लुब्धा नभेद्यास्त्वेकधर्मिणः । न दानमत्र संसिद्ध्यैप्रसह्यैवापहारिणाम्
एकोऽभ्युपायो दण्डोऽत्र भवतां यदि रोचते । एवमुक्तः सहस्राक्ष एवमेतदुवाचह ॥

कर्त्तव्यतां च सञ्चिन्त्य प्रोवाचामरसंसदि ।

इन्द्र उवाच ।

अवधाने न मे वाचं शृणुध्वं नाकवासिनः ॥ ८६ ॥

भवन्तो यज्ञभोक्तारो दिव्यात्मानो हि सान्वयाः ।

स्वे महिम्नि स्थिता नित्यं जगतः पालने रताः ॥ ९० ॥

क्रियतांसमरोद्योगः सैन्यं संयोज्यतांमम । आह्रियन्तांच शस्त्राणि पूज्यन्तांशस्त्रदेवताः

वाहनानि विमानानि योजयध्वं ममेश्वराः ।

यमंसेनापतिं कृत्वा शीघ्रमेव दिवौकसः ॥ ९२ ॥

पुलस्त्य उवाच ।

इत्युक्तास्समनह्यन्त देवानां ये प्रधानतः । वाजिनामयुतेनाजौ हेमघण्टापरिष्कृतम् ॥
नानाश्चर्यगुणोपेतं सम्प्राप्तं देवदानवैः । रथं मातलिना युक्तं देवराजस्य दुर्जयम् ॥
यमो महिषमास्थाय सेनाग्रे समवर्त्तत । चण्डकिङ्करवृन्देन सर्वतः परिवारितः ॥९५॥
कल्पकालोद्गतज्वालापूरितोऽम्बरगोचरः । हुताशनस्त्वजारूढः शक्तिहस्तो व्यवस्थितः
पवनोऽङ्कुशहस्तश्च विस्तारितमहाजवः । भुजगेन्द्रसमारूढो जलेशो भगवान्स्वयम् ॥
नरयुक्ते रथे देवो राक्षसेशो वियच्चरः । तीक्ष्णखड्गयुतो भीमः समरे समवस्थितः ॥
महासिंहरथे देवो धनाध्यक्षो गदायुधः । चन्द्रादित्यावश्विनौ च चतुरङ्गबलान्विताः
सेनान्योदेवराजस्य दुर्जया भुवनत्रये । कोटयस्तास्त्रयस्त्रिंशद्देवदेवनिकायिनाम् ॥

हिमाचलाभे सितचारुचामरे सुवर्णपद्मामलसुन्दरस्रजि ।

कृताभिरामोज्ज्वलकुङ्कुमाङ्कुरे कपोललीलालिकदम्बसङ्कुले ॥ १०१ ॥

स्थितस्तदैवरावणनामकुञ्जरे महामनाश्चित्रविभूषणाम्बरः ।
विशालवज्रः सुवितानभूषितः प्रकीर्णकेयूरभुजङ्गमण्डलः ॥ १०२ ॥
सहस्रदृग्वन्दितपादपल्लवस्त्रिविष्टपेऽशोभत पाकशासनः ।
तुरङ्गमातङ्गकुलौघसङ्कुला सीतातपत्रध्वजशालिनी च ॥ १०३ ॥
बभूव सा दुर्जयपत्तिसन्तता विभाति नानायुधयोधदुस्तरा १०४ ॥

ततोऽश्विनौ च मरुतः ससाध्याः सपुरन्दराः । यक्षराक्षसगन्धर्वा दिव्यनानास्त्रपाणयः
जघ्नुर्दैत्येश्वरं सर्वे सम्भूय तु महाबलाः । न चैवास्त्राण्यसज्जन्त गात्रे वज्राचलोपमे
अथोरथादवप्लुत्य तारकोदानवाधिपः । जघान कोटिशो देवान्करपार्ष्णिभिरेवच ॥
हतशेषाणि सैन्यानि देवानांविप्रदुद्रुवुः । दिशो भूतानि सन्त्यज्य रणोपकरणानिच ॥
दृष्ट्वा तान्विद्रुतान्देवांस्तारको वाक्यमब्रवीत् ॥ १०६ ॥

तारक उवाच ।

मावधिष्टसुरान्दैत्या वज्राङ्गाय च मन्दिरे । शीघ्रमानीयदर्श्यन्तांबद्धान्पश्यत्वयं सुरान्

पुलस्त्य उवाच ।

लोकपालांस्ततो दैत्यो बद्ध्वा चेन्द्रमुखान्रणे । सरुद्रान्सुदृढैः पाशैः पशुपालः पशूनिव
स भूयो रथमास्थाय जगाम स्वकमालयम् ।
सिद्धगन्धर्वसङ्घुष्टं विपुलाचलमस्तकम् ॥ ११२ ॥
स्तूयमानो दितिसुतैरप्सरोभिः सुसेवितः ॥ ११३ ॥

इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे देवासुरसङ्ग्रामे तारकजयो नाम
चतुश्चत्वारिंशत्तमोऽध्यायः ।

————

# पञ्चचत्वारिंशत्तमोऽध्यायः

## सर्वदेवकृतं ब्रह्मस्तोत्रम् ।

पुलस्त्य उवाच ।

प्रादुरासीत्प्रतीहारः शुभ्रचीनांशुकाम्बरः । स जानुभ्यां महीं गत्वा पिहितास्यश्चपाणिना
उवाचानाविलं वाक्यमल्पाक्षरपरिष्कृतम् । दैत्येन्द्रमर्कवृन्दाभं बिभ्रतं भास्करं वपुः॥
कालनेमिः सुरान्बद्ध्वा प्रादाय द्वारितिष्ठति । स विज्ञापयति स्थेयं क्वन्दिनिचयैःप्रभो
तन्निशम्याब्रवीद्दैत्यः प्रतीहारस्य भाषितम् । यथेष्टं स्थीयतामेभिर्गृहं मे भुवनत्रयम् ॥
केवलं वासवं त्वेकं मुण्डयित्वा विमुच्यताम् । सितवस्त्रपरिच्छन्नंशुनःपादेनचिह्नितम्
एवं कृते ततो देवा दूयमानेन चेतसा । जग्मुर्जगद्गुरुं द्रष्टुं शरणं कमलोद्भवम् ॥६॥
विनिर्विण्णास्तमासाद्य शिरोभिर्धरणींगताः । तुष्टुवुःसुष्टुवर्णाढ्यैर्वचोभिःकमलम् नास लासनम्

देवा ऊचुः ।

नमस्त्वोङ्काराङ्कुरादिप्रसूत्यै विश्वस्थानानन्तभेदस्य पूर्वकम् ।
सम्भूतस्यानन्तरं सत्त्वमूले संहारेच्छोस्ते नमः सत्त्वमूर्त्ते ॥ ८ ॥
व्यक्तीनां त्वामादिभूतं महिम्ना चास्मादस्मानभिधानाद्विचिन्त्य ।
द्यावापृथिव्योरूर्ध्वलोकांस्तथाधश्चाण्डादस्मात्त्वं विभागं चकर्थ ॥ ९ ॥
व्यक्तं मेरुर्यज्जरायुस्तवाभूद्देवं विद्मस्त्वत्प्रणीतोऽवकाशः ।
व्यक्तं देवा जज्ञिरे यस्य देहाद्देहस्यान्तश्चारिणो देहभाजः ॥ १० ॥
द्यौस्ते मूर्द्धा लोचने चन्द्रसूर्य्यौ व्यालाः केशाः श्रोत्ररन्ध्रे दिशस्ते ।
गात्रं यज्ञः सिन्धवः सन्धयो वै पादौ भूमिस्तूदरं ते समुद्राः ॥ ११ ॥
मायाकारः कारणं त्वं प्रसिद्धो वेदैः शान्तो ज्योतिरर्कस्त्वमुक्तः ।
वेदार्थेन त्वां विवृण्वन्ति बुद्ध्या हृत्पद्मान्तः संनिविष्टं पुराणम् ॥ १२ ॥
त्वां चात्मानं लब्धयोगा गृणन्ति साङ्ख्यैर्यास्ताःसप्तसूक्ष्माः प्रणीताः ।

तासां हेतुर्याष्टमी चापि गीता तास्वन्तस्थो जीवभूतस्त्वमेव ॥ १३ ॥
दृष्ट्वा मूर्तिं स्थूलसूक्ष्मां चकार ये वै भावाःकारणे केचिदुक्ताः ।
सम्भूतास्ते त्वत्त एवादिसर्गे भूयस्तास्त्वां वासनान्तेऽभ्युपेयुः ॥ १४ ॥
त्वत्सङ्केतस्त्वन्तरायो निगूढः कालोऽमेयोध्वस्तसङ्ख्या विकल्पः ।
भावाभावाव्यक्तिसंहारहेतुः सोऽनन्तस्त्वं तस्य कर्ता निधानम् ॥ १५ ॥
स्थूलस्सर्वोऽनर्थभूतस्ततोऽन्यस्सोऽर्थस्सूक्ष्मो यो हि तेभ्योऽपि गीतः ।
स्थूलाभावाश्चावृता यैश्च तेषां तेभ्यः स्थूलस्त्वं पुराणे प्रणीतः ॥ १६ ॥
भूतं भूतं भूतिमद्भूतभावं भावे भावं भावितं त्वं युनक्षि ।
युक्तं युक्तं व्यक्तिभावान्निरस्य स्थाने स्थाने व्यक्तिवृत्तिं करोषि ॥ १७ ॥
इत्थं देवो व्यक्तिभाजां शरण्यस्त्राता गोप्ताभावितोऽनन्तमूर्तिः ॥ १८ ॥

पुलस्त्य उवाच ।

विरेमुरमराः स्तुत्वा ब्रह्माणमितिकारणम् । तस्थुर्मनोभिरिष्टार्थसम्प्राप्तिप्रार्थनास्ततः ॥
एवं स्तुतौ विरिञ्चिस्तु प्रसादंपरमं गतः । अमरान्वरदोऽप्याह वामहस्तेन निर्दिशन्

ब्रह्मोवाच ।

नारी वा भर्तृकाऽकस्माद्धस्तसन्त्यक्तभूषणा । न राजसे कुतश्शक्र म्लानवक्त्रसरोरुहः
हुताशनवियुक्तोऽपि धूमेन न विराजसे । तृणौघेन प्रतिच्छन्नो दग्धदावश्चिरोषितः ॥
यमामयशरीरेणक्लिष्टोनाद्य विराजसे । दण्डेनालम्बनेनेव कृष्टो येन पदे पदे ॥ २३ ॥
रजनीचरनाथ त्वं किंभीत इवभाषसे । राक्षसेन्द्र कृतादाने त्वमरातिक्षतो यथा ॥
तनुस्ते वरुणो च्छुष्का परीतस्येव वह्निना । विमुक्तरुधिरं चाथ पदं त्वं प्रविलोकय
वायो भवान्विचेतस्कः खड्गाग्रैरिवनिष्कृतः ।
किं त्वं नतोऽसि धनद सन्त्यज्येव कुवेरताम् ॥ २६ ॥
रुद्रास्त्रिशूलिनः सन्तोऽविन्दध्वं बहुशूरताम् । भवतांकेनचाक्षिप्तातीव्रतानस्तदुच्यताम्

पुलस्त्य उवाच ।

एवमुक्ताः सुरास्तेन ब्रह्मणा ब्रह्मवर्तिना । वाचां प्रधानभूतत्वात्ते मारुतमचोदयन् ॥

अथ शक्रमुखैर्देवैः पवनः प्रतिचोदितः । प्राहदेवं चतुर्वक्त्रं भवान्वेत्ति चराचरम् ॥

वायुरुवाच ।

पुरुहूतमुखाः सबला निमिषा विजिताः प्रसभं किल दैत्यशतैः ।
क्रतवो विहिता भवता स्थितये जगतां च महाद्भुतचित्रगुणाः ॥ ३० ॥
अपि यज्ञकृतः श्रुतकामफला विहिता ऋषयस्तत एव पुरः ।
अपि नाकमभूत्किल यज्ञभुजां भवतो विनियोगवशात्सततम् ॥ ३१ ॥
अपहृत्य विमानगणं सकृतो दनुजेन महाकरभूमिसमः ।
कृतवानसि सर्वगुणातिशयं यमशेषमहीधरराजतया ॥ ३२ ॥
मखभूषितमंशुमतामवधिं सुरधामगिरिं गगनेऽपि सदा ।
अधिवासविहारविधानुचितो दनुजेन परिष्कृतशृङ्गतटः ॥ ३३ ॥
प्रविलम्बितरत्नगुहानिवहो बहुदैत्यसमाश्रयतां गमितः ।
असुरस्य च तस्य भयेन गतं सविषादशरीरनिमित्ततया ॥ ३४ ॥
उपभोग्यतयाऽधिकृतं सुचिरं विमलद्युतिपूरितदिग्वदनम् ।
भवतैव विनिर्मितमादियुगे सुरहेति समूहवरं कुलिशम् ॥ ३५ ॥
दितिजस्य शरीरमवाप्य गतं शतधा मतिभेदमिवाल्पविदः ॥ ३६ ॥
बाणश्च युधिविद्धाङ्गा द्वारि द्वास्थैर्निदर्शिताः ।
लब्धप्रवेशाः कृच्छ्रेण वयं तस्यामरद्विषः ॥ ३७ ॥

सभायाममरा देव प्रकृष्योपनिवेशिताः । वेत्रहस्तैरजल्पन्तस्तथोपहसिता परैः ॥ ३८ ॥

महार्थाः सिद्धसर्वार्था भवन्तः स्वल्पभाषिणः ।
शास्त्रयुक्तमथ ब्रूतमाऽमरा बहुभाषिणः ॥ ३९ ॥

सभेयं दैत्यसिंहस्य न शक्रस्य विशृङ्खला । वदद्भिरिति दैत्यस्य प्रेष्यैर्विहसिता बहु ॥
ऋतवो मूर्तिमन्तश्चाप्यहर्निशमुपासने । कृतापराधं सत्रासं न त्यजन्ति कथञ्चन ॥
तन्त्रीलयनयोपेतं सिद्धगन्धर्वकिन्नरैः । सुरागमुपधाविष्टं गीयते तस्य वेश्मसु ॥४२॥
कृताकृतोपकरणैर्मित्रादिगुरुलाघवैः । शरणागतसन्त्यागी त्यक्तसत्यप्रतिश्रयः ॥ ४३ ॥

इति निश्शेषमथवानिश्शेषं केन शक्यते । तस्या विनयमाख्यातुं स्रष्टा तत्र परायणम्
पुलस्त्य उवाच ।
इत्युक्त्वाव्यरमद्वायुः शनैर्देवविचेष्टितम् । सुरानुवाच भगवांस्ततः स्मितमुखाम्बुजः॥
ब्रह्मोवाच ।
अवध्यस्तारको दैत्यः सर्वैरपि सुरासुरैः । यस्य वध्यस्सनाद्यापि जातस्त्रिभुवने पुमान्
मया स वरदानेन छन्दयित्वा निवारितः । तपसः साम्प्रतं राजा त्रैलोक्यदहनात्मकः॥
स तु वव्रे वधं दैत्यश्शिशुतः सप्तवासरात् । सतु सप्तदिनो बालः शङ्कराद्योभविष्यति
तारकस्य निहन्ता स भाष्कराभो भविष्यति ।
साम्प्रतं चाप्य पत्नीकः शङ्करो भगवान्प्रभुः ॥ ४६ ॥
हिमाचलस्य दुहितायाच देवी भविष्यति । तस्याः सकाशाद्यः सूनुररण्याःपावकोयथा
जनिष्यति स तं प्राप्य तारको न भविष्यति। मयाऽभ्युपायःकथितोयथैष हिभविष्यति
शेषं चाप्यस्य विभवं विभजध्वमनन्तरम् । स्तोककालं प्रतीक्षध्वं निर्विशङ्केन चेतसा
पुलस्त्य उवाच ।
इत्युक्तास्त्रिदशास्तेन साक्षात्कमलयोनिना ।
जग्मुस्ते प्रणिपत्येशं यथायोगं दिवौकसः ॥ ५३ ॥
ततो यातेषु देवेषु ब्रह्मा लोकपितामहः । निशां सस्मार भगवांस्तां देवीं पूर्वसम्भवाम्
ततो भगवती रात्रिरुपतस्थे पितामहम् । तां विविक्ते समालोक्य ब्रह्मोवाच विभावरीम्
ब्रह्मोवाच ।
विभावरिमहत्कार्यं देवानां समुपस्थितम् । तत्कर्तव्यं त्वयादेवि शृणु कार्यस्यनिश्चयम्
तारको नाम दैत्येन्द्रः सुरशत्रुरनिर्जितः । तस्याभवाय भगवाञ्जनयिष्यति चेश्वरः॥
सुतं स भविता तस्य तारकस्यान्तकः किल ।
शङ्करस्याभवत्पत्नी सती दक्षसुता तु या ॥ ५८ ॥
सा पितुः कुपितादेवी कस्मिंश्चित्कारणान्तरे । भवित्रीहिमशैलस्य दुहितालोकभाविनी
विरहेण हरस्तस्या मत्वा शून्यं जगत्त्रयम् । स तस्यहिमशैलस्यकन्दरे सिद्धसेविते॥

प्रतीक्षमाणस्तज्जन्म किञ्चित्कालं निवत्स्यति। तयोः सुतप्ततपसोर्भवितायोमहान्सुतः

भविष्यति स दैत्यस्य तारकस्य विनाशकः।
जातमात्रा च सा देवी स्वल्पसंज्ञेव भामिनी ॥ ६२ ॥

विरहोत्कण्ठिता गाढं हरसङ्गमलालसा। तयोःसुतप्ततपसोः संयोगः स्याच्छुभावहः॥

ततस्ताभ्यां तु जनितः स्वल्पो वाक्कलहोभवेत्।
ततस्तु संशयो भूयस्तारकस्य च दृश्यते ॥ ६४ ॥
तयोः संयुक्तयोस्तस्मात्सुरतासक्तिकारणे।
विघ्नं त्वया विधातव्यं यथा ताभ्यां तथा शृणु ॥ ६५ ॥

गर्भस्थमेव तन्मातुः स्त्रेन रूपेण संज्ञया। ततो विहस्य शर्वस्तां विषण्णो नर्मपूर्वकम्

भर्त्सयिष्यति तां देवीं ततः सा कुपिता सती।
प्रयास्यति तपश्चर्तुं ततः सा तपसा युता ॥ ६७ ॥

जनयिष्यति तं शर्वादमितद्युतिमण्डलम्। सम्भविष्यति हन्ताऽसौ सुरारीणामसंशयम्
त्वयापि दानवा देवि हन्तव्या लोकदुर्जयाः। यावत्सुरेश्वरी देहसङ्क्रान्तगुणसञ्चया॥
तत्सङ्गमेन तावत्त्वं दैत्यान्हन्तुं न शक्यसे। एवं कृते तपस्तप्त्वा त्वयासवं करिष्यति
समाप्तनियमा देवि यदा चोमा भविष्यति। तदा स्वमेव सारूपं शैलजा प्रतिपत्स्यते॥
तदा त्वयापि सहिता भवानी सा भविष्यति। रूपांशेनतुसंयुक्ताउमायास्त्वंभविष्यसि
एकाऽनंशेति लोकस्त्वां वरदे पूजयिष्यति। भेदैर्बहुविधाकारैः सर्वगांकामसाधिनीम्
ओंकारवक्त्रा गायत्री त्वमिति ब्रह्मवादिभिः। आक्रान्तैरूर्जिताकारााराजभिश्चमहाभुजैः
त्वंभूरिति विशां माता शूद्रैश्शैवेति पूजिता। क्षान्तिर्मुनीनामक्षोभ्यादयानियमिनामपि
त्वं महोपायसन्देहो नीतिर्नयविसर्पिणाम्। परिचितिस्त्वमर्थानांत्वमीहाप्राणिहृच्छया

त्वं मुक्तिस्सर्वभूतानां त्वं गतिःसर्वदेहिनाम्।
रतिस्त्वं रतचित्तानां प्रीतिस्त्वं हृदि देहिनाम् ॥ ७७ ॥
त्वं कीर्तिः सत्यभूतानां त्वं शान्तिर्दुष्टकर्मणाम्।
त्वं भ्रान्तिः सर्वभूतानां त्वं गतिः क्रतुयाजिनाम् ॥ ७८ ॥

जलधीनां महावेला त्वं च लीला विलासिनी। प्रियकण्ठग्रहानन्ददायिनी त्वंविभावरी
इत्यनेकविधैर्देवीरूपैर्लोकैस्त्वमर्चिता। ये त्वां स्तोष्यन्ति वरदे पूजयिष्यन्ति चापि ये॥
ते सर्वकामानाप्स्यन्ति नियता नात्र संशयः॥ ८१॥

पुलस्त्य उवाच।

इत्युक्ता तु निशादेवी तथेत्युक्त्वा कृताञ्जलिः। जगाम त्वरिता तूर्णं गृहं हिमगिरेर्महत्
तत्रासीनां महाहर्म्यैरत्नभित्तिसमाश्रयाम्। ददर्श मेनामापाण्डुच्छविवक्त्रसरोरुहाम्॥
किञ्चित्क्षामां मुखोदग्रस्तनभारावनामिताम्॥ ८३॥
महौषधिगणाबद्धमन्त्रराजनिषेविताम्।
उदूढकनकोन्नद्धजीवरक्षामनोरमाम्॥ ८४॥
मणिदीपगणज्योतिर्महालोकप्रकाशिते। प्रकीर्णबहुसिद्धार्थमनोज्ञपरिचारके॥ ८५॥
शुद्धचीनांशुकच्छत्रभूशय्यास्तरणोज्ज्वले। धूपामोदमनोरम्ये सज्जसर्वोपयोगिके॥
ततः क्रमेण दिवसे गते दूरं विभावरी। विजृम्भितसुखोदर्के ततो मेना महागृहे॥८७॥
प्रसुप्तप्रायपुरुषे निद्राभूतोपचारके। स्फुटालोके शशभृतिभ्रान्तरात्रिविहङ्गमे॥ ८८॥
रजनीचरसञ्चारभूतैरावृतचत्वरे। गाढकण्ठग्रहालग्ने शुभगोष्ठजने ततः॥ ८९॥
किंचिदाकुलतां प्राप्ते मेनानेत्राम्बुजद्वये। आविवेश मुखे रात्रिः सुखमद्भुतसङ्गमा॥९०॥
उन्मादाय जगन्मातुः क्रमेण जठरान्तरे। आविवेशातुलं जन्म मन्यमाना कदा तु वै॥
अरञ्जयद्गृहं देव्या गुहारण्ये विभावरी। ततो जगत्यानिर्वाणहेतुर्हिमगिरिप्रिया॥९२॥
ब्राह्मे मुहूर्ते सुभगे प्रासूयत गुहारणिम्। तस्यां तु जायमानायां जन्तवः स्थाणुजङ्गमाः
अभवन्सुखिनः सर्वे सर्वलोकनिवासिनः। नारकाणामपि तदा सुखं स्वर्गसमं महत्॥
अभवत्क्रूरसत्त्वानां चेतः शान्तं च देहिनाम्।
ज्योतिषामपि तेजस्तु सुतरां चाभवत्तदा॥ ९५॥
वनाश्रिताश्चौषधयः स्वादवन्ति फलानि च।
गन्धवन्ति च माल्यानि विमलं च नभोऽभवत्॥ ९६॥
मारुतश्च सुखस्पर्शो दिशश्च सुमनोहराः। ऋतूद्भूतफला योगपरिपाकगुणोज्ज्वला॥

अभवत्पृथिवी देवी शालिमालाकुलापि च ।
तपांसि दीर्घचीर्णानि मुनीनां भावितात्मनाम् ॥ ९८ ॥
तस्मिन्गतानि साफल्यं काले निर्मलचेतसाम् ।
विस्मृतानि च शास्त्राणि प्रादुर्भावं प्रपेदिरे ॥ ९९ ॥
प्रभावस्तीर्थमुख्यानां तदा पुण्यतमस्त्वभूत् । अन्तरिक्षेऽमराश्चासन्विमानेषु सहस्रशः
समहेन्द्रजलाधीशवायुवह्निपुरोगमाः । पुष्पवृष्टिं प्रमुमुचुस्तस्मिंस्तुहिनभूधरे ॥ १०१ ॥
जगुर्गन्धर्वमुख्याश्च ननृतुश्चाप्सरोगणाः । मेरुप्रभृतयश्चापि मूर्तिमन्तो महाचलाः ॥
तस्मिन्महोत्सवे प्राप्ते दिव्याः प्रसृतपाणयः ।
सागरास्सरितश्चैव समाजग्मुश्च सर्वशः ॥ १०३ ॥
हिमशैलोऽभवल्लोके तदा सर्वैश्चराचरैः । संसेव्यश्चाधिगम्यश्च साश्रयश्चाचलोत्तमः ॥
अनुभूयोत्सवं देवा जग्मुः स्वान्निलयांस्तदा । देवनागेन्द्रगन्धर्वशैललीलावतीगणैः ॥
हिमशैलसुतादेवी त्वहम्पूर्विकयाततः । क्रमेणवृद्धिमानीता विद्याश्चानलसैर्बुधैः ॥१०६॥
क्रमेण रूपसौभाग्यप्रबोधैर्भुवनत्रये । सम्पूर्णलक्षणा जाता हिमालयसुता तथा ॥१०७॥
एतस्मिन्नन्तरे शक्रो नारदं देवसंमतम् । देवर्षिमथ सस्मार कार्यसाधनतत्परः ॥१०८॥
स तु शक्रस्य विज्ञाय काङ्क्षितं भगवांस्तदा ।
आजगाम मुदा युक्तो महेन्द्रस्य निवेशनम् ॥ १०९ ॥
तं तु दृष्ट्वा सहस्राक्षः समुत्थाय महासनात् ।
यथार्हेण तु पाद्येन पूजयामास वासवः ॥ ११० ॥
शक्रप्रणिहितां पूजां प्रतिगृह्य यथाविधि । नारदः कुशलं देवमपृच्छत्पाकशासनम् ॥
पृष्टे च कुशले शक्रः प्रोवाच वचनं प्रभुः ॥ ११२ ॥

इन्द्र उवाच ।

कुशलस्याङ्कुरस्तावत्संवृत्तो भुवनत्रये । तत्फलोद्भवसम्पत्तौ त्वं मया विदितो मुने ॥
वेत्स्येव तत्समस्तं त्वं तथापि परिचोदितः । निर्वृतिं परमां याति निवेद्यार्थं सुहृज्जने
तद्यथा शैलजा देवी योगं यायात्पिनाकिना । शीघ्रंतथोद्यमः सर्वैरस्मत्पक्षैर्विधीयताम्

पुलस्त्य उवाच।

अवगम्यार्थमखिलं तत आमन्त्र्य नारदः। शीघ्रं जगाम भगवान्हिमशैलनिकेतनम्॥
तत्र द्वारे स विप्रेन्द्रश्चित्रवेत्रलताकुले। वन्दितो हिमशैलेन निर्गतेन पुरो मुनिः॥११७॥
स ह प्रविश्य भवनं भुवो भूषणतां गतम्। निवेदिते स्वयं हैमे हिमशैलेन विस्तृते॥

महासने मुनिवरो निषसादातुलद्युतिः।
यथार्हमर्घ्यं पाद्यं च शैलस्तस्मै न्यवेदयत्॥ ११९॥

मुनिः स प्रतिजग्राह तमर्घ्यं विधिवत्तदा। गृहीतार्घम्मुनिश्रेष्ठमपृच्छच्छ्लक्ष्णया गिरा
कुशलं तपसः शैलः शनैः फुल्लाननाम्बुजः। मुनिरप्यद्रिराजानमपृच्छत्कुशलं तदा॥

नारद उवाच।

अहो धर्मोचितस्तेऽस्ति संनिवेशो महागिरे। पृथुत्वं मनसा तुल्यं कन्दराणां तवानघ
गुरुत्वं ते गुणौघानां स्थावरादतिरिच्यते। प्रसन्नता च तोयस्य मुनिभ्यश्चाधिका तव

न लक्षयामः शैलेन्द्र कुत्राविनयता स्थिता।
नानातपोभिर्मुनिभिर्ज्वलनार्कसमप्रभैः॥ १२४॥

पावनैः पावितो नित्यं त्वं कन्दरसमाश्रयैः। अवमत्यविमानानि स्वर्गवासविरागिणः
पितुर्गृहइवासीना देवगन्धर्वकिन्नराः। अहो धन्योऽसि शैलेन्द्र यस्य ते कन्दरं हरः

अध्यास्ते लोकनाथो हि रामध्यानपरायणः॥ १२७॥

पुलस्त्य उवाच।

इत्युक्तवति देवर्षौ नारदे सादरं गिरा। हिमशैलस्य महिषी मेना मुनिदिदृक्षया॥१२८॥
अनुयाता दुहित्रा तु स्वल्पालिपरिचारिका। लज्जा प्रणयनम्राङ्गी प्रविवेश निकेतनम्
यत्रस्थितो मुनिवरः शैलेन सहितो वशी। तं दृष्ट्वा तेजसो राशिं मुनिं शैलप्रिया तदा॥
ववन्दे गूढवदना पाणिपद्मकृताञ्जलिः। तां विलोक्य महाभागां देवर्षिरमितद्युतिः॥

आशीर्भिरमृतोद्गाररूपाभिस्तां व्यवर्द्धयत्।
ततो विस्मितचित्ता तु हिमवद्गिरिपुत्रिका॥ १३२॥

ऐक्षिष्ट नारदं देवी मुनिमद्भुतरूपिणम्। एहि वत्सेति सा प्युक्ता मातृणा स्निग्धयागिरा

कण्ठे गृहीत्वा पितरमङ्के सा तु समाविशत् ।
उवाच माता तां देवीमभिवन्द्य पुत्रिके ॥ १३४ ॥
भगवन्तं तपोधन्यं पतिमाप्स्यसिसम्मतम् । इत्युक्ता तु ततो मात्रा वस्त्रेणपिहितानना
किंचित्कम्पितमूर्द्धा तु वाक्यं नोवाच किंचन ।
ततः पुनरुवाचेदं वाक्यं माता सुतां तदा ॥ १३६ ॥
वत्से वन्दय देवर्षिं ततो दास्यामि ते शुभम् । रत्नक्रीडनकं रम्यं स्थापितं यच्चिरं मया
इत्युक्ता सा ततो वेगादुद्धृत्य चरणौ तदा । ववन्दे मूर्ध्नि सन्धाय पाणिपङ्कजकुड्मलम्
कृते तु वन्दने तस्या मातासखिमुखेन तु । चोदयामासशनकैस्तस्याःसौभाग्यदर्शिनाम्
शरीरलक्षणानां च परिज्ञानाय कौतुकात् ।
स्त्रीस्वभावात्स्वदुहितुश्चिन्तां हृदि समुद्वहन् ॥ १४० ॥
ज्ञात्वा तदिङ्गितं शैलो महिष्या हृदयेन तु । अनुदीर्णाकृतिर्मेने रम्यमेतदुपस्थितम् ॥
चोदितः शैलमहिषीसख्या मुनिवरस्ततः । स्मिताननो महाभागो वाक्यं प्रोवाचनारदः

नारद उवाच ।

न जातोऽस्याः पतिर्भद्रे लक्षणैश्च विवर्जितः । उत्तानहस्ता सततं चरणैर्व्यभिचारिभिः
सुच्छायास्या भविष्येयं किमन्यद्बहुभाष्यते ।
श्रुत्वैतत्सम्भ्रमाविष्टो ध्वस्तधैर्यो हिमाचलः ॥ १४४ ॥
नारदं प्रत्युवाचाथ साश्रुकण्ठो महागिरिः ॥ १४५ ॥

हिमवानुवाच ।

संसारस्यातिदोषस्यदुर्विज्ञेयागतिर्यतः । सृष्ट्या चावश्यभाविन्या केनाप्यतिशयात्मना
कर्त्रा प्रणीता मर्यादा स्थिता संसारिणामियम् ।
यो जायते हि यद्बीजाज्जनितुः सोऽर्थसाधकः ॥ १४७ ॥
जनिताचापि जातस्य न कश्चिदितिचस्फुटम् । स्वकर्मणैव जायन्ते विविधाभूतजातयः
अण्डजो ह्यण्डजाज्जातःपुनर्जायेत मानवः । मानुषोऽपि सरीसृप्यांमानुषत्वे न जायते
तत्रापि जातौ श्रेष्ठायां धर्मस्योत्कर्षणे न तु । अपुत्रजन्मनः शेषा प्राणिनःसमवस्थिताः

मनुजास्तत्र सुतरां नयेन सहधर्मिणः । क्रमेणाश्रमसम्प्राप्तिर्ब्रह्मचारिव्रतादनु ॥ १५१ ॥
तस्यकर्तुर्नियोगेन संसारो येन वर्धितः । संसारस्य हि नोत्पत्तिः सर्वेस्युर्यदिनिर्गृहाः
कर्त्रा तु शास्त्रेषु सदा सुतलाभः प्रशंसितः । प्राणिनां मोहनार्थाय नरकत्राणकारणात्

स्त्रिया विरहिता सृष्टिर्जन्तूनां नोपपद्यते ।
स्त्रीजातिस्तु प्रकृत्यैव कृपणा दैन्यभागिनी ॥ १५४ ॥

शास्त्रालोचनसामर्थ्याद्दूषितं तासु कर्तृणा । तस्यां नोपरिभावज्ञा भवेदिति च वेधसा
शास्त्रेषूक्तमसन्दिग्धं बहुवारं महाफलम् । दशपुत्रसमा कन्या याऽपिस्या च्छीलवर्जिता
वाक्यमेतत्फलभ्रष्टं पुंसां ग्लानिकरंफलम् । कन्या हि कृपणासोऽव्यापितुर्दुःखविवर्द्धिनी
यापि स्यात्पूर्णसर्वार्था पतिपुत्रसमन्विता । किं पुनर्दुर्भगा हीना पतिपुत्रधनादिभिः

त्वं चोक्तवान्सुता या मे शरीरे दोषसङ्ग्रहम् ।
अहो मुह्यामि शुष्यामि ग्लामि सीदामि नारद ॥ १५६ ॥

अयुक्तमपि वक्तव्यमप्राप्यमपि साम्प्रतम् । अनुग्रहाय मेछिन्धि दुःखं कन्याश्रयं मुने ॥
परिच्छिन्नेऽप्यसन्दिग्धेमनःपरिभवाश्रयात् । तृष्णामुष्णातिनिष्णातंफललोभाश्रयात्पुनः
स्त्रीणां हि परमं जन्म कुलानामुभयात्मनाम् । इहामुत्रसुखायोक्तं सत्पतिप्राप्तिसंज्ञितम्
दुर्लभत्वात्सतःस्त्रीणांविगुणोऽपिपतिःकिल । न प्राप्यतेविनापुण्यैःपतिर्नार्याःकदाचन

यतो निस्साधनो धर्मः परिणामोत्थिता रतिः ।
धनं जीवितपर्यन्तं पत्यौ नार्याः प्रतिष्ठितम् ॥ १६४ ॥

निर्द्धनो दुर्मुखो मूर्खः सर्वलक्षणवर्जितः । दैवतं परमं नार्याः पतिरुक्तः सदैव हि ॥१६५
त्वया देवर्षिणा प्रोक्तं न जातोऽस्याःपतिःकिल । एतद्दौर्भाग्यमतुलमसङ्ख्यंचदुरुद्वहम्
चराचरे भूतसर्गे चिन्ता सा व्यापिनी मुने । स न जात इति श्रुत्वा ममेदंव्याकुलं मनः
मनुष्यदेवजातीनां शुभाशुभनिवेदकम् । लक्षणं हस्तपादाभ्यां लक्षणं विहितं किल ॥
सेयमुत्तानहस्तेति त्वयोक्ता मुनिपुङ्गव । उत्तानहस्तता प्रोक्ता याचतामवनित्यका ॥

शुभोदयानां धन्यानां न कदाचित्प्रयच्छताम् ।
सुच्छाययास्याश्चरणौ त्वयोक्तौ व्यभिचारिणौ ॥ १७० ॥

तत्रापि श्रेयसी ह्याशा मुने न प्रतिभाति नः। शरीरलक्षणाश्चान्ये पृथक्फलनिवेदिनः॥

पुलस्त्य उवाच।

इत्युक्त्वाविरतेशैले महादुःखविचारिणि। स्मितपूर्वमुवाचेदं नारदो देवपूजितः।१७२

नारद उवाच।

हर्षस्थाने च महति त्वया दुःखं निरूप्यते। अपरिच्छिन्नवाक्यार्थो मोहं यासिमहागिरे
इमां शृणु गिरं मत्तो रहस्यपरिनिष्ठिताम्। समाहितो महाशैलमयोक्तस्य विचारणाम्
न जातोऽस्याः पतिर्देव्या यन्मयोक्तंहिमाचल। सनजातोमहादेवो भूतभव्यभवोद्भवः॥
शरण्यः शास्वतः शास्ता शङ्करः परमेश्वरः। ब्रह्मरुद्रेन्द्रमुनयो गर्भजन्मजरार्दिताः॥१७६
तस्य ते परमेशस्य सर्वे क्रीडनका गिरे। ब्रह्माण्डतस्तदिच्छातः सम्भूतो भुवनप्रभुः॥
विष्णुर्युगे युगे जातो नानाजातिर्महातनुः। मन्यसे मायया जातं विष्णुं चापि युगेयुगे
आत्मनो नविनाशोऽस्तिस्थावरान्तेऽपिभूधर। संसारे जायमानस्यम्रियमाणस्यदेहिनः

नश्यते देह एवात्र नात्मनो नाश उच्यते।
ब्रह्मादिस्थावरान्तोऽयं संसारो यः प्रकीर्तितः॥ १८०॥

स जन्ममृत्युदुःखार्तो ह्यनिशं परिवर्तते। महादेवोऽचलः स्थाणु र्नजातो जनकोऽजरः
भविष्यति पतिः सोऽस्या जगन्नाथोनिरामयः। यदुक्तं च मया देवी लक्षणैर्वर्जितातव
शृणु तस्यापि वाक्यस्य सम्यक्त्वेन विचारणम्। लक्षणं देवि कोह्यङ्कःशरीरावयवाश्रयः
स चायुर्धनसौभाग्यपरिणामप्रकाशकः। अनन्तस्याप्रमेयस्य सौभाग्यस्य तु भूधर॥

नैवाङ्को लक्षणाकारः शरीरे संविधीयते।
अतोऽस्या लक्षणं गात्रे शैल नास्ति महामते॥ १८५॥

यच्चाहमुक्तवानस्या उत्तानकरता सदा। उत्तानो वरदः पाणिरेष देव्याः सदैव तु॥
सुरासुरमुनिव्रातवरदात्री भविष्यति। यच्चप्रोक्तं मया पादौ सुच्छायौ व्यभिचारिणौ

मत्तः शृणुत्वमस्यापि व्याख्योक्तिं शैलसत्तमः।
चरणौ पद्मसंकाशौ स्वच्छावस्यानखोज्ज्वलौ॥ १८८॥
सुरासुराणां नमतां किरीटमणिकान्तिभिः।

विचित्रवर्णैः पश्यद्भिः सुच्छायौ प्रतिबिम्बितौ ॥ १८६ ॥
एषा भार्या जगद्भर्तुर्वृषाङ्कस्य महीधर। जननी सर्वलोकस्य सम्भूता भूतभाविनी ॥
शिवेयं पावनायैव त्वत्क्षेत्रे पावनद्युतिः। तद्यथा शीघ्रमेवैषा योगं ययात्पिनाकिनः ॥
तथाविधेयं विधिवत्त्वया शैलेन्द्रसत्तम। अस्त्यत्र हि महत्कार्यं देवानां हिमभूधर ॥

पुलस्त्य उवाच।

एवं श्रुत्वा तु शैलेन्द्रो नारदात्सर्वमेव हि। स्वमात्मानं पुनर्जातं मेने मेनापतिस्तदा ॥
उवाच चापि संहृष्टो नारदं तु हिमाचलः ॥ १६४ ॥

हिमाचल उवाच।

दुस्तरान्नरकाद्घोरादुद्धृतोऽस्मित्वया विभो। पातालदहमुद्धृत्यसप्तलोकाधिपः कृतः
हिमाचलोऽस्मि विख्यातस्त्वया मुनिवराधुना।
हिमाचलाच्छतगुणां प्रापितोऽस्मि समुन्नतिम् ॥ १६६ ॥
आनन्दादेव चाहारि हृदयं मे महामुने। नाध्यवस्यति कृत्यानां विभागप्रविचारणम् ॥
भवद्विधानां नियतममोघं दर्शनं मुने। भवद्भिरेव हि प्रोक्तं निवासायात्मरूपिणाम् ॥
मुनीनां देवतानां च स्वयं कर्तास्मि कल्मषम्।
तथापि वस्तुन्येकस्मिन्नाज्ञा मे सम्प्रदीयताम् ॥ १६६ ॥

पुलस्त्य उवाच।

इत्युक्तवति शैलेन्द्रे स तदा हर्षनिर्भरः। उवाच नारदो वाक्यं कृतं सर्वमिति प्रभो ॥
सुरकार्ये स एवार्थस्तवापि सुमहत्तरः। इत्युक्त्वा नारदः शीघ्रं जगाम त्रिदिवं ततः ॥
स गत्वा देवभवनं महेन्द्रं सन्ददर्श ह। ततोऽनुरूपे स मुनिरुपविष्टो महासने ॥२०२॥
पृष्टः शक्रेण प्रोवाच गिरिजासंश्रयां कथाम् ॥ २०३ ॥

नारद उवाच।

यन्मह्यमुक्तं कर्तव्यं तन्मया कृतमेव हि। किं तु पञ्चशरस्येषु गोचरत्वमपेक्षितम्॥२०४॥

पुलस्त्य उवाच।

इत्युक्तो देवराजस्तु मुनिना कार्यदर्शिना।

चूताङ्कुरास्त्रं सस्मार भगवान्पाकशासनः ॥ २०५ ॥

संस्मृतस्तु तदा क्षिप्रं सहस्राक्षेण धीमता । उपतस्थे रतियुतः स विलासो झषध्वजः

प्रादुर्भूतं च तं दृष्ट्वा शक्रः प्रोवाच मन्मथम् ॥ २०७ ॥

शक्र उवाच ।

उपदेशेन बहुना किं त्वां प्रति रतिप्रिय । मनोभवोऽसितेन त्वं वेत्सि भूतमनोगतम्

तद्यथानुक्रमं तु त्वं कुरु नाकसदां प्रियम् । शङ्करं योजय क्षिप्रं गिरिपुत्र्या मनोभव

संयुक्तो मधुनानेन गच्छ रत्या सहायवान् ।

इत्युक्तो मदनस्तेन शक्रेण स्वार्थसिद्धये ॥ २१० ॥

प्रोवाच पञ्चबाणोऽथ वाक्यं भीतः शतक्रतुम् ॥ २११ ॥

काम उवाच ।

अनया देवसामग्र्या मुनिदानवभीमया । दुःसाध्यश्शङ्करो देवः किं न वेत्सि जगत्प्रभो

तस्य देवस्य वेत्थ त्वं कारणं पदमव्ययम् । प्रायःप्रसादे कोपेऽपि सर्वं हि महतांमहत्

सर्वोपभोगसारं हि सौन्दर्यं स्वर्गसम्भवम् ।

विशेषं काङ्क्षतां शक्र सामान्याद्भ्रंशनंफलात् ॥ २१४ ॥

श्रुत्वैतद्वचनं शक्रस्तमुवाचामरैर्युतः ॥ २१५ ॥

शक्र उवाच ।

वयं प्रमाणं ते तत्र रतिकान्त न संशयः । सन्दंशेन विना शक्तिरयस्कादस्य नेष्यते ॥

कस्यचिच्च क्वचिद्दृष्टं सामर्थ्यं न तु सर्वतः ॥ २१७ ॥

पुलस्त्य उवाच ।

इत्युक्तः प्रययौ कामः सखायं मधुमाश्रितः । रतियुक्तो जगामाशु प्रस्थं तुहिनभूभृतः ॥

स तु प्राप्याकरोच्चिन्तां कार्यस्योपायपूर्विकाम् ।

महात्मानो हि निष्कम्पा मनस्तेषां सुदुर्जयम् ॥ २१९ ॥

तदादावेव संक्षोभ्य नेत्थं तस्य जयोभवेत् ।

संसिद्धिः प्रायशश्चैव पूर्वं संशोध्य मानसम् ॥ २२० ॥

कथमेवं विधैर्भावैर्द्वेषानुगमनं विना । क्रोधः क्रूरतरात्सङ्गाद्भीषणेर्षा महासखी ॥ २२१
चापल्यान्मूर्ध्निविध्वस्तधैर्याधारमहाबला । तामस्य विनियोक्ष्यामि मनसो विकृतिंपुरः
ापधाय धैर्यद्वाराणि सन्तोषमपकृष्य च । अवगन्तुं हि मां तत्र न कश्चिदिह पण्डितः॥
विकल्पमात्रसंस्थानं विरूपाक्षमनोभवम् । प्रविश्याथ क्रियारम्भीगम्भीरावर्तदुस्तरः ॥

भविष्यामि हरस्याहं तपःस्थस्य स्थिरात्मनः ।
इन्द्रियग्राममावृत्यरम्यसाधनसंविधिः ॥ २२५ ॥

चिन्तयित्वेति मदनो भूतभर्तुस्तदाश्रमम् । जगाम जगतीसारं सरलद्रुमवेदिकम्॥२२६॥
शान्तसत्त्वसमाकीर्णमचलं प्राणिसङ्कुलम् । नानापुष्पलताजालं सानुसंस्थगणेश्वरम्
निर्व्यग्रवृषभोद्घुष्टं नीलशाद्वल सानुकम् । तत्रापश्यत्त्रिनेत्रस्य रम्यं कश्चिद्द्वितीयकम्
वीरकं वीरलोकेशमीशानसदृशद्युतिम् । पक्वं कुङ्कुमकिञ्जल्कपुञ्जपिङ्गजटासटम् ॥२२६॥
वेत्रपाणिं तमव्यग्रमुग्रं चाभद्रभूषणम् । ततो निमीलितोन्निद्रपद्मपत्रान्तलोचनम्॥२३०॥
प्रेक्षमाणमृजुस्थानं नासावंशाग्रगोचरम् । अतीव रम्यसिंहेन्द्रचर्मलम्बोत्तरीयकम् ॥
श्रवणा हि फणोन्मुक्तनिश्वासानलपिङ्गलम् । प्रेङ्खत्कपोलपर्यन्तचुम्बिलम्बिजटाचयम्
कृतवासुकिपर्यन्तनाभिमूलनिवेशितम् । ब्रह्माञ्जलिस्थनासाग्रनिबद्धोरगभूषणम् ॥२३३॥
ददर्शशङ्करं कामः क्रमप्राप्तान्तिकः शनैः । ततो भ्रमरझङ्कारमालम्ब्य द्रुमसानुगम् ॥

प्रविष्टः कर्णरन्ध्रेण भवस्य मदनो मनः ।
शङ्करस्तमथाकर्ण्य मधुरं मदनाश्रयम् ॥ २३५ ॥

सस्मार दक्षतनयां दयितां रन्तुमानसः । ततः शिवस्य शनकैस्तिरोधायातिनिर्मला ॥

समाधिभावना तस्थौ लक्ष्यप्रत्यक्षरूपिणी ।
ततस्तन्मयतां यातः प्रत्यूहपिहिताशयः ॥ २३७ ॥
विवेश विबुधाधीशो विकृतिं मदनात्मिकाम् ।
ईषत्क्रोधसमाविष्टो धैर्यमालम्ब्य धूर्जटिः ॥ २३८ ॥

निरस्य मदनं स्थित्वा योगमायासमावृतः । स तया माययाविष्टो जज्वाल मदनस्ततः ॥
इच्छाशरीरो दुर्ज्ञेयो दोषावासोमहाशयः । हृदयान्निर्गतः सोऽथ वासनाव्यसनात्मकः

बहिस्स्थलं समासाद्य उपतस्थे झषध्वजः । अनुयातो हि साह्येन मित्रेण मधुनासह ॥
सहकारतरुर्ध्वेष्ठ मन्दमारुतनिर्धुतम् । स्तवकं मदनो रम्यं हरवक्षसि सत्वरम् ।
मुमोच मोहनं नाम मार्गणं मकरध्वजः ॥ २४२ ॥
स तस्य हृदये शुद्धे नाम शाली महाशरः । पपात परुषः प्रांशुः पुष्पबाणो विमोहनः ॥
ततः करणसन्दोहे विद्धे तु हृदये भवः । बभूव भूतपोऽकम्प्य धैर्योऽपि मदनोन्मुखः ॥
ततः प्रभुत्वाद्भावानामावेशं स्वमपश्यत । वाक्यं बहु बभाषेऽथ प्रत्यूहप्रसवात्मकम् ॥
ततः कोपानलोद्भूतघोरहुङ्कारभीषणे । बभूव वदने नेत्रं तृतीयमनलाकुलम् ॥ २४६ ॥
रुद्रस्य रौद्रवपुषो जगत्संहारभैरवम् । तदन्तिकस्थे मदने व्यस्फारयत धूर्जटिः ॥
तन्नेत्र विस्फुलिङ्गे न क्रोशतां नाकवासिनाम् ।
गमितोभस्मतां तूर्णं कन्दर्पः कामदर्पकः ॥ २४८ ॥
स तु तं भस्मसात्कृत्वा हरनेत्रोद्भवोऽनलः ।
व्यजृम्भत जगद्दग्धुं ज्ञात्वा हुङ्कारघस्मरम् ॥ २४९ ॥
ततो भवो जगद्धेतोर्व्यभजज्जातवेदसम् । सहकारे मधौ चन्द्रे सुमनस्स्वपरेष्वपि ॥
भृङ्गेषु कोकिलास्ये च विभागेन स्मरानलम् ।
स बाह्याभ्यन्तरे विद्धो हरोऽथ स्मरमार्गणैः ॥ २५१ ॥
भागेष्वेतेषु संविष्टं वीक्षन्तीव हुताशनम् । विभक्तं लोकसंक्षोभकरं दुर्वारजृम्भितम् ॥
तत्प्राप्तिस्नेहसम्पूर्णकामेन हृदये किल । ज्वलन्नहर्निशं भीमो दुःखस्य वशगोऽभवत् ॥
विलोक्य हरहुङ्कारज्वालाभस्मीकृतं स्मरम् । विललाप रतिः क्रूरं बन्धुना मधुना सह ॥
ततो विलप्य बहुशो मधुना परिसान्त्विता । जगाम शरणं देवमिन्दुमौलिं त्रिलोचनम्
भृङ्गानुयातां सङ्गृह्य पुष्पितां सहकारजाम् । लतां पत्रद्रुमच्छन्नांजातांपरभृतांसखीम् ॥
निबध्य तु जटाजूटं कुटिलैरलकैरतिः । उद्वर्त्य गात्रं शुभ्रेण हृद्येन स्मरभस्मना ॥
जानुभ्यामवनिं गत्वा प्रोवाचेन्दुविभूषणम् ॥ २५८ ॥

रतिरुवाच ।

नमः शिवायास्तु मनोमयाय जगन्मयायाद्भुतवर्त्मने नमः ।

नमः शिवायास्तु सुरार्चिताय तुभ्यं सदा भक्तकृपापराय ॥ २५९ ॥
नमो भवायास्तु भवोद्भवाय नमोऽस्तु ते ध्वस्तमनोभवाय ।
नमोऽस्तु मायामदनाश्रयाय नमोनिसर्गामलभूषिताय ॥ २६० ॥
नमोऽस्त्वमेयाय गुणायनाय नमोऽतु सिद्धाय पुरातनाय ।
नमः शरण्याय नमोगुणाय नमोऽस्तु ते भीमगजानुगाय ॥ २६१ ॥
नमोस्तु नानाभुवनर्द्धिकर्त्रे नमोस्तु भक्ताभिमतप्रदाय ।
नमोऽथकर्मप्रसुवे नमः सदा अनन्तरूपाय सदैव तुभ्यम् ॥ २६२ ॥
असह्यकोपाय सदैव तुभ्यं शशाङ्कचिह्नाय नमोस्तु तुभ्यम् ।
असीमलीलापरमस्तुताय वृषेन्द्रयानाय पुरान्तकाय ॥ २६३ ॥
नमः प्रसिद्धाय महौषधाय नमोस्तु नानाविधरूपकाय ।
नमोऽस्तु कालायनमः कलाय नमोऽस्तु ते कालकलातिगाय ॥ २६४ ॥
चराचराचार्यविचार्यवर्यमाचार्यमुत्प्रेक्षितभूतसर्गम् ।
त्वामिन्दुमौलिं शरणं प्रपन्ना प्रियाप्तयेऽहं सहसा महेशम् ॥ २६५ ॥
प्रयच्छ मे कामयशः समृद्धिं पतिं विना तं भगवन्नजीवे ।
प्रियः प्रियायाः पुरुषेशनित्यस्ततोऽपरः कोभुवनेष्विहास्ति ॥ २६६ ॥
प्रभुः प्रभावी प्रभवः प्रियाणां प्रवीणपर्यायपरापरन्तपः ।
त्वमेव नाथो भुवनस्यगोप्ता दयालुरुन्मूलितभक्तभीतिः ॥ २६७ ॥

पुलस्त्य उवाच ।

इत्थं स्तुतः शङ्कर इन्दुमौलिर्वृषाकपिर्मन्मथकान्तया तु ।
तुतोष दोषाकरखण्डधारी उवाच चैनां मधुरं निरीक्ष्य ॥ २६८ ॥

शङ्कर उवाच ।

भविष्यति च कामोऽयं काले कान्तेऽचिरादथ ।
अनङ्ग इति लोकेषु स विख्यातिं गमिष्यति ॥ २६९ ॥
इत्युक्ता शिरसावन्द्य गिरीशं कामवल्लभा । जगामोपवनं चान्यद्रतिस्तुहिनपर्वते ॥

रुरोद चापि बहुशो दीना रम्ये स्थले स्थले। मरणव्यवसायापि निवृत्ता च शिवाज्ञया
अथ नारदवाक्येन चोदितो हिमभूधरः। कृताभरणसंस्कारां कृतकौतुकमङ्गलाम् ॥
स्वर्गपुष्पकृतापीडां शुभ्रचीनांशुकाम्बराम्। सखीभ्यां संयुतां शैलोगृहीत्वास्वसुतांततः
जगाम सुभगे योगे तदासम्पूर्णमानसः। स काननान्युपाक्रम्य वनान्युपवनानि च ॥
ददर्श रुदतीं नारीमप्रतर्क्यां महौजसम्। न रूपेणेदृशी लोके रम्येषु वनसानुषु ॥२७५॥
कौतुकेन परामृष्टस्तांदृष्ट्वा रुदतीं गिरिः। उपसृप्य ततस्तस्या निकटं सोऽप्यपृच्छत ॥

हिमवानुवाच।

कासि कस्यासि कल्याणि किमर्थं चापिरोदिषि। नैतदल्पमहं मन्येकारणंलोकसुन्दरि
सा तस्य वचनं श्रुत्वा उवाच मधुना सह। रुदन्ती शोकवचनं श्वसन्ती दैन्यवर्धनम् ॥

रतिरुवाच।

कामस्य दयितां भार्यां रतिं मां विद्धि सुव्रत।
गिरावस्मिंश्च भगवान्गिरिशस्तपसिस्थितः ॥ २७६ ॥

तेन प्रत्यूहरुष्टेनक्रोधाद्विस्फार्यलोचनम्। विमुच्याग्निशिखाज्वालांकामोभस्मावशेषितः
अहं तु शरणं याता तं देवं भयविह्वला। स्तुतवत्यथ सन्तुष्टस्ततो मां गिरिशोऽब्रवीत्
तुष्टोऽहं कामदयितेकामोत्पत्तिर्भविष्यति। त्वत्स्तुतिंचाप्यधीयानोनरोभक्त्यामदाश्रयः
लप्स्यते काङ्क्षितं कामं निवर्तमरणादपि। प्रतीक्षमाणा तद्वाक्यमाशावेशवशादहम्
शरीरं परिरक्षिष्ये किञ्चित्कालं महाद्युते। इत्युक्तस्तु तया रत्या शैलः सम्भ्रमभीषणः
पाणावादाय तनयां गन्तुमैच्छत्स्वकंपुरम्। भाविनोऽवश्यभावित्वाद्भवित्रीभूतभाविनी
लज्जमाना सखिमुखैरुवाच पितरं गिरिम् ॥२८६॥

शैलपुत्र्युवाच।

दुर्भगेन शरीरेण किममानेन कारणम्। कथं च तां दशां प्राप्तश्शङ्करो मे पतिर्भवेत् ॥
तपोभिः प्राप्यतेऽभीष्टं नासाध्यन्तु तपस्यतः। दुर्भगत्वं वृथालोके विहिते सति साधने
तपसि भ्रष्टसन्देहा ततःस्वार्थजिगीषया। एवन्तपः करिष्येऽहं यामीत्युक्तवतीं सुताम् ॥
उवाच वाचा शैलेन्द्रो गद्गदस्वरवर्णया ॥ २९० ॥

हिमवानुवाच।

उ मेति चापलं पुत्रि नक्षमंतावकं वपुः। सोढुं क्लेशानुरूपस्य तपसःसौम्यदर्शने ॥२६१

भाविन्यपि च कार्याणि पदार्थानि सदैव तु।
भाविनोऽर्था भवन्त्येव बहवोऽनिच्छतोऽपि हि ॥ २६२ ॥
तस्मान्न तपसा तेऽस्ति बाले किञ्चित्प्रयोजनम्।
भवनं चैव गच्छामि चिन्तयिष्यामि तत्र वै ॥ २६३ ॥

इत्युक्ता तु यदानैव गृहमन्वेति शैलजा। ततोऽद्रिश्चिन्तयाविष्टः स्वसुतां प्रशशंस च॥
ततोऽन्तरिक्षे दिव्या च वागभूद्भुवनत्रये। उमेति चापलं पुत्रि त्वयोक्ता तनया यतः॥
उमेति नाम तेनास्या भुवनेषु भविष्यति। सिद्धिर्मूर्तिमतीत्वेषासाधयिष्यति चिन्तितम्
इति श्रुत्वा तु वचनं स तदाकाशमण्डले। अनुज्ञाय सुतां शैलो जगामाशु स्वमन्दिरम्

पुलस्त्य उवाच।

शैलजापि ययौ शैलमगम्यमपि दैवतैः। सखीभ्यामनुयाता तु नियता नगराजजा॥
शृङ्गं हिमवतः पुण्यं नानाधातुविभूषितम्। दिव्यपुष्पलताकीर्णं भ्रमरोद्घुष्टपादपम्॥
दिव्यप्रस्रवणोपेतं मनोरथशतोज्ज्वलम्। नानापक्षिसमायुक्तं चक्रवाकोपशोभितम्॥
जलजस्थलजैःपुण्यैः प्रफुल्लैरुपशोभितम्। चित्रकन्दरसङ्कुल्यं दिव्यगेहसमन्वितम्॥
विहङ्गसङ्घसङ्घुष्टं कल्पपादपसङ्कटम्। तत्रापश्यन्महाशाखं शाखिनं हरितच्छदम्॥
सर्वर्तुकुसुमोपेतं चक्रवाकोपशोभितम्। नानापुष्पशताकीर्णं नानाविधफलान्वितम्॥
त्यक्तं सूर्यस्य रुचिभिर्भिन्नसंहतपल्लवम्। तत्राम्बराणि सन्त्यज्य भूषणानि च शैलजा
संवीतावल्कलैर्दिव्यैर्दर्भनिर्मितमेखला। त्रिःस्नाता पाटलाहारा बभूव शरदांशतम्॥
शतमेकेनजीर्णेन पर्णेनावर्त्तयत्तदा। निराहारा शतं साऽभूत्समानां तपसोनिधिः॥
ततउद्वेजिताः सर्वे प्राणिनस्तपसोऽग्निना। ततः सस्मार भगवान्मुनीन्सप्त शतक्रतुः॥
ते समागम्य मुदिताःसर्वे समुदितास्तथा। पूजितास्ते महेन्द्रेण पप्रच्छुस्तत्प्रयोजनम्

ऋषय ऊचुः।

किमर्थं हि सुरश्रेष्ठ संस्मृतास्तु वयं त्वया। शक्रः प्रोवाच शृण्वन्तु भगवन्तःप्रयोजनम्

शक्र उवाच ।

हिमाचले तपो घोरं तप्यते भूधरात्मजा ।

तस्याभिमतयोगेन भवन्तः कर्तुमर्हथ । तपः समापनं देव्या जगदर्थे त्वरान्विताः ।

तथेत्युक्त्वा ततः शैलं सिद्धसङ्घातसेवितम् ॥ ३११ ॥

ऊचुरागम्य मुनयस्तामथो मधुराक्षरम् । पुत्रिकस्ते व्यवसितः कामः कमललोचने ॥

तानुवाच ततो देवी सादरं गौरवान्मुनीन् । ३१३ ॥

देव्युवाच ।

तपस्यन्तो महाभागाः प्रोह्य मौनंभवादृशाम् । वन्दनायनियुक्ताधीर्याचयत्यविकल्पितम्

सुप्रसन्नमुखा यूयं गृहीत्वासनमादितः । उपविष्टाः श्रमं मुक्त्वा ततः प्रक्ष्यथ मामनु

इत्युक्तास्ते ततश्चक्रुस्तत्रासनपरिग्रहम् । साचतान्विधिवत्पूर्वं पूजयित्वा विधानतः ॥

उवाचादित्यसङ्काशान्मुनीन्सप्तऋषीञ्छनैः । त्यक्त्वाव्रतात्मकंमौनंनत्वाचविधिवन्मुनीन्

भगवन्तोऽपि मौनान्ते तस्याः सप्तर्षयोऽप्यथ ।

गौरवाधारतां प्राप्तां पप्रच्छुस्तां पुनस्तथा ॥ ३१८ ॥

सापि गौरवगर्भेण मनसा चारुहासिनी । मुनीन्सर्वांस्तथालोक्य प्रोवाचप्रोह्यवाग्यमम्

भगवन्तो विजानीथ प्राणिनां मनसेप्सितम् । शरीरादिभिरत्यर्थं कदर्थ्यन्ते हि देहिनः

केचित्तु निपुणास्तत्र घटन्तेविविधोद्यमैः । उपायैर्दुर्लभान्भावान्प्राप्नुवन्ति ह्यतन्द्रिताः

अपरे तु परिच्छिद्य नानाकारानुपक्रमान् । देहान्तरार्थं सारम्भमाश्रयन्ति हि तद्व्रतम् ।

ममत्वाकाशसम्भूतकुसुमस्रग्विभूषितम् । विन्ध्यशृङ्गं स्प्रष्टुकामो हस्तः प्रसरते मुहुः

अहं किल भवं देवं पतिं प्राप्तुं समुद्यता॥ प्रकृत्यैव दुराराध्यं तपस्यन्तं च सम्प्रति ॥

सुरासुरैरनिर्णीतं परमार्थक्रियाश्रयम् ।

साम्प्रतं चापि निर्दग्धो मदनो वीतरागिणा ॥ ३२५ ॥

कथमाराधयेदीशं मादृशी तादृशं शिवम् ॥ ३२६ ॥

पुलस्त्य उवाच ।

इत्युक्ता मुनयस्ते तु स्थिरतां मनसस्ततः । ज्ञातुमस्या वचःप्रोचुः प्रक्रमात्प्रकृतार्थकम्

मुनय ऊचुः ।

द्विविधं तु सुखं तावत्पुत्रिलोकेविभाव्यते । शरीरस्यास्य संयोगश्चेतसश्चापिनिर्वृतिः
प्रकृत्या तु स दिग्वासा भीमो भस्मास्थिभूषणः ।
कपाली भिक्षुको नग्नो विरूपाक्षोऽस्थिरक्रियः ॥ ३२९ ॥
प्रमत्तोन्मत्तकाकारोबीभत्सोकृतसङ्ग्रहः । पत्या न तेन चास्त्यर्थोमूर्तानर्थेनकाङ्क्षितः
यदि स्वस्य शरीरस्य सुखमिच्छसि शाश्वतम् ।
तत्कथं ते महादेवाद्भूतभाजो जुगुप्सितात् ॥ ३३१ ॥
स्रवन्नरवसासास्थिकपालकृतभूषणात् । श्वसदुग्रभुजङ्गेन्द्रकृतभूषणभूषितात् ॥ ३३२ ॥
श्मशानवासिनो रौद्रप्रमथानुगतादपि । सुरेन्द्रमुकुटव्रातनिघृष्टचरणोऽरिहा ॥ ३३३ ॥
हरिरस्तिजगद्धाता श्रीकान्तोऽनन्तमूर्तिमान् । जप्यो यज्ञभुजामस्ति तथेन्द्रःपाकशासनः
देवतानां निधिश्चास्तिज्वलनस्सर्वकामधुक् । वायुरस्तिजगद्धातायः प्राणस्सर्वदेहिनाम्
तथा वैश्रवणो राजा सर्वार्थमहिमाप्रभुः । एभ्य एकतमं कस्मान्न त्वं सम्प्राप्तुमिच्छसि
उतान्यस्मादिह प्राप्यं सुखं ते मनसेहितम् । एवमेतत्तथा पुत्रि प्रभावो लोकसम्पदाम्
अस्मिन्देहे परे वापि कल्याणप्राप्तये तव । पितुरेवास्ति ते सर्वंसुरेभ्यो यन्निवेदितम् ।
वरस्य प्राप्तयेक्लेशस्सचाप्यत्राफलस्तरुः । प्रायेण प्रार्थितो ह्यर्थस्समर्थो ह्यतिदुर्लभः ॥
स्वस्थानविनियोगित्वात्पुत्रि तत्रापि लभ्यते ॥ ३४० ॥

पुलस्त्य उवाच ।

इत्युक्तवत्सु कुपिता मुनिवर्येषु शैलजा । उवाच क्रोधरक्ताक्षी विस्फुरद्दशनच्छदा ॥

देव्युवाच ।

असद्ग्रहस्य का नीतिर्व्यसनस्य क्व यन्त्रणा । विपरीतार्थबोद्धारः सत्पथे केन योजिताः
एवं मांवित्थदुष्प्रज्ञामस्थानासद्ग्रहप्रियाम् । न मां प्रति विचारोऽस्तियदहङ्कारमानिनी
प्रजापतिसमाः सर्वे भवन्तः सर्वदर्शिनः । न नूनं वित्थ तं देवं शाश्वतं जगतः प्रभुम् ॥
अजमीशानमव्यक्तममेयमहिमोदयम् । आस्तांतत्कर्म सद्भावं सम्बोधं तावदावृतम् ३४५
विदुस्तं न हरिब्रह्ममुखा अपि सुरेश्वराः । यत्तस्य विभवं स्वोत्थं भुवनेषु विजृम्भितम्

प्रकटं सर्वभूतानां तदप्यथनंवित्थकिम् । कस्यैतद्गगनं मूर्तिः कस्याग्निः कस्य मारुतः

कस्य भूः कस्य वरुणः कश्चन्द्रार्कविलोचनः ।

कस्यार्चयन्ति लोकेषु लिङ्गं भक्त्या सुरासुराः ॥ ३४८ ॥

यच्च ब्रह्मेश्वरा देवा विष्णिवन्द्राद्या महर्षयः । प्रभावं प्रभवंचापि तेषामपिनवित्थ किम्

अदितेः कश्यपाज्जाता देवा नारायणादयः । मरीचेः कश्यपः पुत्रो ह्यदितिर्दक्षपुत्रिका

मरीचिश्चापि दक्षश्च पुत्रौ तौ ब्रह्मणः किल । ब्रह्मा हिरण्मयादण्डादेवसिद्धविभूतिकः

कस्य प्रादुरभूद्ध्यानात्प्राकृतः प्राकृतांशकः । अथ नारायणेनैव स्वकीयेच्छासमाश्रयात्

तत्प्रेरितः प्रयात्येष जन्म नारायणात्मकम् । सापि कर्मण एवोक्ता प्रेरणाविवशात्मनाम्

यथोन्मादादिदुष्टस्य मतिरेव हि सा भवेत् । इष्टानेव पदार्थान्वैविपरीतान्हि मन्यते ॥

लोकस्य व्यवहारेषु दृष्टेषु हसते सदा । धर्माधर्मफलप्राप्तौ विष्णुमेव निबोधत ॥३५५॥

विदश्वमित्थं मुनयोऽसकृच्च मे गिरं गिरीशश्रुतिभूमिसन्निधौ ।

उत्कृष्टकेदार इवावनीतले सुबीजमुष्टिं सुफलाय कर्षकाः ॥ ३५६ ॥

ते तां श्रुत्वा हि तां रम्यां प्रक्रमात्प्रक्रमक्रियाम् ।

वाचं वाचांपतिप्रख्याः प्रोचुश्च स्मितसुन्दराः ॥ ३५७ ॥

मुनय उचुः ।

जाते लोकविधाने तु सत्यं तत्कार्यमुत्तमम् । प्रायः प्रालेयशैलस्यशङ्कातत्कालरूपिणः

सत्यमुत्कण्ठिताः सर्वे ये ये कार्यार्थमुद्यताः । तेषांत्वरन्तेचेतांसिकिन्तुनाममहात्मनाम्

लोकयात्रानुगन्तव्या विशेषेणविवक्षितैः । यतस्तद्धर्ममेधन्ते तत्प्रामाण्यं परे धृताः ॥

पुलस्त्य उवाच ।

इत्युक्त्वा मुनयो जग्मुस्त्वरितातुहिनाचलम् । तत्र ते पूजितास्तेन हिमशैलेन सादरम्

ऊचुर्मुनिवराः प्रीताः स्वल्पकं तु त्वरान्विता ॥ ३६२ ॥

मुनय उचुः ।

देवो दुहितरं साक्षात्पिनाकी तव मार्गते । तच्छीघ्रं पावयात्मानमाहुत्येवानलेहुतम् ॥

कार्यं हि तच्च देवानां सुचिरं परिवर्तते । जगदुद्धारणायैष विधातव्यः समुद्यमः ॥

पुलस्त्य उवाच ।

इत्युक्तस्तु तदा शैलो हर्षावेशवशान्मुनीन् । असमर्थोऽभवद्वक्तुमुत्तरं प्रार्थयन्निव ॥
ततो मेना मुनीन्वन्द्य प्रोवाच स्नेहविक्लवा । दुहितुस्तान्मुनींश्चैववचनं स्वयमर्थवत् ॥

मेनोवाच ।

यदर्थं दुहितुर्जन्म चेच्छन्त्यपि महाफलम् । तदेवोपस्थितं सर्वं प्रक्रमेणैव साम्प्रतम् ॥
कुलजन्मवयोरूपविभुत्वैस्सहितोऽपियः । वरस्तस्यापिनाहूय सुता देया ह्ययाचतः ॥
दिग्वासा जटिलः शूली दग्धकामोऽपि कामदः ।
स तु मत्सुतया घोरः कथं नाम उपास्यते ॥ ३६९ ॥

मुनय ऊचुः ।

ऐश्वर्यमवगच्छस्व शङ्करस्य सुरासुराः । आराध्यमानपादाब्जयुगलाश्च सुनिर्वृताः ॥
यस्योपयोगि यद्रूपं तेन तत्प्रार्थ्यते चिरम् । घोरं तपस्यते बाला तेन रूपेण निर्वृता ॥
यत्सा व्रतानि दिव्यानि नयिष्यति समापनम् ।
तदत्रावहिता तावदस्मास्वेव भविष्यति ॥ ३७२ ॥

पुलस्त्य उवाच ।

इत्युक्त्वा गिरिणा सार्द्धं ययुर्यत्रास्ति शैलजा ।
जितार्कज्वलनज्वाला तपस्तेजो मयीह्युमा ॥ ३७३ ॥
प्रोक्ता सा मुनिभिः स्निग्धं मानिन्याह वचोऽर्थवत् ॥ ३७४ ॥

उमोवाच ।

नाहं क्षुद्रात्किलेच्छामि ऋते शर्वात्पिनाकिनः । स्थितंचतारतम्येन प्राणिनांपरमर्द्धिदम्
धीरतैश्वर्यकार्याणि प्रमाणमतुलं महत् । यस्मान्नकिञ्चिदपरं यच्च यस्मात्प्रवर्तते ॥
यस्यैश्वर्यमनाद्यन्तं तमहं शरणं गता ।
समः सव्यवसायश्च दीर्घेण विपरीतकः ॥ ३७७ ॥
एवं निशम्यते वाचं देव्या मुनिवरास्तदा । आनन्दाश्रुपरीताक्षाःसस्वजुस्तांतपस्विनीम्
ऊचुश्च परमप्रीताः शैलजां मधुरं वचः ॥ ३७९ ॥

ऋषय ऊचुः ।

अत्यद्भुतमहो पुत्रि ज्ञानमूर्तिरिवामला । प्रसादयसि नो भावं भवभावप्रतिश्रयात् ॥
ननु विद्मो वयं तस्य देवस्यैश्वर्यमद्भुतम् । त्वन्निश्चयस्य दृढतां वेत्तुं वयमिहागताः ॥

अचिरादेव तन्वङ्गि कामस्त्वेष भविष्यति ।
आदित्यस्सप्रभो याति रत्नेभ्यः का द्युतिः पृथक् ॥ ३८२ ॥
कोऽर्थोवर्णान्स्वकांस्त्यक्त्वा तथा त्वं गिरिशं विना ।
यामोऽनेकाभ्युपायेन तमभ्यर्थयितुं वयम् ॥ ३८३ ॥

अस्माकमपि चैषोऽर्थः सुतरां हृदि वर्तते । अतस्त्वमेव सा वुद्धिर्यतो नीतिस्त्वमेव हि

अतो निःसंशयं कार्यं शङ्करोऽपि विधास्यति ॥ ३८५ ॥

पुलस्त्य उवाच ।

इत्युक्त्वा पूजितास्सर्वे मुनयो गिरिकन्यया ।
प्रययुर्गिरिशं द्रष्टुं प्रस्थं हिमवतो महत् ॥ ३८६ ॥

गङ्गाम्भः प्लावितात्मानः पिङ्गाबद्धजटासटाः । भृङ्गानुयातपाणिस्थमन्दारकुसुमस्रजः ॥
सम्प्राप्य तु गिरेः प्रस्थं ददृशुः शङ्कराश्रमम् । प्रशान्ताशेषसत्वौघं पर्यस्तमितकाननम् ॥
निःशब्दक्षोभसलिलप्रयातं सर्वतो दिशम् । तत्रापश्यंस्ततो द्वारि वीरकं वेत्रपाणिनम् ॥
तमेते मुनयः पूज्या विनीताःकार्यगौरवात् । ऊचुर्मधुरभाषाभिस्ते वाचं वाग्मिनां वराः

ऋषय ऊचुः ।

द्रष्टुं वयमिहायाताः शङ्करं गुणनायकम् । त्रिलोचनं विजानीहि सुरकार्यप्रचोदिताः ॥
त्वमेव नो गतिस्तत्र यथाकालानतिक्रमः । स्यात्प्रार्थनैषा प्रायेण प्रतीहारमयी प्रभो ॥

पुलस्त्य उवाच ।

इत्युक्तो मुनिभिः सोऽथ गौरवात्तानुवाचह ।

वीरक उवाच ।

स वनस्यापरां सन्ध्यां कर्तुं मन्दाकिनीं गतः ॥ ३९३ ॥
क्षणेन भाविता विप्रास्ततो द्रक्ष्यथ शूलिनम् ॥ ३९४ ॥

पुलस्त्य उवाच ।

इत्युक्ता मुनयस्तस्थुर्यत्नात्कार्यविचक्षणाः । गम्भीराम्बुधरं प्रावृट्तृषिताश्चातका यथा
तथा क्षणेन निष्पन्नसमाचारक्रियाविधिम् । वीरासनकृतोद्देशं मृगचर्मनियामितम् ॥
ततो विनीतो जानुभ्यामवलम्ब्य महीं मुदा । उवाच वीरको देवं प्रणयैकसमाश्रयम् ॥

वीरक उवाच ।

सम्प्राप्ता मुनयः सप्त द्रष्टुं त्वां दीप्ततेजसम् । विभो समादिश द्रष्टुं ततो ध्यानमिहार्हसि

पुलस्त्य उवाच ।

इत्युक्तो धूर्जटिस्तेन वीरकेण महात्मना । भ्रूभङ्गसंज्ञया तेषां प्रवेशाज्ञां ददौ तदा ॥३९९
मूर्द्धकम्पेन तान्सप्त वीरकोऽपि महामुनीन् । आजुहाव विदूरस्थान्दर्शनाय पिनाकिनः
त्वराबद्धजटास्ते च लम्बकृष्णाजिनाम्बराः । विविशुर्वेदिकां दिव्यां गिरिशस्य विभोस्ततः
बद्धपाणिपुटाक्षिप्तनाकपुष्पोत्करास्ततः । पिनाकिपादयुगलं वन्द्य नाकनिवासिनः ॥
ततः स्निग्धेक्षिताः सन्तो मुनयः शूलपाणिना । गिरीशं तु ततो दृष्ट्वा ते समं तुष्टुवुर्मुदा

मुनय ऊचुः ।

अहो कृतार्था वयमेव साम्प्रतं सुरेश्वरैर्वन्दितपादपल्लवम् ।
विलोकयामो गुणगौरवर्द्धिभिः समादिशेः कार्यमशेषरक्षणम् ॥ ४०४ ॥

पुलस्त्य उवाच ।

ततः प्रहस्य सर्वज्ञ उवाच मुनिसत्तमान् ॥ ४०५ ॥

शङ्कर उवाच ।

भवतां यद्धृदि गतं कार्यं तत्कुरुताधुना ॥ ४०६ ॥

पुलस्त्य उवाच ।

इत्युक्ता मुनयस्तूर्णं ययुर्यत्र च शैलजा । बभाषिरे विभागज्ञा गिरिजां गिरिगह्वरे ॥

ऋषय ऊचुः ।

रम्यं प्रियमनोहारि मा रूपं तपसा दह । प्रीतस्ते शङ्करः पाणिमेष प्रतिग्रहीष्यति ॥
वयमर्थितवन्तस्ते पितरं पूर्वमागताः । पित्रा सह गृहं गच्छ वयं यामः स्वमन्दिरम् ॥

पुलस्त्य उवाच ।

इत्युक्ता तपसः सत्यं फलमस्तीति चिन्त्य सा ।
त्वरमाणा ययौ वेश्म पितुर्दिव्यं सुशोभितम् ॥ ४१० ॥

सा तत्र रजनीं मेने वर्षायुतसमां सती । हरदर्शनसञ्जातसमुत्कण्ठा हिमाद्रिजा ॥

ततो मुहूर्त्ते ब्राह्मे तु तस्याश्चक्रुः सुहृत्क्रियाम् ।
नानामङ्गलसन्दोहान्यथावत्क्रमपूर्वकम् ॥ ४१२ ॥

दिव्यमङ्गलसंयोगान्मन्दिरे बहुमङ्गले । उपासत गिरिं मूर्त्ता ऋतवः सर्वकामिकाः ॥
वायवः सुखदाश्चासन्संमार्जनविधौ गिरेः । हर्म्येषु श्रीः स्वयं देवी कृतनानाप्रसाधना
कान्तिः सर्वेषु भावेषु ऋद्धिश्च भरणाकुला । चिन्तामणिप्रभृतयो रत्नाश्शैलं समन्ततः
उपतस्थुर्लताश्चापि कल्पकाद्यामहाद्रुमाः । ओषध्योमूर्तिमत्यश्च दिव्यौषधिसमन्विताः
रसाश्च धातवश्चैव सर्वेशैलस्य किङ्कराः । किङ्करास्तस्य शैलस्य व्यग्राश्चाश्रमवर्तिनः
नद्यः समुद्रा निखिलाः स्थावरं जङ्गमं च यत् । ते सर्वेहिमशैलस्य महिमानमवर्द्धयन् ॥
अभवन्मुनयो नागा यथागन्धर्वकिन्नराः । शङ्करस्यापि विबुधागन्धमादनपर्वते ॥
सज्जमण्डनसम्भारास्तस्थुर्निर्मलमूर्त्तयः । शर्वस्याथ जटाजूटे चन्द्रखण्डं पितामहः ॥
बबन्ध प्रणयोदारविस्फारितविलोचनः । कमलमालां विपुलां चामुण्डा मूर्ध्निबध्नती
उवाच गिरिशं काली पुत्रं जनय शङ्कर । यो दैत्येन्द्रकुलं हत्वा मां रक्तैस्तर्पयिष्यति ॥
सौरिर्वतंसिकारत्नं कण्ठाभरणमुज्ज्वलम् । भुजङ्गाभरणं गृह्य सज्जःशम्भोःपुरोऽभवत्
शक्रोगजाजिनं तस्य वसाभ्यक्ताग्रवल्लवम् । दध्रेसरभसंस्विद्यद्विस्तीर्णमुखपङ्कजम् ॥

वायवश्चववुस्तीक्ष्णा तीक्ष्णं हिमगिरिप्रभम् ।
वृषं विभूषयामासुर्हरयानं मनोजवम् ॥ ४२५ ॥

विरेजुर्नयनान्तस्थाःशम्भोसूर्यानलेन्दवः । स्वां द्युतिं लोकनाथस्य जगतःकर्मसाक्षिणः
चिताभस्मसमाधत्त कपाले रजतप्रभम् । मनुजास्थिमयीं मालां निबबन्ध च पाणिना
प्रेताधिपः पुरे दूरे सभयः समवर्तत । नानाकारमहारत्नभूषणंधनदाहृतम् ॥ ४२८ ॥
विहायोद्दीप्तसर्पेन्द्रकटकेन स्वपाणिना । कर्णोत्तंसं चकारेशो ह्यमलं तक्षकंस्वयम् ॥

निष्पन्नाभरणंचैव प्रसाध्येशं प्रसाधनैः। तत्राप्येषां नियमतो ह्यभवन्व्यग्रमूर्तयः ॥४३०
मुमोचाभिनवान्सर्वरम्यशालिरसौषधीन्। व्यग्रा तु पृथिवी देवी सर्वभावान्मनोरमा
गृहीत्वा वरुणः साक्षाद्रत्नाढ्याभरणानि च।
पुष्पाणि च विचित्राणि नानारत्नमयानि तु ॥ ४३२ ॥
तस्थौ साभरणो देवःसर्वज्ञःसर्वदेहिनाम्। ज्वलनश्चापि दिव्यानिहैमान्याभरणानि च
जातरूपपवित्राणि प्रयतः समुपस्थितः। वायुर्ववौ च सुरभिः सुखसंस्पर्शनोविभुम् ॥
छत्रं चन्द्रकरोद्दामं हासितं च शतक्रतुः। जग्राह मुदितः श्रीमान्बाहुभिर्वज्रभूषणः ॥
जगुर्गन्धर्वमुख्याश्च ननृतुश्चाप्सरोगणाः। वादयन्तोऽति मधुरं जगुर्गन्धर्वकिन्नराः ॥
मुहूर्ताद्भूतवस्तत्र जगुश्च ननृतुश्चवै। चपलाश्च गणास्तस्थुर्लोडयन्तो हिमाचलम् ॥
उपविष्टः क्रमाद्धाता विश्वकृद्भगनेत्रहा। चकारौद्वाहिकं कृत्यं पत्न्यासह यथोदितम् ॥
दत्तार्घ्यो गिरिराजेन सुरवृन्दैर्विनोदितः। अवसत्तां क्षपां तत्र पत्न्यासह पुरान्तकः ॥
ततो गन्धर्वगीतेन नृत्येनाप्सरसामपि। स्तुतिभिर्देवदैत्यानां विबुद्धो विबुधाधिप ॥
आमन्त्र्य हिमशैलेन्द्रं प्रभाते जायया सह।
जगाम मन्दरगिरिं वायुवेगेन शृङ्गिणा ॥ ४४१ ॥
ततो गते भगवति नीललोहिते सहोमयारतिमनुभूतभूधरः।
सबान्धवो भवति हि कस्यनो मनो विशृङ्खलं जगति हि कन्यका पितुः ॥
पुरौद्यानेषु रम्येषु विविक्तेषु वनेषु च। सुरक्तहृदयोदेव्याविजहार भगाक्षिहा ॥४४३॥
ततो बहुतिथे काले पुत्र नाम्ना गिरेःसुता। सखीभिः सहिताक्रीडां चक्रेकृत्रिमपुत्रकैः
कदाचिद्गन्धतैलेन गात्रमभ्यज्यशैलजा। चूर्णैरुद्वर्तयामास मलेनापूरितां तनुम् ॥ ४४५
तदुद्वर्त्तनकं गृह्य नरं चक्रे गजाननम्। पुरुषंक्रीडतीदेवी तच्चाप्यक्षिपदम्भसि ॥ ४४६ ॥
जाह्नव्या शिवयासख्या ततः सोभूद्बृहत्तनुः। कायेनातिविशालेन जगदापुरयत्तदा ॥
पुत्रेत्युवाच तं देवी पुत्रेत्युचेचजाह्नवी। गाङ्गेय इतिदेवैस्तु पूजितोऽभूद्गजाननः ॥४४८
विनायकाधिपत्यं च ददावस्य पितामहः। पुनः साक्रीडतीचक्रे तरुं च वरवर्णिनी ॥
मनोज्ञमङ्कुरंरूढमशोकस्य शुभानना। वर्द्धयामास तं चापि कृतसंस्कारमङ्गलम् ॥

बृहस्पतिमुखैर्विप्रैर्दिवस्पतिपुरोहितैः। ततोदेवैः समुनिभिः प्रोक्तादेवी त्विदंवचः॥

मुनिदेवाऊचुः।

अधुना दर्शितेमार्गे मर्यादांकर्तुमर्हसि। फलं किं भविता देवि कल्पितैस्तरुपुत्रकैः॥

पुलस्त्य उवाच।

इत्युक्ता हर्षपूर्णाङ्गी प्रोवाचातिशुभांगिरम्॥ ४५३॥

पार्वत्युवाच।

एकं निरुदके ग्रामे यःकूपं कारयेद् बुधः। बिन्दौ बिन्दौ च तौयस्य स वसेत्वत्सरंदिवि

दशकूपसमा वापी दशवापी समोह्रदः। दशह्रदसमा कन्या दशकन्यासमोद्रुमः॥४५५॥

एषा वै शुभमर्यादा नियतालोकभाविनी॥ ४५६॥

पुलस्त्य उवाच।

इत्युक्तास्तु ततो विप्रा बृहस्पतिपुरोगमाः। जग्मुःस्वमन्दिरारण्येव भवानींवन्द्यमानरम्

गतेषुतेषुदेवोऽपि शङ्करः पर्वतात्मजाम्। पाणिनालम्ब्य पादेन स्वमावासमगच्छत॥

चित्तप्रसादजननं प्रसादाट्टालगोपुरम्। लम्बमौक्तिकदामानं मालिकाकुलवेदिकम्॥

सुनद्धकलधौतं च क्रीडागृहमनोगतम्। प्रकीर्णकुसुमामोदमत्तालिकुलकूजितम् ४६०॥

किन्नरोद्गीतसङ्गीतगृहान्तरितभित्तिकम्। सुगन्धिधूपसङ्घातं मनः प्राप्यमलक्षितम्॥

क्रीडामयूरनारीभिरभितो रभसार्पितम्। हंससङ्घातसन्दिष्टस्फटिकस्तम्भतोरणम्॥

अनाविलमसम्भ्रान्त्या बहुशःकिन्नराकुलम्। शुकैर्यत्राभिदृश्यन्ते पद्मरागविनिर्मिताः॥

भित्तयो जातिसम्भ्रान्त्या प्रतिबिम्बितमौक्तिकाः।

तत्राक्षैः प्रियया देवो विहर्तमुपचक्रमे॥ ४६४॥

स्वच्छेन्द्रनीलभूभागे क्रीडन्तौ यत्र संस्थितौ। वपुःसहायतां प्राप्तौ विनोदरसनिर्वृतौ

एवंप्रक्रीडतोस्तत्र देवीशङ्करयोस्तदा। प्रादुर्भूतो महाशब्दः पतिताम्बरगोचरः॥

तच्छ्रुत्वा कौतुकाद्देवी किमेतदिति शङ्करम्। पर्यपृच्छत्सुरवरं हरं विस्मितपूर्वकम्॥

उवाच देवो नैतत्ते दृष्टपूर्वं शुचिस्मिते। एते गणेशाः क्रीडन्ते शैलेऽस्मिन्मत्प्रियाः सदा

तपसा ब्रह्मचर्येण नामभिः क्षेत्रसेवनैः। यैरहं तोषितः पूर्वं त एते मनुजोत्तमाः॥

मत्समीपमनुप्राप्ता मम हृद्याः शुभानने ।
कामरूपा महोत्साहा महारूपगुणान्विताः ॥ ४७० ॥
कर्मभिर्विस्मयं तेषां प्रयामि बलशालिनाम् । सामरस्यास्य जगतः सृष्टिसंहरणक्षमाः ॥
ब्रह्मचन्द्रेन्द्रगन्धर्वैस्सकिन्नरमहोरगैः । विवर्जितोऽप्यहं नित्यं नैभिर्विरहितो रमे ॥
हृद्या मे चारुसर्वाङ्गि त एते क्रीडिता गिरौ । इत्युक्तातुतदादेवीत्यक्त्वा तं विस्मयाकुला
गवाक्षान्तरमासाद्य प्रेक्षते चकितानना ।
यावन्तस्ते कृशा दीर्घा ह्रस्वाः स्थूला महोदराः ॥ ४७४ ॥
व्याघ्रेभवदनाः केचित्केचिन्मेषाजरूपिणः । अनेकप्राणिरूपाश्च ज्वालास्याःकृष्णपिङ्गलाः
सौम्या भीमाः स्मितमुखाःकृष्णपिङ्गजटास्सदा । नानाविहङ्गवदनानानाविधसुराननाः
कौशेयचर्मवसना नग्नाश्चान्ये विरूपिणः । गोकर्णा गजकर्णाश्च बहुवक्त्रेक्षणोदराः ॥
बहुपादा बहुभुजा दिव्यनानास्त्रपाणयः ।
अनेककुसुमापीडा नानाव्याकुलभीषणाः ॥ ४७८ ॥
कृतनानायुधधरा नानाकवचभूषणाः । विचित्रवाहनारूढा दिव्यरूपा वियच्चराः ॥४७९॥
वीणावाद्यरवोद्घुष्टा नानास्थानकनर्तकाः । गणेशांस्तांस्तथा दृष्ट्वा देवी प्रोवाच शङ्करम्

देव्युवाच ।

गणेशाः कति सङ्ख्याताः किं नामानः किमात्मकाः ।
एकैकशो मम ब्रूहि निष्ठिता ये पृथक्पृथक् ॥ ४८१ ॥

शङ्कर उवाच ।

कोटिकोटिश्च सङ्ख्याता नानाविख्यातपौरुषाः । जगदापूरितं सर्वमेभिर्भीमैर्महाबलैः ॥
सिद्धक्षेत्रेषु रथ्यासु जीर्णोद्यानेषु वेश्मसु । दानवानां शरीरेषु बालेषून्मत्तकेषु च ॥
एते विशन्ति मुदिता नानाहारविहारिणः । ऊष्मपाः फेनपाश्चैव धूमपा मधुपायिनः ॥
मेदाहारा रुधिरपास्सर्वभक्षा ह्यभोजनाः ।
देवादास्तापसाहारा नानावाद्यरतिप्रियाः ॥ ४८५ ॥
न हि वक्तुमनन्तत्वाच्छक्यन्ते हि गणाःपृथक् ॥ ४८६ ॥

देव्युवाच ।

नागत्वगुत्तरासङ्गः शुद्धाङ्गो मुञ्जमेखली । मनः शिलेन कल्पेन चपलो रञ्जिताननः ॥
भृङ्गदष्टोत्पलानां च स्रग्दामा मधुराकृतिः । पाषाणशकलोत्तानकांस्यतालप्रवर्तकः ॥
असौ गणेश्वरो देव किं नामा किन्नरानुगः । य एष गणगीतेषु दत्तकर्णो मुहुर्मुहुः ॥

शर्व उवाच ।

स एष वीरको देवि सदा मे हृदयप्रियः । नानाश्चर्यगुणाधारो गणेश्वरगणार्चितः ॥

देव्युवाच ।

ईदृशस्य सुतस्यास्ति ममोत्कण्ठा पुरान्तक ।
कदाऽहमीदृशं पुत्रं द्रक्ष्याम्यानन्ददायकम् ॥ ४६१ ॥

शर्व उवाच ।

एष एव सुतस्तेऽस्तु नयनानन्दकारकः । त्वया मात्रा कृतार्थो हि वीरकोऽपि सुमध्यमे

पुलस्त्य उवाच ।

इत्युक्ता प्रेषयामास विजयां हर्षणोत्सुकाम् ।
वीरकानयनायाशु दुहिता भूभृतः सखीम् ॥ ४६३ ॥
साऽवरुह्य त्वरा युक्ता प्रासादादम्बरस्पृशः । गणपं गणमध्यस्थं सूर्यकोटिप्रवर्तनम् ॥

विजयोवाच ।

एहि वीरक चापलयात्त्वया देवी प्रतोषिता ।
त्वामाह्वयति चेत्युक्तस्त्यक्त्वा पाषाणखण्डनम् ॥ ४६५ ॥
देव्याः समीपमागच्छद्विजयानुगतःशनैः । प्रासादशिखरोत्फुल्लरक्ताम्बुजनिभद्युतिः ॥
तं दृष्ट्वा प्रस्थितानल्पस्वादुक्षीरपयोधरा ॥ ४६७

गिरिजोवाच ।

पिब क्षीरमिदं वत्स स्रुतं पिब यथेच्छकम् ॥ ४६८ ॥

पुलस्त्य उवाच ।

उवाच देवी सस्नेहं गिरा मधुरवर्णया ॥ ४६६ ॥

गिरिजोवाच ।

एहि सद्यो हि जातोऽसि मे पुत्रको देवदेवेन दत्तोऽधुना वीरक ।
उक्तवत्यङ्क आधाय पर्यष्वजत्तं कपोले चुचुम्बागराणनन्दिनी ॥ ५०० ॥
मूर्ध्न्युपाघ्राय संमार्ज्य गात्राणि चाभूषयामास दिव्यैः स्वयं भूषणैः ।
किङ्किणीमेखलानूपुरैः सम्मणिप्रोक्तकेयूरहारैरमूल्यैर्गुणैः ॥ ५०१ ॥
कोमलैः पल्लवैश्चित्रितश्चारुभिर्मङ्गलैः कङ्कणैर्दिव्यमन्त्रोद्भवैः ।
तस्य शुद्धैस्ततो भूरिभिश्चाकरोन्मिश्रसिद्धार्थकैरङ्गरक्षाविधिम् ॥ ५०२ ॥
एवमादाय चोवाच कृत्वा स्रजं मूर्ध्नि गोरोचनापत्रभङ्गोज्ज्वलैः ।
वत्स वत्साधुनाक्रीड सार्द्धं गणैरप्रमत्तो व्रज श्वभ्रवर्जं शनैः ॥ ५०३ ॥
व्यालमालाकुलाः शैलसानुद्रुमा दन्तिभिर्भग्नशाखापरं मङ्गिनः ।
जाह्नवीमण्डलक्षुब्धतोयाकुलं मा विशेथा बहुव्याघ्रजुष्टे वने ॥ ५०४ ॥
वत्स सङ्ख्येषु दुर्गेषु यद्वीरकपुत्र भावाय तां स्वच्छचित्तो जनः ।
प्रार्थितं भव्यमायाति भाविन्यसौ भाव्यतां सोऽपि निर्वर्त्य सर्वैर्गुणैः ॥ ५०५ ॥

पुलस्त्य उवाच ।

एवमुक्तोऽनया वीरको मातरं सस्मयन्नाह लीलावशाविष्टधीः ।
एष मात्रा स्वयं मे कृतः कङ्कणः पत्रकश्चित्रितः पाटलैर्बिन्दुभिः ॥ ५०६ ॥
चारुपुष्पैरियं मालतीभिः कृता मालिका मे शिरस्याहिता कोमला ।
तोषयामीश्वरीमित्ययं सत्वरं चिन्तयित्वाऽव्रजद् बाह्यतः क्रीडनम् ॥५०७॥
स्वैर्गुणैः संयुतो वीरको हर्षितो दक्षिणात्पश्चिमं पश्चिमादुत्तरम् ।
उत्तरात्पूर्वमभ्येत्य सख्या युता प्रेक्षते तं गवाक्षान्तराद्वीरकम् ॥ ५०८ ॥
शैलपुत्री बहिः क्रीडितारं जगत्स्नेहतः पुत्रलुब्धायतस्सोऽत्रकः ।
मोहमायाति यः स्वल्पवेत्ता जडो मांसविण्मूत्रसङ्घातदेहोद्वहः ॥ ५०९ ॥
द्रष्टुमभ्यन्तरं नाकवासेश्वरैश्चिन्दुमौलिं प्रविष्टेषु कक्षान्तरम् ।
वाहनान्येवमारोहमाणास्ततो लोकपालास्त्रपूगं मुहूर्त्तावधि ॥ ५१० ॥

खड्ग एषोऽविखड्गाकरो निर्मलः कृन्तकः कस्य केनाहृतो ब्रूत नः ।
नोभवेद्धस्तदण्डेन किंब्रूमहे भीममूर्त्यङ्गणेनास्ति कृत्यं गिरौ ॥ ५११ ॥
पाश एषोऽस्ति ते नात्रको बध्यते मा वृथा लोकपालानुगास्तिष्ठत ।
एवमेवैतदित्यब्रुवंस्ते तदा वीक्ष्य देवानुगं वीरकं रक्षकम् ॥ ५१२ ॥
प्राह देवी वने पर्वते निर्जराध्यग्निशालामुखे भूतले भूतपाः ।
निर्झराम्भोनिपातेषु नो मज्जतात्पुष्पजालावनद्धेषु धामस्वपि ॥ ५१३ ॥
प्रोच्चनानाद्रिकुञ्जावगाहेष्वथो मारुतास्फोटसंरक्षणे कामतः ।
काञ्चनोत्तुङ्गशृङ्गावरोहक्षितौ हैमरेणूत्करासङ्गपिङ्गद्युतिः ॥ ५१४ ॥
खेचराणां वने चापि रम्ये बभौ रूपसम्पत्प्रकारो गणो वासितुम् ।
मन्दरे कन्दरे चारु वापीतटे कुन्दमन्दारपुष्पप्रवालाम्बुजे ॥ ५१५ ॥
सिद्धनारीभिरापीतरूपामृतं विस्तृतैर्नेत्रमात्रैरनुन्मेषिभिः ।
वीरकं शैलपुत्री निमेषान्तरादस्मरत्पुत्रगृध्नुर्विनोदार्थिनी ॥ ५१६ ॥
सोऽपि तादृक्क्षणावाप्तपुण्योदयो यो हि जन्मान्तरेऽस्यात्मजत्वन्ततः ।
क्रीडतस्तस्य तृप्तिः कथं जायते योऽपि भावाज्जगद्वेधसा तेजसा ॥५१७ ॥
कल्पितः प्रेक्षणं दिव्यगीतक्षणं नृत्यलोलैर्गणेशैः प्रवृत्यक्षणम् ।
सिंहनादाकुले गण्डशैले ज्वलद्रत्नजाले वृहत्सालतालेक्षणम् ॥ ५१८ ॥
फुल्लनानातमालालिकालेक्षणं वृक्षमूले विलोलोमरालेक्षणम् ।
स्वल्पपङ्के जले पङ्कजाङ्केक्षणं मातुरङ्के शुभे निष्कलङ्केक्षणम् ॥ ५१९ ॥
परिक्रीडिते बाललीलाविसारी गणेशाधिपो देवतानन्दकारी ।
निकुञ्जेषु विद्याधरोद्गीतशीलपिनाकीव लीलाविलासैः सलीलः ॥ ५२० ॥
प्रकाश्य भुवने गोभिस्ततो दिनकरे गते । देशान्तरं तदा पश्चाद् दूरस्थो धरणीधरः ॥
मित्रत्वमस्य सुदृढं हृदये द्योतयन्निव ।
नित्यमाराधितो विप्रैः श्रीमान्विखनसः सुतः ॥ ५२२ ॥
नाकरोत्सवितुर्मेरुरुपकारं पतिष्यतः । जनेष्वेषाव्यवस्थेति श्रूयते स्खलितो ह्यधः ॥

दिनेनानुगतो भानुः स्वजनं परिपूरयन् । सन्ध्या बद्धाञ्जलिपुटा मुनयोऽभिमुखा रविम्
याबदध्यासते शीघ्रं निवार्योष्णाभिभाविताम् ।
व्यजृम्भताथ लोकेऽस्मिन्क्रमाद्वैभावरं तमः ॥ ५२५ ॥
कुटिलस्येव हृदये कालुष्यं दूषयन्मनः ।
ज्वलत्फणिफणारत्नदीपोद्योतितभित्तिके ॥ ५२६ ॥
शयने शशिसङ्घातरत्नवस्त्रोत्तरच्छदे । नानारत्नद्युतिलसच्छक्रचापविडम्बके ॥ ५२७ ॥
रत्नैः किङ्किणिजालेन लसन्मुक्ताकलापके । कमनीयचलल्लीलावितानाच्छादिताम्बरे ॥
मन्दरे मन्दसञ्चारं गते गिरिसुतायुतः । तस्थौ गिरिसुताबाहुलतामीलितकन्धरः ॥५२९
शशिमौलिः सितज्योत्स्नास्फारपूरितगोचरः ।
गिरिजाप्यसितापाङ्गी नीलोत्पलदलच्छविः ॥ ५३० ॥
विभावर्या च सम्पृक्ता बभूवातीव गोमयी । तामुवाच ततो देवः क्रीडाकेलिकलायुताम्
इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे गौरीविवाहवर्णनं नाम पञ्चचत्वारिंशोऽध्यायः ।

---

# षट्चत्वारिंशोऽध्यायः

## कृष्णवर्णायाः पार्वत्याः शङ्करेण विनोदकरणम् ।

शर्व उवाच ।

शरीरे मम तन्वङ्गि सिते भास्यसितद्युतिः । भुजङ्गी वासिता शुभ्रे संश्लिष्टा चन्दने तरौ ॥
चन्द्रातपेन सम्पृक्ता रुधिराम्बरसंवृता । रजनीवासिते पक्षे दृष्टिदोषं ददासि मे ॥ २ ॥

पुलस्त्य उवाच ।

इत्युक्ता गिरिजा तेन मुक्तकण्ठा पिनाकिनम् । उवाच कोपरक्ताक्षी भ्रुकुटी विकृतानना

देव्युवाच ।

स्वकृतेन जनः सर्वो जाड्येन परिभूयते । अवश्यमर्थी प्राप्नोति खण्डनं शशिमण्डन ॥

तपोभिर्दीर्घचरितैर्यात्वां प्रार्थितवत्यहम् । तस्या मे नियतस्त्वेष ह्यवमानः पदेपदे ॥
नैवास्मि कुटिला शर्व विषमा न च धूर्जटे । सविषस्त्वं जगत्ख्यातो व्यक्तदोषाकराश्रयः

त्वं हि मुष्णासि दशनान्नेत्रहन्ता भगस्य च ।
आदित्यस्त्वां विजानाति भगवान्द्वादशात्मकः ॥ ७ ॥
मूर्ध्नि शूलं जनयसि स्वैर्दोषैर्मामधिक्षिपन् ।
यस्त्वं मामात्थ कृष्णेति महाकालोऽसि विश्रुतः ॥ ८ ॥

यास्याम्यहं परित्यक्तुमात्मानं तपसा गिरिम् । जीवन्त्या न मया कृत्यं धूर्तेन परिभूतया
कापालिकेनक्षुद्रेण श्मशाने नित्यवासिना । भूत्याविलिप्तस्वाङ्गेन मातृमध्यस्थचारिणा

पुलस्त्य उवाच ।

निशम्य तस्या वचनं कोपतीक्ष्णाक्षरंहरः । उवाचानिष्टसम्भ्रान्तः प्रचलेनेन्दुमौलिना ॥

शर्व उवाच ।

अगात्मजासि गिरिजे नाहं निन्दापरस्तव । चाटूक्तिबुद्ध्या तु मया कृत उन्मादसंश्रयः

विकल्पः स्वस्थचित्ते तु गिरिजे न मम क्रमात् ।
यद्येवं कुपिता भीरु तत्तवाहं न वै पुनः ॥ १३ ॥

नर्मवादी भविष्यामि जहि कोपं शुचिस्मिते । शिरसा प्रणतेनैष रचितस्ते मयाञ्जलिः
विहीनोह्यपमानेन निन्दितेनैति विक्रियाम् । असतां तु सतां न स्यान्मर्मस्पृष्टो नरःकिल

पुलस्त्य उवाच ।

अनेकैश्चाटुभिर्देवी देवेन प्रतिबोधिता । कोपंतीव्रं न तत्याज सती मर्मणि घट्टिता ॥
अवष्टब्धमथाच्छिद्यवासः शङ्करपाणिना । विपर्यस्तालका वेगाद्गन्तुमैच्छच्चशैलजा ॥

तस्या व्रजन्त्याः कोपेन पुनराह पुरान्तकः ॥ १८ ॥

शर्व उवाच ।

सत्यं सर्वैरवयवैस्तनोषि सदृशं पितुः । हिमाचलस्य शृङ्गस्थमेघजालाकुलं मनः ॥
तथा दुरवगाह्येभ्यो गहनो हि तवाशयः । काठिन्यमश्मसारेभ्यो वनेभ्यो बहुलं गता ॥

कुटिलत्वं निम्नगाभ्यो दुःसेव्यत्वं हिमादपि ।

सङ्क्रान्तं सर्वमेवैतत्तन्वङ्गि हिमभूधरात् ॥ २१ ॥

पुलस्त्य उवाच ।

इत्युक्ता सा पुनः प्राह गिरिशंशैलकन्यका । कोपकम्पितमूर्द्धा सा प्रफुरद्दशनच्छदा ॥

उमोवाच ।

स्यात्सर्वदोषदानेन निन्दायां गुणिनो बलात् । तवापि दुष्टसम्पर्कात्सङ्क्रान्तंसर्वमेवहि

व्यालेभ्योऽनेकजिह्वत्वं भस्मनोऽस्नेहवृत्तिता ।

हृत्कालुष्यं शशाङ्कोत्थं दुर्बोधत्वं विषादपि ॥२४ ॥

किं चात्र बहुनोक्तेन अलं वाचां श्रमेण ते । श्मशानवासान्निर्भीस्त्वं नग्नत्वात्तवनत्रपा

निर्घृणत्वं कपालित्वाद्दया ते विगता चिरम् ॥ २५ ॥

पुलस्त्य उवाच ।

इत्युक्त्वा मन्दिरात्तस्मान्निर्जगाम हिमाद्रिजा ।

तस्यां व्रजन्त्यां देवेश्यां गणैः किलकिलाकृता ॥ २६ ॥

क्वमातर्गच्छसीत्युक्त्वा रुदद्भिर्धावितं पुनः । विष्टभ्य चरणौ देव्या वीरको बाष्पगद्गदः

प्रोवाचमातः किन्त्वेतत्क्वयासिकुपितातुरा। अहं त्वामनुयास्यामिव्रजन्तींस्नेहवर्जिताम्

न चेत्पतिष्ये शिखराद्गिरेरस्य त्वयोज्झितः । उन्नम्य वदनं देवी दक्षिणेन तु पाणिना

उवाच वीरकं माता त्वं शोकं पुत्र मा कृथाः । शैलाग्रात्पतितुं नैव न च गन्तुं मया सह

युक्तं ते पुत्र गच्छामि येन कार्येण तच्छृणु ।

कृष्णेत्युक्ता हरेणाहं स्तम्भितास्म्यवमानिता ॥३१ ॥

साऽहंतपःकरिष्यामियेन गौरीत्वमाप्नुयाम् । एष स्त्रीलम्पटोदेवो यातायांमय्यनन्तरम्

द्वाररक्षात्वयाकार्यानित्यंरन्ध्रान्ववेक्षणम् । यथा न काचित्प्रविशेद्योषित्तत्र हरान्तिकम्

दृष्ट्वा परस्त्रियं चापि वदेथा मम पुत्रक । शीघ्रमेव करिष्यामि यथा युक्तमनन्तरम् ॥

पुलस्त्य उवाच ।

एवमस्त्विति देवेशीं वीरकोवाच साम्प्रतम् । मातुराज्ञा मृताहारप्लाविताङ्गो गतज्वरः

जगाम रक्षां स द्रष्टुं प्रणिपत्यतु मातरम् । देवीं चापश्यदायान्तींसखीं मातुर्विभूषिताम्

कुसुमामोदिनीं नाम तस्य शैलस्य देवताम् । सापि दृष्ट्वा गिरिसुतां स्नेहविक्लवमानसा

क्व पुत्रि गच्छसीत्युच्चैरालिङ्ग्योवाच देवता ।

सा तस्याः सर्वमाचख्यौ शङ्करात्कोपकारणम् ॥ ३८ ॥

पुनश्चोवाच गिरिजा देवतां मातृसंमिताम् ॥ ३९ ॥

उमोवाच ।

नित्यं शैलाधिराजस्य देवता त्वमनिन्दिते । सर्वतः सन्निधानं ते मनसाऽतीववत्सला

अतस्तु ते प्रवक्ष्यामि यद्विधेयं त्वयाम्बिके । अन्यस्त्रीसम्प्रवेशस्तु त्वया रक्ष्यःप्रयत्नतः

रहस्ये प्रयत्नेन निषेव्यः सततं गिरौ । पिनाकिनः प्रविष्टायां वक्तव्यं मे त्वयाऽनघे

ततोऽहं संविधास्यामि यत्क्षमं तदनन्तरम् ॥ ४२ ॥

पुलस्त्य उवाच ।

इत्युक्तातां तथेत्युक्त्वा जगामसा गिरिं शुभा । उमापि पितुरुद्यानं जगामाद्रिसुताद्भुतम्

अन्तरिक्षं समाविश्य मेघमालाविलप्रभम् । भूषणानि ततो न्यस्य वृक्षवल्कलधारिणी ॥

ग्रीष्मे पञ्चाग्निसन्तप्ता वर्षासु च जलोषिता ।

वन्याहारा निराहारा शुष्कस्थण्डिलशायिनी ॥ ४५ ॥

एवं साधयती तत्र तपः सा च व्यवस्थिता । ज्ञात्वा गतां गिरिसुतांदैत्यस्तत्रान्तरेबली

अन्धकस्य सुतोदृष्टः पितुर्वधमनुस्मरन् ।

देवान्सर्वान्विजित्याजौ बकभ्राता रणोत्कटः ॥ ४७ ॥

आडिर्नामान्तरप्रेक्षी सततं चन्द्रमौलिनः । आजगामामररिपुः पुरं त्रिपुरघातिनः ॥४८॥

स तत्रागत्य ददृशे वीरकं द्वार्यवस्थितम् । विचिन्त्य सोऽपिच वरं दत्तं कमलयोनिना

हते किलान्धके दैत्ये गिरिशेनासुरद्विषा । आडिश्चकार विपुलं तपः परमदारुणम् ॥

समागत्याब्रवीद्ब्रह्मा तपसा परितोषितः । किमाडे दानवश्रेष्ठ तपसा प्राप्तुमिच्छसि

ब्रह्माणमाह दैत्यस्तु निर्मृत्युत्वमहं वृणे ॥ ५२ ॥

ब्रह्मोवाच ।

जातानामिह संसारे विना मृत्युं न युज्यते ।

यतस्ततोऽपि दैत्येन्द्र मृत्युः प्राप्यशशरीरिभिः ॥ ५३ ॥

पुलस्त्य उवाच ।

इत्युक्तो दैत्यसिंहस्तु प्रोवाचाम्बुजसम्भवम् ॥ ५४ ॥

आडिरुवाच ।

रूपस्य परिवर्तो मे यदास्यात्पद्मसम्भव । तदामृत्युर्मम भवेदन्यथा त्वमरोऽस्म्यहम् ॥

पुलस्त्य उवाच ।

इत्युक्तस्तु तथोवाच तुष्टः कमलसम्भवः । यदाद्वितीयो रूपस्य विवर्त्तस्ते भविष्यति ॥
तदा ते भविता मृत्युरन्यथा न भविष्यति । इत्युक्तोऽमरतां मेने दैत्यसूनुर्महाबलः ॥

तस्मिन्काले त्वसंस्मृत्य तद्वधोपायमात्मनः ।
प्रतिहर्तुर्दृष्टिपथे वीरकस्याभवंस्तदा ॥ ५८ ॥

भुजङ्गरूपी रन्ध्रेण प्रविवेश दृशःपथम् । परिहृत्य गणेशस्य दानवो रौद्रदुर्जयः ॥५९॥
अलक्षितो गणेशेन प्रविश्याथ परांतनुम् । भुजङ्गरूपं सन्त्यज्य जग्राहाथ महासुरः ॥
उमारूपं रमयितुं गिरिशं मूढचेतनः । कृत्वा मायामयं रूपमप्रतर्क्यं मनोहरम् ॥ ६१ ॥
सर्वैरवयवैः पूर्णं सर्वाभिज्ञानबृंहितम् । कृत्वा भगान्तरे दन्तं दैत्यो वज्रमयं दृढम् ॥
तीक्ष्णाग्रं बुद्धिमोहेन गिरिशं हन्तुमुद्यतः । कृत्वोमारूपसंस्थानं गतो दैत्यो हरान्तिकम्
पापो रम्याकृतिश्चित्रभूषणाम्बरसंयुतः । तं दृष्ट्वा गिरिशस्तुष्टस्तमालिङ्ग्य महासुरम् ॥
मन्यमानो गिरिसुतां सर्वैरवयवान्तरैः । अपृच्छत्साधुभावं ते गिरिपुत्रि न कृत्रिमम् ॥
या त्वं मदाशयं ज्ञात्वा प्राप्तेह वरवर्णिनी । त्वया विरहितं शून्यं मम स्थानं जगत्त्रयम्
प्राप्ता प्रसन्नवदने युक्तमेवंविधं त्वयि । इत्युक्तो दानवेन्द्रस्तु तं बभाषे स्मयञ्छनैः॥६७

स चाबुध्यदभिज्ञानैः प्राह त्रिपुरघातिनम् ॥ ६८ ॥

दैत्य उवाच ।

यातास्मि तपसः कामाद्वरं लब्धुं हिमाचलम् । रतिश्चतत्र मे नाभूत्ततः प्राप्ता त्वदन्तिकम्

पुलस्त्य उवाच ।

इत्युक्तः शङ्करः शङ्कां चित्ते प्राप्तो विचारयन् ।

हृदयेन समाधाय देवः प्रहसिताननः ॥ ७० ॥

कुपिता कुपितं बुद्ध्वा प्रकृत्या च दृढव्रता । अप्राप्तकामा संप्राप्ता किमेतत्संविजानती
इति चिन्त्य हरस्तस्या अभिज्ञानं विचारयन् । नापश्यद्वामपार्श्वे तु तदङ्कं पद्मलक्षणम्
लोम्नामावर्तरचितं ततो देवः पिनाकधृत् । बुद्ध्वातां दानवीं मायामाकारंगूहयंस्ततः
मेढ्रदंष्ट्रास्त्रमादाय दानवं तमसादयत् । न चाबुध्यत तद्वृत्तं वीरको द्वाररक्षकः ॥७४॥
कुसुमामोदिनं दृष्ट्वा स्त्रीरूपं दानवेश्वरम् । दूतेन मारुतेनाशु बोधिता हिमशैलजा॥७५॥
श्रुत्वा वायुमुखाद्देवी क्रोधरक्ता विलक्षणा । अपश्यद्वीरकं पुत्रं हृदयेनैव दूयता ॥ ७६ ॥

देव्युवाच ।

मातरं मां परित्यज्य यस्मात्त्वं स्नेहविक्लवाम् ।
विहितावसरः स्त्रीणां शङ्करस्य रहोविधौ ॥ ७७ ॥

तस्मात्ते मानुषे रूक्षा जडा हृदयवर्जिता । गणेशाकारसदृशी शिलामाता भविष्यति ॥
निमित्त एष विख्यातो वीरकस्य सुतादरात् । सम्भवेप्रक्रमेचैव विचित्राख्या न संशयः

पुलस्त्य उवाच ।

एवमुत्सृष्टशापायां गिरिपुत्र्यामनन्तरम् । निर्जगाम मुखात्क्रोधः सिंहरूपी महाबलः ॥
स तु सिंहः करालास्यः सटाजटिलकन्धरः । ऊर्ध्वप्रोद्भूतलाङ्गूलो दंष्ट्रोत्कटमुखावटः

व्यादितास्यो लम्बजिह्वः क्षामः कुक्षिबलादिषु ।
अस्यास्ये वर्तितुं देवी व्यवस्थितवती तदा ॥ ८२ ॥

ज्ञात्वा मनोगतं तस्या भगवांश्चतुराननः । आजगामाश्रमपदं सम्पदामाश्रयं यतः ॥

आगम्योवाच देवेशो गिरिजां स्पष्टया गिरा ॥८३ ॥

ब्रह्मोवाच ।

किं पुनः प्राप्तुकामासि किमलभ्यं ददामि ते ।
विरम्यतामतिक्लेशात्तपसोऽस्मान्मदाज्ञया ॥ ८४ ॥

पुलस्त्य उवाच ।

तच्छ्रुत्वोवाचगिरिजागुरोगौरवयन्त्रितम् । वाक्यं वाचा हरोद्गीर्णवर्णनिर्गमवाञ्छितम्

देव्युवाच ।

तपसा दुष्करेणाप्तः पतिर्वै शङ्करो मया । स मां श्यामलवर्णेति बहुशः प्रोक्तवान्हरः॥८६
तस्मादहं काञ्चनाभवर्णा तन्नामसंयुता । भर्तुर्भूतपतेरङ्गमेकतो निर्विषं भवेत् ॥ ८७ ॥

पुलस्त्य उवाच ।

तस्यास्तद्भाषितं श्रुत्वा प्रोवाच जगदीश्वरः ॥ ८८ ॥

ब्रह्मोवाच ।

एवं भवत्वं भूयश्च भर्तुर्देहार्द्धचारिणी ॥ ८९ ॥

पुलस्त्य उवाच ।

ततस्तत्याज तां कृष्णां फुल्लनीलोत्पलत्वचम् ।
त्वक्च साप्यभवद्भीमा घण्टाहस्ता त्रिलोचना ॥ ९० ॥
नानाभरणसम्पूर्णा पीतकौशेयधारिणी । तामब्रवीत्ततो ब्रह्मा देवीं नीलाम्बुजत्विषम् ॥

ब्रह्मोवाच ।

निशे भूधरजादेहसम्पर्कात्त्वं मदाज्ञया । सम्प्राप्ता कृतकृत्यत्वमेकानंशा पुरोह्यसि॥९२॥
य एषसिंहः प्रोद्भूतो देव्याःक्रोधाद्वरानने । सतेऽस्तु वाहनं देवि केतौ चास्तुमहाबलः
गच्छ विन्ध्याचलं तत्र सुरकार्यं करिष्यसि । पञ्चालो नाम यक्षोऽयं यक्षलक्षपदानुगः
दत्तस्ते किङ्करो देवि मया मायाशतैर्युतः ॥ ९४ ॥

पुलस्त्य उवाच ।

इत्युक्ता कौशिकी देवी विन्ध्यशैलं जगाम ह ।
उमाऽपि प्राप्तसङ्कल्पा जगाम गिरिशान्तिकम् ॥ ९५ ॥
प्रविशन्तीं तु तां द्वारादपहृत्य समाहितः । रुरोध वीरको देवीं हेमवेत्रलताधरः ।
तामुवाच च कोपेन रूपे तु व्यभिचारिणीम् ॥ ९६ ॥

वीरक उवाच ।

प्रयोजनं न तेऽत्रास्ति गच्छ यावन्न भक्ष्यसे । देव्या रूपधरो दैत्यो देवं वञ्चितुमागतः
प्रविष्टो न च दृष्टोऽसौ स च देवेनघातितः । घातिते चाहमाज्ञप्तो नीलकण्ठेनकोपिना

द्वारे त्वनवधानं ते यस्मात्पश्यामि वै ततः। भविष्यसि न मे द्वाःस्थो वर्षपूगाननेकशः

अतस्ते नात्र दास्यामि प्रवेशं गम्यतां द्रुतम्।

एकां मुक्त्वा गिरिसुतां मातरं स्नेहवत्सलाम्।

प्रवेशं लभते नान्या नारी कमललोचने॥ १००॥

पुलस्त्य उवाच।

इत्युक्ता तु तदा देवी चिन्तयामास चेतसा। नारी नैव स दैतेयो वायुर्मे याममाषत॥

वृथैव वीरकश्शप्तो मया क्रोधपरीतया। अकार्यं क्रियते मूढैः प्रायः क्रोधसमन्वितैः॥

क्रोधेन नश्यते कीर्तिः क्रोधो हन्ति स्थिरां श्रियम्।

अपरिच्छिन्नतत्त्वार्था पुत्रं शापितवत्यहम्॥ १०३॥

विपरीतार्थबुद्धीनां सुलभो विपदागमः। सञ्चिन्त्यैवमुवाचेदं वीरकं प्रति शैलजा।

सज्जलज्जाविकारेण वदनेनाम्बुजत्विषा॥ १०४॥

देव्युवाच।

अहं वीरक ते माता न तेऽस्तु मनसो भ्रमः। शङ्करस्यास्मिदयिता सुता तुहिनभूभृतः

ममगात्रच्छविभ्रान्त्या माशङ्कां पुत्र धारय। तुष्टेन गौरता दत्ता ममेयं पद्मजन्मना॥

मया शप्तोऽस्यविदिते वृत्तान्ते दैत्यनिर्मिते। ज्ञात्वा नारीप्रवेशं तु शङ्करे रहसि स्थिते

न निवर्तयितुं शक्यः शापः किन्तुब्रवीमि ते। शीघ्रमेष्यसिमानुष्यात्सर्वकामसमन्वितः

पुलस्त्य उवाच।

शिरसा तु ततो वन्द्य मातरं पूर्णमानसः। उवाच साध्वीं पूर्णेन्दुद्युतिं तुहिनशैलजाम्॥

वीरक उवाच।

नतसुरासुरमौलिलसन्मणिप्रचरकान्तिकरालिनखाङ्घ्रिके।

नगसुते शरणागतवत्सले तव नमोऽवनतार्तिविनाशिनि॥ ११०॥

तपनमण्डलमण्डितकन्धरे पृथुसुवर्णनगद्युतिहारिके।

विषमभङ्गविषङ्गमभीषितो गिरिसुते भवतीमहमाश्रये॥ १११॥

जगति का प्रणताभिमतं ददौ झटिति सिद्धिमृते भवती यथा।

जगतिकां प्रणमेच्छशिशेखरो भुवनभृन्मुनयो भवतीं यथा ॥ ११२ ॥
विमलयोगविनिर्मितदुर्जये सुतनुतुल्यमहेश्वरमण्डली ।
विदलितान्धकबान्धवसंहतिः सुरवरैः प्रथमं त्वमभिष्टुता ॥ ११३ ॥
सितसटापटलोद्धतकन्धरा भवमहामृगराजरयस्थिता ।
विमलशक्तिमुखानलपिङ्गलायतभुजौघनिपिष्टमहासुरा ॥ ११४ ॥
निगदिता भुवनैरतिचण्डिका जननिशुम्भनिशुम्भनिषूदिनी ।
प्रणतचिन्तितदाभवदानवप्रशमनैकरतिस्तरसा भुवि ॥ ११५ ॥
वियति वायुपथे ज्वलनाकुलेऽवनितले तव देवि च तद्वपुः ।
तदजिते प्रतिमे प्रणमाम्यहं भुवनभाविनि ते भववल्लभे ॥ ११६ ॥
जलधयो ललितोद्धतवीचयो हुतवहो द्युतिदग्धचराचरः ।
फणसहस्रभृतश्च भुजङ्गमास्त्वमभिधास्यसि मामभयङ्करा ॥ ११७ ॥
भगवति स्थिरभक्तजनाश्रये प्रतिगतो भवती चरणाश्रयम् ।
करणजातिमहास्तु ममाद्य वै तव विलासमुखानुभवास्पदम् ॥ ११८ ॥

पुलस्त्य उवाच ।

सुप्रसन्ना ततो देवी वीरकस्येतिसंस्तुता । प्रविवेश शुभं भर्तुर्भवनं भूधरात्मजा ॥
द्वास्स्थोऽपि वीरको देवान्हरदर्शनकाङ्क्षिणः। व्यसर्जयत्स्वकानेव गृहानादरपूर्वकम् ॥
नास्त्यत्रावसरो देवा देव्या सह वृषाकपिः । निभृतः क्रीडतीत्युक्तायययुस्तेचयथागतम्

गते वर्षसहस्रे तु देवास्त्वरितमानसाः ।
ज्वलनं चोदयामासुर्ज्ञातुं शङ्करचेष्टितम् ॥ १२२ ॥

प्रविश्य पक्षिरन्ध्रेण शुकरूपी हुताशनः । ददर्श शयने सर्वं रतौगिरिजयासह ॥ १२३ ॥
ददर्श तं च देवेशो हुताशंशुकरूपिणम् । तमुवाच महादेवः किञ्चित्कोपसमन्वितः ॥

शर्व उवाच ।

निषिक्तमर्धं देव्यां मे वीर्यं च शुकविग्रह । लज्जया विरतिश्चास्य त्वमर्धं पिब पावक
यस्मात्तु त्वत्कृते विघ्नं तस्मात्त्वय्युपपद्यते ॥ १२६ ॥

पुलस्त्य उवाच ।

इत्युक्तः प्राञ्जलिर्वह्निरपिबद्वीर्यमाहितम् । तेनाप्लुतास्ततो देवास्तन्मुखा ऋभवो यतः ॥
विपाट्य जठरं तेषां वीर्यं माहेश्वरं ततः । निष्क्रान्तं तप्तहेमाभं वितते शङ्कराश्रमे ॥
तस्मिन्सरोमहज्जातं विमलं बहुयोजनम् । प्रोत्फुल्लहेमकमलं नानाविहगनादितम् ॥

तच्छ्रुत्वा तु सरो देवी जातं हेममहाम्बुजम् ।
जगाम कौतुकाविष्टा तत्सरःकनकाम्बुजम् ॥ १३० ॥

तत्र कृत्वा जलक्रीडां तदब्जकृतशेखरा । उपविष्टा ततस्तस्य तीरे देवी सखीवृता ॥
पातुकामा च तत्तोयं स्वादु निर्मलपङ्कजम् । अपश्यत्कृत्तिकास्तास्सषडर्कद्युतिसन्निभाः
पद्मपत्रेतुतद्वारिगृहीत्वाप्रस्थितागृहम् । हर्षात्सोवाचपास्यामि पद्मपत्रे स्थितं पयः ॥१३३॥

ततस्ता ऊचुरखिलाःकृत्तिका हिमशैलजाम् ॥ १३४ ॥

कृत्तिका ऊचुः ।

दास्यामो दयिते गर्भे सम्भूतो यो भविष्यति ।
सोऽस्माकमपि पुत्रः स्यादस्मत्त्राता च वृत्तिमान् ।
त्रिषु लोकेषु विख्यातः सर्वेष्वपि शुभानने ॥ १३५ ॥

पुलस्त्य उवाच ।

इत्युक्तोवाच गिरिजा कथं मद्गात्रसम्भवैः । सर्वैरवयवैर्युक्तो भवतीभ्यः सुतो भवेत्
ततस्तां कृत्तिका ऊचुर्विधास्यामोऽस्य वै वयम् । उत्तमान्युत्तमाङ्गानियद्येवंतुभविष्यति
उक्ता वै शैलजा प्राह भवत्वेवमनिन्दिताः । ततस्तुहर्षसम्पूर्णाः पद्मपत्रस्थितं पयः

तस्यै ददुस्तया चापि तत्पीतं क्रमशो जलम् ॥ १३८ ॥

पीते तु सलिले चैव तस्मिन्नेव क्षणे वरः । विपाट्य देव्याश्चततो दक्षिणं कुक्षिमुद्गतः
निश्चक्रामाद्भुतो बालो रोगशोकविनाशनः । प्रभाकरकरव्रातप्रकारप्रकरप्रभुः ॥ १४० ॥
गृहीतनिर्मलोदग्रशक्तिशूलाङ्कुशोऽनलः । दीप्तो मारयितुं दैत्यानुत्थितःकनकच्छविः

एतस्मात्कारणादेव कुमारश्चापि सोऽभवत् ।
वामं विदार्य निष्क्रान्तस्ततो देव्याः पुनः शिशुः ॥ १४२ ॥

स्कन्दोऽथवदनाद्वह्ने:शुभ्रात्षड्वदनोऽरिहा। कृत्तिकासलिलाद्देवशाखाभिः सविशेषतः
शाखाः शिवाः समाख्याताः षट्सु वक्त्रेषु विस्तृताः।
यतस्ततो विशाखोऽसौ ख्यातो लोकेषु षण्मुखः॥ १४४॥
स्कन्दो विशाखः षड्वक्त्रः कार्तिकेयश्च विश्रुतः। पक्षे चैत्रस्यबहुलेपञ्चदश्यांमहाबलौ
सम्भूतावर्कसदृशौ विशाले शरकानने। सिते पक्षे तु पञ्चम्यां तथैतौ पावकानलौ॥
बालकाभ्यां चकारैकं सन्ध्यायामेव भूतये। तस्यामेव ततः षष्ठ्यामभिषिक्तो गुहः प्रभुः
सर्वैरमरसङ्घातैर्ब्रह्मोपेन्द्रेन्द्रभास्करैः। गन्धमाल्यैः शुभैर्धूपैस्तथाक्रीडनकैरपि॥ १४८॥
छत्रैश्चामरजालैश्च भूषणैश्च विलेपनैः। अभिषिक्तो विधानेन यथावत्षण्मुखःप्रभुः॥
सुतामस्मै ददौ शक्रो देवसेनेति विश्रुताम्। पत्न्यर्थं देवदेवेशो ददौ विष्णुरथायुधम्
यक्षाणां दशलक्षाणि ददावस्यधनाधिपः। ददौहुताशनस्तेजो ददौवायुश्च वाहनम्॥
ददौक्रीडनकं त्वष्टा कुक्कुटं कामरूपिणम्। एवं सुरास्तु ते सर्वे परिवारमनन्तकम्॥
ददुर्मुदितचेतस्काः स्कन्दायादित्यवर्चसे।
जानुभ्यामवनौ स्थित्वा सुरसङ्घास्तमस्तुवन्॥ १५३॥
स्तोत्रेणानेन वरदं षण्मुखं मुख्यशः सुराः॥ १५४॥

देवा ऊचुः।

नमःकुमाराय महाप्रभाय स्कन्दाय चास्कन्दितदानवाय।
नवार्कबिम्बाप्रतिमप्रभाय नमोऽस्तु गुह्याय गुहाय तुभ्यम्॥ १५५॥
नमोऽस्तु ते लोकभयापहाय नमोऽस्तु ते लोककृपापराय।
नमो विशालामललोचनाय नमो विशाखाय महाव्रताय॥१५६॥
नमो नमस्तेऽस्तु रणोत्कटाय नमो मयूरोज्ज्वलवाहनाय।
नमोऽतु केयूरधराय तुभ्यं नमो धृतोदग्रपताकिने ते॥ १५७॥
नमः प्रभावप्रणताय तेऽस्तु नमोऽस्तु घण्टाधरधैर्यशालिने॥ १५८॥

कुमार उवाच।

कं वः कामं प्रयच्छामि भवन्तो ब्रूत निर्वृताः।

यद्यप्यसाध्यं कृत्यं नो हृदये चिन्तितं चिरम् ॥ १५६ ॥

पुलस्त्य उवाच ।

इत्युक्तास्तु सुरास्तेन प्रोचुः प्रणतमौलयः । सर्वएव महात्मानं गुहं मुदिमानसाः ॥

देवा ऊचुः ।

दैत्येन्द्रस्तारको नाम सर्वामरकुलान्तकृत् । बलवान्दुर्जयस्तीक्ष्णो दुराचारोऽतिकोपनः
तमेव जहि दुर्धर्षं दैत्यं सर्वविनाशनम् । उपस्थितः कृत्यशेषो ह्यस्माकं च भयावहः ॥
हिरण्यकशिपुश्चोग्रो ह्यवध्यो देवतागणैः । यज्ञघ्नःपापकर्मा वै येन ब्रह्मापि तापितः ॥
एतौ हरस्व भद्रं ते तावकं च महाबलम् ॥

पुलस्त्य उवाच ।

एवमुक्तस्तथेत्युक्त्वा सर्वामरपदानुगः । जगाम जगतां नाथः स्तूयमानोऽमरेश्वरैः ॥
तारकस्य वधार्थाय जगतां कण्टकस्य च । ततश्चप्रेषयामास शक्रो लब्धसमाश्रयः ॥
दूतं दानवसिंहस्य परुषाक्षरवादिनम् ॥ १६५ ॥
स तु गत्वाऽब्रवीद्दैत्यमभयो भीमदर्शनम् ॥ १६६ ॥

दूत उवाच ।

शक्रस्त्वामाह देवशोदैत्यकेतुं दिवस्पतिः । तारकासुर तच्छक्त्या घटयस्व यथेच्छया
यज्ञगज्ज्वलनोद्दीप्तं किल्बिषं च त्वया कृतम् ।
तस्याहं सादकस्तेऽद्य राजाऽस्मि भुवनत्रये ॥ १६८ ॥

पुलस्त्य उवाच ।

श्रुत्वैतदद्भुतं वाक्यं कोपसंरक्तलोचनः । उवाच दूतं दुष्टात्मा नष्टप्रायविभूतिकः ॥१६६

तारक उवाच ।

दृष्टं ते पौरुषं शक्र शतशोऽथ महारणे । निस्त्रपत्वान्न ते शान्तिर्विद्यते शक्र दुर्मते ॥

पुलस्त्य उवाच ।

एवमुक्ते गते दूते चिन्तयामास दानवः । नालब्धसंश्रयश्शक्रो वक्तुमेवमिहार्हति ॥१७१
जातः स्कन्दोऽधुना शर्वाज्ज्ञायते समुपाश्रयः ।

निमित्तौघांस्तदा दुष्टान्सोऽपश्यन्नाशवेदिनः ॥ १७२ ॥
पांसुवर्षमसृक्पातं गगनादवनीतले । वामनेत्रप्रकम्पं च वक्त्रशोषं मनोभयम् ॥१७३॥
स्वकानां वक्त्रपद्मानां म्लानतां च व्यलोकयत् ।
दुष्टांश्च प्राणिनो रौद्रान्सोऽपश्यद्दुष्टवादिनः ॥ १७४ ॥

तद्चिन्त्यैव दितिजोन्यस्तचित्तोऽभवत्क्षणात् । यावद्गजघटाघण्टाघनत्काररवोत्कटाम्
तद्वत्तुरङ्गसङ्घातहेषोत्साहविभूषिताम् । सैन्यैस्सेनान्तरोदग्रध्वजराजैर्विराजिताम् ॥
विमानैश्चाद्भुताकारैश्चलितामलचामरैः । विभूषणपिनद्धां च किन्नरोद्गीतनादिताम् ॥
नानानाकतरूत्फुल्लकुसुमापीडधारिणीम् । विशोकास्त्रपरिस्फारवर्मनिर्मलदर्शिनीम् ॥
विद्युत्पुष्टद्युतिधरां नानावाद्यविनादिताम् । सेनां नाकसदां दैत्यः प्रासादस्थोऽव्यलोकयत्
संचिन्तयामास तदा किञ्चिद्विभ्रान्तमानसः । अपूर्वः को भवेद्योद्धा योमया न विनिर्जितः
ततश्चिन्ताकुलो दैत्यः शुश्राव कटुकाक्षरम् । सिद्धवन्दिभिरुद्घुष्टमिदं हृदयदारुणम् ॥

बन्दिन ऊचुः ।

जयातुलशक्तिदीधितिपञ्जरभुजदण्डप्रचण्डतररभससुरवदनकुमुदविकासन-
विलासनेत्रकुमारवर ॥ १८२ ॥
जय दितिज कुलमहोदधिवडवानल मधुरमयूररथ सुरमुकुटकोटिकुञ्चित-
चरणनखाङ्कुरमहासेन ॥ १८३ ॥
जयचलितललितचूडाकलापनवविमलकमलदण्डकान्तकदैत्येशवंशदुःसहदावानल॥
जय विशाखविभो जयबालसप्तवासर भुवनालिशोकशमन जय सकललोकदि-
तिसुतधुरन्धरनाशक स्कन्द ॥ १८५ ॥

पुलस्त्य उवाच ।

श्रुत्वैतत्तारकः सर्वमुद्घुष्टं देवबन्दिभिः । सस्मार ब्रह्मणो वाक्यं वधंबालादुपस्थितम्
स्मृत्वा धर्मौघविध्वंसी सदा वीरपदानुगः । मन्दिरान्निर्जगामाशु शोकग्रस्तेन चेतसा
कालनेमिमुखादैत्याः सन्त्रस्ता भ्रान्तचेतसः । स्वेष्वनीकेषु च तदात्वराविस्मितचेतसः
हिरण्यकशिपुं प्राह दानवानां धुरन्धरः ॥ १८८ ॥

तारक उवाच ।

त्रपाकरं भवेन्मह्यं बलादस्मात्पलायनम् । यद्यहंहन्तवे यामि सोऽपि वै कमलाश्रितः ॥

हत्वा ऽहंबालकंचैनं दुस्स्पर्शःस्यामकारणम् । यात धावत गृह्णीत योजयध्वंवरूथिनीम्

पुलस्त्य उवाच ।

कुमारं तारको दृष्ट्वा बभाषे भीषणाकृतिः ॥ १६१ ॥

तारक उवाच ।

किं बाल योद्धुकामोऽसि क्रीड कन्दुकलीलया ।

यैरसि त्वं विसृष्टोऽत्र सङ्गरे ते हि भीरवः ॥ १६२ ॥

बालत्वादथ ते बुद्धिरेवं स्वल्पार्थदर्शिनी । कुमारोऽपि तमग्रस्थं बभाषे हर्षवत्तमन् ॥

कुमार उवाच ।

श्रृणुतारकशास्त्रार्थं इह नैव निरूप्यते । शस्त्रैरर्था न दृश्यन्ते समरे निर्भरं भये ॥१६४

शिशुत्वं मावमंस्थामेशिशुःकष्टो भुजङ्गमः । दुष्प्रेक्षो भास्करो बालस्तथाहंदुर्जयःशिशुः

अल्पाक्षरो न मन्त्रः किं सस्फुरो दैत्य दृश्यते ॥ १६५ ॥

पुलस्त्य उवाच ।

कुमारे प्रोक्तवत्येवं दैत्यश्चिक्षेप मुद्गरम् । कुमारस्तं तु चिच्छेद चक्रेणामोघवर्चसा ॥

ततश्चिक्षेप दैत्येन्द्रो भिन्दिपालमयोमयम् । करेण तं च जग्राह कार्तिकेयोऽमरारिहा ॥

गदां मुमोच दैत्याय समुत्थाय खरस्वनाम् । तया हतस्ततोदैत्यश्चकम्पेऽचलराडिव ॥

मेने च दुर्जयं दैत्यस्तदा बालं सुदुःसहम् । चिन्तयामासबुद्ध्यावै प्राप्तःकालोनसंशयः

कम्पितं च समालोक्य कालनेमि पुरोगमाः । सर्वे दैत्येश्वरा जघ्नुः कुमारं रणदारुणम्

स तैः प्रहारैरस्पृष्टस्तथा क्लेशैर्महाद्युतिः । स बालो बलिभिर्वेगैरयुध्यद्दानवै रणे ॥२०१

रणशौण्डाश्च दैत्येन्द्राःपुनर्जघ्नुःशिलीमुखैः । कुमारं समरे दैत्या बलिनो देवकण्टकाः

कुमारस्य व्यथा नाभूद्दैत्यास्त्रनिहतस्य तु । प्राणान्तकरणं जातं देवानां दानवाहवम्

देवान्निपीडितान्दृष्ट्वा कुमारः कोपमाविशत् ।

ततोऽस्त्रैर्दारयामास दानवानामनीकिनीम् ॥ २०४ ॥

तैरस्त्रैर्निष्प्रतीकारैस्ताडितास्सुरकण्टकाः। कालनेमिमुखाःसर्वेरणेह्यासन्पराङ्मुखाः
विद्रुतेषु च दैत्येषु प्रहतेषु समन्ततः। किन्नरोद्गारगीतैश्च हास्यसंन्यस्तचेतनः॥२०६
जघ्ने कुमारं गदया निष्टप्तकनकत्विषा। शरैर्मयूरं चित्रैश्च चकार विमुखं रणे॥२०७
दृष्ट्वा पराङ्मुखो देवो मुक्तरक्तं स्ववाहनम्। जग्राह शक्तिं विमलां रणे कनकभूषणाम्
बाहुना हेमकेयूररुचिरेण षडाननः। ततोऽब्रवीन्महासेनस्तारकं दानवाधिपम्॥२०९॥

महासेन उवाच।

तिष्ठतिष्ठ सुदुर्बुद्धे यमलोकं विलोकय। हतोह्यसि मया शक्त्या स्मरस्वं दैत्यचेष्टितम्

पुलस्त्य उवाच।

इत्युक्त्वा तु ततः शक्तिं मुमोच दितिजं प्रति। सा कुमारभुजोत्सृष्टा तत्केयूररवानुगा
बिभेद दैत्यहृदयं वज्रशैलेन्द्रकर्कशम्। गतासुः स पपातोर्व्यां प्रलये भूधरो यथा॥
विकीर्णमुकुटोष्णीषो विस्रस्ताखिलभूषणः। तस्मिन्विनिहते दैत्ये दानवानां धुरन्धरे॥

नाभूत्कश्चित्तदा दुःखी नरकेष्वपि पापकृत्।
स्तुवन्तः षण्मुखं देवाः प्राक्रीडन्नागतस्मिताः॥ २१४॥

जग्मुः स्वानेवभुवनान्निरस्यासंस्तथोत्सुकाः। ददुश्चापि वरं सर्वे देवास्ते षण्मुखाय तु
तुष्टाः सम्प्राप्तसर्वार्थास्सह सिद्धैस्तपोधनैः॥२१६॥

देवा ऊचुः।

यः पठेत्स्कन्दसम्बन्धां कथामेतां महामतिः। शृणुयाच्छ्रावयेद्वापि स भवेत्कीर्तिमान्नरः
बह्वायुः सुभगः श्रीमान्कीर्तिमाञ्छुभदर्शनः। भूतेभ्यो निर्भयश्चापि सर्वदुःखविवर्जितः॥
सन्ध्यामुपास्य यः पूर्वां स्कन्दस्य चरितं पठेत्। सयुक्तः किन्नरैः सर्वैर्महाधनपतिर्भवेत्

इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे कुमारसंभवतारकवधो नाम
षट्चत्वारिंशत्तमोऽध्यायः।

———

# सप्तचत्वारिंशत्तमोऽध्यायः

## श्रीनृसिंहावतारवर्णनम् ।

भीष्म उवाच ।

इदानीं श्रोतुमिच्छामि हिरण्यकशिपोर्वधम् । नरसिंहस्य माहात्म्यं तथा पापविनाशनम्

पुलस्त्य उवाच ।

पुरा कृतयुगे राजन्हिरण्यकशिपुः प्रभुः । दैत्यानामादिपुरुषश्चकार सुमहत्तपः ॥ २ ॥
दश वर्षसहस्राणि दशवर्षशतानि च । जलवासी समभवत्स्नानमौनधृतव्रतः ॥ ३ ॥
वृतः शमदमाभ्यां च ब्रह्मचर्येण चैव हि । ब्रह्मा प्रीतोऽभवत्तस्य तपसा नियमेन च ॥
ततः स्वयम्भूर्भगवान्स्वयमागत्य तत्र हि । विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥५॥
आदित्यैर्वसुभिः साध्यैर्मरुद्भिर्दैवतैस्सह । रुद्रैर्विश्वसहायैश्च यक्षराक्षसपन्नगैः ॥ ६ ॥
दिग्भिश्चैव विदिग्भिश्च नदीभिः सागरैस्तथा । नक्षत्रैश्च मुहूर्तैश्च खेचरैश्च महाग्रहैः ॥
देवैर्ब्रह्मर्षिभिः सार्द्धं सिद्धैः सप्तर्षिभिस्तथा । राजर्षिभिः पुण्यकृद्भिर्गन्धर्वाप्सरसांगणैः
चराचरगुरुः श्रीमान्वृतः सर्वैर्दिवौकसैः । ब्रह्मा ब्रह्मविदां श्रेष्ठो दैत्यं वचनमब्रवीत् ॥

ब्रह्मोवाच ।

प्रीतोऽस्मि तव भक्तस्य तपसानेन सुव्रत । वरं वरय भद्रं ते यथेष्टं काममाप्नुहि॥१०॥

हिरण्यकशिपुरुवाच ।

न देवा सुरगन्धर्वा न यक्षोरगराक्षसाः । न मानुषाः पिशाचाश्च हन्युर्मां देवसत्तम ॥
ऋषयो मानवाः शापैर्नशपेयुः पितामह । यदि मे भगवान्प्रीतो वर एष वृतो मया ॥

न शस्त्रेण न चास्त्रेण गिरिणा पादपेन वा ।
न शुष्केण न चार्द्रेण न स्याच्चान्येन मे वधः ॥ १३ ॥

भवेयमहमेवार्कः सोमो वायुर्हुताशनः । सलिलं चान्तरिक्षं च नक्षत्राणि दिशो दश ॥

अहं क्रोधश्च कामश्च वरुणो वासवो यमः ।

धनदश्च धनाध्यक्षो यक्षः किम्पुरुषाधिपः ॥ १५ ॥

ब्रह्मोवाच ।

एष दिव्यो वरस्तात मया दत्तस्तवाद्भुतः । सर्वकामप्रदो वत्स प्राप्स्यसि त्वं न संशयः

पुलस्त्य उवाच ।

एवमुक्त्वा स भगवाञ्जगामाकाशमेव हि । वैराजं ब्रह्मसदनं ब्रह्मर्षिगणसेवितम् ॥

ततो देवाश्च गन्धर्वा ऋषिभिः सह चारणाः । वरप्रदानं श्रुत्वैवं पितामहमुपस्थिताः ॥

देवा ऊचुः ।

वरप्रदानाद्भगवन्वधिष्यति स नोऽसुरः । तत्प्रसादश्च भगवान्वधोऽप्यस्य विचिन्त्यताम्

पुलस्त्य उवाच ।

भगवान्सर्वभूतानामादिकर्त्ता स्वयं प्रभुः । स्रष्टा च हव्यकव्यानामव्यक्तप्रकृतिः परः ॥

सर्वलोकहितं वाक्यं श्रुत्वा देवःप्रजापतिः । आश्वासयामास तदा सुशीतैर्वचनाम्बुभिः

ब्रह्मोवाच ।

अवश्यं त्रिदशास्तेन प्राप्तव्यं तपसः फलम् ।
तपसोऽन्तेऽस्य भगवान्वधं विष्णुः करिष्यति ॥ २२ ॥

पुलस्त्य उवाच ।

तच्छ्रुत्वा विबुधा वाक्यं सर्वे पङ्कजजाननात् ।
स्वानि स्थानानि दिव्यानि विप्र जग्मुर्मुदान्विताः ॥ २३ ॥

लब्धमात्रे वरे सोऽथ प्रजास्सर्वा अबाधत । हिरण्यकशिपुर्दैत्यो वरदानेन गर्वितः ॥

आश्रमेषु महाभागान्मुनीन्वै शंसितव्रतान् । सत्यधर्मपरान्दान्तान्धर्षयामास दानवः ॥

देवांस्त्रिभुवनस्थांश्च पराजित्य महासुरः । त्रैलोक्यं वशमानीय स्वर्गे वसति दानवः ॥

यदा वरमदोत्सिक्तश्चोदितः कालधर्मिणा ।
यज्ञियानकरोद्दैत्यानयज्ञियांश्च दैवतान् ॥ २७ ॥

तदा दैत्याश्च साध्याश्च विश्वे च वसवस्तथा । रुद्रा देवगणा यक्षा देवद्विजमहर्षयः ॥

शरण्यं शरणं विष्णुमुपतस्थुर्महाबलम् । देवदेवं यज्ञमयं वासुदेवं सनातनम् ॥ २९ ॥

देवा ऊचुः ।

नारायण महाभाग देवास्त्वां शरणं गताः ।
त्रायस्व जहि दैत्येन्द्रं हिरण्यकशिपुं प्रभो ॥ ३० ॥

त्वंहि नः परमोदाता त्वंहि नः परमोगुरुः । त्वं हि नः परमोदेवो ब्रह्मादीनांसुरोत्तमः

विष्णुरुवाच ।

भयंत्यजध्वममरा अभयं वो ददाम्यहम् । तथैवत्रिदिवं देवाः प्रतिपद्यत मा चिरम् ॥
एनं हि सगणं दैत्यं वरदानेन गर्वितम् । अवध्यममरेन्द्राणां दानवेन्द्रं निहन्म्यहम् ॥

पुलस्त्य उवाच ।

एवमुक्त्वा तु भगवान्विश्वपो विष्णुरव्ययः । हिरण्यकशिपुस्थानं जगाम हरिरीश्वरः

तेजसा भास्कराकारः शशी कान्त्येव चापरः ।
नरस्य कृत्वार्धतनुं सिंहस्यार्द्धतनुं तथा ॥ ३५ ॥

नारसिंहेनवपुषा पाणिं सङ्गृह्यपाणिना । ततोददर्श विस्तीर्णां दिव्यां रम्यांमनोरमाम्
सर्वकामयुतां शुभ्रां हिरण्यकशिपोः सभाम् । विस्तीर्णांयोजनशतं शतमध्यर्द्धमायताम्

वैहायसीं कामगमां पञ्चयोजनमुच्छ्रिताम् ।
जराशोकक्लमापेतां निष्प्रकम्प्यां शिवां सुखाम् ॥ ३८ ॥

वेश्मासनवतीं रम्यां ज्वलन्तीमिव तेजसा । अन्तः सलिलसंयुक्तां विहितांविश्वकर्मणा
दिव्यवर्णमयैर्वृक्षैः फलपुष्पप्रदैर्युताम् । नीलपीतासितश्यामैः श्वेतैर्लोहितकैरपि ॥४०॥
अवदातैस्तथा गुल्मै रक्तमञ्जरिधारिभिः । सिताभ्रघनसङ्काशां प्लावन्तीं च ददर्श सः ॥

रश्मिमती स्वभावेन दिव्यगन्धमनोरमा ।
सुसुखा न च दुःखा सा न शीता न च घर्मदा ॥ ४२ ॥

न क्षुत्पिपासेग्लानिं वा प्राप्य तां प्राप्नुवन्ति ते । नानारूपैरुपकृतासुचित्रैश्चसुभास्वरैः
अतिचन्द्रातिसूर्यातिशिखिकान्तिस्वयम्प्रभा । दीप्यते नाकपृष्ठस्था भासयन्तोविभासुरा
सर्वे चकाशिरे तस्यां मुदिताश्चैव मानुषाः । रसवच्च प्रभूतं च भक्ष्यभोज्यान्नमुत्तमम्

पुण्यगन्धाः स्रजश्चापि नित्यकालफला द्रुमाः ।

उष्णे शीतानि तोयानि शीते चोष्णानि सन्ति वै ॥ ४६ ॥

पुष्पिताग्रान्महाशाखान्प्रवालाङ्कुरधारिणः । लतावितानसंछन्नान्कल्पानैक्षिष्ट स प्रभुः ॥

गन्धवन्ति च पुष्पाणि रसवन्ति फलानि च ।

तानि शीतानि चोष्णानि तत्र तत्र सरांसि च ॥ ४८ ॥

अपश्यद्भूपतीर्थानि सभायां तस्य स प्रभुः । नलिनैः पुण्डरीकैश्च शतपत्रैः सुगन्धिभिः
रक्तैः कुवलयैश्चैव कह्लारैरुत्पलैस्तथा । नानाश्चर्यसमोपेतैः पुष्पैरन्यैश्च सुप्रियैः ॥
कारण्डवैश्चक्रवाकैः सारसैः कुररैरपि । विमलस्फटिकाभानि पाण्डुरच्छदनैर्द्विजैः ॥
बहुहंसोपगीतानि सारसानां रुतानि च । गन्धयुक्तालतास्तत्र पुष्पमञ्जरिधारिणीः ॥
दृष्टवान्भगवान्हृष्टः खदिरान्वेतसार्जुनान् । चूतानिम्बानागवृक्षाः कदम्बाबकुलाधवाः ॥

प्रियङ्गवः पाटलाख्याः शाल्मल्यस्सहरिद्रवाः ।

शालास्तालास्तमालाश्च चम्पकाश्च मनोरमाः ॥ ५४ ॥

तथैवान्ये व्यराजन्त सभायां पुष्पिताद्रुमाः । एला ककुभकङ्कोललवलीकर्णपूरकाः ॥
मधुकाः कोविदाराश्च बहुतालसमुच्छ्रयाः । अञ्जनाशोकपर्णासा बहवश्चित्रकाद्रुमाः ॥
वरुणाश्च पलाशाश्च पनसास्सह चन्दनैः । नीलास्सुमनसश्चैव नीपाश्चाश्वत्थतिन्दुकाः
पारिजाताश्च तरवो मल्लिका भद्रदारवः । अटरूषाः पीलुकाश्च तथाचैवैलवालुकाः ॥
मन्दारकाः कुरबकाः पुन्नागाः कुटजास्तथा । रक्ताः कुरबकाश्चैव नीलाश्चागरुभिः सह
किंशुकाश्चैव भव्याश्च दाडिमाबीजपूरकाः । कालेयकादुकूलाश्च हिङ्गवस्तैलवर्त्तिकाः
खर्जूरा नारिकेलाश्च हरीतकमधूककाः । सप्तपर्णाश्च बिल्वाश्च सयावाश्च शरावताः ॥
असनाश्च तमालाश्च नानागुल्मसमावृताः । लताश्चविविधाकाराः पुष्पपत्रफलोपगाः ॥

एते चान्ये च बहवस्तत्र काननजा द्रुमाः ।

नानापुष्पफलोपेता व्यराजन्त समन्ततः ॥ ६३ ॥

चकोराः शतपत्राश्च मत्तकोकिलशारिकाः । पुष्पितान्पुष्पिताग्रांश्च सम्पतन्ति महाद्रुमान्
रक्तपीतारुणास्तत्र पादपाग्रगताः खगाः । परस्परमवैक्षन्त प्रहृष्टा जीवजीवकाः ॥६५॥
तस्यां सभायां दैत्येन्द्रो हिरण्यकशिपुस्तदा । आसीन आसने चित्रदशनल्वप्रमाणतः

दिवाकरनिभे दिव्ये दिव्यास्तरणसंस्तृते । हिरण्यकशिपुरत्य आस्ते ज्वलितकुण्डलः
उपचेरुर्महादैत्या हिरण्यकशिपुंतदा । दिव्यतालानि गीतानिज गुर्गन्धर्वसत्तमाः ॥
विश्वाची सहजन्या च प्रम्लोचेति च पूजिता ।
दिव्याथ सौरभेयी च समीची पुञ्जिकस्थली ॥ ६९ ॥
मिश्रकेशी च रम्भा च चित्रभा श्रुतिविभ्रमा । चारुनेत्रा घृताची च मेनका चोर्वशी तथा
एतासहस्रशश्चान्या नृत्यगीतविशारदाः । उपातिष्ठन्त राजानं हिरण्यकशिपुं प्रभुम् ॥
उपासतेऽदितेः पुत्राः सर्वेलब्धवरास्तथा । बलिर्विरोचनस्तत्र नरकः पृथिवीसुतः ॥
प्रह्लादो विप्रचित्तिश्च गविष्ठश्च महासुरः । सुरहन्ता दुःखकर्ता सुमनास्सुमतिस्तथा ॥
घटोदरो महापार्श्वः क्रथनः पिठरस्तथा । विश्वरूपस्सुरूपश्च विश्वकायो महाबलः ॥
दशग्रीवश्च बाली च मेघवासा महासुरः । घटाभो विटरूपश्च ज्वलनश्चेन्द्रतापनः ॥
दैत्यदानवसङ्घास्ते सर्वे ज्वलितकुण्डलाः । स्रग्विणो वर्मिणः सर्वे सर्वे च चरितव्रताः
सर्वे लब्धवराः शूरास्सर्वेविहितमृत्यवः । एते चान्ये च बहवो हिरण्यकशिपुं प्रभुम्
उपासते महात्मानं सर्वेदिव्यपरिच्छदाः । विमानैर्विविधाकारैर्भ्राजमानैरिवाग्निभिः ॥
महेन्द्रवपुषः सर्वे विचित्राङ्गदबाहवः । भूषिताङ्गादितेः पुत्रास्तमुपासत सर्वतः ॥ ७९ ॥
ऐश्वर्यं दैत्यसिंहस्य यथा तस्य महात्मनः । न श्रुतं नैव दृष्टं च कस्यापि भुवनत्रये ॥
रजतकनकचित्रवेदिकायां परिकृतरत्नविचित्रवीथिकायाम् ।
स ददर्श मृगाधिपः सभायां सुरुचिरजालगवाक्षशोभितायाम् ॥ ८१ ॥
कनकवलयहारभूषिताङ्गं दितितनयं स मृगाधिपो ददर्श ॥
दिवसकरकरप्रभं ज्वलन्तं दितिजसहस्रशतैर्निषेव्यमाणम् ॥ ८२ ॥
ततो दृष्ट्वा महाभागं कालचक्रमिवागतम् । नारसिंहवपुश्छन्नं भस्मच्छन्नमिवानलम् ॥
हिरण्यकशिपोः पुत्रः प्रह्लादो नाम वीर्यवान् । दिव्येन वपुषासिंहमपश्यद्देवमागतम् ॥
तं दृष्ट्वा रुक्मशैलाभामपूर्वां तनुमाश्रितम् । विस्मिता दानवाः सर्वे हिरण्यकशिपुश्च सः

प्रह्लाद वाच ।

महाराज महाबाहो दैत्यानामादिसम्भव । न श्रुतं नैव मे दृष्टं नारसिंहमिदं वपुः ॥८६॥

अव्यक्तं परमं दिव्यं किमिदं रूपमागतम् । दैत्यान्तकरणं घोरं शंसतीव मनो मम ॥८९॥
अस्य देवाः शरीरस्थाः सागराः सरितस्तथा । हिमवान्पारियात्रश्च ये चान्ये कुलपर्वताः
चन्द्रमास्सहनक्षत्रैरादित्यो रश्मिभिः सह । धनदो वरुणश्चैव यमः शक्रः शचीपतिः ॥
मरुतो देवगन्धर्वा ऋषयश्च तपोधनाः । नागा यक्षाः पिशाचाश्च राक्षसा भीमविक्रमाः

ब्रह्मा देवाः पशुपतिर्ललाटस्था भ्रमन्ति हि ।
स्थावराणि च सर्वाणि जङ्गमानि तथैव च ॥ ९१ ॥

भवांश्च सहितोऽस्माभिः सर्वैर्दैत्यगणैर्वृतः । विमानशतसङ्कीर्णा सर्वा या भवतः सभा
सर्वं त्रिभुवनं राजँल्लोकधर्मश्च शाश्वतः । दृश्यन्ते नरसिंहेऽस्मिंस्तथेदं निखिलं जगत्

प्रजापतिश्चात्र मनुर्महात्मा ग्रहाश्च योगाश्च मही नभश्च ।
उत्पातकालश्च धृतिर्मतिश्च रतिश्च सत्यं च तपोदमश्च ॥ ९४ ॥
सनत्कुमारश्च महानुभावो विश्वे च देवा ऋषयश्च सर्वे ।
क्रोधश्च कामश्च तथैव हर्षो दर्पश्च मोहः पितरश्च सर्वे ॥ ९५ ॥

पुलस्त्य उवाच ।

प्रह्लादस्य वचः श्रुत्वा हिरण्यकशिपुः प्रभुः । उवाच दानवान्सर्वान्गणांश्च सगणाधिपः

हिरण्यकशिपुरुवाच ।

मृगेन्द्रो गृह्यतामेष अपूर्वां तनुमास्थितः । यदि वा संशयः कश्चिद्वध्यतां वनगोचरः ॥

पुलस्त्य उवाच ।

ते दानवगणास्सर्वे मृगेन्द्रं भीमविक्रमम् । परिक्षिपन्तो मुदितास्त्रासयामासुरोजसा ॥
सिंहनादं विमुच्याऽथ नरसिंहो महाबलः । बभञ्ज तां सभां सर्वां व्यादितास्य इवान्तकः

सभायां भज्यमानायां हिरण्यकशिपुः स्वयम् ।
चिक्षेपास्त्राणि सिंहस्य रोषव्याकुललोचनः ॥ १०० ॥

सर्वास्त्राणामथ श्रेष्ठं दण्डमस्त्रं सुदारुणम् । कालचक्रं तथा घोरं विष्णुचक्रं तथापरम् ॥
पैतामहं महात्युग्रं त्रैलोक्यनिर्मितं महत् । विचित्रामशनिं चैव शुष्कार्द्रं चाशनिद्वयम् ॥
रौद्रं तथोग्रशूलं च कङ्कालं मुसलं तथा । अस्त्रं ब्रह्मशिरश्चैव ब्राह्ममस्त्रं तथैव च ॥१०३॥

नारायणास्त्रमैन्द्रं च आग्नेयं शैशिरं तथा। वायव्यं मथनं चैव कपालमथ किङ्करम् ॥
तथाऽप्रतिहतां शक्तिं क्रौञ्चमस्त्रं तथैव च। मोहनं शोषणं चैव सन्तापनविलापने ॥
कम्पनं शातनं चैव महास्त्रं चैव रोधनम्।
कालमुद्गरमक्षोभ्यं तापनं च महाबलम् ॥ १०६ ॥
संवर्तनं मोहनं च तथा मायाधरं वरम्। गान्धर्वमस्त्रं दयितमसिरत्नं च नन्दकम् ॥
प्रस्वापनं प्रमथनं वारुणं चास्त्रमुत्तमम्। अस्त्रं पाशुपतं चैव यस्याप्रतिहता गतिः ॥
एतान्यस्त्राणि दिव्यानि हिरण्यकशिपुस्तादा।
असृजन्नरसिंहस्य दीप्तस्याग्नेरिवाहुतिम् ॥ १०९ ॥
अस्त्रैः प्रज्वलितैः सिंहमावृणोदसुरोत्तमः। विवस्वान्घर्मसमये हिमवन्तमिवांशुभिः ॥
सह्यमर्षानिलोद्भूतो दैत्यानां सैन्यसागरः। क्षणेनाप्लावयत्सर्वं मैनाकमिव सागरः ॥
प्रासैः पाशैश्च खड्गैश्च गदाभिर्मुसलैस्तथा। वज्रैरशनिभिश्चैव बहुशाखैर्महाद्रुमैः ॥
मुद्गरैः कूटपाशैश्च शिलोलूखलपर्वतैः। शतघ्नीभिश्च दीप्ताभिर्दण्डैरपि सुदारुणैः ॥
ते दानवाः पाशगृहीतहस्ता महेन्द्रतुल्याशनितुल्यवेगाः।
समन्ततोऽभ्युद्यतबाहुकायाः स्थिताः स शीर्षा इव नागपोताः ॥ ११४ ॥
सुवर्णमालाकुलभूषिताङ्गाः सुतीक्ष्णदंष्ट्राकुलवक्त्रगर्ताः।
स्फुरत्प्रभास्ते च सशृङ्गदेहाश्चीनांशुका भान्ति यथैव हंसाः ॥ ११५ ॥
सोऽसृजद्दानवो मायामग्निं वायुसमीरितम्। तमिन्द्रस्तोयदैः सार्धं सहस्राक्षोमहाद्युतिः
महता तोयवर्षेण शमयामास पावकम्। तस्यां प्रतिहतायां तु मायायां युधि दानवः ॥
असृजद्घोरसङ्काशं तमस्तीव्रं समन्ततः। तमसा संवृते लोके दैत्येष्वात्तायुधेषु च ॥
स्वतेजसा परिवृतो दिवाकर इवोद्गतः। त्रिशिखां भ्रुकुटीमस्य ददृशुर्दानवारणे ॥
ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव। ततः सर्वासु मायासु हतासुदितिनन्दनाः
हिरण्यकशिपुं दैत्या विषण्णाश्शरणं ययुः।
ततः प्रज्वलितः क्रोधात्प्रदहन्निव तेजसा ॥ १२१ ॥
तस्मिन्क्रुद्धेतुदैत्येन्द्रेतमोभूतमभूज्जगत्। आवहः प्रवहश्चैव विवहोऽथ समीरणः ॥ १२२

परावहस्संवहश्च उद्वहश्च महाबलः । तथा परिवहः श्रीमानुत्पातभयशंसिनः ॥ १२३ ॥
इत्येवं क्षुभिताः सप्त मरुतो गगनेचराः । ये ग्रहास्सर्वलोकस्य क्षये प्रादुर्भवन्ति हि ॥
ते सर्वे गगने दृष्टा व्यचरंश्च यथासुखम् । अयोगतश्चाप्यचरद्योगं निशि निशाचरः ॥
सग्रहः सहनक्षत्रैस्तारापतिररिंदम । विवर्णतां च भगवान्गतो दिवि दिवाकरः ॥१२६॥
कृष्णः कबन्धश्च तदा लक्ष्यते सुमहान्दिवि । असृजच्चासितां सूर्योधूमवर्त्तांविभावसु ॥
गगनस्थश्च भगवानभीक्ष्णं परिविष्यते । सप्तधूमनिभा घोराः सूर्या दिवि समुत्थिताः
सोमस्य गगनस्थस्य ग्रहास्तिष्ठन्ति शृङ्गगाः । वामे च दक्षिणे चैव स्थितौ शुक्रबृहस्पती
शनैश्चरो लोहिताङ्गो लोहिताङ्गसमद्युतिः । समं समधिरोहन्त सर्वे वै गगनेचराः ॥
शृङ्गाणिशनकैर्घोरा युगान्तावर्त्तनग्रहा । चन्द्रमाश्च सनक्षत्रो ग्रहैः सह तमोनुदः ॥३१॥
चराचरविनाशाय रोहिणीं नाभ्यनन्दत । गृहीतोराहुणा चन्द्र उल्काभिरभिहन्यते ॥

उल्काः प्रज्जलिताश्चन्द्रे व्यचरन्त यथासुखम् ।
देवानामधिपोदेवः सोऽप्यवर्षतशोणितम् ॥ ३३ ॥

अपतद्गगनादुल्काविद्युद्रूपा महास्वना । अकाले च द्रुमास्सर्वे पुष्प्यन्ति च फलन्ति च ॥

लताश्च सफलाः सर्वा या आहुर्दैत्यनाशिकाः ।
फले फलान्यजायन्त पुष्पे पुष्पं तथैव च ॥ ३५ ॥
उन्मीलन्ति निमीलन्ति हसन्ति प्ररुदन्ति च ।
विक्रोशन्ति च गम्भीरं धूमायन्ते ज्वलन्ति च ॥ ३६ ॥

प्रतिमास्सर्वदेवानां कथयन्त्यो महद्भयम् । आरण्यैः सह संसृष्टा ग्राम्याश्च मृगपक्षिणः
चुकुशुर्भैरवं तत्र मृगयुद्धउपस्थिते । नद्यश्च प्रतिकूलाः प्रवहन्ति कलुषोदकाः ॥ ३८ ॥
न प्राकाशन्त च दिशो रक्तरेणुसमाकुलाः । वानस्पत्या न पूज्यन्ते पूजनार्हा कथञ्चन ॥
वायुवेगेन हन्यन्ते भज्यन्ते प्रणमन्ति च । तथा च सर्वभूतानां छाया न परिवर्त्तते ॥
अपरेण गते सूर्ये सलोकानां युगक्षये । तदा हिरण्यकशिपोर्दैत्यस्योपरि वेश्मनः ॥
भाण्डागारा युधागारे निविष्टमभवन्मधु । असुराणां विनाशाय सुराणां विजयाय च
दृश्यन्ते विविधोत्पाता घोरा घोरनिदर्शनाः । एते चान्ये च बहवो घोररूपाःसमुत्थिताः

दैत्येन्द्रस्यविनाशाय दृश्यन्ते रणशंसिनः । मेदिन्यां कम्पमानायां दैत्येन्द्रेण महात्मना
महीधरा नागगणा निपेतुरमितौजसः ।
विषज्वालाकुलैर्वक्त्रैर्विमुञ्चन्तो हुताशनम् ॥ १४५ ॥
चतुःशीर्षाः पञ्चशीर्षाः सप्तशीर्षाश्च पन्नगाः । वासुकिस्तक्षकश्चैव कर्कोटकधनञ्जयौ
एलामुखः कालियश्च महापद्मश्च वीर्यवान् । सहस्रशीर्षश्शुद्धाङ्गो हेमतालध्वजः प्रभुः ॥
शेषोऽनन्तो महानागो ह्यप्रकम्प्यश्च कम्पिताः ।
दीप्यन्तेऽन्तर्जलस्थानि पृथिवीविवराणि वै ॥ १४८ ॥
स्वदैत्येन्द्रकोपेन कम्पितानि समन्ततः । नानातेजोधराश्चापि पातालतलचारिणः ॥
पाताले सहसा क्षुब्धे दुष्प्रकम्प्याःप्रकम्पिताः । हिरण्यकशिपुर्दैत्यस्तदासंस्पृष्टवान्महीम्
सन्दष्टौष्ठपुटः क्रुद्धो वराह इव पूर्वजः । गङ्गाभागीरथी चैव कौशिकी सरयूरपि ॥१५१
यमुना चाथ कावेरी कृष्णावेणी च निम्नगा ।
तुङ्गा भद्रा महावेगा नदी गोदावरी तथा ॥ १५२ ॥
चर्मण्वती च सिन्धुश्च तथा नदनदीपतिः । मेलकप्रभवश्चैव शोणो मणिनिभोदकः ॥
नर्मदा च शुभस्रोता तथा वेत्रवती नदी ।
गोमती गोकुलाकीर्णा तथा पूर्वा सरस्वती ॥ १५४ ॥
महाकालमही चैव तमसा पुष्पवाहिनी । जम्बूद्वीपं रत्नवच्च सर्वरत्नोपशोभितम् ॥
सुवर्णपुटकं चैव सुवर्णाकरमण्डितम् ।
महानदश्च लौहित्यश्शैलः काञ्चनशोभितः ॥ १५६ ॥
पत्तनं कोशकाराणां कशिं च रजताकरम् । मगधाश्च महाग्रामाः पुण्ड्रा उग्रास्तथैव च
सुह्मा मल्ला विदेहाश्च मालवाः काशिकोसलाः ।
भवनं वैनतेयस्य दैत्येन्द्रेणाभिकम्पितम् ॥ १५८ ॥
कैलासशिखराकारं यत्कृतं विश्वकर्मणा । रक्ततोयो महाभीमो लौहित्यो नाम सागरः ॥
उदयश्च महाशैल उच्छ्रितः शतयोजनम् । सुवर्णवेदिकः श्रीमान्मेघपङ्क्तिनिषेवितः ॥
भ्राजमानोऽर्कसदृशैर्जातरूपमयैर्द्रुमैः । सालैस्तालैस्तमालैश्च कर्णिकारैश्च पुष्पितैः ॥

अयोमुखश्च विख्यातः सर्वतो धातुमण्डितः । तमालवनगन्धश्च पर्वतो मलयःशुभः ॥

सुराष्ट्राश्च सबाह्लीकाश्शूद्राभीरास्तथैव च ।

भोजाः पाण्ड्याश्च वङ्गाश्च कलिङ्गास्ताम्रलिप्तकाः ॥ १६३ ॥

तथैव पौण्ड्राः शुभ्राश्च वामचूडास्सकेरलाः । क्षोभितास्तेनदैत्येनदेवाश्चाप्सरसांगणाः

अगस्त्यभवनं चैव यदगस्त्यकृतं पुरा । सिद्धचारणसङ्घैश्च विप्रकीर्णं मनोहरम् ॥१६५

विचित्रनानाविहगं सुपुष्पितमहाद्रुमम् । जातरूपमयैः शृङ्गैरप्सरोगणसेवितम् ॥१६६॥

गिरिः पुष्पितकश्चैव लक्ष्मीवान्प्रियदर्शनः । उत्थितःसागरं भित्त्वा विश्रामश्चन्द्रसूर्ययोः

रराज स महाशृङ्गैर्गगनं विलिखन्निव । चन्द्रसूर्यांशुसङ्काशैः सागराम्बुसमावृतैः ॥

विद्युत्त्वान्पर्वतः श्रीमानायतः शतयोजनम् । विद्युतां यत्रसम्पाता निपात्यन्ते नगोत्तमे॥

ऋषभः पर्वतश्चैव श्रीमानृषभसंस्थितः । कुञ्जरः पर्वतः श्रीमानगस्त्यस्य गृहं शुभम् ॥

विमलाख्या च दुर्द्धर्षा सर्पाणां मालती पुरी। तथा भोगवती चापि दैत्येन्द्रेणाभिकम्पिता

महासेनगिरिश्चैव पारियात्रश्च पर्वतः । चक्रवांश्च गिरिश्रेष्ठो वाराहश्चैव पर्वतः ॥

प्राग्ज्योतिषपुरं चापि जातरूपमयं शुभम् । यस्मिन्नुवास दुष्टात्मा नरको नाम दानवः

मेघश्च पर्वतश्रेष्ठो मेघगम्भीरनिस्वनः । षष्टिस्तत्र सहस्राणि पर्वतानां विशांपते ॥

तरुणादित्यसङ्काशो मेरुश्चैव महान्गिरिः । यक्षराक्षसगन्धर्वैर्नित्यं सेवितकन्दरः ॥१७५

हेमगर्भो महासेनस्तथामेघसखोगिरिः । कैलासश्चैव शैलेन्द्रो दानवेन्द्रेण कम्पितः ॥

हेमपुष्करसञ्छन्नं तेन वैखानसं सरः । कम्पितं मानसं चैव हंसकारण्डवाकुलम् ॥

त्रिशृङ्गः पर्वतश्रेष्ठः कुमारी च सरिद्वरा । तुषारचयसंच्छन्नो मन्दरश्चापि पर्वतः ॥

उशीरबीजश्च गिरिर्भद्रप्रस्थस्तथाद्रिराट् । प्रजापतिगिरिश्चैव तथा पुष्करपर्वतः ॥१७९

देवाभः पर्वतश्चैव तथा वै वालुकागिरिः । क्रौञ्चसप्तर्षिशैलश्चधूम्रवर्णश्च पर्वतः ॥१८०

एते चान्ये च गिरयो देशा जनपदास्तथा । नद्यः ससागराः सर्वा दानवेनाभिकम्पिताः

कपिलश्च महीपुत्रो व्याघ्रवांश्च प्रकम्पितः। खेचराश्च निशा पुत्राःपातालतलवासिनः ॥

गणस्तथा परो रौद्रो मेघनामाङ्कुशायुधः ।

ऊर्द्ध्वगो भीमवेगश्च सर्व एतेऽभिकम्पिताः ॥ १८३ ॥

गदी शूली करालश्च हिरण्यकशिपुस्तथा । जीमूतघननिर्घोषो जीमूत इव वेगवान् ॥
देवारिर्दितिजो दृप्तो नृसिंहं समुपाद्रवत् । स तु तेन ततस्तीक्ष्णैर्मृगेन्द्रेण महानखैः ॥
तदोङ्कारसहायेन विदार्य निहतो युधिः ॥ १८५ ॥

महीं च कालश्च शशी नभश्च ग्रहाश्च सूर्याश्च दिशश्च सर्वाः ।
नद्यश्च शैलाश्च महार्णवाश्च गताः प्रसादं दितिपुत्रनाशात् ॥ १८६ ॥

ततः प्रमुदिता देवा ऋषयश्च तपोधनाः । तुष्टुवुर्नामभिर्दिव्यैरादिदेवं सनातनम् ॥१८७
यत्त्वया विधृतं देव नारसिंहमिदं वपुः । एतदेवार्चयिष्यन्ति परापरविदो जनाः ॥१८८

ब्रह्मोवाच ।

भवान्ब्रह्मा चरुद्रश्च महेन्द्रो देवसत्तमः । भवान्कर्त्ता विकर्त्ता च लोकानां प्रभवोऽव्ययः
परां च सिद्धिं च परं च सत्वं परं रहस्यं परमं हविश्च ।
परं च धर्मं परमं यशश्च त्वामाहुरग्र्यं परमं पुराणम् ॥ १९० ॥

परंच सत्यं परमं तपश्च परं पवित्रं परमं च मार्गम् ।
परं च यज्ञं परमं च होत्रं त्वामाहुरग्र्यं परमं पुराणम् ॥ १९१ ॥

परं शरीरं परमं च ब्रह्म परं च योगं परमां च वाणीम् ।
परं रहस्यं परमां गतिं च त्वामाहुरग्र्यं परमं पुराणम् ॥ १९२ ॥

पुलस्त्य उवाच ।

एवमुक्त्वा तु भगवान्सर्वलोकपितामहः । स्तुत्वा नारायणं देवं ब्रह्मलोकं गतः प्रभुः ॥
ततो नदत्सु तूर्येषु नृत्यन्तीष्वप्सरःसु च । क्षीरोदस्योत्तरं कूलं जगाम हरिरीश्वरः ॥
नारसिंहं वपुर्देवः स्थापयित्वा सुदीप्तिमान् । पौराणं रूपमास्थाय प्रययौ गरुडध्वजः ॥
अष्टचक्रेण यानेन भूतियुक्तेन भास्वता । अव्यक्तप्रकृतिर्देवः स्वस्थानं गतवान्प्रभुः ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे नरसिंहप्रादुर्भावो
नाम सप्तचत्वारिंशत्तमोऽध्यायः ।

———

# अष्टचत्वारिंशत्तमोऽध्यायः

## अन्धकासुरकथानकवर्णनम् ।

श्रीभीष्म उवाच ।

नरसिंहस्यमाहात्म्यं विस्तरेणत्वयेरितम् । तथा भवस्य माहात्म्यं भैरवाख्याभिधीयताम्

पुलस्त्य उवाच ।

तस्यापि देवदेवस्य श्रृणु त्वं कर्म चोत्तमम् । आसीद्दैत्योऽन्धकोनाम भिन्नाञ्जनचयोपमः
तपसा महता युक्तोह्यवध्यस्त्रिदिवौकसाम् । स कदाचिन्महादेवं पार्वत्यासहितं विभुम्
क्रीडमानं तदा दृष्ट्वा हर्तुं देवीं प्रचक्रमे । एतां देवीं हराम्यद्य वियोगे मृत्युमेष्यति ॥
ततः स्थिरा भवित्री मे भार्यैषा लोकसुन्दरी । बिम्बौष्ठं चारुवदनं चारुकान्ततरं मुखम्
यद्येषा न भवेद्भार्याजीविते किं प्रयोजनम् । एतां मतिमथास्थाय मन्त्रिभिःसहमन्त्र्यच
चक्रे योगं ससैन्यस्य सेनापतिमभाषत ॥ ७ ॥

अन्धक उवाच ।

आनयस्व रथं मह्यं जैत्रं देवनिपातनम् । जयिष्ये त्रिदशान्सर्वान्विष्णुरुद्रपुरोगमान् ॥
हरिष्ये पर्वतसुतां तया मेऽपहृतं मनः ॥

पुलस्त्य उवाच ।

मन्त्रिणा तस्य चाख्यातः कनकस्य वधस्सुरैः ।
परभार्यानुरक्तस्य कृतो देवः सवासवैः ॥ ६ ॥

श्रुत्वा कोपपरीतात्मा बभूवासुरसत्तमः । हत्वा तु कनकं शक्रो भयादन्धासुरस्यच ॥
जगाम शरणान्वेषी कैलासं शङ्करालयम् । दृष्ट्वा प्रणम्य देवेशं चन्द्रार्द्धकृतशेखरम् ॥
भीतो विज्ञापयामास धृतसाहस्रलोचनः ॥ १२ ॥

इन्द्र उवाच ।

अभयं देहि मे देव दानवादन्धकादहम् । बिभेमि तस्य पुत्रोऽद्य मया युधि निपातितः

तद्यावन्न स जानाति हतं पुत्रं महासुरः। तावत्तत्रस्थ एवाशु हन्यतां मद्भयावहः॥
स्त्रीलौल्याद्दानवः क्रूरः परभार्यापहारकः। सर्वथा घातनीयस्ते भवता सुरसत्तम॥

पुलस्त्य उवाच।

शक्रस्यैवं वचः श्रुत्वा शरण्यः शङ्करस्तदा। ददावभयमेवासौ माभैरिति शतक्रतोः॥
दत्ताभयोऽथ कैलासादाजगाम कुशस्थलीम्। वृतो भूतगणैरीशोवधार्थं चान्धकस्य तु
कृत्वा रूपं महाकायं विश्वरूपं सुभैरवम्। सर्पैर्ज्वलद्भिर्धावद्भिर्भीमं भीमभुजङ्गवत्॥
जटासटाभिराकाशं फणिरत्नशिखार्चिषा। दहन्नतीवतेजोभिः कालाग्निरिव संक्षये॥
मुखैर्दंष्ट्राङ्कुराङ्कैश्च द्वितीयेन्दुकलोज्ज्वलैः। पातालोदररूपाभैर्भैरवारावनादिभिः॥२०॥
भुजैरनेकसाहस्रैर्बहुशस्त्रकृतग्रहः। बह्वाभरणभूषाढ्यं रणे घोरनिनादिभिः॥ २१॥
सिंहचर्मपरीधानं व्याघ्रत्वगुत्तरीयकम्। गजाजिनकृताटोपं पतद्भृङ्गरवाकुलम्॥२२॥
ईदृग्रूपंविधायेशो दनुदैत्यभयावहम्। अवातरन्महीं भीमो दनूनां क्षयकारकः॥२३॥

अन्धासुरोऽपि दनुजः पुत्रं श्रुत्वा हतं युधि।
क्रोधेन तमसाविष्टो रणतूर्याण्यचोदयत्॥ २४॥

संहत्यावहितः प्राप्तो यत्र ते त्रिदशाः स्थिताः। महत्या सेनया सार्द्धं रथवारणयुक्तया॥
ते देवा दानवान्वीक्ष्य महाहवकृतादरान्। व्यपयात तनुत्राणाः शम्भुं शरणमन्वयुः॥
माभैष्टेति च तान्देवो देवानुक्त्वा त्रिलोचनः। गृहीत्वा शूलमातिष्ठद्दंष्ट्रारवधरो रुषा॥
अन्धकेनाथ रुष्टेन शतकोटिशरैर्गणाः। निहताश्चापि देवानां बहूनामेकता कृता॥२८॥
सस्फुलिङ्गार्चिषो वह्नेर्मुञ्चमानः पिनाकधृत्। शरैः समावृतं चक्रे अन्धकं रथगं ततः॥
दनुनाथो रथस्थोऽथ शिथिलः शिथिलायुधः। निमन्त्र्य दानवान्सर्वान्स योद्धुमुपचमे
बहुधा तद्बलं भग्नंविविधायुधयोधिभिः। युधि वीरैर्हतं देवैः स्थाणुनालब्धमाश्रितैः॥
दानवश्चान्धकः सैन्यं भिन्नं दृष्ट्वा कृतं सुरैः। आत्मानंचमहेशेन निरुद्धं बाणकोटिभिः
विह्वलीभूतदेहोऽसौ धैर्यमालम्ब्य केवलम्। पिनाकं चैव रुद्रस्य गृह्य रुद्रमताडयत्॥
पिनाकस्याभिघातेन रुद्रो भूमिमथागमत्। भूमौ निपातिते देवे चलितं भुवनत्रयम्॥
तत्यजुः सागरावेलां पर्वताः शिखराणि च। नक्षत्राणि वियोगीनि जग्मुर्मर्कान्यनेकशः

पतिते भुवि देवेशे अन्धको गदया पुनः । जघान रुषितो नागं हत्वा तं पातयद्भुवि ॥
शिवं त्यक्त्वा नागराजः प्रपलाय्यान्यतो गतः ।
मुहूर्त्ताच्चेतनां लब्ध्वा उत्थितः परमेश्वरः ॥ ३७ ॥
गृहीत्वा परशुं दिव्यं दानवं नैव पश्यति ।
कृत्वा तु तामसीं मायां मायाशतविशारदः ॥ ३८ ॥
तया विमोहिते देवे क नु वै दानवो गतः । शम्भोर्भयमथो प्राप्य किंनु पापः करिष्यति
तमसाच्छादिता यावद्देवा व्याकुलतां गताः ।
सम्भ्रान्तमानसानीकास्तदोचुः कार्यगौरवात् ॥ ४० ॥
एतस्मिन्नन्तरे सूर्यस्तेजोरूपो व्यवस्थितः । उत्तस्थौ नररूपेण कुर्वन्वितिमिरा दिशः
नष्टे तमसि हृष्टाङ्गे खद्योते प्रकटस्थिते । देवामुदमवापुस्ते स्पष्टाननविलोचनाः ॥४२॥
उद्दीप्तास्तु सुराः सर्वे गणाः स्कन्दपुरोगमाः ।
स्तुवन्ति विविधैः स्तोत्रैर्नररूपं दिवाकरम् ॥ ४३ ॥
अनौपम्यं जगद्व्यापि ब्रह्मविष्णुशिवात्परम् ।
स्निग्धविद्रुमसच्छायं सिन्दूरारुणसप्रभम् ॥ ४४ ॥
प्रभासन्त तदा दृष्ट्वा पञ्चाङ्गालिङ्गितावनिः । पुनः प्रणामप्रवणं प्रणिधानपुरःसरम् ॥
आलोक्य स्निग्धया दृष्ट्या देवदेवं त्रिलोचनः । उवाच स्निग्धगम्भीरवाचा देवं शनैर्हरः

हर उवाच ।

पूरयन्निव तेजोभिर्भगवान्भुवनत्रयम् । दैत्यमायाभिपन्नानां दर्शनाकुलचेतसाम् ॥
प्राणिनामिदमेवैकमविसंवादि दैवतम् ॥ ४७ ॥
अयमेव च संसारसागरात्सकलादपि । सत्त्वानुत्तारयन्देवः कर्णधारायते प्रभुः ॥
यजन्तो जन्तवो भक्त्या यं देवं विविधाः सदा ।
निःश्रेयसाय कल्पन्ते तं नतो भास्करं विभुम् ॥ ४९ ॥
यस्तूदयाद्रिशिखरे मुकुटायमानलीलागभस्तिभिरलं कुसुमप्रकाशैः ।
व्याप्य स्वदीधितिगणैःप्रदिशो दिशश्च देदीप्यते स सविता विभवायलोके॥

ब्रह्मेन्द्ररुद्रमरुदच्युतवह्निपाथोनाथप्रयोगनिपुणैश्च ऋषीन्द्रसङ्घैः ।
श्रेयोऽर्थिभिः प्रतिदिनं हिमसाङ्गरागैर्दिव्याङ्गरागपरिलिप्तसमस्तदेहैः ॥५१॥
पूज्यं वपुस्तव सदा प्रलये हि वेदैर्गीर्भिर्विचित्रपदमण्डलमण्डिताभिः ।
ये त्वां स्तुवन्ति परसद्मनि सद्महीना नित्यं प्रसारितकरा भुवि ते भवन्ति ॥
ये दद्रुकुष्ठपिटिकादिभिरर्दिताङ्गाः शीर्णत्वचः कुनखिनश्च्युतकेशपाशाः ।
देवेश तेऽपि तवपादनता भवन्ति सद्यो द्विरष्टशरदाकृतयो मनुष्याः ॥ ५३ ॥
सामेति सामगगणा हि मखार्थकं त्वा मध्वर्यवस्त्वृगिति बह्वृचमुख्यपूगाः ॥
त्वामेवमार्यमितिकायविदोऽधिगन्तुं नागाश्च वेति पितरोऽप्यथ सर्वगन्धम्
मायेति चोपनिषदर्कषडेवदेवा मर्त्यास्तथावयमिवेह उपासतेऽमी ।
गन्धर्वकिन्नरगणाः सहचारणैस्तु रूपं तथा च भगवन्प्रतिपद्यसे त्वम् ॥
ये नार्चयन्ति सततं भवतोऽर्च्यमर्चिस्तेऽर्चिष्प्रतापितदिगम्बरवित्तहीनाः ।
क्षुत्क्षमामकण्ठजठरा घटखर्परेण भिक्षामटन्ति परवेश्मसुतेऽर्थहीनाः ॥५६॥
उत्फुल्लकोकनदकोशविशालनेत्रमीषद्विलासलुलिताञ्चितपिङ्गतारम् ।
कामं प्रशस्ततरसुन्दरहाररम्यमुत्तुङ्गपीवरपयोधरभारखिन्नम् ॥ ५७ ॥
रम्भोपमोरुपृथुपीननितम्बविम्बानद्धक्वणन्मणिरणद्रशनाकलापम् ।
वृन्दं ललाटतटकोटिपटान्तलम्बि हेमाञ्चलाञ्चितमुखं कुलपालिकानाम् ॥
कान्तं गृहेषु कलगद्गदभाषितानां झङ्कारनूपुररवेण विरावितानाम् ।
तेषां कृशानुकरमिन्दुसमानकान्तं यैरर्चितोऽसि भगवन्भवमोचनस्त्वम् ॥
ब्रह्मात्वमेव हरिरस्यनिलोऽनलोऽसिरुद्रोऽन्तकोऽसिवरुणोऽस्यमराधिपोऽसि ।
सोमोऽसि वायुरसि भूरसि चेश्वरोऽसि यज्ञोऽसि वित्तपतिरस्यपराजितोऽसि ॥
ये सप्तसप्तिसुरवाहरणेन मुक्ता भूमावथेति तरसो रुतरंतरीताः ।
व्योमैतदन्तरहितं परितो हि गत्वा गच्छन्ति न श्रमपदं हि मनागपीमे ॥
ध्यानैकयोगनिरताश्च समाधिभावाद्ध्यात्वा पदं तव तुरीयमनन्तमूर्ते ।
मुक्तामयास्तनुभृतो न भियाभियुक्तास्तद्ब्रह्म शाश्वतमचिन्त्यमनाद्यनन्तम् ॥

जन्मादिरोगरहितं परमं पुराणमीशं जरामरणशोकभयातिरिक्तम् ।
स्थूलानुभावनगणागणितं विशुद्धं वेदान्तवादिभिरलं परिमन्यते यत् ॥
त्वामग्निपुञ्जवपुषं तपसां निवासं याता दिवं सुचिरकालमुपास्य भक्ताः ॥
भानो सुरासुरसमूहशिरोनिघृष्टपादारविन्दुयुगलामलचारुमूर्ते ॥ ६४ ॥
भूतेशभूतवरदासकृदव्ययात्मन्व्योमाट्टहास सवितर्भुवनैकदीप ।
ऋक्साममन्त्रयजुषामधिवास नाम सृष्टिस्थितिप्रलयकारणलोकपाल ॥
दीनस्य देवकृपणस्य भवे भवे मे मग्नस्य चारुद्विचारमनोरथानि ।
शश्वद्यतीश्वरशशीकरकङ्कघोरोत्पातो जरामरणशोकरुगान्तरस्य ॥ ६६ ॥
यःप्रातः सायमिदं मध्याह्ने वा पठेच्च दीप्तांशोः ।
सालोक्यं याति रवेः प्राप्नोति धर्मार्थकामांश्च ॥ ६७ ॥

नित्यं तस्माच्च सूर्याच्च मनसोऽभिहितं च यत् । नमस्ते देवदेवेश भक्तानामभयंङ्कर ॥
सुब्रह्मण्य नमस्तेऽस्तु सर्वदेवनमस्कृत । तिग्मांशो वै नमस्तुभ्यं जगतश्चक्षुषेनमः ॥
प्रभाकरनमस्तेऽस्तु भानो जय जगत्पते । अनेन दनुमुख्येन पीडितोऽहं जगत्पते ॥
किं करोमि कथं चैनं घातयामि दिवाकर ॥ ७१ ॥

सूर्य उवाच ।

जय शूलेन पापिष्ठं मायाशतविशारदम् । जयं प्राप्नुहि देवेश हत्वाशूलेन चान्धकम् ॥

पुलस्त्य ऊवाच ।

गृह्य शूलं ततो दूरमाक्षिपत्तेजसा हरः । ततोऽन्धकस्त्रिशूलेनाताडयत्पापकर्मकृत् ॥
तस्मिन्युद्धे तथा रुद्रो ह्यन्धकेनाभिपीडितः । मुमोच बाणमत्युग्रं नाम्ना पाशुपतं हियत्
पिनाकमानम्यदोर्भ्यां पिनाकी शङ्करः स्वयम् ।
रुद्रबाणविनिर्भेदाद्रुधिरादन्धकस्य तु । अन्धकाश्च समुत्पन्नाश्शतशोऽथसहस्रशः ॥
तेषांविदार्यमाणानां रुधिरादपरैपुनः । बभूवुरन्धकाघोरा यैर्व्याप्तमखिलं जगत् ॥७६॥
तं तु मायाविनं दृष्ट्वा देवदेवस्तदान्धकम् । पानार्थमन्धकस्यास्य ससृजे मातृकास्तदा
माहेश्वरीं तथा ब्राह्मीं शौरीं वा वाडवीं तथा । सौपर्णीमथ वायव्यां शङ्खिनींतैत्तिरींतथा

सौरीं सौम्यां शिवदूतीं चामुण्डामथ वारुणीम् ।
वाराहीं नारसिंहीं च वैष्णवीं च विभावरीम् ॥ ७६ ॥

शतानन्दांभगानन्दांपिच्छिलां भगमालिनीम् । बालामतिबलांरक्तांसुरभींमुखमण्डिताम्
मातृनन्दां सुनन्दां च विडालीं शकुनींतथा । रैवतीं च महापुण्यां तथैव शिखिपट्टिकाम्
शूलेन च ततो दैत्यं बिभेद त्रिपुरान्तकः । निर्गतं रुधिरं तस्मात्पपुस्ता मातरस्तदा
नीरक्तो हि तदादैत्यश्शुष्कतां प्राप भूपते । शूलेप्रोतस्तदा दैत्योदिव्यवर्षसहस्रकम् ॥
महाबलेन रुद्रेण विधृतोऽपि मृतो न हि । स्तुतस्तेन तदाशम्भुर्भक्त्या दैत्येन सुव्रत ॥

अन्धक उवाच ।

नमोऽस्तु शम्भो भुवनाशहेतो नमोऽस्तु ते देववर प्रसीद ।
त्वं भूजलाग्नोऽनिभोऽर्कसोमयज्वाष्टमूर्तिर्भवभावनोऽलम् ॥ ८५ ॥
त्वां वै बाणो बहुवाद्येन तोष्य प्राप्तश्चैश्यं स्वे पुरे तत्स्वरक्ष्यम् ।
रक्षोऽधीशो बाहुभिस्तोल्यशैलं युष्मत्क्रान्तक्लिष्टरूपो ह्यनैषीत् ॥ ८६ ॥
प्राप्तोऽप्यैश्यं सर्वरक्षोगणानां पुत्रं चापि प्रोर्जितं शक्रबन्धम् ॥ ८७ ॥
भवभयहर हर परमउदार मम सुखकरणनिखिलसुरसार ।
जितमरुदभिमतवितरणपार तव पदकमलमिहारणसार ॥ ८८ ॥
तवेशपादपङ्कजं करोति यो नरोहृदिसदेशतस्यवाञ्छितंददासिभक्तिभावितः
मुनीश्वराःपुरा हरं भवन्तमेवमादरात्प्रपूज्यलिङ्गरूपिणं समापितामनोरथान्
भवोद्भवैकरूपिणं प्रपञ्चपञ्चकाकृति विचिन्त्यवृक्षकोटरस्थ एषजीवजीवनम्
भवेद्भवाङ्घ्रिचिन्तनाप्तसर्वकाम ईश्वर त्वदीयकिङ्करान्विते पदे पदेसमागतः
मूढोऽहंनाभि जानामि त्वां स्तोतुं भक्तवत्सल ।
सदीश्वरेण मनसाऽप्यनुकम्प्यो रणं गतः ॥ ९१ ॥

पुलस्त्य उवाच ।

इति स्तुतो महेशस्तु भक्त्या दैत्येन सादरम् ।
गणेशतां ददौ तस्मै नाम भृङ्गीरिटीति च ॥ ९२ ॥

एष ते महिमा भूप हरस्य भवहारिणः । कथितो विघ्नविघ्नाख्यस्तत्पराणां सुखावहः ॥

भीष्म उवाच ।

मनुष्यस्यापि देवत्वं सुखं राज्यं धनं यशः ।
जयं भोग्यं तथारोग्यमायुर्विद्यां श्रियं सुतम् ।
बन्धुवर्गशिवं सर्वं ब्रूहि मे विप्रसत्तम ॥ ९४ ॥

पुलस्त्य उवाच ।

एभिर्गुणैर्युतः श्रीमान्सदैव ब्राह्मणो भुवि । त्रैलोक्ये तु सदा मेध्यो विप्रदेवो युगे युगे

पूजयित्वा द्विजान्देवाः स्वर्गं भुञ्जन्ति चाक्षयम् ।
धरामवन्ति राजानो लोकावित्तं सुखं शिवम् ॥ ९६ ॥

लोके विप्रसमो नास्ति देवानामपि दैवतम् । स च धर्ममयः साक्षाद्भुविमुक्तिप्रदो भृशम्

लोकानां स गुरुः पूज्यस्तीर्थभूतोऽनघो जनः ।
सर्वदेवालयः सत्वो निर्मितो ब्रह्मणा पुरा ॥ ९८ ॥

इममर्थं पुरा पृष्टो नारदेन पितामहः । कस्मिंस्तु पूजिते ब्रह्मन्प्रसन्नो माधवो भवेत्

ब्रह्मोवाच ।

यस्य विप्राः प्रसीदन्ति तस्यविष्णुःप्रसीदति। तस्माद्ब्राह्मणशुश्रूषुः परंब्रह्माऽधिगच्छति

विष्णुर्ब्राह्मणदेहेषु सदा वसति नान्यथा ।
तस्माद्ब्राह्मणपूजायां विष्णुस्तुष्यति तत्क्षणात् ॥ १०१ ॥

विप्रान्यः पूजयेन्नित्यं दानमानार्चनादिभिः । कृतं क्रतुशतं तेन विध्युक्तं प्रियदक्षिणम्

ब्राह्मणस्य मुखं क्षेत्रमनूषरमकण्टकम् । वापयेत्सर्वबीजानि सा कृषिस्सार्वकालिकी

अभिगम्य तु यद्दत्तं यच्च दानं मनोरमम् । विद्यतेसागरस्यान्तो दानस्यान्तो न विद्यते

मनसापि न हिंसन्ति भूदेवमाततायिनम् ।
मनोऽनुकूलतां यान्ति देवैरपि च दुर्लभाम् ॥ १०५ ॥

गृहे यस्यागतो विद्वान्नैराश्यं नोपगच्छति । सर्वपापक्षयस्तस्य चाक्षयं स्वर्गमश्नुते ॥

काले देशे च पात्रे च विप्रे यच्चार्पयेद्वसु । तद्धनं चाक्षयं विद्धि जन्म जन्मनि तिष्ठति ॥

न च दारिद्र्यतामेति नातुरो न च कातरः। मनोऽनुकूलां प्रमदामर्चयित्वा द्विजाँल्लभेत्
कृत्वा साहसकर्माणि दद्याद्विप्राय पर्वसु।
तद्दानं सुगुणं प्रोक्तमभयं लाभएव च॥ १०६॥
विप्रपादतलोद्घृष्टिक्षतोभवति यः करः। स करः श्रीकरो नाम अन्यः कर्मकरः करः॥
विप्रपादरजः पूताः पूतास्तज्जलविन्दुभिः।
विपद्भिश्च सदा पापैर्मुक्ता यान्ति त्रिविष्टपम्॥ १११॥
विप्रपादरजः पूताः शुचयो गृहचत्वराः। पुण्यक्षेत्रसमास्ते स्युः प्रशस्ता यज्ञकर्मसु॥
आदौ ब्रह्ममुखाद्विप्रः समुद्भूतः पुरानघः। वेदास्तत्रैव सञ्जाताः सृष्टिसंस्थितिहेतवः॥
तस्माद्विप्रमुखे वेदाश्चार्पिताः पुरुषेण हि। पूजार्थं सर्वलोकानां सर्वयज्ञार्थतो ध्रुवम्॥
पितृयज्ञे विवाहे च वह्निकार्येषु शान्तिषु।
प्रशस्ता ब्राह्मणा नित्यं सर्वस्वस्त्ययनेषु च॥ ११५॥
देवा भुञ्जन्ति हव्यानि बलिं प्रेतादयोऽसुराः।
पितरश्चैवकव्यानि विप्रस्यैव मुखाद् ध्रुवम्॥ ११६॥
देवेभ्यश्च पितृभ्यश्च यो दद्याद्यज्ञकर्मसु। दानं होमं बलिं चैव विना विप्रेण निष्फलम्
भुञ्जन्ति चासुरास्तत्र प्रेता दैत्याश्च राक्षसाः।
तस्माद् ब्राह्मणमाहूय तेषु कर्माणि कारयेत्॥ ११८॥
काले देशे च पात्रे च लक्षकोटिगुणं भवेत्। श्रद्धया च द्विजं दृष्ट्वा प्रकुर्यादभिवादनम्
दीर्घायुस्तस्य वाक्येन चिरजीवी भवेन्नरः। अनभिवादनाद्विप्र द्वेषादश्रद्धयापि च॥
आयुः क्षीणं भवेत्पुंसां भूतिनाशश्च दुर्गतिः। आयुर्वृद्धिर्यशोवृद्धिर्वृद्धिर्विद्याधनस्य च
पूजयित्वा द्विजांश्श्रेष्ठो भवेन्नास्त्यत्र संशयः॥ १२१॥
न विप्रपादोदककर्दमानि न वेदशास्त्रप्रतिघोषितानि।
स्वाहास्वधास्वस्तिविवर्जितानि श्मशानतुल्यानि गृहाणि तानि॥ १२२॥
नारद उवाच।
कश्चपूज्यतमो विप्रो ह्यपूज्यो वाऽथ को भवेत्।

विप्रस्य लक्षणं ब्रूहि याथातथ्यं गुरोरपि ॥ १२३ ॥

ब्रह्मोवाच ।

पूज्यःश्रोत्रियको नित्यं सदाचारसमन्वितः । सद्वृत्तः कलुषैर्मुक्तस्तीर्थभूतोजनोऽनघः

नारद उवाच ।

जातः कः श्रोत्रियस्तात सत्कुले वाप्यसत्कुले ।

सदसत्कर्म कर्ता वा कः पूज्यो भुवि वाडवः ॥ १२५ ॥

ब्रह्मोवाच ।

सच्छ्रोत्रियकुलेजातो ह्यक्रियो नैवपूजितः । असत्क्षेत्रकुले पूज्यो व्यासवैभाण्डकौयथा

क्षत्रियाणां कुले जातो विश्वामित्रोऽस्ति मत्समः ।

वेश्यापुत्रो वसिष्ठश्च अन्ये सिद्धा द्विजादयः ॥ १२७ ॥

तस्मात्सच्छ्रोत्रियादीनां शृणु पुत्रक लक्षणम् । धरायां तीर्थभूतानां सर्वपापहराय च

जन्मनाब्राह्मणो ज्ञेयः संस्कारैर्द्विजउच्यते ।

विद्ययायातिविप्रत्वं त्रिभिःश्रोत्रियलक्षणम् ॥ १२६ ॥

विद्यापूतो मन्त्रपूतो वेदपूतस्तथैव च । तीर्थस्नानादिभिर्मेध्यो विप्रः पूज्यतमः स्मृतः

नारायणेसदा भक्तः शुद्धान्तःकरणस्तथा । जितेन्द्रियो जितक्रोधस्समः सर्वजनेषु च

गुरुदेवातिथेर्भक्तः पित्रोः शुश्रूषणेरतः । परदारे मनो यस्य कदाचिन्नैव मोदते ॥१३२॥

पुराणकथको नित्यं धर्माख्यानस्य सन्ततिः ।

अस्यैव दर्शनान्नित्यमश्वमेधादिजं फलम् ॥ १३३ ॥

संलापे गतिमेत्यस्य भागीरथ्या प्लवस्यच । व्रतैश्च विविधैः पूतो नित्यस्नानद्विजार्चनैः

मित्रामित्रे दयालुः स्यात्समः सर्वजनेषु च । परस्वं न हरेद्यस्तु तृणमप्यटवीगतम् ॥

कामक्रोधादिनिर्मुक्त इन्द्रियैरजितः पुमान् ।

परदारान्न गृह्णाति मनसाऽपि गृहागतान् ॥ १३६ ॥

नारद उवाच ।

गायत्र्या लक्षणं किं वा प्रत्येकाक्षरजंगुणम् । कुक्षिचरणगोत्राणां तस्याब्रूहिसुनिश्चयम्

ब्रह्मोवाच ।

छन्दो गायत्रीगायत्र्याः सविता देवता ध्रुवम् ।
शुक्लवर्णा त्वग्निमुखा विश्वामित्रऋषिस्तथा ॥ १३८ ॥
ब्रह्मणशिर आरूढा रूद्रविष्णुहृदि स्थिता ।
उपनयने नियोगः स्यात्साङ्ख्यायनसगोत्रजा ॥ १३९ ॥

त्रैलोक्यचरणा ज्ञेया पृथिवीकुक्षिसंस्थिता । चतुर्विंशतिस्थाने च पादादौमस्तकान्तके
चतुर्विंशत्यक्षरंन्यस्य ब्रह्मलोकं स विन्दति । प्रत्यर्णदेवतांज्ञात्वाविष्णुसायुज्यमाप्नुयात्
अपरं च प्रवक्ष्यामि गायत्र्या लक्षणं ध्रुवम् । सप्त पञ्च तथा ब्रह्मा यजुरष्टादशाक्षरम् ॥
ज्वलनादिहकारान्तं जले स्थित्वा शतं जपेत् । उपपातककोट्या तु तथातिपातकैरपि

ब्रह्महत्यादिभिः पापैर्मुक्ता यान्ति ममालयम् ।
ॐ अग्नेर्वाक्पुंसि यजुर्वेदेन जुष्टात्सोमं पिब स्वाहा ॥ १४४ ॥

विष्णुमन्त्रं महामन्त्रं तथा माहेश्वरस्य च । देवीसूर्यगणेशानां तथा क्रतुभुजां सुत ॥
यस्य कस्य कुले जातो गुणवानेव तैर्गुणैः । साक्षाद्ब्रह्ममयो विप्रः पूजनीयः प्रयत्नतः ॥
दानं दद्याच्च विधिवत्सदा पर्वणि पर्वणि । अक्षयं लभते दाता जन्मकोटिशतान्प्रति ॥
स्वाध्यायनिरतोविप्रो यःपठेत्पाठयेत्परान् । धर्मंच श्रावयेल्लोके सदाचारं श्रुतिं स्मृतिम्

पुराणसंहितां नूनं तथैव धर्मसंहिताम् ।
श्रावयित्वा तु लोकेषु श्रावयित्वा द्विजातिषु ॥ १४९ ॥
उर्व्यां विष्णुसमः सोऽपि पूजनीयो नरैः सुरैः ॥ १५० ॥

यद्बलं चाक्षयं तस्य तीर्थभूतानघस्य च । समानमर्चनं कृत्वा नरो यात्यच्युतालयम्
कदाचित्क्रियते पापं विप्रः पापैर्नलिप्यते । चाण्डालस्य गृहे निष्ठौ भास्करज्वलनौयथा

याजनाध्यापनाद्यौनात्तथा वा सत्प्रतिग्रहात् ।
विप्राणां न भवेद्दोषो ज्वलनार्कसमा द्विजाः ॥ १५३ ॥

तान्प्रतिग्रहजान्दोषान्प्राणायामव्यवस्थिताः । नाशयन्तीह पापानि वायुर्मेघमिवाम्बरे ॥
गायत्रीं यो जपेन्नित्यंप्राणायामसमन्विताम् । प्रत्यक्षरामरैर्युक्तां स्वाङ्गेविन्यस्यतामपि

सर्वपापाद्विनिर्मुक्तो जन्मकोटिकृतादपि ।
ब्रह्मणः पदवीं प्राप्य स गच्छेत्प्रकृतेः परम् ॥ १५६ ॥
प्राणायामयुतां तस्माद्गायत्रीं जप नारद ॥ १५७ ॥

नारद उवाच ।

प्राणायामाः कथं ब्रह्मन्प्रत्येकाक्षरदेवताः । तेषां न्यासं तथाङ्गेषु वद तात यथाक्रमम् ।

ब्रह्मोवाच ।

गुददेशेत्वपानःस्याद्धृदिप्राणोऽस्तिदेहिनः । तस्माद्गुदंसमाकुञ्च्य प्राणेनसहयोजयेत्
पूरकेण तदा पुत्र कृत्वा कुम्भकमुत्तमम् । प्राणायामत्रयं कृत्वा गायत्रीं सञ्जपेद्द्विजः
अनेनैव जपेद्यस्तु महापातकसञ्चयः । सकृदुच्चारितेनैव क्षयं यात्युपपातकम् ॥ १६१ ॥
प्रतिवर्णस्वरं ज्ञात्वा विन्यसेद्यः कलेवरे । स जनो ब्रह्मतामेति फलं वक्तुं न शक्नुमः ॥
प्रत्यक्षरस्य यद्दैवं शृणु पुत्र वदाम्यहम् । यज्जप्त्वा च पुनर्मातुः स्तनं न पिबति द्विजः

आग्नेयं प्रथमं ज्ञेयं वायव्यं तु द्वितीयकम् ।
तृतीयं सूर्यदैवत्यं चतुर्थं वै (यु) तं तथा ॥ १६४ ॥

पञ्चमं यमदैवत्यं वारुणं षष्ठमुच्यते । सप्तमं बार्हस्पत्यं तु पार्जन्यं चाष्टमं विदुः ॥
ऐन्द्रं च नवमं ज्ञेयं गान्धर्वं दशमं तथा । पौष्णमेकादशं विद्धि मैत्रं द्वादशकं स्मृतम् ॥
त्वाष्ट्रं त्रयोदशं ज्ञेयं वासवं तु चतुर्दशम् । मारुतं पञ्चदशकं सौम्यं षोडशकं स्मृतम् ॥
आङ्गिरसं सप्तदशं वैश्वदेवमतःपरम् । आश्विनं चैकोनविंशं प्राजापत्यं तु विंशकम्
सर्वदेवमयं ज्ञेयमेकविंशकमक्षरम् । रौद्रं द्वाविंशकं ज्ञेयं ब्राह्मं ज्ञेयमतः परम् ॥ १६९ ॥
वैष्णवं तु चतुर्विंशमेता अक्षरदेवताः । जपकाले तु सञ्चिन्त्य तासु सायुज्यतां व्रजेत्

ज्ञात्वा तु देवतास्तस्य वाङ्मयं विदितं भवेत् ।
सर्वपापविनिर्मुक्तो ब्रह्मणःपदवीं व्रजेत् ॥ १७१ ॥

गायत्रीं विन्यसेत्पूर्वं शरीरे चात्मनो बुधः । चतुर्विंशतिस्थानेषु आपादमस्तकेषु च ॥
तत्कारं विन्यसेद्योगी पादाङ्गुष्ठे विचक्षणः । सकारं गुल्फदेशे तु विकारं जङ्घयोर्न्यसेत्
तुकारं जानुमध्ये च वकारं चोरुदेशतः । रेकारं गुह्यदेशे तु णिकारं वृषणे न्यसेत् ॥

यङ्कारं कटिदेशे तु भकारं नाभिमण्डले। गोकारं जठरे न्यस्य देकारं स्तनयोर्न्यसेत् ॥
वकारं हृदये न्यस्य स्यकारं करदेशतः। धीकारं वदने न्यस्य मकारं तालुके न्यसेत् ॥

हिकारं नासिकाग्रे च धिकारं चक्षुषोर्न्यसेत्।
योकारं तु भ्रुवोर्मध्ये योकारं च ललाटके ॥ १७७ ॥
नः कारं तु मुखे पूर्वे प्रकारं दक्षिणे मुखे।
चोकारं पश्चिमे न्यस्य दकारं चोत्तरे न्यसेत् १७८ ॥
यात्कारं मूर्ध्नि विन्यस्यसर्वव्यापी व्यवस्थितः।
एतान्विन्यस्य धर्मात्मा ब्रह्मविष्णुशिवात्मकः ॥ १७६ ॥

महायोगी महाज्ञानी परं निर्वाणकं व्रजेत्। सन्ध्याकाले पुनर्न्यासं शृणु त्वं तद्यथार्थतः

ॐभूरिति हृदये न्यस्य ॐभुवश्शिरसि न्यसेत्।
ॐस्वःशिखायै तत्सवितुर्वरेण्यमिति कलेवरे ॥ १८१ ॥

ॐभर्गोदेवस्य धीमहीति नेत्रयोः। ओं धियो योनः प्रचोदयादिति करयोर्न्यसेत् ॥

ॐआपोज्योतीरसोऽमृतं ब्रह्मभूर्भुवःस्वरोम्।
इत्युदकस्पर्शमात्रेण पापात्पूतो व्रजेद्धरिम् ॥ १८३ ॥
ॐभूःॐभुवःॐस्वःॐमहःॐजनःॐतपःॐसत्यम्।
ॐतत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥
ॐ आपो ज्योती रसोऽमृतं ब्रह्मभूर्भुवःस्वरोम्।

इति सव्याहृतिं सप्रणवां दशोङ्कारां सन्ध्याकाले कुम्भकेन वारत्रयं जप्त्वा सूर्योप-
स्थाने सावित्रीं चतुर्विंशत्यक्षरां जप्त्वा महाविद्याधिको भवति ॥ ब्रह्मत्वं लभते ॥
षट्कुक्षिलक्षणां पुत्र गायत्रींश्शृणु यत्नतः। यां ज्ञात्वा तु परं ब्रह्मस्थानं गच्छति वै द्विजः॥

ओंतत्सवितुर्वरेणियं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥१८५॥

अथ गायत्री पञ्चशीर्ष लक्षणम्।

ॐभूः। ॐवः। ॐस्वः। ॐमहः। ॐजनः। ॐतपः। ॐसत्यम् ॥
ॐतत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥१८६ ॥

सव्याहृतिं तु गायत्रीं पुनर्न्यासं तु कारयेत् ।
सर्वपापविनिर्मुक्तो विष्णुसायुज्यतां व्रजेत् ॥ १८७ ॥
ॐभूः पादाभ्याम् । ॐभुवः जानुभ्याम् । ॐस्वः कट्याम् । ॐमहः नाभौ ।
ॐजनः हृदये न्यसेत् । ॐतपः करयोः । ॐसत्यं ललाटे ॥
ॐतत्सवितुर्वरेणियं भर्गो देवस्य धीमहि धियो योनः प्रचोदयात् ॥ इति शिखायाम्॥
एवं विप्रो न जानाति स एव ब्राह्मणाधमः । न तस्य क्षीयते पाप्मा भवेद्भूरि प्रतिग्रहः

इमां यो वेत्ति गायत्रीं सर्वबीजसमन्विताम् ।
स वेत्ति चतुरो वेदान्योगज्ञानं जपत्रयम् ॥ १९० ॥
य एनां नैव जानाति सशूद्रात्परतः स्मृतः ।
तस्यापूतस्य विप्रस्य न देयं पितृपार्वणम् ॥ १९१ ॥

न स्नानफलदः कश्चित्सर्वंच निष्फलं भवेत् । विद्यावित्तं तथा जन्मद्विजत्वंकारणंयतः
निष्फलं सकलं तस्य मेध्यं पुष्पं यथाऽशुचौ । चतुर्वेदाश्च गायत्री पुरा वै तुलिता मया
चतुर्वेदात्परागुर्वी गायत्री मोक्षदा स्मृता । दशभिर्जन्मजनितं शतेन च पुराकृतम् ॥

त्रियुगं तु सहस्रेण गायत्री हन्ति किल्बिषम् ।
गायत्रीमक्षमालायां सायं प्रातश्च यो जपेत् ॥ १९५ ॥
चतुर्णामपि वेदानां फलं प्राप्नोत्यसंशयम् ।
त्रिसन्ध्यं यो जपेन्नित्यं गायत्रीं हायनं द्विजः ॥ १९६ ॥

तस्य पापं क्षयं याति जन्मकोटिसमुद्भवम् । गायत्र्युच्चारमात्रेण पापकूटात्पुनाति च ॥

स्वर्गापवर्गमाप्नोति जप्त्वा नित्यं द्विजोत्तमः ।
वासुदेवस्य मन्त्राणि जपेद्यस्तु दिने दिने ॥ १९८ ॥

प्रणमेच्च हरेः पादौ स गच्छेदपवर्गिताम् । वासुदेवस्य स्तोत्राणि मुखेचापि कथोत्तमा
पङ्कस्य लवमात्रं तु तस्य देहेन तिष्ठति । वेदशास्त्रावगाहेन त्रिस्रोतः स्नानजं फलम्
धर्मपाठकृतां लोके यज्ञकोटिफलं लभेत् । एवं विप्रगुणान्वक्तुं न शक्नोमि द्विजोत्तम
विश्वरूपश्च को देही समूर्तोहरिरेवच । यस्य शापाद्विनाशःस्यादायुर्विद्यायशोधनम् ॥

व्रतदानात्समायान्ति सर्वाः सम्पत्तयस्तथा । विष्णुर्ब्रह्मण्यतामेति सदा विप्रप्रसादतः
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमोनमः ॥
मन्त्रेणैवं हरिं यस्तु पूजयेत्सततं नरः । प्रसादी च हरिस्तस्य विष्णुसायुज्यतां व्रजेत्
य इदं शृणुयात्पुण्यमाख्यानं धर्मविग्रहम् । तस्य पापं क्षयं याति जन्मजन्मकृतं च यत्
यः पठेत्पाठयेद्वाऽपि उपदेष्टा जनस्य च । न तस्य पुनरावृत्तिः स्वर्गमक्षयमश्नुते ॥२०७
धनं धान्यं लभेदत्र राज्यभोगानरोगिताम् । सत्सुतं च शुभां कीर्तिं देववद्रमते दिवि ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे ब्राह्मणसंस्कारो
नामाष्टचत्वारिंशत्तमोऽध्यायः ।

———

# एकोनपञ्चाशत्तमोऽध्यायः

## पञ्चविधस्नानानि

नारद उवाच ।

तव प्रसादतो ज्ञातो विप्रः पुण्यतमश्च यः । यथा जानामि देवेश क्रियया ब्राह्मणाधमम्
ब्रूहि शीघ्रं सुरश्रेष्ठ यदि प्रीतिं मयीच्छसि ॥ २ ॥

ब्रह्मोवाच ।

स्नानैर्दशविधैर्मुक्तस्तथैव तर्पणादिभिः । सन्ध्यासंयमहीनश्च स एव ब्राह्मणाधमः ॥३॥
देवपूजाव्रतैर्मुक्तो वेदविद्यादिभिस्तथा । सत्यशौचादिभिश्चैव योगज्ञानाग्नितर्पणैः ॥
पञ्चस्नानानि विप्राणां कीर्तितानि महर्षिभिः । आग्नेयं वारुणंब्राह्मं वायव्यं दिव्यमेवच
आग्नेयं भस्मनास्नानमद्भिर्वारुणमुच्यते । आपोहिष्ठेति वै ब्राह्मं वायव्यं गोरजःस्मृतम्
अद्भिरातपवर्षाभिर्दिव्यं स्नानमुदाहृतम् । एतैस्तु मन्त्रतः स्नानात्तीर्थानांफलमाप्नुयात्
तुलसीपत्रसंलग्नं शालग्रामशिलाम्बु च । गवां शृङ्गोदकं चैव विप्रपादोदकं च यत् ॥
गुरूणामेव मुख्यानां पूतात्पूतमिति स्मृतिः ॥ ८ ॥

त्यागतीर्थादिभिर्यज्ञैर्व्रतहोमादिभिस्तथा । यत्फलं लभते धीरः स्नानैरेतैस्तु तत्फलम्
तर्पणैश्च विनिर्मुक्तः पितॄणामेव नित्यशः । पितृहा नरकं याति सन्ध्याहीनस्तु विप्रहा
मन्त्रव्रतविहीनश्च वेदविद्यागुणैरपि । यज्ञदानादिभिर्मुक्तो ब्राह्मणश्चाधमाधमः ॥ ११ ॥
यज्ञार्थका देवलका नाक्षत्रा ग्रामयाचकाः । परदाररतानित्यं पञ्चैते ब्राह्मणाधमाः ॥
मन्त्रसंस्कारहीनाश्च शुचिसंयमवर्जिताः । मोघाशिनो दुरात्मानो ब्राह्मणाश्चाधमाधमाः
अपिस्तेयरतामूढाः सर्वधर्मविवर्जिताः । उन्मार्गगामिनो नित्यं ब्राह्मणाश्चाधमाधमाः ॥
श्राद्धादिकर्मरहिता गुरुसेवाविवर्जिताः । अमन्त्राभिन्नमर्यादा एते सर्वाधमाधमाः ॥
असम्भाष्या इमे दुष्टास्सर्वे निरयगामिनः । अमेध्यास्ते दुराचारा अपूज्याश्च समन्ततः
खड्गोपजीविकाः प्रेष्या गोवाहनरता द्विजाः । कारुवृत्त्युपजीवाश्च गणवार्द्धुषिकाश्च ये
बालापण्याभिचाराश्च अन्त्यजाश्रयमाश्रिताः । कृतघ्नाश्च गुरुघ्नाश्च एते सर्वाधमाःस्मृताः
ये चैवान्ये हताचाराः पाषण्डा धर्मनिन्दकाः । दूषकादेवभेदानामेते ब्रह्मद्विषो द्विजाः ॥
तथापि ब्राह्मणश्चैव न हन्तव्यः कदाचन । एनं हत्वा द्विजश्रेष्ठ ब्रह्महा पुरुषो भवेत् ॥
अन्त्यजातिषु म्लेच्छेषु तथाचाण्डालजातिषु । पतितोवान्नयोनिभ्यां न हन्तव्यःकथञ्चन
सर्वजातिस्त्रियं गत्वा सर्वाभक्ष्यस्य भक्षणात् । द्विजत्वंनविनश्येतपुण्याद्विप्रो भवेत्पुनः

नारद उवाच ।

ईदृशं दुष्कृतं कृत्वा पश्चात्पुण्यं समाचरेत् । कां गतिं यात्यसौ विप्रःसर्वलोकपितामह

ब्रह्मोवाच ।

कृत्वा सर्वाणि पापानि पश्चाद्यस्तु जितेन्द्रियः । मुच्यते सर्वपापेभ्यः पुनर्ब्रह्मत्वमर्हति॥

शृणु पुत्रकथां रम्यां विचित्रां च पुरातनीम् ।
कस्यचिद्ब्राह्मणस्यापि यौवनाढ्यःसुतोऽभवत् ॥ २५ ॥

ततो यौवनसम्पत्तेर्मोहाच्च पूर्वकर्मणः । चाण्डालीमगमत्सद्यस्तस्याः प्रियतरोऽभवत्
तस्यामुत्पादितास्तेन पुत्रा दुहितरस्तथा । स्वकुटुम्बं परित्यज्य गृहे तस्याश्चिरंस्थितः

अन्याभक्ष्यं न चाश्नाति घृणया च सुरां त्यजेत् ।
तमुवाच सदा सा च भक्षयान्यतरां सुराम् ॥ २८ ॥

तामुवाच तदा शौचं गदितुं नार्हसिप्रिये। उत्कारोजायते तस्याः श्रवणात्सततं मम ॥
एकदा स मृगान्वेषाच्छ्रांतः सुप्तो गृहे दिवा।
गृहीत्वा सा सुरां तस्य हसित्वा च मुखे ददौ ॥ ३० ॥
ततो विप्रमुखादग्निः प्रजज्वाल समन्ततः। ज्वाला तु सकुटुम्बां तामदहच्च गृहं वसु
हाहाकृत्वा समुत्थाय विललाप तदा द्विजः। विलापान्ते च जिज्ञासा समारब्धाचतेनहि
कुतश्चाग्निः समुद्भूतो गृहे दाहः कथं मम। ततः खे तमुवाचेदंतेजस्ते ब्राह्मणस्य च॥
कथिते तद्यथावृत्ते ब्राह्मणो विस्मयं गतः। विमृश्यार्थमुवाचेदं पुनः खेऽस्य हितं वचः
विप्रनष्टं सुतेजस्ते तस्माद्धर्मचरो भव। ततो मुनिवरान्गत्वा पप्रच्छात्महितं द्विजः॥
तमूचुर्मुनयः सर्वे दानधर्मं समाचर ॥ ३६ ॥

ऋषय ऊचुः।

पूयन्ते सर्वपापेभ्यो ब्राह्मणा नियमैर्व्रतैः। नियमाञ्शास्त्रदृष्टांश्च पूतत्वार्थमुपाचर ॥
चान्द्रायणांश्च कृच्छ्रांश्च तप्तकृच्छ्रान्पुनः पुनः।
प्राजापत्यांश्च दिव्यांश्च दोषशोषाय सत्वरम् ॥ ३८ ॥
गच्छतीर्थानि पूतानि गोविन्दाराधनं कुरु। क्षयमेष्यन्ति पापानि नचिरेण समन्ततः ॥
पुण्यतीर्थप्रभावाच्च गोविन्दस्य प्रभावतः। क्षयमेष्यन्ति पापानि ब्रह्मत्वंप्राप्स्यतेभवान्
शृणु तात यथावृत्तं कथयामः पुरातनम्। आहारार्थी पुरा वत्स गरुडो विनतासुतः ॥
पतङ्गोऽपि बहिः साक्षादण्डान्निस्सृत्य शावकः। क्षुधार्थीमातरंप्राहभक्ष्यंमेदीयतामिति
ततः पर्वतसङ्काशं गरुडं च महाबलम्। दृष्ट्वा माता महाभागा तनयं हृष्टमानसा ॥४३॥

विनतोवाच।

क्षुधां ते बाधितुं पुत्र न शक्नोमि समन्ततः। तव तातस्तपस्तेपे लौहित्यस्योत्तरेतटे॥
कश्यपो नाम धर्मात्मा साक्षाल्लोकपितामहः। तत्र गच्छ स्वपितरं पृच्छ कामं यथा तव
अस्योपदेशतस्तात क्षुधा ते शममेष्यति ॥ ४५ ॥

ऋषय ऊचुः।

ततोमातुर्वचः श्रुत्वा वैनतेयो महाबलः। अगमत्पितुरस्याशं समुहूर्तान्मनोजवः ॥

दृष्ट्वा तातं मुनिश्रेष्ठं ज्वलन्तमिव पावकम् । प्रणम्य शिरसा वाक्यमुवाच पितरं खगः ॥
वैनतेय उवाच ।
भक्षार्थी समनुप्राप्तः सुतोऽहं ते महात्मनः । क्षुधया पीडितो नाथ भक्ष्यं मे दीयतांप्रभो
ऋषय ऊचुः ।
ततो ध्यानं समालम्ब्य ज्ञात्वा तं विनतासुतम् । पुत्रस्नेहाद्वचश्चेदं प्रोवाचमुनिसत्तमः
कश्यप उवाच ।
अनेकशतसाहस्रानिषादाः सरितां पतेः । तीरे तिष्ठन्ति पापिष्ठास्तन्सम्भक्ष्य सुखी भव
तीर्थमुत्सादयन्तिस्म तीर्थकाका दुरासदाः । विना विप्रं निषादेषु भक्षयत्वमलक्षितम् ॥
ऋषय ऊचुः ।
इत्युक्तः प्रययौ पक्षी भक्षयामास तांस्ततः । अलक्ष्य भावो विप्रोऽपिगिलितस्तेनपक्षिणा
स तस्य गलके गाढं लालगीतिद्विजस्तदा । वमितुं गिलितुं चापि न शशाकद्विजोत्तमम्
गत्वाऽथ पितरं प्राह किमेतदिति मे पितः । लग्नं मे गलके सत्त्वं प्रतिकर्तुं न शक्नुयाम्
ऋषय ऊचुः ।
तस्य तद्वचनं श्रुत्वा कश्यपस्तमुवाचह ॥ ५५ ॥
कश्यप उवाच ।
मयोक्तं ते पुरा वत्स ब्राह्मणोऽयं न बुध्यसे ॥ ५६ ॥
ऋषय ऊचुः ।
इत्युक्त्वा च मुनिर्धीमान्द्विजं प्राह स धार्मिकः ॥ ५७ ॥
कश्यप उवाच ।
आगच्छ त्वं ममासन्नं हितं ते प्रवदाम्यहम् ॥ ५८ ॥
ऋषय ऊचुः ।
तमुवाच तदा विप्रः कश्यपं मुनिपुङ्गवम् ॥ ५९ ॥
विप्र उवाच ।
ममैते सुहृदो नित्यं सर्वे सम्बन्धिनः प्रियाः । श्वशुराःश्यालकाश्चात्रासन्बालाश्चतथापरे

एतैः सह प्रयास्यामि निरयं चापि वा शिवम् ॥ ६१ ॥

ऋषय ऊचुः ।

तस्य तद्वचनं श्रुत्वा विस्मितः कश्यपोऽब्रवीत् ॥ ६२ ॥

कश्यप उवाच ।

द्विजानां च कुले जातश्चाण्डालैः पतितो भवान् ।

पुरुषास्ते प्रतिष्ठन्ते घोरे च निलये ध्रुवम् ॥ ६३ ॥

चिराय निष्कृतिस्तेषां नैवास्तीहकथञ्चन। सर्वांश्चैव दुराचारांश्चाण्डालान्पापकारिणः

दोषांस्त्यक्त्वा नरः पश्चात्सुखी भवति नान्यथा ॥ ६५ ॥

अज्ञानाद्यदि वा मोहात्कृत्वा पापं सुदारुणम् ।

ततो धर्मं चरेद्यस्तु स गच्छेत्परमां गतिम् ॥ ६६ ॥

पापकृन्न चरेद्धर्मं पापे कुर्यान्मतिं पुनः । शिलानावं यथाऽऽरूढः सागरे संनिमज्जति॥

कृत्वासर्वाणि पापानि तथा दुर्गतिसञ्चयम् । उपशान्तो भवेत्पश्चात्तं दोषं शमयिष्यति

ऋषय ऊचुः ।

तमुवाच महाप्राज्ञं द्विजं मुनिवरोत्तमम् ॥ ६९ ॥

विप्र उवाच ।

यदिमां न जहातीह खगः सर्वांश्चबान्धवान् । ततःप्राणंच त्यक्ष्यामि खगेमर्मावघातिनि

नोचेत्त्यजतु मे बन्धून्प्रतिज्ञा मे दृढात्मनः ॥ ७१ ॥

ऋषय ऊचुः ।

ततस्तार्क्ष्यमुवाचेदं मुनिर्ब्रह्मवधे भयात् ॥ ७२ ॥

कश्यप उवाच ।

उद्वमैतान्सविप्रांश्च म्लेच्छानेतान्समन्ततः । वनेषु पर्वतान्तेषु दिक्षु तान्पतगेश्वर ॥७३॥

ऋषयऊचुः ।

उद्वमाम ततः शीघ्रं दोषज्ञः पितुराज्ञया । ततः सर्वेऽभवन्व्यक्ता अकेशाः श्मश्रुवर्जिताः

यवनाभोजनप्रीताःकिञ्चिच्छ्मश्रुयुताश्चये । अग्नौच नग्नकाःपापादक्षिणस्यामवांचकाः

घोराः प्राणिवधे प्रीता दुरात्मानो गवाशिनः ।
नैर्ऋते कुवदाः पापा गोब्राह्मणवधोद्यताः ॥ ७६ ॥
खर्पराःपश्चिमे पूर्वे निवसन्ति च दारुणाः । वायव्यां च तुरुष्काश्च श्मश्रुपूर्णागवाशिनः
अश्वपृष्ठसमारूढा प्रयुद्धेष्वनिवर्तिनः । उत्तरस्यां च गिरयो म्लेच्छाः पर्वतवासिनः ॥
सर्वभक्षा दुराचारा वधबन्धरताः किल । ऐशान्यां निरयाः सन्ति कर्तॄणां वृक्षवासिनः
एते म्लेच्छाः स्थिता दिक्षु घोरास्ते शस्त्रपाणयः ।
येषां च स्पर्शमात्रेण सचैलो जलमाविशेत् ॥ ८० ॥
एतेषां च कलौ देशेऽप्यकाले धर्मवर्जिते । संस्पर्शं च प्रकुर्वन्ति वित्तलोभात्समन्ततः
म्लेच्छांस्तान्मोचयित्वा तु क्षुधया परिपीडितः ।
पुनराह द्विजस्तात क्षुधा मे बाधतेतराम् ।
अवदद्गरुडं तत्र कश्यपः कृपया द्रुतम् ॥ ८२ ॥

कश्यप उवाच ।

तिष्ठन्तौ विपुलौ तत्र जिघांसू गजकच्छपौ । अप्रमेयौ महासत्त्वौ सागरस्यैकदेशतः ।
तावप्सु च द्रुतं वत्स क्षुधां ते वारयिष्यतः ॥८३ ॥

ऋषय उचुः ।

स पितुर्वचनं श्रुत्वा तत्र गत्वाऽभिपद्य तौ ।
नखैर्भित्त्वा कूर्मगजौ महासत्त्वौ महाजवः ॥ ८४ ॥
खमुत्पपात तौ धृत्वा विद्युद्वेगो महाबलः । आधारतां न गच्छन्ति नगाश्चमन्दरादयः ॥
ततो योजनलक्षे द्वे गत्वा मारुतरंहसा । महत्यां जम्बुशाखायां निपपात महाबलः ॥
भग्ना सा सहसा शाखा तां पतन्तीं खगेश्वरः ।
गोब्राह्मणवधाद्भीतो दधार तरसा बली ॥ ८७ ॥
धृत्वा तां रुचिरंवेगादुद्रवन्तं खे महाबलम् । गत्वा विष्णुरुवाचेदं नररूपधरो हरिः ॥

विष्णुरुवाच ।

कस्त्वं भ्रमसि चाकाशे किमर्थं पतगेश्वर । विधृत्य महतीं शाखां महान्तौ गजकच्छपौ

तमुवाच द्विजस्तस्मिन्नररूपधरं हरिम्। गरुडोऽहं महाबाहो खगरूपः स्वकर्मणा॥
कश्यपस्य मुनेस्सूनुर्विनतागर्भसम्भवः। पश्यैतौ च महासत्त्वौ भक्षणार्थं मया धृतौ॥

न धरा च ममाधारो न वृक्षा न च पर्वताः।
अनेकयोजनान्यूर्ध्वं दृष्ट्वा जम्बूमहीरुहम्॥ ९२॥
अपतं तस्य शाखायां सहेमौ परिभक्षितुम्।
भग्ना सा सहसा शाखा तां च धृत्वा भ्रमाम्यहम्॥ ९३॥

कोटिकोटिसहस्राणां ब्राह्मणानां गवां वधात्। भयंतत्र विषादो मे सहसाप्राविशद्बुध

किं करोमि कथं यामि को मे वेगं सहिष्यति॥ ९४॥

ऋषय उचुः।

इत्युक्तः पतगश्रेष्ठं प्रोवाचेदं हरिस्तदा॥ ९५॥

विष्णुरुवाच।

अस्मद्बाहुं समारुह्य भक्षेमौ गजकच्छपौ॥ ९६॥

गरुड उवाच।

ममाधारं न गच्छन्ति सागराश्च नगोत्तमाः। अथ चैवं महासत्वं कथं त्वं धारयिष्यसि
ऋतेनारायणादन्यः को मां धारयितुंक्षमः। त्रैलोक्ये कः पुमांस्तिष्ठेद्योवेगं मे सहिष्यति

हरिरुवाच।

स्वकार्यमुद्धरेत्प्राज्ञः स्वकार्यं कुरु साम्प्रतम्।
कृत्वा कार्यं खगश्रेष्ठ विजानीषे च मां ध्रुवम्॥ ९९॥

ऋषय ऊचुः।

महासत्त्वं च तं दृष्ट्वा विमृश्य मनसाखगः। एवमस्त्विति चोक्त्वा स पपात ह महाभुजे
न चचाल भुजस्तस्यसन्निपातखगेशितुः। तत्र स्थित्वा स तां शाखां मुमोच पर्वतालये
शाखापतनमात्रेण सचराचरकानना। चचाल वसुधा चैव सागराः प्रचकम्पिरे॥१०२॥

ततश्च खादितौ सत्त्वौ सहसा गजकच्छपौ।
तृप्तिं न प्राप्तवान्सोऽपि क्षुधा तस्य न शाम्यति॥ १०३॥

एतज्ज्ञात्वा तु गोविन्दस्तमुवाच खगेश्वरम् ॥ १०४ ॥

विष्णुरुवाच ।

भुजस्य मम मांसं तु भक्षयित्वा सुखी भव ॥ १०५ ॥

ऋषय ऊचुः ।

इत्युक्ते प्रचुरं मांसं भुजस्य तस्य तेन हि । खादितं क्षुधया पुत्र व्रणं तस्य न विद्यते ॥ तमुवाच महाप्राज्ञश्चराचरगुरुं हरिम् ॥ १०६ ॥

वैनतेय उवाच ।

कस्त्वं किं वा प्रियं तेऽद्य करिष्यामि च साम्प्रतम् ॥ १०७ ॥

नारायण उवाच ।

विद्धि नारायणं मां हि त्वत्प्रियार्थं समागतम् ॥ १०८ ॥

ऋषयऊचुः ।

रूपं स्वं दर्शयामास प्रत्ययार्थं च तस्य वै । पीतवस्त्रं घनश्यामं चतुर्भुजमनोहरम् ॥ शङ्खचक्रगदापद्मधरं सर्वसुरेश्वरम् । तं च दृष्ट्वा गरुत्मांश्च प्रणम्य शिरसा हरिम् ॥

वैनतेय उवाच ।

प्रियं किं ते करिष्यामि वद नः पुरुषोत्तम ॥१११ ॥

ऋषय ऊचुः ।

तमब्रवीन्महातेजा देवदेवेश्वरो हरिः ॥ ११२ ॥

विष्णुरुवाच ।

भव मे वाहनं शूर सखे त्वं सार्वकालिकम् ॥ ११३ ॥

ऋषय ऊचुः ।

तमुवाच खगश्रेष्ठो धन्योऽहं विबुधेश्वर । सफलं जन्म मे नाथ त्वां च दृष्ट्वाऽद्यमे प्रभो प्रार्थयित्वा च पितरावागमिष्यामितेऽन्तिकम् । प्रीतो विष्णुरुवाचेदं भवत्वमजरामर अवध्यः सर्वभूतेभ्यः कर्मतेजश्चमत्समम् । सर्वत्र ते गतिश्चास्तु निखिलं तु सुखं ध्रुवम् संमिलतु द्रुतं सर्वं यत्ते मनसि वर्तते । यथेष्टं प्रीतिमाहारमकष्टेन प्रलप्स्यसे ॥११७॥

व्यसनान्मातरं सद्यो मोचयिष्यसि नान्यथा।
एवमुक्त्वा हरिः सद्यस्तत्रैवान्तरधीयत ॥ ११८ ॥
ताक्ष्योऽपिपितरं गत्वा कथयच्चाखिलंततः। स तच्छ्रुत्वा प्रहृष्टात्मा तनयं पुनरब्रवीत्

कश्यप उवाच।

धन्योऽहं च खगश्रेष्ठ धन्या ते जननीशिवा। धन्यं क्षेत्रे कुलं चैव यस्यपुत्रस्त्वमीदृशः
यस्य पुत्रः कुले जातो वैष्णवः पुरुषोत्तमः।
कुलकोटिं समुद्धृत्य विष्णुसायुज्यतां व्रजेत् ॥ १२१ ॥
विष्णुं यः पूजयेन्नित्यं विष्णुं ध्यायेत गायति।
जपेन्मन्त्रं सदा विष्णोः स्तोत्रं तस्य पठिष्यति ॥ १२२ ॥
प्रसादं च भजेन्नित्यमुपवासं हरेर्दिने। क्षयाच्च सर्वपापानां मुच्यते नात्र संशयः ॥
यस्य तिष्ठति गोविन्दो मानसे च सदैव हि। स एव नरशार्दूलो विष्णुलोके महीयते॥
जले विष्णुः स्थितो नित्यं रम्यस्थाने च सत्पथे।
गवि विप्रे सदा स्वर्गे ब्रह्मागारे शुचेर्गृहे ॥ १२५ ॥
एतेषु च जपेद्यस्तु स पुण्यः पुरुषोत्तमः। जन्मकोटिसहस्रेभ्यः कृत्वा सत्कर्मसञ्चयम्
क्षयाच्च सर्वपापानां विष्णोः किङ्करतां व्रजेत्।
धन्योऽसौ मानवो लोके विष्णोस्सादृश्यमाव्रजेत् ॥ १२७ ॥
नित्यःसुरवरैः पूज्यो लोकनाथोऽच्युतोऽव्ययः। सुप्रसन्नोभवेद्यस्य स एव पुरुषोत्तमः
तपोभिर्बहुभिर्धर्मैर्मखैर्नानाविधैरपि। विष्णुर्नलभ्यते देवैस्त्वयाऽसौ विप्रलभ्यते॥१२६।
सपत्नीव्यसनाद्घोरान्मातरं ते प्रमोचय। ततोयास्यसि देवेशं कृत्वा मातुःप्रतिक्रियाम्

ऋषय ऊचुः।

गृहीत्वा जनकस्याज्ञां लब्ध्वा विष्णोर्वरं महत्।
अम्बापार्श्वं गतो हृष्टस्तां प्रणम्याग्रतः स्थितः ॥ १३१ ॥

विनतोवाच।

अभवद्भोजनं तेऽद्य पुत्र दृष्टः पितापि च। किमर्थं वा विलम्बस्ते चिन्तयाव्यथिताह्यहम्

ऋषय ऊचुः ।

स मातुर्वचनं श्रुत्वा गरुड़ःप्रहसन्निव। कथयामास वृत्तान्तं सा श्रुत्वा विस्मिताऽभवत्

विनतोवाच ।

कथं च दुष्करं कर्म शिशुभावात्त्वया कृतम् ।
धन्याऽहं मे कुलं धन्यं यस्त्वं विष्णुसखोऽभवः ॥ १३४ ॥

लब्ध्वा वरं महात्मानं दृष्ट्वा मे हृष्यते मनः । पौरुषेण त्वया वत्स उद्धृतं मे कुलद्वयम्

सुपर्ण उवाच ।

मातः किंते करिष्यामि प्रियमेव तदुच्यताम् ।
कार्यं कृत्वाऽथ यास्यामि पार्श्वं नारायणस्य च ॥ १३६ ॥

ऋषय ऊचुः ।

एतच्छ्रुत्वा तु सा प्राह गरुडंविनतासती । महद्दुःखं च मे चास्तिकुरुतातप्रतिक्रियाम्
भगिनी मे सपत्नी सा पणिताऽहं तया पुरा। तस्या दास्यमहं प्राप्ताकस्तारयतिमामितः
कृष्णंकृत्वा विषैरश्वं तस्याःपुत्रैर्महोरगैः। उषःकालेऽवदत्सा च अश्वोऽयंकृष्णतांव्रजेत्
ततोऽहमवदं तत्र सदा चायं रुचासितः । मिथ्या ते वचनं मातः प्रतिज्ञां साऽकरोत्तदा
ततोऽहमब्रवंकद्रूं शपथं नागमातरम् । यदीमं कृष्णताम्येति हरेरश्वमहं तदा ॥
कृता भवामि ते दासीत्यहमेतत्तदाऽवदम् ॥ १४१ ॥

ततस्तस्मिन्हरेरश्वे कृते कृष्णे च कृत्रिमैः । तस्याः पुत्रैश्च धूर्तैश्च दासीत्वमगमं तदा ॥
यस्मिन्काले ह्यभीष्टश्च तस्या द्रव्यं ददाम्यहम् ।
तस्मिन्काले ह्यदासीत्वं यास्यामि कुलनन्दन ॥ १४३ ॥

गरुड उवाच ।

पृच्छ शीघ्रं च मातस्तां करिष्यामि प्रतिक्रियाम् ।
भक्षयिष्यामि तान्नागान्प्रतिज्ञा मे यथार्थतः ॥ १४४ ॥

ऋषय ऊचुः ।

ततः कद्रूमुवाचेदं विनता दुःखिता सती ॥ १४५ ॥

विनतोवाच ।

अभीष्टं वद कल्याणि येन मुच्येय कृच्छ्रतः ॥ १४६ ॥

ऋषय ऊचुः ।

अब्रवीत्सादुराचारा पीयूषं दीयतामिति । एतच्छ्रुत्वा तु वचनमभवत्सा च निष्प्रभा

ततः शनैरुपागम्य तनयं प्राह दुःखिता ॥ १४७ ॥

विनतोवाच ।

अमृतं प्रार्थयत्पापा तात किंवा करिष्यसि ॥ १४८ ॥

ऋषय ऊचुः ।

श्रुत्वा वाक्यं गरुत्मांश्च महाक्रोधसमन्वितः ॥ १४९ ॥

गरुड उवाच ।

अमृतं चानयिष्यामि मातर्मा विमुखी भव ॥ १५० ॥

ऋषय ऊचुः ।

एवमुक्त्वा तु तरसा स गतः पितुरन्तिकम् ॥ १५१ ॥

गरुड उवाच ।

अमृतं चानयिष्यामि मातुरर्थेऽधुनाऽनघ ॥ १५२ ॥

ऋषय ऊचुः ।

स तस्य वचनं श्रुत्वा मुनिः प्राह खगेश्वरम् ॥ १५३ ॥

कश्यप उवाच ।

सत्यलोकस्य वै चोर्ध्वे विश्वकर्मविनिर्मिता । पुरीचास्ति सभा रम्या देवानांहितहेतवे

वह्निप्राकारदुर्लंघ्या दुर्धर्षा चासुरैः सुरैः । रक्षार्थं निर्मितो देवः सुरैस्तत्र महाबलः ॥

यं यं पश्यति वीरः स स एव भस्मतां व्रजेत् ॥ १५६ ॥

सुपर्ण उवाच ।

नारायणाद्वरो लब्धो मया च मुनिसत्तम । भयं नास्तीह मे तात सुरासुरगणादपि ॥

ऋषय ऊचुः ।

एवमुक्त्वा गरुत्मान्स उद्धृत्यसागराज्जलम् । जगामाकाशमाविश्य खगश्चोर्ध्वंमनोजवः
पक्षवातेन तस्यैवरजः समुद्गतं बहु । तस्यान्तिकं न च त्यक्तमगमत्तस्य तच्चयः ॥
गत्वा चञ्चूजलेनापि वह्निं निर्वापयद्‌बली । रजोभिः परिपूर्णाक्षो न सुरस्तं च पश्यति
जघान रक्षिवर्गांस्तानमृतं चाहरद्‌बली । आनयन्तं च पीयूषं खगं गत्वा शतक्रतुः ॥
ऐरावतं समारूढो वाक्यमेतदुवाच ह ॥ १६२ ॥

इन्द्र उवाच ।

खगरूपधरः कस्त्वं पीयूषं हरसे बलात् । अप्रियं सर्वदेवानां कृत्वा जीवेरितः कथम् ॥
विशिखैरग्निसङ्काशैर्नयामि यममन्दिरम् ॥ १६४ ॥

ऋषय ऊचुः ।

श्रुत्वा वाक्यं हरेः कोपादुवाच स महाबलः ॥ १६५ ॥

गरुड उवाच ।

नयामि तव पीयूषं दर्शय स्वपराक्रमम् ॥ १६६ ॥

ऋषय ऊचुः ।

एतच्छ्रुत्वा महाबाहुर्जघान विशिखैः शितैः । यथा मेरुगिरेः शृङ्गं तोयवर्षेण तोयदः
नखैरशनिसङ्काशैर्बिभेद गरुडो गजम् । मातलिं च रथं चक्रं तथा देवान्पुरस्सरान् ॥
व्यथितोऽसौ महाबाहुर्मातलिर्गजपुङ्गवः । विमुखाः पक्षवातेन सर्वे देवगणास्तदा ॥
ततस्तु कोपितो जिष्णुर्जघान कुलिशेन तम् ।
कुलिशस्यावपातेन न च क्षुब्धो महाखगः ॥ १७० ॥
स्वं मोघं भिदुरं दृष्ट्वा हरिर्भीतोऽभवत्तदा । संनिवृत्य ततो युद्धात्तत्रैवान्तरधीयत ॥
सुतरामपि गच्छन्तं वेगाद्भूतलमागतः । अब्रवीत्स सुरश्रेष्ठः सर्वदेवगणाग्रतः ॥१७२॥

शक्र उवाच ।

यदि दास्यसि पीयूषमिदानीं नागमातरि । भुजगाश्चामराः सर्वे क्रियन्ते हि ध्रुवं तया
प्रतिज्ञा ते भवेन्नष्टा न फलं जीवितस्य ते । तस्मादिदं हरिष्यामि संमतेन तवानघ ॥

गरुत्मानुवाच ।

यस्मिन्काले ह्यदासी सा माता मे दुःखिता सती ।
विदिता सर्वलोकेषु हरेऽमृतं हरिष्यसि ॥ १७५ ॥

ऋषय ऊचुः ।

एवमुक्त्वा महावीर्यो गत्वोवाच प्रसूं तदा ॥ १७६ ॥

गरुड उवाच ।

आनीतममृतं मातस्तस्या एव प्रदीयताम् ॥ १७७ ॥

ऋषय ऊचुः ।

प्रोत्फुल्लहृदया सा च दृष्ट्वा पुत्रंसहामृतम् । तामाहूयामृतं दत्त्वा चादासीत्वं तदागता
तृणकाष्ठानि भूतानि पशवश्च सरीसृपाः । दृष्ट्वा सविस्मयास्सर्वे देवा महर्षयस्तदा
मोचयित्वा तु तामम्बां गरुडः सुष्ठुतां गतः । एतस्मिन्नन्तरे शक्रो जहारसहसासुधाम्
निधाय गरलं तत्र तया चानुपलक्षितः । प्रहृष्टहृदया कद्रूः पुत्रानाहूय सम्भ्रमात् ॥
तेषां मुखे ददौ हृष्टा क्ष्वेडं चामृतलक्षणम् । तानुवाच प्रसूः पुत्रान्युष्माकं च कुलेसदा

मुखे तिष्ठन्त्वमी देवा विन्दवस्तेन निर्वृताः ।
महर्षयस्ततो देवाः सिद्धगन्धर्वमानुषाः ॥ १८३ ॥

ऊचुः सन्तु कुले मातरस्माकं च प्रसादतः । नागैर्विसर्जिता देवाःससिद्धा मुनयस्तथा

जग्मुः स्वमालयं हृष्टा नागाः प्रमुदिताः स्थिताः ।
एतस्मिन्नन्तरे नागांश्चखाद गरुडो बलात् ॥ १८५ ॥

दिक्षु पलायिताः शेषाः पर्वतेषु वनेषु च । सागरेषु च पाताले बिलेषु तरुकोटरे ॥१८६

निभृतेषु निकुञ्जेषु स्थिताः सर्पाश्च निर्वृताः ।
भुजगास्तस्य भक्ष्याश्च सदैव विधिनिर्मिताः ॥ १८७ ॥

स खादयित्वानागांश्चसम्भाष्यपितरावथ । विबुधान्पूजयित्वा तु जगाम हरिमव्ययम्
यः पठेच्छृणुयाद्वापि सुपर्णचरितं शुभम् । सर्वपापविनिर्मुक्तः सुरलोके महीयते ॥
इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे गरुडोत्पत्तिर्नामैकोनपञ्चाशत्तमोऽध्यायः

# पञ्चाशत्तमोऽध्यायः

## कश्यपोपदेशेन चाण्डालपतितद्विजस्य सदाचाराचरणेन स्वर्गप्राप्तिः ।

ब्रह्मोवाच ।

अतः परं तु विप्रर्षे चाण्डालपतितो द्विजः । प्रलप्य च बहूञ्छोकाञ्जगाम कश्यपंमुनिम्
गत्वोवाच मुनिश्रेष्ठ वदास्माकं हितं वचः । यथा पापाद्विमुच्येऽहं मुनिश्रेष्ठ तथा कुरु

ऋषय ऊचुः ।

तमुवाच महातेजा ईषद्धास्यः समन्ततः ॥ ३ ॥

कश्यप उवाच ।

सन्दर्शनाच्च म्लेच्छानामुपशान्तोऽसि वै स्वयम् ।
गायत्र्याश्च जपैर्होमैर्व्रतैश्चान्द्रायणादिभिः ।
स्मर नित्यं हरेः पादमुपोष्य हरिवासरम् ॥ ४ ॥

अहर्निशं हरेर्ध्यानं प्रणामं कुरु तं प्रभुम् । तीर्थस्नानेन मन्त्रेण पङ्कस्यान्तं गमिष्यसि ॥
ततः पापक्षयादेव ब्राह्मणत्वं च लप्स्यसे । व्रतैर्वृषाधिकैर्मोक्षं नाशयन्कल्मषं द्विजः ॥

ब्रह्मोवाच ।

मुनेस्तस्यवचः श्रुत्वा कृतकृत्योऽभवत्तदा । पुण्यं स विविधं कृत्वा पुनर्ब्रह्मत्वमाप्तवान्
ततस्तप्त्वातपस्तीव्रं स्वर्लोकंचिरमभ्यगात् । सद्वृत्तस्याखिलंपारं क्षयंयाति दिनेदिने
असद्वृत्तस्यपुण्यं हि क्षयं यात्यञ्जनोपमम् । अनाचाराद्धतो विप्र आचारात्सुरतांव्रजेत्
ततः कण्ठगतैः प्राणैराचारं कुरुते द्विजः । कर्मणा मनसाङ्गेन सदाचारं सदा कुरु ॥
कश्यपस्योपदेशेन सविनीतोऽभवद्द्विजः । आचारं तु पुनःकृत्वा तपस्तप्त्वा दिवंगतः
अनाचारी हतो विप्रः स्वर्गलोकेषु गर्हितः । आचारं तु पुनः कृत्वा सुरलोके महीयते ॥

नारद उवाच ।

प्राप्नुवन्ति गतिं लोकाः पूजयित्वा द्विजोत्तमान् ।

द्विजानां पीडनं कृत्वा गतिं गच्छन्ति कां प्रभो ॥ १३ ॥

ब्रह्मोवाच ।

क्षुधासन्तप्तदेहानां ब्राह्मणानांमहात्मनाम् । नार्चयेच्छक्तितो भक्त्या स याति नरकंनरः
परुषेण क्रोशयित्वा क्रोधाद्यस्तु विसर्जयेत् । स याति नरकं घोरं महारौरवकृच्छ्रकम्
सन्निवृत्तस्ततः कीटाद्यन्त्यजातिषु जायते । ततो रोगी दरिद्रस्तु क्षुधया परिपीडितः
नावमन्येत्ततो विप्रं क्षुधया गृहमागतम् । न ददामीति यो ब्रूयाद्देवाग्निब्राह्मणेषु सः ॥
तिर्यग्योनिशतंगत्वा चाण्डाल्यमुपगच्छति । पादमुद्यम्ययो विप्रं हन्ति गां पितरौगुरुम्

रौरवे नियतो वासस्तस्य नास्तीह निष्कृतिः ।
यदि पुण्याद् भवेज्जन्म स एव पण्डुतां व्रजेत् ॥ १६ ॥

अतिदीनोविषादी च दुःखशोकाभिपीडितः । एवंजन्मत्रयं प्राप्य भवेत्तस्य च निष्कृतिः

मुष्टिचपेटकीलैश्च हन्याद्विप्रं तु यः पुमान् ।
तापने रौरवे घोरे कल्पान्तं सोऽपि तिष्ठति ॥ २१ ॥

अथजन्म समासाद्य कुक्कुरः क्रूरचण्डकः । अन्त्यजातिषु जातोऽपि दरिद्रःकुक्षिशूलवान्
पादमुद्यच्छते वा यस्तस्य पादे शिलीपदः । खञ्जो वा मन्दजङ्घो वा खण्डपादो भवेन्नरः
पक्षवातेन चाङ्गानि प्रकम्पन्ते सदैव हि । मातरं पितरं विप्रं स्नातकं च तपस्विनम् ॥

हत्वा गुरुगणं क्रोधात्कुम्भीपाके चिरं भवेत् ।
उषित्वा चैव जायेत कीटजातिषु तत्परम् ॥ २५ ॥

विरुद्धं परुषं वाक्यं यो वदेद्धि द्विजातिषु । अष्टौ कुष्ठाः प्रजायन्ते तस्य देहे दृढं सुत

विचर्चिकाऽथ दद्रूश्च मण्डलः शुक्तिसिध्मकौ ।
कालकुष्ठस्तथा शुक्लस्तरुणश्चातिदारुणः ।

ततो भिषक्प्रयोगे च पापात्पुण्यं पलायते । अपुण्याज्जलरैखेव तेनैव निधनं व्रजेत् ॥
एषां मध्ये महाकुष्ठास्त्रय एव प्रकीर्तिताः । कालकुष्ठस्तथा शुक्लस्त्वरुणश्चातिदारुणः
महापातकभावानां ज्ञानात्संसर्गतोऽपि वा । अतिपातकिनामेव त्रयो देहे भवन्ति वै ।
संसर्गात्सहसम्बन्धाद्रोगः सञ्चरतेनृणाम् । दूरात्परित्यजेद्धीरः स्पृष्ट्वा स्नानं समाचरेत्

पतितं कुष्ठसंयुक्तं चाण्डालं च गवाशिनम् ।
श्वानं रजस्वलां भिल्लं स्पृष्ट्वा स्नानं समाचरेत् ॥ ३२ ॥
दुरितस्यानुरूपेण देहे कुष्ठा व्यवस्थिताः । इहलोके परत्रैवाप्यत्र नास्ति तु संशयः ॥
न्यायेनोपार्जितां वृत्तिं ब्रह्मस्वं हरते तु यः । अक्षयं नरकं प्राप्य पुनर्जन्म न विद्यते ॥
पिशुनोयस्तु विप्राणां रन्ध्रान्वेषणतत्परः । तं दृष्ट्वाप्यथवा स्पृष्ट्वा सचैलो जलमाविशेत्
ब्रह्मस्वं प्रणयाद्भुक्तं दहत्यासप्तमं कुलम् । विक्रमेण तु भुञ्जानो दशपूर्वान्दशापरान् ॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते । विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥
मोहाच्च मातरं गत्वा ब्राह्मणीं च गुरोः स्त्रियम् ।
पतित्वा रौरवे घोरे पुनरुत्पत्तिदुर्लभः ॥ ३८ ॥
पतन्ति पितरस्तस्य कुम्भीपाकेऽथ तापने । अवीचिकालसूत्रे च महारौरवरौरवे ॥३९॥
कदाचिदपि वा तेषां निष्कृतिं नानुमेनिरे ।
प्राणं हत्वा द्विजातीनां स्वयं यात्यपुनर्भवम् ।
पतन्ति पुरुषास्तस्य रौरवे च सहस्रशः ॥ ४० ॥

नारद उवाच ।

सर्वेषामेव विप्राणां वधे च पातकं समम् । विषमं वाकुतस्तिष्ठेत्तत्त्वतो वक्तुमर्हसि ॥

ब्रह्मोवाच ।

हत्वा विप्रं ध्रुवं पुत्र पातकं यदुदाहृतम् । लभते ब्रह्महा घोरं वक्तव्यं चापरं शृणु ॥
लक्षकोटिसहस्राणां ब्राह्मणानां वधंभजेत् । वेदशास्त्रयुतंहत्वा श्रोत्रियं विजितेन्द्रियम्
विप्रं च वैष्णवं हत्वातस्माद्दशगुणोत्तरम् । स्ववंशान्पातयित्वा तु पुनर्जन्म न विन्दते
त्रिवेदं स्नातकं हत्वा वधस्यान्तं न विन्दते ॥ ४५ ॥
श्रोत्रियं च सदाचारं तीर्थमन्त्रप्रपूतकम् । ईदृशं ब्राह्मणं हन्तुः पापस्यान्तो न विद्यते
अपकारं समुद्दिश्य द्विजः प्राणान्परित्यजेत् । दृश्यते येन चान्येन ब्रह्महा स भवेन्नरः
वचोभिः परुषैर्वृत्तैः पीडितस्ताडितो द्विजः ।
यमुद्दिश्य त्यजेत्प्राणांस्तमाहुर्ब्रह्मघातिनम् ॥ ४८ ॥

ऋषयो मुनयो देवाः सर्वे ब्रह्मविदस्तथा। देशानांपार्थिवानां च सा च वध्या भवेदिह
अतो ब्रह्मवधं प्राप्य पितृभिः सह पच्यते। प्रायोपवेशकं विप्रं बुधः संमानयेद् ध्रुवम्
दोषैश्चापि विनिर्मुक्तमुद्दिश्य प्राणमुत्सृजेत्। स प्रलिप्तो वधैर्घोरैर्नतु यं परिकीर्तयेत् ॥

आत्मघातं द्रुमारोहं कोटरैरुपजीवनम्।
यः कुर्यादात्मनो घातं स्ववंशे ब्रह्महा भवेत् ॥ ५२ ॥

भ्रूणं च घातयेद्यस्तु शिशुं वा आतुरं गुरुम्। ब्रह्महा स्वयमेव स्यान्नतु यं परिकीर्तयेत्
मारयेच्च सगोत्रं वा ब्राह्मणं ब्राह्मणाधमः। तस्यैवं तद्भवेत्पापं न तु यं परिकीर्त्तयेत्

पीडयित्वा द्विजं शूद्रः स्वकार्यं चापि साधयेत्।
तत्रापापे च शूद्रस्य पातकं नान्यथा भवेत् ॥ ५५ ॥
तात्कालिकवधं हत्वा हन्तारमाततायिनम्।
न च हन्ता च तत्पापैर्लिप्यते द्विजसत्तम ॥ ५६ ॥

आततायिनमायान्तमपि वेदान्तगं रणे। जिघांसन्तं जिघांसेच्च न तेन ब्रह्महा भवेत् ॥
अग्निदो गरदश्चैव धनहारी च सुतघ्नः। क्षेत्रदारापहारी च षडेते ह्याततायिनः ॥ ५८ ॥
खलो राजवधोद्योगी पितॄणां च वधेरतः। अनुयायी नृपो राज्ञश्चत्वारश्चाततायिनः ॥
तत्क्षणान्नमृतं विप्रं पुनर्हन्तुं न युज्यते। पुनर्हत्वा वधं घोरं ज्ञानात्प्राप्नोति निश्चितम्
लोके विप्रसमो नास्ति पूजनीयो जगद्गुरुः। हत्वा तं यद्भवेत्पापं तत्परं च न विद्यते
देववत्पूजनीयोऽसौ देवासुरगणैर्नरैः। ब्राह्मणस्य समोनास्ति त्रिषुलोकेषु निश्चितम्

नारद उवाच।

कां वृत्तिं समुपाश्रित्य जीवितव्यं द्विजेन हि। अपापेन सुरश्रेष्ठ तत्त्वतो वक्तुमर्हसि ॥

ब्रह्मोवाच।

अयाचिता च या भिक्षा प्रशस्ता सा प्रकीर्तिता।
उञ्छवृत्तिस्ततो भद्रा सुभद्रा सर्ववृत्तिषु ॥ ६४ ॥

यामाश्रित्य मुनिश्रेष्ठा गच्छन्ति ब्रह्मणः पदम्। दक्षिणायज्ञशेषाणां ग्राह्यायज्ञगतेनहि ॥

पाठनं याजनं कृत्वा ग्रहीतव्यं धनं द्विजैः।

पाठयित्वा पठित्वा च कृत्वा स्वस्त्ययनं शुभम् ॥ ६६ ॥
ब्राह्मणानामिदं जीव्यं शिष्टावृत्तिःप्रतिग्रहः। शास्त्रोपजीविनो धन्याधन्यावृक्षोपजीविनः
धन्या वृक्षलता जीव्या वाटीसस्योपजीविनः । अन्नजन्तुवधेपापं तस्य दोषोपशान्तये
नवधान्यानिशस्तानि विप्रेभ्यः सम्प्रदापयेत् । नचेत्प्राणिवधे ह्यत्रक्षीयन्ते चायुषोध्रुवम्
तस्माद्दद्यात्सुबहूनि पितृदेवद्विजातिषु । अभावात्क्षत्रियावृत्तिर्ब्राह्मणैरुपजीव्यते ॥७०॥
न्याययुद्धेषु योद्धव्यं चरेद्वीरव्रतं शुभम् । स तया च द्विजो वृत्त्या यद्धनं लभते नृपात्
पितृयज्ञादिदानेषु मेध्यं तद्धनमुच्यते । समभ्यसेद्धनुर्विद्यां वेदयुक्तां सदाऽनघः ॥७२॥
शक्तिकुन्तगदाखड्गपरिघाणां समन्ततः । अश्वारोहं गजारोहमैन्द्रजालममानकम् ॥७३
रथभूमिगतं युद्धं युक्तं सर्वत्र कारयेत् । द्विजदेवध्रुवाणां च स्त्रीणां वृत्तं तपस्विनाम् ।
साधुसाध्वीगुरूणां च नृपाणांरक्षणाद्ध्रुवम् । यत्पुण्यं लभ्यतेशूरैःकथंतद्ब्रह्मवादिभिः
सर्वपापक्षयं कृत्वा सोऽक्षयं स्वर्गमश्नुते । संमुखे न्याययुद्धेच पतन्ति ब्राह्मणा रणे ॥
तेव्रजन्ति परं स्थानं न गम्यं ब्रह्मवादिनाम् । धर्मयुद्धस्य यद्वृत्तं शृणु पुण्यं यथार्थतः
संमुखेन प्रयुध्यन्ते न च गच्छन्ति कातरम् । न भग्नं पृष्ठतो घ्नन्तिनिःशस्त्रंप्रपलायितम्
अयुध्यमानं भीरुं च पतितं गतकल्मषम् । असच्छूद्रंस्तुतिप्रोतिमाहवे शरणागतम् ॥
हत्वा च नरकं यान्ति दुर्वृत्ता जयकाङ्क्षिणः ।
एषा च क्षत्रिया वृत्तिः सदाचारैस्तु गीयते ॥ ८० ॥
यामाश्रित्य दिवं यान्ति सर्वक्षत्रियकुञ्जराः । धर्मयुद्धे शुभो मृत्युः संमुखे क्षत्रियस्यच
अत्र पूतोभवेत्सोऽपि सर्वपापैः प्रमुच्यते । स तिष्ठेत्स्वर्गलोके च प्रासादेरत्नभूषिते ॥
जाम्बूनदमयस्तम्भे रत्नभूषितभूतले । इष्टद्रव्यैः सुसम्पूर्णे दिव्यवस्त्रोपशोभिते ॥ ८३ ॥
पुरतः कल्पवृक्षाश्च तिष्ठन्ति सर्वदायिनः । वापीकूपतटाकाद्यैरुद्यानैरुपशोभिते ॥ ८४ ॥
यौवनाढ्याश्चसेवन्ते तं देवपुरकन्यकाः । तस्याग्रतो मुदानित्यं नृत्यन्त्यप्सरसां गणाः
गीतंगायन्ति गन्धर्वादेवाश्च स्तुतिपाठकाः । एवंक्रमेण कल्पान्ते सार्वभौमो भवेन्नृपः
सर्वभोगैककर्ता च नीरुङ्मन्मथविग्रहः । तस्यपत्न्यः प्ररूपाढ्याः सदैव यौवनान्विताः
धर्मशीलाः सुताः शुभ्राः समृद्धाः पितृसंमताः ।

एवं क्रमेण भुञ्जन्ति सप्तजन्मसु क्षत्रियाः ॥ ८८ ॥
अन्यायेन तु योद्धारस्तिष्ठन्ति नरके चिरम् । एवं च क्षत्रियावृत्तिर्ब्राह्मणैरुपजीव्यते ॥
वैश्यैः शूद्रैस्तथान्यैश्च अन्त्यजैर्म्लेच्छजातिभिः ।
ये च योधाः प्रयुध्यन्ते न्याययुद्धेन सर्वदा ॥ ९० ॥
तेऽपि यान्ति परं स्थानं सर्वे वर्णाद्विजातयः । न शूरोयोद्विजोभीरुरस्त्रशस्त्रविवर्जितः
विपत्तौ वैश्यवृत्तिं च कारयेद्विजसत्तमः । वैश्यवृत्तिं वणिग्भावं कृषिं चैव तथा परैः
कारयेत्कृषिवाणिज्यं विप्रकर्म न च त्यजेत् ।
वणिग्भावान्मृषात्युक्तौ दुर्गतिं प्राप्नुयाद् द्विजः ॥ ९३ ॥
आर्द्रद्रव्यं परित्यज्य ब्राह्मणो लभते शिवम् । समुत्पाद्य ततो वृत्तिं दद्याद्विप्राय सर्वशः
पितृयज्ञे तथा चाग्नौ जुहुयाद्विधिवद्विजः । तुलेऽसत्यं न कर्त्तव्यं तुलाधर्मप्रतिष्ठिता
छलभावं तुले कृत्वा नरकं प्रतिपद्यते । अतुलं चापियद्द्रव्यं तत्र मिथ्या परित्यजेत् ॥
एवं मिथ्या न कर्त्तव्या मृषा पापप्रसूतिका । नास्तिसत्यात्परोधर्मोनानृतात्पातकंपरम्
अतः सर्वेषु कार्येषु सत्यमेव विशिष्यते । अश्वमेधसहस्रं तु सत्यं च तुलया धृतम् ॥
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते । योवदेत्सर्वकार्येषु सत्यं मिथ्या परित्यजेत्
स निस्तरति दुर्गाणि स्वर्गमक्षयमश्नुते । वाणिज्यं कारयेद्विप्रोमिथ्याऽवश्यंपरित्यजेत्
वृद्धिं च निक्षिपेत्तीर्थे स्वयं शेषं तु भोजयेत् । देहेक्लेशात्तत्सहस्रगुणं भवतिसर्वदा ॥
अर्थार्जनविधौ मर्त्या विशन्ति विषमे जले । कान्तारमटवींचैव श्वापदैः सेवितां तथा
गिरिं गिरिगुहां दुर्गां म्लेच्छानां शस्त्रपातिनाम् ।
गृहं प्रतिभयं स्थानं धनलोभात्समन्ततः ॥ १०३ ॥
सुतदारान्परित्यज्य दूरंगच्छन्तिलोभिनः । स्कन्धे भारं वहन्त्यन्ये तर्यां चक्रेनिपातनैः
क्षेपणीभिर्महादुःखैस्सदा प्राणव्ययेन च । अर्थस्य सञ्चयः पुत्र प्राणात्प्रियतरो महान्
एभिर्न्यायार्जितं वृत्तं वणिग्भावेन यत्नतः । पितृदेवद्विजातिभ्यो दत्तंचाक्षयमश्नुते ॥
एतौ दोषौ महान्तौ च वाणिज्येलाभकर्मणि । लोभानामपरित्यागोमृषाग्राह्यश्चविक्रयः
एतौ दोषौ परित्यज्य कुर्यादर्थार्जनं बुधः । अक्षयं लभतेदानाद्वणिग्दोषैर्न लिप्यते ॥

पुण्यकर्मरतो विप्रः कृषिं हि परिकारयेत्। वाहयेद्दिवसस्यार्द्धं बलीवर्दचतुष्टयम्॥
अभावात्त्रितयं चैव अविश्रामं न कारयेत्। चारयेच्च तृणेऽच्छिन्ने चोरव्याघ्रविवर्जिते

दद्याद्वासं यथेष्टं च नित्यमातर्पयेत्स्वयम्।
गोष्ठं च कारयेत्तस्य किञ्चिद्विघ्नविवर्जितम्॥ १११॥
सदा गोमयमूत्राभ्यां विघसैश्च विवर्जितम्।
न मलं निक्षिपेद्गोष्ठे सर्वदेवनिकेतने॥ ११२॥

आत्मनः शयनीयस्य सदृशं कारयेद्बुधः। समं निर्वापयेद्यत्नाच्छीतवातरजस्तथा॥
प्राणस्य सदृशं पश्येद्गां च सामान्यविग्रहम्। अस्य देहे सुखं दुःखं तथा तस्यैव कल्पते
अनेन विधिना यस्तु कृषिकर्माणि कारयेत्। स च गोवाहनैर्दोषैर्नलिप्येत धनो भवेत्॥
दुर्वलं पीडयेद्यस्तु तथैव गदसंयुतम्। अतिबालातिवृद्धं च स गोहत्यां समालभेत्॥
विषमं वाहयेद्यस्तु दुर्वलं सबलं तथा। स गोहत्यासमं पापं प्राप्नोतीह न संशयः॥

यो वाहयेद्विना सस्यं खादन्तं गां निवारयेत्।
मोहात्तृणं जलं वापि स गोहत्यासमं लभेत्॥ ११८॥
सङ्क्रान्त्यां पौर्णमास्यां चामावास्यायां तथैव च।
हलस्य वाहनात्पापं गवामयुतहत्यया॥ ११९॥

अमूषु पूजयेद्यस्तु सितैश्चित्रादिभिर्नरः। कज्जलैः कुसुमैस्तैलैः सोऽक्षयं स्वर्गमश्नुते॥
घासमुष्टिं परगवे यो ददाति सदाह्निकम्। सर्वपापक्षयस्तस्य स्वर्गं चाक्षयमश्नुते॥

यथा विप्रस्तथा गौश्च द्वयोः पूजाफलं समम्।
विचारे ब्राह्मणो मुख्यो नृणां गावः पशौ तथा॥ १२२॥

नारद उवाच।

विप्रो ब्रह्ममुखे जातः कथितोमेत्वयाऽनघ। कथंगोभिः समो नाथ विस्मयोमेविधेध्रुवम्

ब्रह्मोवाच।

शृणु चात्र यथातथ्यं ब्राह्मणानां गवां यथा। एकपिण्डक्रियैक्यं तु पुरुषैर्निर्मितंपुरा॥
पुराब्रह्ममुखोद्भूतं कूटं तेजोमयं महत्। चतुर्भागप्रजातं तद्वेदोऽग्निर्गौर्द्विजस्तथा॥

प्राक्तेजः सम्भवोवेदो वह्निरेव तथैव च। परतो गौस्तथाविप्रो जातश्चैवपृथक्पृथक
तत्र सृष्टा मया चादौ वेदाश्चत्वार एकशः। स्थित्यर्थं सर्वलोकानां भुवनानां समन्ततः
अग्निर्हव्यानि भुञ्जीत देवहेतोस्तथा द्विजः। आज्यं गोप्रभवं विद्धि तस्मादेते प्रसूतकाः॥
न सन्ति यदि लोकेषु चत्वारोऽमी महत्तराः। तदाखिलं च भुवनं नष्टंस्थावरजङ्गमम्

एभिर्धृताः सदा लोकाः प्रतिष्ठन्ति स्वभावतः।
स्वभावो ब्रह्मरूपोऽसावेते ब्रह्ममयाः स्मृताः॥ १३०॥

तस्माद्गौः पूजनीयोऽसौ विप्रदेवासुरैरपि। उदारः सर्वकार्येषु जातस्तथ्योगुणाकरः॥
सर्वदेवमयः साक्षात्सर्वसत्त्वानुकम्पकः। अस्य कार्यं मया सृष्टं पुरैव पोषणं प्रति॥
अत एव मया दत्तं वरं चातिसुशोभनम्। एकजन्मनि ते मोक्षस्तवास्त्वतिविनिश्चितम्

अत्रैव ये मृता गावस्त्वागच्छन्ति ममालयम्।
पापस्य कणमात्रं तु तेषां देहे न तिष्ठति॥ १३४॥

देवी गौर्धेनुका देवाश्चादिदेवी त्रिशक्तिका। प्रसादाद्यस्य यज्ञानां प्रभवो हि विनिश्चितः
गवांसर्वपवित्राणि पुनन्ति सकलं जगत्। मूत्रं गोर्गोमयं क्षीरं दधिसर्पिस्तथैव च॥
अमीषां भक्षणे पापं न तिष्ठति कलेवरे। तस्माद्घृतं दधिक्षीरं नित्यंखादन्तिधार्मिकाः

विशिष्टं सर्वद्रव्येषु गव्यमिष्टं परं शुभम्।
यस्यास्ये भोजनं नास्ति तस्य मूर्तिस्तु पूतिका॥ १३८॥

अन्नाद्यं पञ्चरात्रेण सप्तरात्रेण वै पयः। दधि विंशतिरात्रेण घृतं स्यान्मासमेककम्॥
अगव्यैर्यस्तु भुङ्क्तेवै मासमेकं निरन्तरम्। भोजने तस्य मर्त्यस्य प्रेताःखादन्तिचैव हि
परमान्नं परंशुद्धं स्विन्नं चातपतण्डुलैः। भुक्त्वा तु यत्कृतंपुण्यंकोटिकोटिगुणं भवेत्
अन्यच्चापि च यद्द्रव्यं हविष्यं शास्त्रनिर्मितम्। तद्भुक्त्वायत्कृतंकर्मसर्वंलक्षगुणं भवेत्
निरामिषं च यत्किञ्चित्तस्माद्यद्यत्फलं लभेत्। तस्माद्गौः सर्वकार्येषुशस्ताचैकायुगेयुगे

सर्वदा सर्वकामेषु धर्मकामार्थमोक्षदा॥ १४३॥

नारद उवाच।

केषु किंवा प्रयोगेण परं पुण्यं प्रकीर्तितम्। वद तत्सर्वलोकेश यथा जानामि तत्त्वतः

ब्रह्मोवाच ।

सकृत्प्रदक्षिणं कृत्वा गोधनं चाभिवन्दयेत् । सर्वपापविनिर्मुक्तः स्वर्गं चाक्षयमश्नुते ॥

सुराचार्यो यथा वन्द्यः पूज्योऽसौ माधवो यथा ।

सप्तप्रदक्षिणं कृत्वा चैश्वर्यात्पाकशासनः ॥ १४६ ॥

कल्य उत्थाय गोमध्ये पात्रं गृह्य सहोदकम् । निषिञ्चेद्यो गवां शृङ्गमस्तकेनैवतज्जलम्

प्रतीच्छेत निराहारस्तस्य पुण्यं निबोध मे ।

श्रूयन्ते यानि तीर्थानि त्रिषु लोकेषु नारद ॥ १४८ ॥

सिद्धचारणयुक्तानि सेवितानि महर्षिभिः । अभिषेकस्समस्तेषांगवांशृङ्गोदकस्य च ॥

प्रातरुत्थाय यो मर्त्यः स्पृशेद्गां च घृतं मधु ।

सर्षपांश्च प्रियङ्गूंश्च कल्मषात्प्रतिमुच्यते ॥ १५० ॥

घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः ।

घृतनद्यो घृतावर्तास्ता मे सन्तु सदा गृहे ॥ १५१ ॥

घृतं मे सर्वगात्रेषु घृतं मे मनसि स्थितम् । गावो ममाग्रतोनित्यं गावःपृष्ठत एव च ॥
गावश्च सर्वगात्रेषु गवांमध्ये वसाम्यहम् । इत्याचम्य जपेन्मन्त्रं सायं प्रातरिदं शुचिः
सर्वपापक्षयस्तस्य स्वलोके पूजितोभवेत् । यथा गौश्चतथा विप्रो यथाविप्रस्तथा हरिः
हरिर्यथा तथा गङ्गा एते नह्यवृषाःस्मृताः । गावोबन्धुर्मनुष्याणांमनुष्याबान्धवागवाम्
गौश्च यस्मिन्गृहे नास्ति तद्बन्धुरहितं गृहम् । गोमुखे चाश्रितावेदाःसषडङ्गपदक्रमाः ॥
शृङ्गयोश्चस्थितौनित्यं सहैव हरिकेशवौ । उदरेऽवस्थितः स्कन्दः शीर्षेब्रह्मास्थितःसदा
वृषध्वजोललाटे च शृङ्गाग्रइन्द्र एव च । कर्णयोरश्विनौ देवौ चक्षुषोश्शशिभास्करौ
दन्तेषु गरुडोदेवो जिह्वायां च सरस्वती । अपाने सर्वतीर्थानि प्रस्रावे चैव जाह्नवी॥
ऋषयो रोमकूपेषु मुखतःपृष्ठतोयमः । धनदो वरुणश्चैव दक्षिणं पार्श्वमाश्रितौ ॥१६०

वामपार्श्वे स्थिता यक्षास्तेजस्वन्तो महाबलाः ।

मुखमध्ये च गन्धर्वा नासाग्रे पन्नगास्तथा ॥ १६१ ॥

खुराणां पश्चिमे पार्श्वेऽप्सरसश्च समाश्रिताः । गोमये वसते लक्ष्मीर्गोमूत्रेसर्वमङ्गला

पादाग्रे खेचरा वेद्या हम्भाशब्दे प्रजापतिः। चत्वारः सागराःपूर्णा धेनूनां च स्तनेषु वै
गां च स्पृशति यो नित्यं स्नातो भवति नित्यशः।
अतो मर्त्यः प्रपुष्टैस्तु सर्वपापैः प्रमुच्यते ॥ १६४ ॥
गवांरजः खुरोद्भूतं शिरसा यस्तु धारयेत्।
स च तीर्थजले स्नातः सर्वपापैः प्रमुच्यते ॥ १६५ ॥

नारद उवाच।

गवां च दशवर्णानां कस्य दाने च किं फलम्। ब्रूहि तत्त्वं गुरुश्रेष्ठ परमेष्ठिन्प्रियं यदि

ब्रह्मोवाच।

श्वेतां गां ब्राह्मणे दत्वा मानवश्चेश्वरो भवेत्। प्रासादेवसते नित्यं भोगीचसुखमेधते
धूम्रा तु स्वर्गकान्तारसंसारे पापमोक्षिणी। अक्षयं कपिलादानं कृष्णां दत्त्वा न सीदति
पाण्डुरा दुर्लभा लोके गौरी च कुलनन्दिनी। रक्ताक्षीरूपकामस्य धनकामस्य नीलिका
एकां च कपिलां दत्वा सर्वपापैः प्रमुच्यते।
यत्तु बाल्यकृतं पापं यौवने वार्धके कृतम् ॥ १७० ॥
वाचा कृतं कर्म कृतं मनसा यत्प्रचिन्तितम्। अगम्यागमनं चैव मित्रद्रोहे च पातकम्
मानकूटं तुलाकूटं कन्यानृतं गवानृतम्। सर्वं च नाशयेत्क्षिप्रं कपिलां यः प्रच्छति ॥
दशयोजनविस्तीर्णा महापारा महानदी। नारा च जलकान्तारे प्रसूते चोदकार्णवे ॥
यावद्वत्सस्य द्वौ पादौ मुखं यावन्नजायते। तावद्गौःपृथिवी ज्ञेया यावद्गर्भं न मुञ्चति
सुवर्णशृङ्गींवस्त्राढ्यांसर्वालङ्कारभूषिताम्। ताम्रपृष्ठींरौप्यखुरांतथा कांस्योपदोहनाम्
शोभितां गन्धपुष्पैश्च सर्वालङ्कारभूषिताम्। ईदृशीं कपिलां दद्याद् द्विजातौ वेदपारगे
सर्वपापक्षयस्तस्य विष्णुलोकेऽच्युतो भवेत् ॥ १७७ ॥
तस्यां तु दुह्यमानायां भूमौ पतन्ति बिन्दवः।
आरामादि विजायन्ते बहुपुष्पफलोत्तमाः ॥ १७८ ॥
यत्रकामफला वृक्षा नद्यःपायसकर्दमाः। प्रासादाश्चापि सौवर्णास्तत्र गच्छन्तिगोप्रदाः
दशधेनूश्च यो दद्यादेकं चैव धुरन्धरम्। समानं तु फलं प्रोक्तं ब्रह्मणा समुदाहृतम् ॥

एकं च दशभिर्दद्यात्सहस्राणां शतं फलम् । तस्यानुसारतो वेद्यं फलं नारद यत्नतः ॥
पितॄनुद्दिश्य यः पुत्रो वृषं च मोक्षयेद्भुवि । पितरो विष्णुलोकेषु महीयन्ते यथेप्सितम्
चतस्रो वत्सतर्यश्च एकस्यैव वृषस्य च । मोक्ष्यन्ते सर्वतः पुत्र विधिरेष सनातनः ॥
यावन्ति चैव रोमाणि तस्य तासांचसर्वशः । तावद्वर्षसहस्राणि स्वर्गं भुञ्जन्तिमानवाः

लाङ्गूलेन वृषो यच्च जलं चोत्क्षिपति ध्रुवम् ।
तत्तोयं तु सहस्राब्दं पितॄणाममृतं भवेत् ॥ १८५ ॥

खुरेण कर्षयेद्भूमिं ततो लोष्टं च कर्दमः । पितृभ्यश्च स्वधा तत्र लक्षकोटिगुणंभवेत्
विद्यमाने च जनके यदि माता विनश्यति । चन्दनेनाङ्किता धेनुस्तस्याः स्वर्गाय दीयते
दाता चैव पितॄणां च ऋणं चैव प्रमुञ्चति । अक्षयं लभते स्वर्गं पूजितो मघवा यथा ॥
सर्वलक्षणसंयुक्ता तरुणी गौः पयस्विनी । समा प्रसूतिका भद्रा साचगौःपृथिवीस्मृता
तस्य दानेन मन्त्रस्य पृथ्वीदानसमं फलम् । शतक्रतुसमो मर्त्यः कुलमुद्धरते शतम् ॥
गवां च हरणं कृत्वा मृते गोरथवत्सके । कृमिपूर्णे स कूपे च तिष्ठेदाभूतसम्प्लवम् ॥
गवां चैव वधं कृत्वा पितृभिः सह पच्यते । रौरवे नरके घोरे तावत्कालं प्रतिक्रिया ॥
गोप्रचारप्रभग्नश्च षण्डवाहनबन्धनः । अक्षयं नरकं प्रायात्पुनर्जन्मनि जन्मनि ॥ १९३ ॥
सकृच्च श्रावयेद्यस्तु कथां पुण्यतमामिमाम् । सर्वपापक्षयस्तस्य देवैश्च सह मोदते ॥
य इदं शृणुयाद्वापि परं पुण्यतमं महत् । सप्तजन्मकृतात्पापान्मुच्यतेतत्क्षणेन हि ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे गोमाहात्म्यं नाम पञ्चाशत्तमोऽध्यायः ।

---

## एकपञ्चाशत्तमोऽध्यायः ।

### ब्रह्मतेजोवर्द्धनार्थकनित्यकर्मवर्णनम् ।

नारद उवाच ।

केनाचारेण विप्रस्य ब्रह्मतेजो विवर्धते । केनाचारेण तस्यैव ब्रह्मतेजो विनश्यति ॥१॥

ब्रह्मोवाच ।

शयनीयात्समुत्थाय रात्र्यंशे द्विजसत्तमः । देवांश्चैव स्मरेन्नित्यं तथा पुण्यवतोध्रुवम्
गोविन्दं माधवं कृष्णं हरिं दामोदरं तथा । नारायणं जगन्नाथं वासुदेवमजं विभुम् ॥
सरस्वतीं महालक्ष्मीं सावित्रीं वेदमातरम् । ब्रह्माणंभास्करंचन्द्रं दिक्पालांश्च ग्रहांस्तथा

शङ्करं च शिवं शम्भुमीश्वरं च महेश्वरम् ।
गणेशं च तथा स्कन्दं गौरीं भागीरथीं शिवाम् ॥ ५ ॥
पुण्यश्लोको नलो राजा पुण्यश्लोको जनार्दनः ।
पुण्यश्लोका च वैदेही पुण्यश्लोको युधिष्ठिरः ॥ ६ ॥

अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः । कृपः परशुरामश्च सप्तैते चिरजीविनः ॥
एतान्यस्तु स्मरेन्नित्यं प्रातरुत्थाय मानवः । ब्रह्महत्यादिभिः पापैर्मुच्यते नात्रसंशयः ॥
सकृदुच्चरिते तात सर्वयज्ञफलं लभेत् । गवां शतसहस्राणां दानस्य फलमश्नुते ॥ ९॥
ततश्चापि शुचौदेशे मलमूत्रं परित्यजेत् । दक्षिणाभिमुखोरात्रौ दिवाकुर्यादुदङ्मुखः ॥
परतोदन्तकाष्ठं च तृणैरुदुम्बरादिभिः । अतःपरं च सन्ध्यायां संयतश्च द्विजो भवेत् ॥

पूर्वाह्णे रक्तवर्णां तु मध्याह्ने शुक्लवर्णिकाम् ।
सायं सरस्वतीं कृष्णां द्विजो ध्यायेद्यथाविधि ॥ १२ ॥

ततः समाचरेत्स्नानं यथाज्ञानेन यत्नतः । अङ्गं प्रक्षालयित्वा तु मृद्भिःसंलेपयेत्ततः ॥

शिरोदेशे ललाटे च नासिकायां हृदिभ्रुवोः ।
बाह्वोःपार्श्वे तथानाभौ जान्वोरङ्घ्रिद्वये तथा ॥ १४ ॥

एकालिङ्गे गुदेतिस्रस्तथा वामकरे दश । उभयोः सप्तदातव्या मृदःशुद्धिमभीप्सता ॥
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे । मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम्

अनेनैव तु मन्त्रेण मृत्तिकां यस्तनौ क्षिपेत् ।
सर्वपापक्षयस्तस्य शुचिर्भवति मानवः ॥ १७ ॥

ततस्तु वेदपूर्वेण स्नानं कुर्याद्विचक्षणः । नद्यां नद्यांतथाकूपे पुष्करिण्यां तटाकके ॥१८॥
जलराशौ च वप्रे च घटस्नानं तथोत्तरम् । कारयेद्विधिवन्मर्त्यःसर्वपापक्षयाय च ॥

प्रातःस्नानं महापुण्यं सर्वपापप्रणाशनम् । यःकुर्यात्सततं विप्रो विष्णुलोके महीयते
प्रातःसन्ध्यासमीपे च यावद्दण्डचतुष्टयम् । तावत्पानीयममृतं पितॄणामुपतिष्ठते ॥

परतो घटिकायुग्मं यावद्यामैकमाह्निकम् ।
मधुतुल्यं जलं तस्मिन्पितॄणां प्रीतिवर्धनम् ॥ २२ ॥

ततस्तु सार्द्धयामैकं जलंक्षीरमयं स्मृतम् । क्षीरमिश्रं जलं तावद्यावद्दण्डचतुष्टयम् ॥
अतः परं च पानीयं यावद्धि प्रहरत्रयम् । तत्परं लोहितं प्रोक्तं यावदस्तं गतोरविः ॥
चतुर्थप्रहरे स्नाने रात्रौ वा तर्पयेत्पितॄन् । तत्तोयं रक्षसामेव ग्रहणेन विनाशितम् ॥२५॥
पानीयं सर्वसिद्ध्यर्थं पुरैवनिर्मितं मया । रक्षार्थं तस्य तोयस्य यक्षाश्चैव धुरन्धराः ॥

न प्राप्नुवन्ति पितरो ये च लोकान्तरं गताः ।
दुष्प्राप्यं सलिलं तेषामृतेस्वान्मर्त्यवासिनः ॥ २७ ॥

तस्माच्छिष्यैश्च पुत्रैश्च पौत्रदौहित्रकादिभिः । बन्धुवर्गैस्तथा चान्यैस्तर्पणीयं पितृव्रतैः

नारद उवाच ।

जलस्य दैवतं ब्रूहि तर्पणस्य विधिंमयि । यथा जानामि देवेश तत्त्वतो वक्तुमर्हसि ॥

ब्रह्मोवाच ।

जलस्य देवताविष्णुःसर्वलोकेषु गीयते । जलपूतो भवेद्यस्तु विष्णुस्तच्छङ्करो भवेत् ॥
जलंगण्डूषमात्रं तु पीत्वा पूतोभवेन्नरः । विशेषात्कुशसंसर्गात्पीयूषादधिकं जलम् ॥
सर्वदेवालयो दर्भोमयाऽयं निर्मितःपुरा । कुशमूलेभवेद्ब्रह्मा कुशमध्ये तु केशवः ॥
कुशाग्रे शङ्करंविद्धि कुशपते प्रतिष्ठिताः । कुशहस्तःसदामेध्यःस्तोत्रं मन्त्रंपठेद्यदि ॥
सर्वं शतगुणंप्रोक्तं तीर्थे साहस्रमुच्यते । कुशाःकाशास्तथा दूर्वा यवपत्राणिव्रीहयः ॥
बल्वजाःपुण्डरीकाश्च कुशास्सप्तप्रकीर्तिताः । आनुपूर्वेण मेध्याःस्युःकुशालोकेप्रतिष्ठिताः

विनामन्त्रेण यत्स्नानं सर्वंतन्निष्फलं भवेत् ।
अमृतात्स्वादुतामेति संस्पर्शाच्च तिलस्य च ॥ ३६ ॥

तस्माच्च तर्पयेन्नित्यं पितॄंस्तिलजलैर्बुधः । दशभिश्च तिलैस्तावत्पितॄणां प्रीतिरुत्तमा

अग्निस्तम्भ भयाद्देशा न चेच्छन्त्यति विस्तरम् ।

स्नात्वा यस्तर्पयेन्नित्यं तिलमिश्रोदकैः पितॄन् ॥ ३८ ॥
स याति ब्रह्मणःस्थानं समुद्धृत्यो भयंकुलम् । विशेषेण युगाद्यासुत्वमावास्यांतथैवच
अक्षयं स्वर्गमाप्नोति तर्पयित्वातिलैःपितॄन् । नीलखण्डविमोक्षेणत्वमावास्यातिलोदकैः
वर्षासु दीपदानेन पितृणामनृणो भवेत् । वत्सरैकममायां तु तर्पयेद्यस्तिलैः पितॄन् ॥
विनायकत्वमाप्नोति सर्वदेवैः प्रपूज्यते । युगाद्यासु च सर्वासु यस्तिलैस्तर्पयेत्पितॄन् ॥
उक्तं यद्वाप्यमायांतु तस्माच्छतगुणाधिकम् । अयने विषुवे चैव राकामायां तथैव च
तर्पयित्वा पितृव्यूहं स्वर्गलोके महीयते । तथामन्वन्तराख्यायामन्यस्यां पुण्यसंस्थितौ
ग्रहणे चन्द्रसूर्यस्य पुण्यतीर्थे गयादिषु ।
तर्पयित्वा पितॄन्याति माधवस्य निकेतनम् ॥ ४५ ॥
तस्मात्पुण्याहकंप्राप्यतर्पयेत्पितृसञ्चयम् । तर्पणं देवतानांच पूर्वंकृत्वा समाहितः ॥
अधिकारी भवेत्पश्चात्पितॄणां तर्पणेबुधः । श्राद्धे भोजनकाले च पाणिनैकेन दापयेत् ॥
उभाभ्यां तर्पणेदद्याद्विधिरेष सनातनः । दक्षिणाभिमुखो भूत्वा शुचिर्वै तर्पयेत्पितॄन् ॥
तृप्यतामितिवाक्येन नामगोत्रेण वै पुनः । अकृष्णैर्यत्तिलैर्मोहात्तर्पयेत्पितृसञ्चयम् ॥
भूम्यां ददाति यद्पोदाताचैव जलेस्थितः । वृथातद्दीयते दानं नोपतिष्ठति कस्यचित्
स्थलेस्थित्वा जलेयस्तु प्रयच्छेदुदकं नरः । नोपतिष्ठेत्पितॄणां तु सलिलंतन्निरर्थकम्
आर्द्रवासाजलेयस्तु कुर्यादुदकतर्पणम् । पितरस्तस्य तृप्यन्ति सहदेवैस्सदाऽनघ॥५२॥
रजकैःक्षालितंवस्त्रमशुद्धं कवयो विदुः । हस्तप्रक्षालनेचैव पुनर्वस्त्रं तु शुध्यति ॥ ५३॥
शुष्कवासाःशुचौदेशे स्थानेयत्तर्पयेत्पितॄन् । ततोदशगुणेनैव तुष्यन्ति पितरो ध्रुवम् ॥
स्नानं सन्ध्यां च पाषाणे खड्गे वा ताम्रभाजने ।
तर्पणं कुरुतेयस्तु प्रत्येकं च शताधिकम् ॥ ५५ ॥
रौप्यांगुलीयं तर्जन्यां धृत्वा यत्तर्पयेत्पितॄन् । सर्वं च शतसाहस्रगुणंभवति नान्यथा ॥
तथैवानामिकायां तु धृत्वा स्वर्णांगुलीं बुधः । तर्पयेत्पितृसन्दोहं लक्षकोटिगुणंभवेत्
अंगुष्ठदेशिनीमध्ये सव्यहस्तस्य खड्गकम् । धृत्वानामिकयारत्नमञ्जलेरक्षयंफलम् ॥५८॥
स्नानार्थमभिगच्छन्तं देवाःपितृगणैःसह । वायुभूतानुगच्छन्ति तृषार्ताःसलिलार्थिनः ॥

निराशास्ते निवर्तन्ते वस्त्रनिष्पीडनेन च । तस्मान्नपीडयेद्वस्त्रमकृत्वा पितृतर्पणम् ॥

तिस्रः कोट्योऽर्धकोटी च यानिलोमानि मानुषे ।
स्रवन्ति सर्वतीर्थानि तस्मान्न परिपीडयेत् ॥ ६१ ॥

देवाः पिबन्तिशिरसि श्मश्रुतः पितरस्तथा । चक्षुषोरपि गन्धर्वा अधस्तात्सर्वजन्तवः
देवाःपितृगणाःसर्वे गन्धर्वाजन्तवस्तथा । स्नानमात्रेण तुष्यन्ति स्नानात्पापं न विद्यते
नित्यस्नानं च यःकुर्यात्सनरःपुरुषोत्तमः । सर्वपापैर्विनिर्मुक्तो नाकलोके महीयते ॥
स्नानंतर्पणपर्यन्तं देवामहर्षयोविदुः । अतःपरं च देवानां पूजनं कारयेद्बुधः ॥ ६५ ॥
गणेशं पूजयेद्यस्तु विघ्नस्तस्य न जायते । आरोग्यार्थं च सूर्यं च धर्ममोक्षाय माधवम्

शिवं च कृत्यकामार्थं सर्वकामाय चण्डिकाम् ।
देवांस्तु पूजयित्वा तु वैश्वदेवबलिं चरेत् ॥ ६७ ॥

वह्निकार्यं ततःकृत्वा यज्ञं ब्राह्मणतर्पणम् । देवानां सर्वसत्त्वानां पुनस्त्रिविष्टपंव्रजेत् ॥
गतागतं स्थिरंकृत्वा कामान्मोक्षं सुखंदिवम् । तस्मात्सर्वप्रयत्नेननित्यंकर्माणिकारयेत्

नारदउवाच ।

किमर्थं च जलं तात देवाः पितृगणैःसह । न प्राप्नुवन्ति सर्वज्ञ लभन्तेमानवा यथा ॥

ब्रह्मोवाच ।

पुरासृष्टं मयातोयं सर्वदेवमयामृतम् । तस्यैव रक्षणार्थं च रक्षो यक्षाधनुर्धराः ॥७१॥
घ्नन्तितेपितरं देवमस्मद्वाक्यान्नमानुषम् । पशवःपक्षिणःकीटा मर्त्यलोकेव्यवस्थिताः
मर्त्यजाताश्च देवा ये तथैवमानुषाध्रुवम् । तर्पयित्वा गुरुं नित्यं सुरलोके प्रतिष्ठिताः ॥
अस्नायी च मलंभुङ्क्ते अजपी पूयशोणितम् । अकृत्वा तर्पणंनित्यं पितृहाचोपजायते
ब्रह्महत्यासमं पापं देवानामप्यपूजने । सन्ध्याकृत्यमकृत्वा च सूर्यंहन्ति च पापकृत् ॥

नारद उवाच ।

ब्राह्मणस्यसदाचार क्रमं ब्रूहि च कर्मणाम् । इतरेषां च वर्णानां प्रवृत्तमखिलंवद ॥

ब्रह्मोवाच ।

आचाराल्लभते चायुराचाराल्लभतेसुखम् । आचारोत्स्वर्गमोक्षं च आचारोहन्त्यलक्षणम्

अनाचारो हिपुरुषो लोकेभवतिनिन्दितः। दुःखभागी च सततं व्याधितोऽल्पायुरेव च
नरकेनियतंवासो ह्यनाचारान्नरस्य च । आचाराच्च परंलोकमाचारं शृणुतत्त्वतः ॥
गोमयेन गृहेनित्यं प्रकुर्यादुपलेपनम् । प्रक्षालयेत्ततःपीठं काष्ठं पात्रं शिलातलम् ॥८०॥
भस्मना कांस्यपात्रं तु ताम्रमम्लेन शुद्धयति । शिलापात्रं तु तैलेन फालं गोवालकेनतु
स्वर्णरौप्यादिपात्रं तु जलमात्रेणशुध्यति । अग्निनालोहपात्रं तु पाकप्रक्षालनेन तु ॥
खननाद्दाहनाच्चैव उपलेपनधावनात् । पर्जन्यवर्षणाच्चैव भूरमेध्या विशुध्यति ॥८३॥
तैजसानां मणीनाञ्चसर्वस्याश्ममयस्य च । भस्मभिर्मृत्तिकाभिश्च शुद्धिरुक्ता मया पुरा
शय्या भार्या शिशुर्वस्त्रमुपवीतं कमण्डलुः । आत्मनःकथिताश्शुद्धा न परेषां कदाचन॥
न भुञ्जीतैकवस्त्रेण न स्नायादेकवाससा । न धारयेत्परस्यैवं स्नानवस्त्रं कदाचन ॥
संस्कारं केशदन्तानां प्रातरेव समाचरेत् । गुरूणां च नमस्कारं नित्यमेव समाचरेत् ॥
हस्तपादे मुखेचैव पञ्चार्द्रो भोजनंचरेत् । पञ्चार्द्रकस्तु भुञ्जानःशतं वर्षाणि जीवति ॥
देवतानां गुरोराज्ञां स्नातकाचार्ययोरपि । नाक्रामेत्कामतश्छायां विप्रस्य दीक्षितस्य च
गोगणं दैवतं विप्रं घृतं मधुचतुष्पथम् । प्रदक्षिणं प्रकुर्वीत प्रख्यातांश्च वनस्पतीन् ॥

गोविप्रावग्निविप्रौ च विप्रौ द्वौ दम्पती तथा ।
तयोर्मध्ये न गच्छेत स्वर्गस्थोऽपि पतेद् भुवम् ॥ ९१ ॥

उच्छिष्टो न स्पृशेदग्निं ब्राह्मणं दैवतं गुरुम् । स्वशीर्षं पुष्पवृक्षंच यज्ञवृक्षमधार्मिकम् ॥
त्रीणि तेजांसि नोच्छिष्ट उदीक्षेत कदाचन । सूर्याचन्द्रमसावेवं नक्षत्राणि च सर्वशः
नेक्षेद्विप्रं गुरुं देवं राजानं यतिनां वरम् । योगिनं देवकर्माणं धर्माणां कथकं द्विजम् ॥
नदीनां च प्रतीरे च पत्युश्च सरितां तथा । यज्ञवृक्षस्य मूले च उद्याने पुष्पवाटके ॥
शरीरस्य मलत्यागं न कुर्याज्जीवने तथा । विप्रस्यायतने गोष्ठे रम्ये राजपथेषु च ॥
न क्षौरं कारयेद्धीरः कुजस्याह्नि कदाचन । मलं न धारयेद्दन्ते नखं न वदने क्षिपेत् ॥
तैलाभ्यङ्गं न कुर्वीत वासरे रविभौमयोः । स्वगात्रासनयोर्वाद्यं गुरोरेकासनादनम् ॥
न हरेच्छ्रोत्रियस्वं च देवस्यापि गुरोरपि । राज्ञस्तपस्विनां चैव पङ्गोरन्धस्य योषितः

पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च ।

रोगिणे भारतप्ताय गुर्विण्यै दुर्बलाय च ॥ १०० ॥
विवादं न च कुर्वीत नृपविप्रचिकित्सकैः ।
ब्राह्मणं गुरुपत्नीं च दूरतः परिवर्जयेत् ॥ १०१ ॥
पतितं कुष्ठसंयुक्तं चाण्डालं च गवाशिनम् । निर्धूतं ज्ञानहीनं च दूरतः परिवर्जयेत् ॥
स्त्रियं दुष्टां च दुर्वृत्तामपवादप्रदायिनीम् । कुकर्मकारिणीं दुष्टां सदैव कलहप्रियाम्
प्रमत्तामधिकाङ्क्षीञ्च निर्लज्जां बाह्यचारिणीम् ।
व्ययशीलामनाचारां दूरतः परिवर्जयेत् ॥ १०४ ॥
मलिनां नाभिवन्देत गुरुपत्नीं कदाचन । न स्पृशेत्तां च मेधावी स्पृष्ट्वा स्नानेन शुद्ध्यति
स तया सह केलिं च वर्जयेच्च सदैव हि । शृणुयाच्च वचो नूनं न पश्येच्च गुरोःस्त्रियम्
वधूं पुत्रस्य भ्रातुश्च स्वपुत्रीं युवतीं ध्रुवम् । अन्यां च गुरुपत्नीं च नेक्षेत्स्पर्शं न कारयेत्
ताभिः सह कथालापं तथा भ्रूभङ्गदर्शनम् ।
कलहं निस्त्रपां वाणीं सदैव परिवर्जयेत् ॥ १०८ ॥
न दद्याच्च सदापादं तुषाङ्गारास्थिभस्मसु ।
कार्पासास्थिषु निर्माल्योचितिकाष्ठेचितौ गुरौ ॥ १०६ ॥
शुष्कं मीनं न भक्षेत पूतिगन्धिममेध्यकम् । विघसं चान्यदुच्छिष्टंपाकार्थं च परस्य च
नस्थातव्यं नगन्तव्यं क्षणमप्यसता सह । न तिष्ठेच्च क्षणंधीरो दीपच्छाये कलिद्रुमे ॥
अस्पृश्यैस्सह चालापं पतितैः कुपितैः सह ।
न कुर्यात्क्षणमात्रं तु कृत्वा गच्छेच्च रौरवम् ॥ ११२ ॥
कनिष्ठं नाभिवन्देत पितृव्यं मातुलं तथा ।
उत्थाय चासनं दद्यात्कृताञ्जल्यग्रतः स्थितः ॥ ११३ ॥
तैलाभ्यक्तं ततोच्छिष्टमार्द्रवस्त्रं च रोगिणम् ।
पारावारगतोद्विग्नं वहन्तं नाभिवादयेत् ॥ ११४ ॥
यज्ञस्यान्तर्गतं नष्टं क्रीडन्तंस्त्रीजनैः सह । बालक्रीडागतं चापि पुष्पयुक्तं कुशैर्युतम् ॥
शिरः प्रावृत्य कर्णौ वा अप्सु मुक्तशिखोऽपि वा ।

अकृत्वा पादयोः पूजां नाचामेद्दु दक्षिणामुखः ॥ ११६ ॥
उपवीतविहीनश्च नग्नको मुक्तकच्छकः । एकवस्त्रपिधानश्च आचान्तोनैव शुद्धयति ॥
मध्यमाभिर्मुखं पूर्वंतिसृभिः समुपस्पृशेत् । अङ्गुष्ठदेशिनीभ्यां च नासां च तदनन्तरम् ॥
अङ्गुष्ठानाम्निकाभ्यां च चक्षुषी समुपस्पृशेत् । कनिष्ठाङ्गुष्ठतश्श्रोत्रे नाभिमङ्गुष्ठकेन तु
तलेन हृदयं न्यस्य सर्वाभिर्मस्तकोपरि । बाहूचाग्रेण संस्पृस्य ततः शुद्धो भवेन्नरः ॥
अनेनाचमनं कृत्वा मानवः प्रयतो भवेत् । सर्वपापैर्विनिर्मुक्तः स्वर्गं चाक्षयमश्नुते ॥
प्राणस्त्रिपुटशङ्ख्या च व्यानोऽपानश्च मुद्रया । समानस्तु समस्ताभिरुदानस्तर्जनींविना
नागःकूर्मश्च कृकरो देवदत्तो धनञ्जयः । उपप्रीणन्तु ते प्रीता येभ्यो भूमौ प्रदीयते ॥
शयनं चार्द्रपादेन शुष्कपादेन भोजनम् । नान्धकारे च शयनं भोजनं नैव कारयेत् ॥
पश्चिमे दक्षिणे चैव न कुर्याद्दन्तधावनम् । उत्तरे पश्चिमेचैव न स्वपेद्धि कदाचन १२५॥
स्वप्नादायुःक्षयं याति ब्रह्महा पुरुषो भवेत् । न कुर्वीत ततःस्वप्नंशस्तं च पूर्वदक्षिणम्

आयुष्यं प्राङ्मुखो भुंक्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुंक्ते यशोभुंक्त उदङ्मुखः ॥ १२७ ॥

प्राच्यां नरो लभेदायुर्याम्यां प्रेतत्वमश्नुते । वारुणे च भवेद्रोगी आयुर्वित्तं तथोत्तरे ॥
देवानामेकभुक्तं तु द्विभुक्तंस्यान्नरस्य च । त्रिभुक्तं प्रेतदैत्यस्य चतुर्थंकौणपस्य तु ॥
निरामिषं हविर्देवा मत्स्यमांसादि मानुषाः । पूतिपर्युषितं दुष्टमन्ये भुञ्जन्त्यनावृताः ॥

स्वर्गस्थितानामिह जीवलोके चत्वारि तेषां हृदये वसन्ति ।
दानं प्रशस्तं मधुरा च वाणी देवार्चनं ब्राह्मणतर्पणं च ॥ १३१ ॥
कार्पण्यवृत्तिः स्वजनेषु निन्दा कुचैलता नीचजनेषु भक्तिः ।
अतीवरोषः कटुका च वाणी नरस्य चिह्नं नरकागतस्य ॥ १३२ ॥

नवनीतोपमावाणी करुणाकोमलं मनः । धर्मवीजप्रसूतानामेतत्प्रत्यक्षलक्षणम् ॥ १३३॥
दयादरिद्रहृदयं वचः क्रकचकर्कशम् । पापवीजप्रसूतानामेतत्प्रत्यक्षलक्षणम् ॥ १३४ ॥
श्रावयेच्छृणुयाद्वापि सदाचारादिकंनरः। आचारादेःफलंलब्ध्वा पापात्पूतोऽच्युतो दिवि

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे सदाचारवर्णनं नामैकपञ्चाशोऽध्यायः ।

# द्विपञ्चाशत्तमोऽध्यायः

## पित्रर्चाप्रशंसायां मूकाख्यानम् ।

भीष्म उवाच ।

यत्पुण्यमधिकंलोके सर्वदा सर्वसंमतम् । तद्वदस्वेच्छया विप्र यत्कृतं पूर्वपूर्वकैः ॥

पुलस्त्य उवाच ।

एकदा तु द्विजाः सर्वे व्यासशिष्यास्सहादरात् ।
व्यासं प्रणम्य पप्रच्छुर्धर्मं मां च यथा भवान् ॥ २ ॥

द्विजा ऊचुः ।

पुण्यात्पुण्यतमं लोके सर्वधर्मेषु चोत्तमम् । किं कृत्वा मानवाःस्वर्गं भुञ्जते चाक्षयंवद
लभ्यंचाकष्टकं शुद्धं वर्णानां मर्त्यवासिनाम् । गुरूणां च लघूनां च साध्यमेकक्रतुं वद
यद्यत्कृत्वा च देवानां पूज्योनाके भवेन्नरः । तत्तद्वद च नो ब्रह्मन्प्रसादी भवधर्मतः ॥५॥

व्यास उवाच ।

पञ्चाख्यानं वदिष्यामि शृणुध्वं तत्रपूर्वतः । पञ्चनामेककं कृत्वा विन्दन्मोक्षं दिवं यशः
पित्रोरर्चाऽथ पत्युश्च साम्यं सर्वजनेषु च । मित्राद्रोहो विष्णुभक्तिरेतेप ञ्च महामखाः
प्राक्पित्रोरर्चया विप्रा यद्धर्मं साधयेन्नरः । न तत्क्रतुशतैरेव तीर्थयात्रादिभिर्भुवि ॥
पिताधर्मः पिता स्वर्गः पिता हि परमं तपः । पितरि प्रीतिमापन्ने प्रीयन्ते सर्वदेवताः ॥
पितरो यस्य तृप्यन्ति सेवया च गुणेन च । तस्यभागीरथीस्नानमहन्यहनि वर्तते ॥
सर्वतीर्थमयी माता सर्वदेवमयः पिता । मातरं पितरं तस्मात्सर्वयत्नेन पूजयेत् ॥११॥
मातरं पितरं चैव यस्तु कुर्यात्प्रदक्षिणम् । प्रदक्षिणीकृता तेन सप्तद्वीपावसुन्धरा ॥

जानुनी च करौ यस्य पित्रोः प्रणमतः शिरः ।
निपतन्ति पृथिव्यां च सोऽक्षयां लभते दिवम् ॥ १३ ॥

तयोश्चरणयोर्यावद्रजश्चिह्नानि मस्तके । प्रतीके च विलग्नानि तावत्पूतः सुतस्तयोः ॥
पादारविन्दसलिलं यः पित्रोः पिबतेसुतः । तस्य पापं क्षयं याति जन्मकोटिशतार्जितम्

धन्योऽसौ मानवो लोके पूतोऽसौ सर्वकल्मषात् ।
विनायकत्वमाप्नोति जन्मनैकेन मानवः ॥ १६ ॥
पितरौलङ्घयेद्यस्तु वचोभिः पुरुषाधमः । निरये च वसेत्तावद्यावदाभूतसम्प्लवम् ॥
पित्रोरनर्चनं कृत्वा भुङ्क्ते यस्तु सुताधमः । कृमिकूपेऽथनरके कल्पान्तमुपतिष्ठति ॥
रोगिणं चापि वृद्धं च पितरंवृत्तिकर्शितम् । विकलंनेत्रकर्णाभ्यांत्यक्त्वागच्छेद्धरौरवम्
अन्त्यजातिषु म्लेच्छेषु चाण्डालेष्वपिजायते । पित्रोरपोषणं कृत्वासर्वपुण्यक्षयोभवेत्
नाराध्य पितरौ पुत्रस्तीर्थदेवान्भजन्नपि ।
तयोर्न फलमाप्नोति कीटवद्भ्रमते महीम् ॥ २१ ॥
कथयामि पुरा वृत्तंविप्राः शृणुत यत्नतः । यं श्रुत्वा न पुनर्मोहं प्रयास्यथ पुनर्भुवि ॥
पुराऽऽसीच्च द्विजः कश्चिन्नरोत्तम इतिस्मृतः । स्वपितरावनादृत्य गतोऽसौ तीर्थसेवया
ततःसर्वाणि तीर्थानि गच्छतो ब्राह्मणस्य च । आकाशे स्नानचैलानिप्रशुष्यन्तिदिनेदिने
अहङ्कारोऽविशत्तस्य मानसे ब्राह्मणस्य च ।
मत्समो नास्ति वै कश्चित्पुण्यकर्मा महायशाः ॥ २५ ॥
इत्युक्ते चानने तस्य अदहच्च बकस्तदा । क्रोधाच्चैवेरितस्तस्य स शशापद्विजो बकम्
पपात च बकः पृथ्व्यां स भस्मीभूतविग्रहः । भीर्द्विजेन्द्रं महामोहःप्राविशच्चान्तकर्मणि
ततः पापाच्च विप्रस्य चैलं खे च न गच्छति । विषादमगमत्सद्यस्ततः खे तमुवाचह ॥

देववाण्युवाच ।

गच्छ वाडव चाण्डालं मूकं परमधार्मिकम् । तत्रधर्मं च जानीषे क्षेमं ते तद्वचोभवेत्

व्यास उवाच ।

खाच्च तद्वचनं श्रुत्वा गतोऽसौमूकमन्दिरम् । शुश्रूषन्तं च पितरौ सर्वारम्भान्ददर्श सः
ददतं शीतकाले च सम्यगुष्णं जलं तयोः । तैलतापनताम्बूलं तथा तूलवतीं पटीम् ॥
नित्याशनं च मिष्टान्नं दुग्धखण्डंतथैव च । दापयन्तं वसन्ते च मधुमालां सुगन्धिकाम्
अन्यानि यानि भोग्यानि कृत्यानि विविधानि च ।
उष्णे चावीजयत्सोऽपि नित्यं च पितरावपि ॥ ३२ ॥

ततस्तयोःप्रचर्यां च कृत्वाभुङ्क्तेऽथसर्वदा । श्रमस्य वारणं कुर्यात्सन्तापस्य तथैव च

एभिः पुण्यैः स्थितो विष्णुस्तस्य गेहोदरे चिरम् ।

अन्तरिक्षे च क्रीडन्तमाधारस्तम्भवर्जिते ॥ ३५ ॥

तस्यापि भवने नित्यं स्थितं त्रिभुवनेश्वरम् । विप्ररूपधरं कान्तं नान्यैर्भूतं च सत्परम्

तेजोमयं महासत्त्वं शोभयन्तं च मन्दिरम् । दृष्ट्वा विस्मयमापन्नो विप्रःप्रोवाचमूककम्

विप्र उवाच ।

आसन्नं च ममागच्छ त्वयैवेच्छामि शाश्वतम् । हितं मेसर्वलोकानां तत्त्वतो वक्तुमर्हसि

मूक उवाच ।

पित्रोरर्चांकरोम्यद्य कथमायामि तेऽन्तिकम् । अर्चयित्वा तु पितरौ कृत्यंतेकरवाणि वै

तिष्ठ मे द्वारदेशे च आतिथ्यं ते करोम्यहम् ॥ ४० ॥

व्यास उवाच ।

इत्युक्ते चैव चाण्डाले चुकोप ब्राह्मणस्तदा ॥ ४१ ॥

ब्राह्मण उवाच ।

ब्राह्मणं मां परित्यज्य किंकार्यमधिकं तव ॥ ४२ ॥

मूक उवाच ।

किं कुप्यसि वृथा विप्र न बकोऽहं तवाधुना ।

कोपस्सिद्ध्यति ते तावद् बकेनान्यत्र किंचन ॥ ४३ ॥

गगने स्नानशाटीते न शुष्यति न तिष्ठति। वचनं खात्ततः श्रुत्वा मद्गृहं चागतो भवान्

तिष्ठ तिष्ठ वदिष्यामि नो चेद्गच्छपतिव्रताम् । तां च दृष्ट्वा द्विजश्रेष्ठ दयितं तेफलिष्यति

व्यास उवाच ।

ततस्तस्यगृहाद्विष्णुर्द्विजरूपधरो विभुः । विनिस्सृत्य द्विजं प्राह गेहं तस्याः प्रयाम्यहम्

स विमृश्यद्विजश्रेष्ठस्तेन सार्धं चचाल ह । गच्छन्तं तमुवाचेदं हरिं विप्रोऽतिविस्मितः

विप्र उवाच ।

किमर्थं च त्वया विप्र चाण्डालस्य गृहोदरे । सदा संस्थीयते तात योषाजनवृते मुदा

हरिरुवाच ।

इदानीं मानसं शुद्धं न भूतं भवतो ध्रुवम् । पतिव्रतादिकं दृष्ट्वा पश्चाज्ज्ञास्यसि मांकिल

विप्र उवाच ।

पतिव्रता च का तात किं वा तस्याश्श्रुतंमहत् । येनाहंतत्रगच्छामि कारणं वद मे द्विज

हरिरुवाच ।

नदीनां जाह्नवी श्रेष्ठा प्रमदानां पतिव्रता । मनुष्याणां प्रजापालो देवानां च जनार्दनः ॥
पतिव्रता च या नारीपत्युर्नीत्यं हितेरता । कुलद्वयस्य पुरुषानुद्धरेत्सा शतं शतम् ॥५२॥
स्वर्गं भुनक्ति तावच्च यावदाभूतसम्प्लवम् । स्वर्गाद्भ्रष्टो भवेद्वास्याःसार्वभौमोनृपःपतिः
अस्यैव महिषी भूत्वा सुखं विन्देदनन्तरम् । पुनः पुनः स्वर्गराज्यं तस्य तस्यान संशयः
एवं जन्मशतं प्राप्य अन्ते मोक्षोभवेद्ध्रुवम् ॥

विप्र उवाच ।

पतिव्रता भवेत्कावातस्या किं वा च लक्षणम् । ब्रूहिमेद्विजशार्दूल यथाजानामि तत्त्वतः

हरिरुवाच ।

पुत्राच्छतगुणं स्नेहाद्राजानं च भयादथ । आराधयेत्पतिंशौरिं या पश्येत्सा पतिव्रता
कार्येदासी रतौ वेश्या भोजने जननीसमा । विपत्सु मन्त्रिणीभर्तुःसा च भार्यापतिव्रता
भर्तुराज्ञां न लङ्घेद्यामनोवाक्कायकर्मभिः । भुक्ते पत्यौ सदा चात्ति साच भार्या पतिव्रता
यस्यां यस्यां तु शय्यायां पतिः स्वपिति यत्नतः ।
तत्र तत्र च सा भर्तुरर्चां करोति नित्यशः ॥ ६० ॥
नैवमत्सरमायाति न कार्पण्यं न मानिनी । मानेऽमाने समानं च या पश्येत्सा पतिव्रता
सुवेषं या नरं दृष्ट्वा भ्रातरं पितरं सुतम् । मन्यते च परं साध्वी सा च भार्या पतिव्रता
तां गच्छ द्विजशार्दूल वद कामं यथा तव । तस्यपत्न्योऽष्ट तिष्ठन्ति तन्मध्येवरवर्णिनी
रूपयौवनसम्पन्ना दयायुक्तायशस्विनी । शुभानामेति विख्याता गत्वा तां पृच्छतेहितम्

व्यास उवाच ।

एवमुक्त्वा तु भगवांस्तत्रैवान्तरधीयत । तस्यैवादृश्यतां दृष्ट्वा विस्मितोऽभूद्द्विजस्तदा

स च साध्वी गृहंगत्वा पप्रच्छाथ पतिव्रताम् ।
अतिथेर्वचनं श्रुत्वा गृहान्निःसृत्य सम्भ्रमात् ॥ ६६ ॥
दृष्ट्वा द्विजं सती तत्र द्वारदेशस्थिता भवत् । तां च दृष्ट्वा द्विजश्रेष्ठ उवाच वचनं मुदा ॥

विप्र उवाच ।

प्रियं मम हितं ब्रूहि यथादृष्टं त्वमेव हि ॥ ६८ ॥

पतिव्रतोवाच ।

साम्प्रतंपत्युरर्चास्ति नचास्माकंस्वतन्त्रता । पश्चात्कार्यंकरिष्यामि गृहाणातिथ्यमद्यवै

विप्र उवाच ।

ममदेहे क्षुधा नास्ति पिपासाद्य न च श्रमः । अभीष्टं वद कल्याणि नोचेच्छापंददामिते

व्यास उवाच ।

तमुवाच तदा सापि न बकोऽहं द्विजोत्तम । गच्छ धर्मतुलाधारं पृच्छ तं ते हितं द्विज
इत्युक्त्वा सा महाभागा प्रययौ च गृहोदरम् ।
तत्रापश्यद्द्विजो विप्रं यथा चाण्डालवेश्मनि ॥ ७२ ॥
विमृश्यविस्मयापन्नस्तेनसार्धं ययौद्विजः । तिष्ठन्तंचद्विजं तं च सोऽपश्यद्धृष्टमानसम्
स चोवाच मुदा विप्रं दृष्ट्वा तं तां सतीं च सः ॥ ७४ ॥

विप्र उवाच ।

देशान्तरेच यद्वृत्तं तया च कथितंकिल । कथंजानाति मद्वृत्तं चाण्डालोऽपिपतिव्रता
अतो मे विस्मयस्तात किमाश्चर्यंपरं महत् ॥ ७५ ॥

हरिरुवाच ।

ज्ञायते कारणं तात सर्वेषां भूतभावनः । अतिपुण्यात्सदाचाराद्यतस्त्वं विस्मयं गतः ॥
किमुक्तश्च तया त्वं च वद तत्साम्प्रतं मुने ॥ ७६ ॥

विप्र उवाच ।

प्रष्टुं धर्मं तुलाधारं सा च मां समुपादिशत ॥ ७७ ॥

हरिरुवाच ।

आगच्छमुनिशार्दूल अहं गच्छामि तं प्रति । गच्छन्तं च हरिं प्राह तुलाधारः क्व तिष्ठति

हरिरुवाच ।

जनानां निकरो यत्र बहुद्रव्यसुविक्रये । विक्रीणाति च क्रीणाति तुलाधारस्ततस्ततः
जनो यवान्नसं स्नेहं कूटमन्नस्य सञ्चयम् । सर्वं तस्य मुखादेव गृह्णाति च ददात्यपि ॥
सत्यं त्यक्त्वाऽनृतं किंचित्प्राणान्ते समुपस्थिते । नोक्तं नरवरश्रेष्ठस्तेन धर्मतुलाधरः

व्यास उवाच ।

इत्युक्ते तु तमद्राक्षीद्विक्रीणन्तं रसान्बहून् । मलपङ्कधरं मर्त्यं दन्तकुड्मलपङ्क्लिम् ॥

तत्र वस्तुधनोत्थां च भाषन्तं विविधां गिरम् ।
वृतं बहुविधैर्मर्त्यैः स्त्रीभिः पुम्भिश्च सर्वतः ।
कथं कथमिति प्राह स तं मधुरया गिरा ॥ ८३ ॥

विप्र उवाच ।

धर्मस्य मे समुद्देशं वद प्राप्तोऽन्तिकं हि ते ॥ ८४ ॥

तुलाधार उवाच ।

यावज्जनाःप्रतिष्ठन्ति ममैवसन्निधौ द्विज । तावन्मेस्वस्थतानास्ति यावद्यात्रियामकः
तच्चोपदेशमादाय गच्छ धर्माकरं प्रति । बकस्य मरणे दोषं खे च वस्त्राविशोषणम् ॥
सर्वं तत्र च जानीषे सज्जनाद्रोहकं व्रज । तत्र तस्योपदेशेन तव कामः फलिष्यति ॥

व्यास उवाच ।

इत्युक्त्वा तं तुलाधारः करोति क्रयविक्रयौ ॥ ८८ ॥

विप्र उवाच ।

तथा तात गमिष्यामि सज्जनाद्रोहकं प्रति । तुलाधार समुद्देशान्न जानामि तदालयम्

हरिरुवाच ।

एह्यागच्छ गमिष्यामि त्वया सार्द्धं च तद्गृहम् ।
अथ वर्त्मनि गच्छन्तमुवाच ब्राह्मणो हरिम् ॥ ९०

विप्र उवाच ।

तुलाधारस्य न स्नानं न देवपितृतर्पणम् । मलदिग्धं च गात्रं तु सर्वं चैलमलक्षणम् ॥
कथं जानाति मद्वृत्तं देशान्तरसमुद्भवम् । अतो मे विस्मयस्तात सर्वं त्वं वद कारणम्

हरिरुवाच ।

सत्येन समभावेन जितं तेन जगत्त्रयम् । तेनातृप्यन्त पितरो देवा मुनिगणैः सह ॥
भूतभव्यप्रवृत्तं च तेन जानाति धार्मिकः । नास्तिसत्यात्परो धर्मो नानृतात्पातकंपरम्
विशेषे समभावस्य पुरुषस्यानघस्य च । अरौ मित्रेऽप्युदासीने मनो यस्य समं व्रजेत्
सर्वपापक्षयस्तस्य विष्णुसायुज्यतां व्रजेत् ॥ ९५ ॥
एवं यो वर्तते नित्यं कुलकोटिं समुद्धरेत् । समो धर्मः समः स्वर्गः समं हि परमं तपः
यस्यैव मानसे नित्यं समः स पुरुषोत्तमः ॥ ९६ ॥
सत्यं दमः शमश्चैव धैर्यं स्थैर्यमलोभता । अनाश्चर्यमनालस्यं तस्मिन्सर्वं प्रतिष्ठितम्
तेन वै देवलोकस्य नरलोकस्य सर्वशः । वृत्तं जानाति धर्मज्ञस्तस्य देहे स्थितो हरिः
लोके तस्य समो नास्ति समः सत्यार्जवेषु च ।
स च धर्ममयः साक्षात्तेनैव धारितं जगत् ॥ ९९ ॥

द्विज उवाच ।

ज्ञातंमे त्वत्प्रसादाच्च तुलाधारस्यकारणम् । अद्रोहकस्ययद्वृत्तंतद् ब्रूहि त्वंयदीच्छसि

हरिरुवाच ।

पुरैव राजपुत्रस्य कुलस्त्री नवयौवना । पत्नीव कामदेवस्य शचीव वासवस्य च ॥
तस्य प्राणसमा भार्या सुन्दरी नामसुन्दरी । अकस्मात्पार्थिवश्चैव कार्ये गन्तुंसमुद्यतः
मनसाऽऽलोचितं तेन प्राणेभ्योऽपि गरीयसीम् ।
कस्मिन्स्थाने स्थापयामि यतो रक्षा भवेद् ध्रुवम् ॥ १०३ ॥
इत्यालोच्यैवसहसा त्वागतोऽस्य गृहंप्रति । उक्तंच तादृशं वाक्यं श्रुत्वासविस्मयंगतः

अद्रोहक उवाच ।

न तातस्ते न च भ्राता न चाहं तव बान्धवः। पितृमातृकुलस्यैव तस्या न हि सुहृज्जनः

कथं च मद्गृहे तात स्थित्वा स्वस्थो भविष्यसि॥१०५ ॥

हरिरुवाच ।

एतस्मिन्नन्तरे तेन चोक्तं वाक्यं यथोचितम् ॥ १०६ ॥

राजपुत्र उवाच ।

लोके त्वत्सदृशो नास्ति धर्मज्ञो विजितेन्द्रियः ॥ ७ ॥

हरिरुवाच ।

स चाहतं च सर्वज्ञं वक्तुं नार्हसिदूषणम् । त्रैलोक्यमोहिनीं भार्यां कः पुमान्रक्षितुं क्षमः

राजपुत्र उवाच ।

धरण्यां परिविज्ञाय त्वागतोऽहं तवान्तिकम् ।

एषा तिष्ठतु तेऽगारे व्रजामि निजमन्दिरम् ॥ १०६ ॥

हरिरुवाच ।

इत्युक्ते स पुनःप्राह नगरेऽस्मिन्प्रशोभने । वहुकामुकसम्पूर्णे कथं रक्षाभवेत् स्त्रियाः

स चोवाच पुनस्तं च कुरु रक्षां व्रजाम्यहम् ।

गृहस्थः सङ्कटादाह धर्मस्य राजपुत्रकम् ॥ १११ ॥

अद्रोहक उवाच ।

करोम्यनुचितं कार्यं स्वदास्यमुचितं हितम् । सदाचैवेदृशी भार्या स्थातव्या मद्गृहे पितः

अरक्षा रक्षणे देव वदाभीष्टं कुरुप्रियम् । मम तल्पे मयासार्धं शयाना भार्यया सह ॥

मन्यसे दैवतं स्वं चेत्तिष्ठेन्नोचेत्तु गच्छतु ॥ ११३ ॥

हरिरुवाच ।

क्षणं विमृश्य तं प्राह राजपुत्रः पुनस्तदा ॥ ११४ ॥

राजपुत्र उवाच ।

वाढमेतद्वचस्तात यथाभीष्टं तथा कुरु ॥ ११५ ॥

हरिरुवाच ।

ततो भार्यां जगादाथ अस्य वाक्याच्छिवाशिवम् ।

कर्तव्यं च न ते दोष आज्ञया मम सुन्दरि ॥ ११६ ॥
एतदुक्त्वागतःसोऽपि भूपतेःशासनात्पितुः। अनन्तरं क्षपायां च यदुक्तं च तथा कृतम्
योषितोर्मध्यगःसोऽपि नित्यं स्वपिति धार्मिकः।
धर्मान्नचलते सोऽपि स्वभार्या परभार्ययोः ॥ ११८ ॥
संस्पर्शात्स्वस्त्रियश्चास्य कामाभिलषितं मनः। तस्याःसंसर्गतश्चैव दुहितेव प्रमन्यते॥
स्तनौ तस्यास्तु पृष्ठे च लगन्तौ च पुनःपुनः। बालकस्येव पुत्रस्य स्तनौमातुःसमन्यते
तस्या अङ्गानि चाङ्गेषु लगन्ति च पुनःपुनः।
ततो मातुस्सुतस्येव सोऽमन्यत दिने दिने ॥ १२१ ॥
तस्य योषासु संसर्गा निवृत्तस्त्वभवत्ततः। एवंसंवत्सरस्यार्द्धे तत्पतिश्चागतःपुरम्॥
अपृच्छन्तं च लोकेषुतस्यावृत्तमथोदितम्। केचिद्बद्रंबोधयन्तोयुवानोऽपिसुविस्मिताः
केचिदाहुस्त्वया दत्ता तया सार्द्धं स्वपित्यसौ।
स्त्रीपुंसोरेकसंसर्गाच्छान्तता तु कथं भवेत् ॥ १२४ ॥
तस्यां यस्याभिलाषोऽस्ति न पृष्टस्सवदेद्युवा।
लोकानां कुश्रुतिवार्ता तेन पुण्यबलाच्छ्रुता ॥ १२५ ॥
जनापवादमोक्षार्थं बुद्धिस्तस्याभवच्छुभा। दारूणिस्वयमाहृत्याजिज्वलत्समहानलम्॥
एतस्मिन्नन्तरे तात राजपुत्रःप्रतापवान्। आगमत्तद्गृहंसद्यः सोऽपश्यत्तां च योषितम्
प्रोत्फुल्लवदनांनारीं प्रविषादगतं नरम्। अनयोर्मानसंज्ञात्वा राजपुत्रोऽवदद्वचः ॥१२८॥
राजपुत्र उवाच।
किं न सम्भाषसे मां च मित्रकं चिरमागतम् ॥ १२९ ॥
हरिरुवाच।
अब्रवीत्सोऽपि धर्मात्मा राजपुत्रमनष्टधीः ॥ १३० ॥
अद्रोहक उवाच।
यत्कृतं दुष्करं कर्म मयात्वद्धितकारणात्। सर्वं व्यर्थमहंमन्ये जनानां च प्रवादतः॥
अद्य वह्निमहं यास्ये प्रपश्यन्तु नरास्सुराः ॥ १३१ ॥

हरिरुवाच ।

इत्युक्त्वा स महाभागः प्रविवेश हुताशनम् । विशतस्तस्य वह्नौ न कुसुमं चिकुरालये

नाङ्गमस्यानलोऽधाक्षीन्न च वस्त्रं न कुन्तलम् ।

खे च देवा मुदासर्वे साधुसाध्वीति चाब्रुवन् ॥ १३३ ॥

अपतन्पुष्पवर्षाणि तस्यमूर्ध्नि समन्ततः । यैर्यैश्च दुष्कृतंवाक्यं गदितं तावुभौप्रति ॥

तेषांमुखे प्रजायन्ते कुष्ठानि विविधानि च । तत्रागत्य च देवाश्चवह्नेराकृष्य तं मुदा

अपूजयन्सुपुष्पैश्च मुनयो विस्मयंगताः । सर्वैर्मुनिवरैरेवं मनुष्यैर्विविधैस्तदा ॥१३६॥

अर्च्यतेतु महातेजाः स च सर्वानपूजयत् । सज्जनाद्रोहकं नाम कृतं देवासुरैर्नृभिः ॥

तस्यपादरजः पूता सस्यपूर्णाऽधरा भवत् । सुराश्चाहुश्च तं तत्र भार्या ते सम्प्रगृह्यताम्

एतस्य सदृशोलोके न भूतो न भविष्यति ।

नास्तीति साम्प्रतं पृथ्व्यां कामलोभाजितः पुमान् ॥ १३९ ॥

देवासुरमनुष्याणां रक्षसां मृगपक्षिणाम् ॥

कीटादीनां च सर्वेषां कामएष सुदुर्जयः ॥ १४० ॥

कामाल्लोभात्तथाक्रोधान्नित्यं सत्त्वेषु जायते ।

संसारबन्धकःकामो ह्यकामो न कचिद्भवेत् ॥ १४१ ॥

अनेनैवजितं सर्वं भुवनानि चतुर्दश । अमुष्य हृदयेनित्यं वासुदेवोमुदास्थितः ॥१४२॥

एवंस्पृष्ट्वाऽथ दृष्ट्वा तं मनुष्याः सर्वकल्मषात् । पूयन्ते ह्यनघाश्चैवलभन्ते चाक्षयांदिवम्

एवमुक्त्वा गतादेवा विमानैश्च दिवंमुदा । मनुष्याः प्रययुस्तुष्टा दम्पती स्वं गृहं तथा ॥

दिव्यं चक्षुस्तदा तस्य चासीद्देवान्स पश्यति ।

त्रैलोक्यस्य च वार्त्तां च जानाति लीलया भृशम् ॥ १४५ ॥

ततस्तस्य च वीथ्यां च दृष्टस्तेन सहैव सः। स पप्रच्छ मुदातं च धर्मादिशं हितं वद ॥

सज्जनाद्रोह उवाच ।

गच्छ वाडव धर्मज्ञ वैष्णवं पुरुषोत्तमम् । तं च दृष्ट्वा त्वभीष्टं ते साम्प्रतं च फलिष्यति

बकस्य निधनं यद्वावस्त्रस्याशोषणंतथा । जानीषेचापरोयश्च कामस्तेऽस्तिहृदिस्थितः

व्यास उवाच ।

एतच्छ्रुत्वा तु वचनमागतो वैष्णवं प्रति । विष्णुरूपद्विजेनैव सार्द्धं तेन मुदा ययौ ॥
अपश्यत्पुरुषं शुद्धं ज्वलन्तं च पुरः स्थितम् । सर्वलक्षणसम्पूर्णं दीप्यमानं स्वतेजसा
अब्रवीत्स च धर्मात्मा ध्यानस्थं च हरेः प्रियम् ॥ १५१ ॥

विप्र उवाच ।

वद नो यद्यद्वृत्तं वै दूरात्त्वां चागतो ह्यहम् ॥ १५२ ॥

वैष्णव उवाच ।

प्रसन्नस्ते सुरश्रेष्ठो दानवारीश्वरःसदा । दृष्ट्वा त्वां च मनोऽस्माकं हृष्यतीचाधुनाद्विज
कल्याणं चातुलं तेऽद्य फलिष्यति मनोरथः ।
सुखवर्त्मनि ते नित्यं चैलं शुष्यन्ति नान्यथा ॥
दृष्ट्वा देवं सुरश्रेष्ठं मम गेहे हरिं स्थितम् ॥ १५४ ॥

व्यास उवाच ।

इत्युक्ते वैष्णवेनाथ स तु तं पुनरब्रवीत् ॥ १५५ ॥

विप्र उवाच ।

कासौ विष्णुः स्थितो नित्यं दर्शयाद्य प्रसादतः ॥ १५६ ॥

वैष्णव उवाच ।

अस्मिन्देवगृहे रम्ये प्रविश्य परमेश्वरम् । तं दृष्ट्वा किल्बिषाद्घोरान्मुच्यसे जन्मबन्धनात्

व्यास उवाच ।

तस्य तद्वचनं श्रुत्वा प्रविश्य सदनं प्रति । अपश्यत्तं द्विजं विष्णुं तिष्ठन्तं पद्मतल्पके ॥
शिरसैव प्रवन्द्याथ जग्राह चरणौ मुदा । प्रसादी भवदेवेश न ज्ञातस्त्वं पुरामया ॥
इहामुत्र च देवेश तवाहं किङ्करः प्रभो । अनुग्रहश्च मे दृष्टो भवतो मधुसूदन ॥१६०॥
रूपं ते द्रष्टुमिच्छामि यदि चास्ति कृपा मयि ॥ १६१ ॥

विष्णुरुवाच ।

अस्ति मे त्वयि भूदेव प्रियत्वं च सदैव हि । स्नेहात्पुण्यवतामेव दर्शनं कारितं मया

दर्शनात्स्पर्शनाद्ध्यानात्कीर्तनाद्भाषणात्तथा । सकृत्पुण्यवतामेव स्वर्गं चाक्षयमश्नुते ॥

नित्यमेव तु संसर्गात्सर्वपापक्षयो भवेत् ।
भुक्त्वा सुखमनन्तं च मद्देहे प्रविलीयते ॥ ६४ ॥

स्नात्वा च पुण्यतीर्थेषु दृष्ट्वा मां चैव सर्वतः । दृष्ट्वा पुण्यवतां देशान्ममदेहे विलीयते ॥

कथयित्वा कथां पुण्यां लोकानामग्रतः सदा । स चैव नरशार्दूल मद्देहे प्रविलीयते ॥

उपोष्य वासरेऽस्माकं श्रुत्वा मच्चरितं ध्रुवम् ।
रात्रौ जागरणं कृत्वा मद्देहे प्रविलीयते ॥ ६७ ॥

अत्यन्तघोषणो नृत्यगीतवाद्यादिकैस्सदा । नामस्मरन्द्विजश्रेष्ठ मद्देहे प्रविलीयते ॥६८॥

मङ्कस्तीर्थभूतश्च त्वमेव बकमारणात् । यत्पापं तस्य मोक्षाय सखे स्थित्वाऽउवाच ह

गच्छ मूकं महात्मानं तीर्थपुण्यवतां वरम् । मूकस्य दर्शनात्तात सर्वे दृष्टा महाजनाः

तेषां च दर्शनादेव तथा सम्भाषणान्मम । मम सम्पर्कभावाच्च मद्गृहं चागतो भवान्

जन्मकोटिसहस्रेभ्यो यस्य पापक्षयो भवेत् ।
स मां पश्यति धर्मज्ञो यथा तेन प्रसन्नता ॥ १७२ ॥

ममैवानुग्रहाद्वत्स अहं दृष्टस्त्वयाऽनघ । तस्माद्वरं गृहाण त्वं यत्ते मनसि वर्तते ॥१७३

विप्र उवाच ।

अस्माकं सर्वथा नाथमानसं त्वयि तिष्ठतु । त्वद्वृते सर्वलोकेश कदाचिन्न तु रोचताम्

माधव उवाच ।

यस्मादेतादृशीबुद्धिः स्फुरते ते सदाऽनघ । तस्मान्मत्सदृशान्भोगान्मद्गेहे संप्रलप्स्यसे

किं तु ते पितरौपूजामाप्नुतो न त्वयाऽनघ । पूजयित्वातु पितरौ पश्चाद्यास्यसिमत्तनुम्

तयोर्निश्श्वासवातेन मन्युना च भृशं पुनः ।
तपः क्षरति ते नित्यं तस्मात्पूजयतौ द्विज ॥ १७७ ॥

मन्युर्निपतते यस्मिन्पुत्रे पित्रोश्च नित्यशः । तन्निरयं न बाधेऽहं न धाता न च शङ्करः

तस्मात्त्वं पितरौ गच्छ कुरु पूजां प्रयत्नतः ।
ततस्त्वं हि तयोरेव प्रसादान्मत्पदं व्रज ॥ १७९ ॥

व्यास उवाच ।

इत्युक्ते तु द्विजश्रेष्ठः पुनराह जगद्गुरुम् ॥ १८० ॥

विप्र उवाच ।

प्रसन्नो यदि मे नाथ रूपं स्वं दर्शयाच्युत ॥ १८१ ॥

व्यास उवाच ।

ततो द्विजप्रणयतः प्रसन्नहृदयो वशी । रूपं स्वं दर्शयामास ब्रह्मण्यो ब्रह्मकर्मणे॥१८२॥
शङ्खचक्रगदापद्मधारिणं पुरुषोत्तमम् । कारणं सर्वलोकस्य तेजसापूरयज्जगत्॥१८३॥
प्रणम्य दण्डवद्विप्र उवाच पुनरच्युतम् । अद्य मे सफलं जन्म अद्य मे चक्षुषी शिवे ॥

अद्य मे च करौ श्लाघ्यौ धन्योऽहं जगदीश्वर ।
अद्य मे पुरुषा यान्ति ब्रह्मलोकं सनातनम् ॥ १८५ ॥

नन्दन्ति बान्धवा मेऽद्य त्वत्प्रसादाज्जनार्दन । इदानीं च प्रसिद्धा मे सर्वे चैव मनोरथाः

किं तु मे विस्मयो नाथ मूकादिज्ञानिनो भृशम् ।
कथं जानन्ति मद्वृत्तं देशान्तर उपस्थितम् ॥ १८७ ॥

तस्य गेहोदराकाशे स्थितो विप्रोऽतिशोभनः । तथापतिव्रता गेहे तुलाधारशिरस्यपि
तथा मित्राद्रोहकस्य त्वं च वैष्णवमन्दिरे । अनुग्रहाच्च मे विप्र तत्त्वतो वक्तुमर्हसि ॥

श्रीभगवानुवाच ।

पित्रोर्भक्तः सदा मूकः पतिव्रता शुभा च सा । सत्यवादी तुलाधारः समः सर्वजनेषु च
लोभकामजिदद्रोहो मद्भक्तो वैष्णवः स्मृतः । सम्प्रीतोऽहं गुणैरेषां तिष्ठाम्यावसथे मुदा

भारतीकमलाभ्यां च सहितो द्विजसत्तम ॥ १९१ ॥

विप्र उवाच ।

महापातकिसंसर्गान्नराश्चैवातिपातकाः । इति जल्पन्ति धर्मज्ञाः स्मृतिशास्त्रेषु सर्वदा

पुराणागमवेदेषु कथं त्वं तिष्ठसे गृहे ॥ १९२ ॥

श्रीभगवानुवाच ।

कल्याणानां च सर्वेषां कर्त्ता मूको जगत्त्रये ।

वृत्तस्थो योऽपि चण्डालस्तं देवा ब्राह्मणं विदुः ॥ १९३ ॥
मूकस्य सदृशो नास्ति लोकेषु पुण्यकर्मतः। पित्रोर्भक्तिपरो नित्यजितं तेन जगत्त्रयम्
तयोर्भक्त्या त्वहं तुष्टः सर्वदेवगणैःसह। तिष्ठामि द्विजरूपेण तस्य गेहोदरे च खे ॥
तथा पतिव्रतागेहे तुलाधारस्य मन्दिरे। अद्रोहकस्य भवने वैष्णवस्य च वेश्मनि ॥
सदा तिष्ठामि धर्मज्ञ मुहूर्तं न त्यजाम्यहम्। तेनपश्यन्ति मां नित्यं ये त्वन्येपापकृज्जना
पुण्यत्वाच्च त्वया दृष्टो ममानुग्रहकारणात्।
पित्रोर्भक्तिपरः शुद्धश्चाण्डालो देवतां गतः ॥ १९८ ॥
तस्मात्तेन सह प्रीत्या तिष्ठामि तस्य मन्दिरे। पुनः पुनः कथालापं करोमि द्विजनन्दन
तस्यवै मानसे नित्यं वर्तेऽहं भूतभावनः। सतज्जनाति त्वद्वृत्तं तथा पतिव्रतादयः ॥
तेषां वृत्तं वदिष्यामि श्रृणुत्वं चानुपूर्वशः।
यच्छ्रुत्वा सर्वथा मर्त्यो मुच्यते जन्मबन्धनात् ॥ २०१
पितुर्मातुः परं तीर्थदेवदेवेषु नैव हि। पित्रोरर्चाकृता येन स एव पुरुषोत्तमः ॥ २०२ ॥
पित्रोराज्ञा च देवस्य गुरोराज्ञासमं फलम्। आराधनाद्दिवो राज्यं वाधया रौरवंव्रजेत्
स चास्माकं हृदिस्थोपि तस्याहं हृदये स्थितः।
आवयोरन्तरं नास्ति परत्रेह च मत्समः ॥ २०४ ॥
मदग्रे मत्पुरे रम्ये सर्वैश्च बान्धवैः सह। स भुञ्जीताक्षयं भोगमन्ते मयि च लीयते ॥
अत एव हि मूकोऽसौ वार्त्तां त्रैलोक्यसम्भवाम्।
जानाति नरशार्दूल एष ते विस्मयः कुतः ॥ २०६ ॥

द्विज उवाच।

मोहादज्ञानतो वापि न कृत्वा पितुरर्चनम्। ज्ञात्वा वा किं च कर्तव्यं सदसज्जगदीश्वर

श्रीभगवानुवाच।

दिनैकं मासपक्षौ वा पक्षार्धं वाथ वत्सरम्।
पित्रोर्भक्तिः कृता येन स च गच्छेन्ममालयम् ॥ २०८ ॥
कारयित्वा मनः कष्टमवश्यं नरकं व्रजेत्। न कृता वाकृता वास्यात्पित्रोरर्चापरं पुरा ॥

वृषोत्सर्गं नरः कृत्वा पितृभक्तिफलं लभेत् ॥ २०९ ॥

अन्नं वस्त्रं तथा गव्यं मधुमांसादिसत्कृतम् । दद्यादकुत्सितं श्राद्धे वृषोत्सर्गफलंलभेत्

श्राद्धं दद्याद्द्विजाग्र्याय वेदशास्त्रानुभाविने । शान्तायवीतरागाय वृषोत्सर्गफलंलभेत्

अन्नं वस्त्रं तथा गव्यं सामिषं च निरामिषम् । सर्वं लक्षगुणं प्रोक्तंज्ञातिभ्योयत्प्रदीयते

सर्वस्वेन कृतं श्राद्धं येन पुत्रेण धीमता ।

जातिस्मरत्वं प्राप्नोति पितृभक्तिफलं लभेत् ॥ २१३ ॥

श्राद्धात्परो महायज्ञस्त्रैलोक्ये तु न विद्यते । अत्र यद्दीयते किंचित्सर्वं चाक्षयमश्नुते

अन्यस्मिंश्चायुतं विद्धि ज्ञातिभ्यो लक्षमुच्यते ।

पिण्डे कोटिगुणं प्रोक्तं द्विजायानन्तमुच्यते ॥ २१५ ॥

गङ्गाजले गयायां च प्रयागे पुष्करे तथा । वाराणस्यां सिद्धकुण्डे गङ्गासागरसङ्गमे ॥

अन्नपिण्डं प्रदद्याद्यस्तस्य मुक्तिर्भवेद्ध्रुवम् । पितरश्चाक्षयं स्वर्गं लभन्ते जन्मनः फलम्

भागीरथ्यां विशेषेण यस्तु दद्यात्तिलोदकम् ।

मुक्तिमार्गं स चाप्नोति पिण्डदाने तु किं पुनः ॥ २१८ ॥

नदीतीरेषु साहस्रं नदे त्वयुतमिष्यते । सामान्यफलसंसर्गाच्छ्राद्धं शतगुणं भवेत् ॥

अमायां च युगाद्यायां ग्रहणे सूर्यचन्द्रयोः ।

पार्वणं कुरुते यस्तु सोऽक्षयं लोकमश्नुते ॥ २२० ॥

पितरस्तस्य तुष्यन्ति सर्वे समायुतं प्रति । आशिषंदयितं दत्त्वा भोग्यं चानन्तमात्मजे

ततः पर्वणि पुत्रैश्च कर्त्तव्यं पार्वणं मुदा । पित्रोर्यज्ञमिमं कृत्वा मुच्यते जन्मबन्धनात्

अहन्यहनि यच्छ्राद्धं नित्यश्राद्धमितिस्मृतम् ।

श्रद्धया कारयेद्यस्तु सोऽक्षयं लोकमश्नुते ॥ २२३ ॥

तथैवापरपक्षे च काम्यश्राद्धं विधानतः । कृत्वा कामं स चाप्नोति यद्वा मनसि वर्तते ॥

आषाढीमवधिं कृत्वा यस्तु पक्षस्तुपञ्चमः । तत्रश्राद्धं प्रकुर्वीत कन्यांगच्छतु वा न वा

कन्यां गते सवितरि यान्यहानि तु षोडश ।

क्रतुभिस्तानि तुल्यानि समाप्तवरदक्षिणैः ॥ २२६ ॥

काम्यश्राद्धं महापुण्यमिदं तस्यागतं शिवम्। अभावात्कृष्णपक्षादौ तुलायां कर्तुमर्हति
अमावृश्चिकमायाति नैराश्यं पितरोगताः। पुनः स्वभवनं यान्ति शापं दत्त्वासुदारुणम्
पितृशापेन पुत्रस्य नष्टं सर्वमिति स्मृतम्। धनं पुत्रा यशः काम्यमभीष्टमायुरेव च॥

सर्वाण्येतानि लभ्यन्ते जन्मजन्मसु मानवैः।
पितॄणां च वरेणैव तस्मान्नैनं परित्यजेत्॥ २३०॥

विवाहव्रतयज्ञादौ कृत्वा नान्दीमुखंद्विजः। अक्षयं लभते पुण्यं गोत्रं तस्य प्रवर्द्धते॥
एतद्विपर्ययो यस्य स याति नरकं नरः। कुलक्षयो भवेत्तस्य स जीवो दुःखितोभवेत्
ततस्तु पूजयेदग्रे गणेशं शम्भुनन्दनम्। परंषोडशमातॄश्च तत्पश्चात्पितृसञ्चयम्॥२३३॥
नान्दीमुखेषु सर्वेषु प्रपितामहपूर्वकम्। नान्दीमुखेद्विजान्सर्वान्स्थापयेत्प्राङ्मुखान्सुधीः
उच्चारयेन्नमोवाक्यं स्वधाचान्यत्र योजयेत्। ग्रहणे चन्द्रसूर्यस्य दत्त्वा पिण्डोदकंनरः

अक्षयं लभते स्वर्गं पितॄणां पुष्टिवर्द्धनम्।
तत्र स्नानं न कुर्याद्यःशक्त्यापिण्डोदकं नरः॥ २३६॥
न ददाति पितॄणां तु चाण्डालत्वं स गच्छति॥ २३७॥

सर्वं भूमिसमं दानंसर्वेव्याससमाद्विजाः। सर्वंगङ्गासमं तोयं राहुग्रस्ते निशाकरे २३८
इन्दोर्लक्षगुणं प्रोक्तं दशलक्षं तु भास्करे। गङ्गातोये तु सम्प्राप्त इन्दोः कोटीरवेर्दश॥

गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम्।
तत्फलं जाह्नवीस्नाने राहुग्रस्ते निशाकरे॥ २४०॥

चन्द्रसूर्यग्रहे चैव अवगाहति जाह्नवीम्। सस्नातस्सर्वतीर्थेषु किमर्थमटते महीम्॥
सूर्यग्रहः सूर्यवारे सोमे सोमग्रहस्तथा। चूड़ामणिरितिख्यातस्तत्रानन्तफलं स्मृतम्॥

समुपोष्य तयोः पूर्वं पुण्यतीर्थे तु यः पुमान्।
दत्त्वा पिण्डोदकं दानं सत्यलोके प्रतिष्ठितः॥ २४३॥

द्विजउवाच।

पितुरेव महायज्ञः श्राद्धं च भवतेरितम्। तातापश्चिमकालादौ किंकर्त्तव्यं सुतेनहि॥
किंकृत्वा च परं श्रेयो जन्मजन्मसु लभ्यते। पुत्रेण धीमता देव यत्नतो वक्तुमर्हसि॥

श्रीभगवानुवाच ।

पूर्ववयसि सम्प्राप्ते पिता पुत्र इतिस्मृतः । उत्तरे च सुतस्तातः पालनान्नतु पूजनात् ॥
देववत्पूजयेत्तातं स्नेहं कुर्याच्च पुत्रवत् । न लङ्घयेद्वचस्तस्य मनसाऽपि कदाचन ॥

आतुरस्य पितुः पुत्रो यस्तु कुर्यात्प्रतिक्रियाम् ।
सोऽक्षयं लभते स्वर्गं सदा देवैः प्रपूज्यते ॥ २४८ ॥

मुमूर्षोरपि तातस्य पश्यतो मृत्युलक्षणम् । कृत्वा च यजनं पुत्रो देवानां तुल्यतांव्रजेत्

विधिनाऽनशनेनैव पितुः स्वर्गं ददाति यः ।
पुत्रस्य तस्य धीरस्य श्रृणु वक्ष्यामि यद्गुणम् ॥ २५० ॥

अश्वमेधसहस्राणि राजसूयशतानि च । भवेदनशने पुण्यं तीर्थे कोटिगुणं तयोः ॥२५१
भागीरथ्या जलेचैव यो मृतः पुरुषोत्तमः । पयोधररसं मातुर्नपिबेन्मुक्ततां व्रजेत् ॥

वाराणस्यां त्यजेद्यस्तु प्राणांश्चैव यदृच्छया ।
अभीष्टं च फलं भुक्त्वा मद्देहे प्रविलीयते ॥ २५३ ॥

यागतिर्योगयुक्तानां मुनीनामूदुर्ध्वरेतसाम् । सा गतिस्त्यजतः प्राणान्ब्रह्मपुत्रेषु सप्तसु ॥
लोहितस्य विशेषेणतीरोत्तरसमाश्रितः । विधिनायस्त्यजेत्प्राणान्स च मत्समतांव्रजेत्
तस्यैव चोर्वशीकेशे पुण्यतीर्थे द्विजोत्तम । मृतोत्पन्नः समाप्नोति सर्वदोषैर्न लिप्यते ॥

गृहस्याभ्यन्तरे यस्य प्राणत्यागो भवेद् ध्रुवम् ।
यावद्ग्रन्थिर्गृहेतिष्ठेत्तावद्बन्धो भवेत्तनौ ॥ २५७ ॥

हायने हायने चापि एकैकं परिहीयते । पश्यतां पुत्रबन्धूनां बन्धनेनास्ति निष्कृतिः ॥

पर्वते कानने दुर्गे स्थाने वा जलवर्जिते ।
मृतो दुर्गतिमाप्नोति कीटादौ जायते पुनः ॥ २५९ ॥

संस्कारश्चभवेद्यस्य मृतस्य परवासरे । षष्टिर्वर्षसहस्राणि कुम्भीपाके प्रतिष्ठति ॥ २६०॥
अस्पृश्यस्पर्शनाद्देव उच्छिष्टः पतितो मृतः । सुचिरं नरके स्थित्वाम्लेच्छजातिषुजायते
तथैव बहुकोटेषु जायते सत्त्वजातिषु । तस्मान्नचिरकालेषु जानीयात्पुण्यपातकम् ॥

पुण्यात्पुण्यप्रयोगैश्च सर्वेषां मर्त्यवासिनाम् ।

मरणे या गतिः पुंसां गतिर्भवति तादृशी ॥ २६३ ॥
पुण्यतीर्थे मृतो यस्तु विष्णोर्नामानि चिन्तयन् ।
पापात्पूतो व्रजेत्स्वर्गं सर्वदोषैर्नलिप्यते ॥ २६४ ॥

पितुर्मृतस्य देहं तु वहेद्यस्तु सुतो बली । पदे पदेऽश्वमेधस्य फलंप्राप्नोत्यसंशयम् ॥
प्राक्चितौ च पितुर्देहे मुखाग्निंकारयेत्सुतः । विधिना मन्त्रपूतेन पश्चाद्देहं दहेत्पुनः ॥
लोभमोहसमायुक्तं पापपुण्यसमावृतम् । दहेयं सर्वगात्राणि दिव्याँल्लोकान्सगच्छतु ॥
दग्ध्वा च लङ्घयेत्पूत्रोऽप्यस्थिसञ्चयनं प्रति । दशाहे समनुप्राप्ते चार्द्रवस्त्रं परित्यजेत्

छित्त्वा च लोहितं चैलं घट्टौ चाथ जले क्षिपेत् ।
ततश्चैकादशाहे च श्राद्धं कुर्याद्विचक्षणः ॥ २६९ ॥

प्रेतस्य देहपुष्ट्यर्थं ब्राह्मणैकं तु भोजयेत् । दानं दद्याच्च विधिवद्वस्त्रंपीठं च पादुकाम्
सर्वोपकरणैस्तुल्यं धरादिगजवाजिकम् । कृष्णां गां च प्रदद्याच्च सर्वपापविमुक्तये ॥
चतुर्थाहे त्रिपक्षे च षण्मासे चाब्दिकेतथा । द्वादशप्रतिमास्यानि श्राद्धान्येतानि षोड़श

यस्यैतानि न सन्तीह यथाशक्ति च श्रद्धया ।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ २७३ ॥

अब्दमम्बुघटं दद्यादन्नं चामिषसंयुतम् । नित्यानित्यमभवाच्च क्षपन्मासं समापयेत् ॥
सपिण्डीकरणश्राद्धं गते संवत्सरे बुधः । पार्वणस्यविधानेन कारयेद्द्विजसत्तमः ॥
पितुरब्दमशौचं स्यान्मातुः षण्मासमेवच । त्रिमासं तु स्त्रियश्चैव तदर्द्धं भ्रातृपुत्रयोः ॥

सपिण्डानामशौचं स्याद्यावद्गेहे स तिष्ठति ।
पुत्रस्य यन्निषिद्धं तु शृणु तात वदाम्यहम् ॥ २७७ ॥
ब्रह्मचारी सदाचारी न गच्छेच्च स्त्रियं क्वचित् ॥ २७८ ॥
सप्तघट्याःपरं चैव नवघट्याश्च पूर्वतः ।
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम् ॥ २७९ ॥

श्राद्धे त्रीणि पवित्राणिदौहित्रःकुतपस्तिलाः । त्रीणिचात्रप्रशंसन्तिसत्यमक्रोधमत्वराम्
सायं सन्ध्यां परान्नं च पुनर्भोजनमैथुनम् । दानंप्रतिग्रहं चैव श्राद्धं कृत्वा विवर्जयेत्

अकर्त्तव्यशतं कृत्वा कार्यं कुर्याद्विचक्षणः। तच्चकर्तव्यतामेति स्वयमुक्तं विरिञ्चिना॥
शृणु पुत्र पुरावृत्तं बहूनां च वदाम्यहम्। गुरोर्गोहननं कृत्वा ददुः श्राद्धं ययुर्दिवम्॥
तेषां च कीर्त्तनादेव श्राद्धं भवति चाक्षयम्।
वसिष्ठस्य मुनेः शिष्या ब्राह्मणास्सप्त सुव्रताः॥ २८४॥
पितृश्राद्धे समायाते होमधेनुं गुरोः प्रियाम्। प्रार्थयित्वा गृहंनीत्वा सप्तभिर्भ्रातृभिर्मुदा
गव्यार्थं पितृयज्ञे तां धेनुं हत्वा विमृश्य च।
ददुर्मांसं च विप्रे च शेषं विप्रांस्त्वभोजयन्॥ २८६॥
समाप्य पितृकर्माणि वत्सं सङ्गृह्य ते द्विजाः।
गुरौ समर्पयामासुर्धेनुर्व्याघ्रेण भक्षिता॥ २८७॥
ततस्तपोबलादेवज्ञात्वा तेषां च कारणम्। स शशापततः शिष्यांश्चाण्डालाश्चभविष्यथ
वेपमानास्ततो विप्राः कृताञ्जलिपुटाः स्थिताः॥ २८९॥

शिष्या ऊचुः।

धेनोर्मांसप्रदातारः पितृकृत्ये सदानघ। अकर्तव्यसहस्राणि महान्ति पातकानि च।
कुर्वन्तः पितृकार्येषु पापात्पूता दिवं गताः॥ २९०॥
श्रुतं बहुविधं नाथ मुखात्ते च पुरातनम्। क्षन्तुमर्हसि धर्मज्ञ शापस्यान्तो विधीयताम्

वसिष्ठ उवाच।

शापो वोऽथ यथा पाप्मा न तु धर्मविचारणात्।
चाण्डालादौ समुत्पन्नाः पुरा वृत्तं स्मरिष्यथ॥ २९२॥
न च वो ज्ञानलोपश्च स्मृतिशास्त्रमनष्टकम्। पापयोनिं समुत्तीर्यपश्चान्मोक्षं गमिष्यथ
ततः प्राणान्परित्यज्य गुरुशापात्तु ते द्विजाः।
जाताश्चाण्डालयोनौ तु सर्वे ज्ञानसमन्विताः॥ २९४॥
स्तन्यंतैस्तु न पीतं वै स्मरद्भिः पूर्वजन्म तत्। मृताजाता मृगाः सर्वे चक्रवाकाःपुनर्वने
हंसास्तुमानसे तीर्थे शुक्ला जाताःपुनर्द्विजाः। मुमूर्षवोमहाभागा मृतास्ते खेदकारणात्
तस्मिन्काले महाराजो धर्मकेतुरिति स्मृतः।

यथौ स्नातुं ततस्तीर्थं सदारः सपरिच्छदः ॥ २६७ ॥

ततोहंसास्त्रयोमोहाद्राज्यंभोग्यं तु योषितः। भक्ष्याणिचिन्तयन्तश्चलोकान्तरमयुस्तदा

ज्ञात्वा वेदं च वेदाङ्गं मोक्षं यास्यामहे वयम्।

चिन्तयन्तो गता अन्ये ततो लोकान्तरं प्रति ॥ २६६ ॥

अथ त्रयो नृपा जाताश्चत्वारो विप्रसत्तमाः। कुरुक्षेत्रे ततो वेदान्वेदाङ्गानि समन्ततः

तपोवलाद्विदन्तिस्म वार्ता चामुत्र चेह च। त्रयो राजकुले जाता राजानो मदमोहिताः

ज्ञानलोपात्परं लोकं न जानन्ति हिताहितम्।

ते च विप्राश्च सन्देहादाहूय चेटकं स्वकम् ॥ ३०२ ॥

विप्रा ऊचुः।

राज्ञो गच्छ स्वकार्पण्यात्पत्रं देहि च सम्भ्रमात् ॥ ३०३ ॥

सप्त व्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ। चक्रवाकाः शरद्वीपे हंसाः सरसिमानसे

तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः। प्रस्थिता दूरमध्वानं यूयं किमवसीदथ ॥

श्री भगवानुवाच।

गृहीत्वाचेटको लेखं राज्ञस्तुसमदर्शयत्। दृष्ट्वालेखं तु राजानोराज्यं त्यक्त्वाययुर्द्विजान्

श्रुत्वा वाक्यं ततस्तेषां गतास्ते च तपोधनाः।

अचिरेणैव कालेन मोक्षं याताश्च तैस्सह ॥ ३०७ ॥

य इदं शृणुयाच्छ्राद्धे सप्तव्याधादिकं द्विज। अक्षयं चान्नपानं च पितॄणामुपतिष्ठति ॥

द्विज उवाच।

वित्तहीनस्य विप्रस्य पितृकार्यं कथं भवेत्।

तपस्विनो वनस्थस्य गृहस्थस्य च केशव ॥ ३०६ ॥

भगवानुवाच।

तृणकाष्ठार्जनं कृत्वा प्रार्थयित्वा वराटकम्। करोति पितृकार्याणि ततो लक्षगुणंभवेत्

अकर्तव्यशतं कृत्वा पितृश्राद्धं करोति यः। सर्वपापक्षयस्तस्य स्वर्गं याति च मानवः

सर्वाभावे पितृतिथौ गोभ्यो घासं ददाति यः।

फलं च पिण्डदानस्य सम्प्राप्नोत्यधिकं नरः ॥ ३१२ ॥
पुरा वैराटविषये रुरोदातीव दीनकः । पितृतिथौ स्वयं प्राप्ते सर्वाभावाच्च रोदिति ॥
रुदित्वा सुचिरं सोऽपि पप्रच्छ कोविदं द्विजम् ॥ ३१४ ॥

दीन उवाच ।

ब्रह्मन्पितृतिथावद्य किंस्वित्कृत्वा हितं भवेत् ॥ ३१५ ॥
वराटकश्च मे नास्ति धनं ब्रह्मविदां वर । उपदेशं च मे देहि येन धर्मे स्थितो ह्यहम् ॥

द्विज उवाच ।

गच्छ शीघ्रं वने तात मुहूर्ते कुतपेऽधुना । घासं पितरमुद्दिश्य गवे देहोति सत्वरम् ॥

भगवानुवाच ।

ततस्तस्योपदेशेन गृहीत्वा घासपूलकम् । गवे दत्वा यथा हृष्टः पुण्यर्थं पितुरेव च
एतत्पुण्यप्रसादेन गतोऽसौ सुरमन्दिरम् ।
स्वर्गं च सुचिरं भुक्त्वा उत्पन्नो धनिनां कुले ॥ ३१६ ॥
धनवान्स पुरा पुण्यात्पितृयज्ञस्य कारणात् । स ददाति पितुः पिण्डं सर्वस्वेन धनेनच
तत्रैकजन्मनोऽभ्यासाद्गतोऽसौ विष्णुमन्दिरम् ।
भुक्त्वानन्तसुखं तत्र सार्वभौमोऽभवन्नृपः ॥ ३२१ ॥
पितृयज्ञात्परो यस्माद्धर्मो नास्ति कथञ्चन । तस्मात्सर्वप्रयत्नेन शक्त्या कुर्यादमत्सरः
यः पठेद्धर्मसन्तानं जनानामग्रतो नरः । विष्णुपद्या जले स्नानं प्रतिलोकं च लभ्यते ॥
जन्मजन्मकृतो येन महापातकसञ्चयः । तत्सर्वं प्रलयं याति सकृदुच्चरिते श्रुते ॥३२४॥

इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे पञ्चाख्याने पितृभक्तिनिरूपणं नाम द्विपञ्चाशत्तमोऽध्यायः ।

---

# त्रिपञ्चाशत्तमोऽध्यायः

## पतिव्रतामाहात्म्यवर्णनम् ।

नरोत्तम उवाच ।

त्रिदशानां च देवानामन्येषां जगदीश्वरः । प्रभुः कर्ता च हर्ता च गोप्ता भर्ता पितप्रसूः

अस्माकं वाक्छ्रमो विष्णोः कथनेनैव युज्यते ।

किंतु कौतूहलं मेऽस्ति पिपासा वा क्षुधाऽपि वा ॥ २ ॥

कृतं पृच्छति येनैव वक्तव्यं तत्प्रियेण हि । अतीतं चैव जानाति कथं नाथ पतिव्रता ॥

किं वा तस्याः प्रभावं च वक्तुमर्हस्यशेषतः ॥ ४ ॥

भगवानुवाच ।

कथितं मे पुरा वत्स पुनः कौतूहलं द्विज । कथयिष्यामि तत्सर्वं यत्ते मनसि वर्तते

पतिव्रता पतिप्राणा सदा पत्युर्हिते रता । देवानामपिसाराध्या मुनीनां ब्रह्मवादिनाम् ॥

धवस्यैकस्य या नारी लोके पूज्यतमा स्मृता ।

तस्या संमानने गुर्वी निभृता न भविष्यति ॥ ७ ।

मध्यदेशे पुरा तात नगरी चातिशोभना । तस्यां च ब्रह्मजातीया सैव्या नाम्नी पतिव्रता

तस्या धवोऽभवत्कुष्ठी पूर्वकर्मविरोधतः । गलद्व्रणस्य पत्युश्च नित्यं चर्यापरायणा

यद्यन्मनोरथं तस्य शक्त्या सा कुरुते भृशम् । अर्चयेद्देववन्नित्यं स्नेहंकुर्यादमत्सरा ॥

कदाचित्पथि गच्छन्तीं वेश्यां परमसुन्दरीम् । दृष्ट्वाऽतीवाभवन्मोहान्मन्मथाविष्टचेतनः

निश्श्वस्य सुतरां दीर्घं ततस्तु विमनाभवत् ।

श्रुत्वा गृहाद्विनिःसृत्य साध्वी पप्रच्छ तं पतिम् ॥ १२ ॥

साध्व्युवाच ।

उन्मनास्त्वं कथं नाथ निःश्वासस्ते कथं विभो ।

ब्रूहि मे यच्च कर्तव्यमकर्तव्यं च यत्प्रियम् ॥ १३ ॥

दयितं ते करिष्यामि त्वमेको मे गुरुःप्रियः । अभीष्टं वद मे नाथ यथाशक्तिकरोम्यहम्

भगवानुवाच ।

इत्युक्ते तामुवाचेदं वृथा किं भाषसेप्रिये । न शक्ता त्वं न चैवाहं मोघं वक्तुं न युज्यते

प्रष्टुं नाधिकरोषीति यथा दीर्घतरोः फलम् ।
भूमौ स्थित्वा तु खर्वात्मा समुद्धर्तुं प्रवाञ्छति ॥ १६ ॥
तथा मे रमणीलोभान्मोहाद्यद्भिवाञ्छितम् ।
दम्पत्योरपि दुःसाध्यमपयानं वदाम्यहम् ॥ १७ ॥

पतिव्रतोवाच ।

ज्ञात्वा तु त्वन्मनोवृत्तं शक्ताऽहं कार्यसाधने । आदेशं कुरु मे नाथ कर्तव्यं येन केनचित्

यदि ते दुर्लभं कार्यं कर्तुं शक्नोमि यत्नतः ।
तदा मे त्वतिकल्याणं फलिष्यति परेत्विह ॥ १९ ॥

भगवानुवाच ।

इत्युक्ते परमप्रीतः स्थितो वचनमब्रवीत् । पापाभ्यासाच्च पाप्मानंप्रेच्छतीति विनिश्चयः

कुष्ठ्युवाच ।

पथ्यस्मिन्सम्प्रगच्छन्तीं वेश्यां परमसुन्दरीम् । सर्वतश्चानवद्याङ्गीं दृष्ट्वा मे दह्यतेमनः ॥

यदि तां त्वत्प्रसादच्च प्राप्नोमि नवयौवनाम् । तदा मे सफलं जन्म कुरुसाध्विहितं मम

यदि मां कुष्ठिनं दीनं पूतिगन्धं नवव्रणम् ।
न गच्छति वरारोहा तदा मे निधनं हितम् ॥ २३ ॥

भगवानुवाच ।

श्रुत्वा तेनेरितं वाक्यं साध्वी वचनमब्रवीत् ।

पतिव्रतोवाच ।

यथाशक्ति करिष्यामि स्थिरीभव प्रभोऽधुना ॥ २५ ॥

भगवानुवाच ।

मनसाऽथ समालोच्य क्षपान्ते ह्युषसि द्रुतम् । गोमयं सह शोधन्यागृहीत्वासाययौमुदा

सम्प्राप्य गणिकागेहं शोधयित्वाच चत्वरम् । प्रतोलीं वीथिकां चैव गोमयंप्रददौमुदा
सा तूर्णमागता गेहे जनस्यालोकने भयात् ।
एवं क्रमेण सा साध्वी चरतिस्म दिनत्रयम् ॥ २८ ॥
अथसा वारमुख्या च चेटिकाश्चेटकानपि । अपृच्छत्कस्य कर्माणिशोभनानिच चत्वरे
मयानोक्तेऽप्युषःकाले कस्य मत्प्रियकारणात् ।
रुच्यकर्मणि दीप्यन्ते रथ्या चत्त्वरवीथिकाः ॥३० ॥
परस्परेण सञ्चिन्त्य वारमुख्यां च तेऽब्रुवन् ॥ ३१ ॥

चेटका ऊचुः ।

अस्माभिर्नकृतं भद्रे कर्म चैतत्प्रमार्जनम् ॥ ३२ ॥

भगवानुवाच ।

अथ सा विस्मयं गत्वा सञ्चिन्त्य रजनीक्षये ।
तया च दृश्यते सा च तथैव पुनरागता ॥ ३३ ॥
दृष्ट्वा तां महतीं साध्वींब्राह्मणींचपतिव्रताम् । दधार चरणे तस्या हा क्षमस्वेतिभाषिणी

गणिकोवाच ।

आयुर्देहं च सम्पित्तर्यशोऽर्थः कीर्तिरेव च । एताशां मे विनाशाय स्फुरसीव पतिव्रते ॥
यद्यत्प्रार्थयसे साध्वि नित्यं दास्यामि तद्दृढम् ।
सुवर्णं मणिरत्नं वा चैलं वा यन्मनोरथम् ॥ ३६ ॥

भगवानुवाच ।

तामुवाच ततः साध्वी न मेचार्थे प्रयोजनम् । अस्तिकार्यं च ते किञ्चिद्ददामि कुरुषेयदि
तदा मे हृदि सन्तोषः कृतं सर्वं त्वयाऽधुना ॥ ३७ ॥

गणिकोवाच ।

सत्यं सत्यं करिष्यामि द्रुतं वद पतिव्रते । कुरुमेरक्षणं मातर्द्रुतं कृत्यं च मे वद ॥३८॥

भगवानुवाच ।

त्रपया निकृतं वाच्यं तस्यामुक्तं वरं प्रियम् । क्षणंविमृश्यसावेश्याकृत्वाक्षान्तिमुवाचच

कुष्ठिनः पूतिगन्धस्य सम्पर्केदुःखिताभृशम् । दिनैकंचकरिष्यामियद्यागच्छति मद्गृहम्

पतिव्रतोवाच ।

आगमिष्यामि ते गेहमद्यरात्रौ च सुन्दरि । भुक्तभोग्यं पतिंहृष्टं पुनर्नेष्यामि मद्गृहम्

गणिकोवाच ।

गच्छ शीघ्रं महाभागे स्वगृहं च पतिव्रते । पतिस्ते चार्द्धरात्रे स आगच्छतु च मद्गृहम्

बहवो मे प्रियास्सन्ति राजानस्तत्समाश्रये । एकैको मद्गृहे नित्यं तिष्ठतीह निरन्तरम्

अद्याहं मे गृहं शून्यं करिष्यामि च त्वद्भयात् ।

स चागच्छतु ते भर्त्ता स चास्मान्प्राप्य गच्छतु ॥ ४४ ॥

भगवानुवाच ।

एतच्छ्रुत्वा तु सा साध्वी गताऽसौ स्वगृहे तथा ।

पत्यौ निवेदयामास कृत्यं ते फलितं प्रभो ॥ ४५ ॥

अद्य रात्रौ च तद्गेहं गन्तुं ख्यातिं करोति सा । प्रभूताःपतयस्तस्यास्तव कालो नविद्यते

विप्र उवाच ।

कथंयास्यामि तद्गेहं मयागन्तुं नशक्यते । एतज्ज्ञात्वा कुतः क्षान्तिःकृतंकार्यंकथंभवेत्

पतिव्रतोवाच ।

स्वपृष्ठस्थमहं कृत्वा नेष्यामि तद्गृहं प्रति । सिद्धे ह्यर्थे नयिष्यामि पुनस्तेनैव वर्त्मना

द्विजउवाच ।

कल्याणि त्वत्कृतेनैव सर्वं मे कृत्यमेष्यति । इदानीं यत्कृतं कर्म स्त्रीजनैरपि दुःसहम्

भगवानुवाच ।

तस्मिंश्च नगरे रम्ये नित्यं च धनिनो गृहे । चौरैश्च प्रचुरं वित्तं हृतं राज्ञा श्रुतं तदा ॥

श्रुत्वा सर्वान्निशाचारानाहूय नृपती रुषा ॥ ५० ॥

नृपतिरुवाच ।

जीवितुं यदि वो वाञ्छा चोरं ममाद्य दास्यथ ॥ ५१ ॥

भगवानुवाच ।

गृहीत्वा तु नृपस्याज्ञां यत्तैर्जिघृक्षयाकुलैः । चारैश्चोरो गृहीतस्तैर्बलाच्चैव नृपाज्ञया ॥
नगरोपान्तदेशे च वृक्षमूले घने वने । समाधिस्थो महातेजा माण्डव्यो मुनिपुङ्गवः ॥
व्यतिष्ठद्ब्रह्मसङ्काशो योगिनां प्रवरो मुनिः । अन्तर्नाडीगतो वायुःकिञ्चिन्न प्रतिभातिच
तं ब्रह्मतुल्यं तिष्ठन्तं दृष्ट्वा दुष्टा महामुनिम् । चोरोऽयमद्भुताकारो धूर्तस्तिष्ठति कानने ॥
एवमुक्त्वा तु तं पापा बबन्धुर्मुनिसत्तमम् । नोक्ताश्च नेक्षितास्तेन पुरुषा अतिदारुणाः ॥
ततो राजाऽवाचेदं सम्प्राप्तस्तस्करो मया । उपान्ते च पथिद्वारे कुरुध्वं घोरदण्डनम्

माण्डव्यश्च मुनिस्तत्र पथिशूले च कीलितः ।
पायुदेशे च तैर्दत्तं शूलं यावच्च मस्तकम् ॥ ५८ ॥

व्यथां स च न जानाति शूले विद्धतनुर्यमात् । अन्यैरपि कृतोदण्डःकृतस्तैस्तु मनोहितः
एतस्मिन्नन्तरे रात्रावन्धकारे घनोन्नते । स्वपतिं पृष्ठतः कृत्वा प्रययौ सा पतिव्रता ॥

माण्डव्यस्य तनौ तत्र कुष्ठिनोऽङ्गं ललाग तत् ।
भग्नः समाधिस्तस्यैवं कुष्ठिसंसर्गतोध्रुवम् ॥ ६१ ॥

माण्डव्य उवाच ।

एवं येनाधुना कृच्छ्रं कारितं गात्रवेदनम् । स एव भस्मतां यातु प्रोदिते च विरोचने

भगवानुवाच ।

माण्डव्येनैव मुक्तस्स पपात धरणीतले । ततः पतिव्रता चाह ब्रध्नो नोदयतु ध्रुवम् ॥
दिनत्रयं गृहं नीत्वा शापाद्वेश्म गता ततः । शयनीये स्थितं रम्येधृत्वाऽतिष्ठत्पतिव्रता
शप्त्वा तं च मुनिश्रेष्ठो गतोदेशमभीष्टकम् । सूरोनोदयते लोकेयावच्चैव दिनत्रयम् ॥

निखिलं व्यथितं दृष्ट्वा त्रैलोक्यं स चराचरम् ।
शतक्रतुं पुरस्कृत्य गतादेवाः पितामहम् ॥ ६६ ॥

वृत्तं न्यवेदयन्सर्वं पद्मयोनौ दिवौकसः । कारणं च न जानीमस्त्वं तु योग्यं विधेहिनः
पतिव्रताया यद्वृत्तं माण्डव्यस्य मुनेश्चयत् । यथा नोदयते ब्रध्नोधाता देवेष्ववेदयत्
ततो देवाविमानैश्च पुरस्कृत्य प्रजापतिम् । गतास्तदन्तिकं विप्र तूर्णं सर्वे च भूतलम्

तेषां श्रिया विमानानांमुनीनां किरणैस्तथा। शतसूर्यमिवाभाति नान्यत्र च गृहोदरे॥
पतिव्रतोवाच ।
हा हतास्मि कथं शूरो मद्गृहे समुपस्थितः ॥ ७१ ॥
भगवानुवाच ।
अदृश्यन्त तयादेवा विमानैर्हंससन्निभैः। एतस्मिन्नन्तरे ब्रह्मा तामुवाच पतिव्रताम्॥
ब्रह्मोवाच।
अखिलानां च देवानां द्विजानां च गवां तथा।
यथैव निधनं तेषां कथं ते परिरोचते। मातः क्रोधं त्यजस्वाद्य सूर्यस्योदयनं प्रति॥
पतिव्रतोवाच ।
सर्वलोकानतिक्रम्य पतिरेको गुरुर्मम। अस्य मृत्युर्मुनेश्शापादुदिते च विरोचने ॥७४॥
तेनैव कारणेनैष मया शप्तो दिवाकरः। न कोपान्न च मोहाच्च लोभात्कामान्नमत्सरात्
ब्रह्मोवाच ।
एकस्य निधनेनैव त्रैलोक्यस्य हितं भवेत्। ततस्ते चाधिकं पुण्यं मातरेवं भविष्यति
सा चोवाच विधिं तत्र देवानामग्रतः सती। पतिंत्यक्त्वाचमे सत्यं शिवं मे नानुरोचते
ब्रह्मोवाच ।
उदिते च खगे सौम्ये पत्यौते भस्मतांगते। स्वस्थीभूते च त्रैलोक्येकरिष्यामिहितंतव
भस्मनः पुरुषो भाव्यः कामदेवसमप्रभः। गुणैः सर्वैर्युतो भर्ता रतिवत्त्वं च सर्वदा॥
यथा पूज्यो हरिर्देवैर्यथा लक्ष्मीश्च पूजिता। तथैव दम्पती स्वर्गे तस्मान्मद्वचनं कुरु॥
पतिव्रतोवाच ।
पत्युर्मे निधनेब्रह्मन्विधवालोकनिन्दिता। कांस्तु लोकान्गमिष्यामिभग्नाचारामलीमसा
ब्रह्मोवाच ।
अतस्ते नास्ति दोषो वै न मृतस्ते धवोऽधुना।
अस्माकं वचनेनैव कुष्ठीमन्मथतां व्रजेत् ॥ ८२ ॥

भगवानुवाच ।

वदत्येवं विधौ सा च विमृश्य क्षणमेव च । बाढमुक्तवती सा च ततस्सूर्योदयोऽभवत्
अभवद्भस्मरूपोऽसौ मुनिशापप्रपीडितः । भस्मनो मध्यतो जातो द्विजोमन्मथपीड़ितः
दृष्ट्वा विस्मयमापन्नाः सर्वे ते पुरवासिनः । मुदिता देवसङ्घाश्च जनः स्वस्थतरोऽभवत्
विमानेनार्कवर्णेन स्वर्लोकादागतेन च । पतिना सहसा साध्वी सुरैः सार्द्धंगतादिवम्
एवं पतिव्रता यस्माच्छुभा चैवतु मत्समा । तेन वृत्तं च जानाति भूतं भव्यं प्रवर्तनम्
य इदं श्रावयेल्लोके पुण्याख्यानमनुत्तमम् ॥ तस्य पापं क्षयं याति जन्मजन्मकृतं च यत्
अक्षयं लभते स्वर्गं विबुधैः सम्प्रयुज्यते । ब्राह्मणो लभते वेदं जन्मजन्मसु वाडव ॥

सकृच्छृणोति यः पूतो दुष्कृतौघाद्विमुच्यते ।
सुरालयमवाप्नोति स्वर्गाद्भ्रष्टो धनी भवेत् ॥ ६० ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे पतिव्रतोपाख्यानं नाम त्रिपञ्चाशत्तमोऽध्यायः ।

---

# चतुःपञ्चाशत्तमोऽध्यायः

## माण्डव्यस्य शूलारोपणे कारणवर्णनम् ।

द्विज उवाच ।

माण्डव्यस्य मुनेर्विष्णो शूलाघातः कथं तनौ । पत्यौ पतिव्रतायाश्च कथं कुष्ठं कलेवरे

हरिरुवाच ।

शिशुभावाच्चमाण्डव्योभिल्लिकायामभानतः । वस्तिदेशेतृणंदत्वामोहात्सचमुमोचताम्

तेनापवाददोषेण धर्मस्याज्ञातुरेव च ।
अहोरात्रं व्यथा कृच्छ्रा भुक्ता तेन द्विजन्मना ॥ ३ ॥
किन्तु समाधिना तेन न ज्ञातं शूलसम्भवम् ।
कृच्छ्रं च मुनिना कृत्स्नं योगाभ्यासाद् भृशादपि ॥ ४ ॥

कुष्ठिनो ब्रह्मणो घातादजितेन्द्रियकारणात् । पूतिगन्धं तनौ कुष्ठं सञ्जातं द्विजसत्तम
पुरा विप्राय तेनैव दत्तं गौरीचतुष्टयम् । कन्यकात्रितयं विप्र तेन तस्य पतिव्रता ॥६॥
अस्यास्तु कारणादेव स च मत्समतांव्रजेत् । अत्र ते विस्मयः कुत्र वेदकर्म पुरातनम्

द्विज उवाच ।

कृत्या नारी न यस्यैव तस्य स्वर्गोभवेद्ध्रुवम् । यथैतच्चरितं नाथ सर्वेषां शिवमिष्यते

हरिरुवाच ।

सन्ति कृत्याःस्त्रियःकाश्चित्पुंसःसर्वस्वदस्य च । तत्राप्यरक्षणीयांचमनसापिन धारयेत्
न स्त्रीणामप्रियः कश्चित्प्रियोवापि न विद्यते । गावस्तृणमिवारण्येप्रार्थयन्तिनवं नवम्
पुमांसं वित्तहीनं च विरूपं गुणवर्जितम् । अकुलीनं च भृत्यं च कामिनी भजते ध्रुवम्
भर्तारं च गुणोपेतं कुलीनं च महाधनम् । सुन्दरं रतिदक्षं च त्यक्त्वा नीचं भजेद्वधूः ॥

उमानारदसंवादमाख्यानं विद्धि भूसुर ।
येन विद्याः स्त्रियाश्चेष्टा विविधाः कृत्स्नशो द्विज ॥ १३ ॥

स्वभावान्नारदोविप्रविश्वजिज्ञासकोमुनिः । स्वान्तेविमृश्याथगतःकैलासंगिरिमुत्तमम्
वृषकेतुसदाख्यानसप्रतिष्ठे हिमे गिरौ । प्रणिपत्य महात्मा वै पप्रच्छ पार्वतीं मुनिः ॥

नारद उवाच ।

देवि सीमन्तिनीनां तु दुश्चेष्टां ज्ञातुमुत्सहे । कौतुकेन त्वया चर्या वधूनां सम्प्रयुज्यते
सर्वासामपि नारीणां स्वान्तंजानासितत्त्वतः । तन्मां कथय सर्वेषु विनीतमज्ञमेव च ॥

देव्युवाच ।

युवतीनां सदा चित्तं पुंसु तिष्ठत्यसंशयम् । अस्मिन्योनौ सुसंयोग्ये सङ्गतेवाप्यसङ्गते
सुवेषं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम् । योनिः क्लिद्यति नारीणांसत्यं सत्यं हि नारद

स्थानं नास्ति क्षणं नास्ति नास्ति प्रार्थयिता नरः ।
तेन नारद नारीणां सतीत्वमुपजायते ॥ २० ॥

घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान् । तस्माद्घृतं च वह्निं च नैकस्थाने च धारयेत्
यथैवमत्तमातङ्गं सृणिमुद्गरयोगतः । स्ववशं कुरुते यन्ता तथा स्त्रीणां प्ररक्षकः ॥२२॥

पिता रक्षति कौमारे भर्ता रक्षति यौवने । पुत्राश्च स्थाविरेभावे न स्त्रीस्वातन्त्र्यमर्हति
ततः स्वातन्त्र्यभावाच्च स्वेच्छया च वराङ्गना । पुरुषेणार्थिता धीरा प्रेरणादिचरी भवेत्
अरक्षणाद्यथा पाकः श्वकाकवशगो भवेत् । तथैव युवतीनारी स्वच्छन्दाद्दुष्टतांव्रजेत्
पुनरेव कुलं दुष्टं तस्यास्संसर्गतो भवेत् । परबीजेन यो जातः स च स्याद्वर्णसङ्करः ॥

जारजः सङ्करः पापो नरके नियतं वसेत् ।
कीटजातौ गता जाताः पुनः सर्वे महीतले ॥ २७ ॥

ततोम्लेच्छमुपानीतं कुलंस्याद्द्विजनन्दन । कुलक्षयोभवेद्यस्मात्तस्माद्दुष्टां न धारयेत्
ज्ञात्वैव योषितां दोषं क्षमते यो नराधमः । स तिष्ठेन्निरये घोरे रौरवे पितृभिः सह ॥
काचित्पातयतेनारीकाचिदुद्धरतेकुलम् । तस्मात्सर्वप्रयत्नेन कुलजामुद्वहेद् बुधः ॥३०॥
कुलद्वयं समा नारी समयित्वा तु तिष्ठति । साध्वी तारयते वंशान्दुष्टा पातयति ध्रुवम्

दारेष्वधीनं स्वर्गं च कुलं पङ्कं यशोऽयशः ।
पुत्रं दुहितरं मित्रं संसारे कथयन्ति च ॥ ३२ ॥

तस्मादेकां द्वितीयां वा वामामुद्वाहयेद्बुधः। सन्तानार्थात्तुकामाच्च बहुदोषाश्रिताच सा

रजस्वलां च वनितां नावगच्छति यः पतिः ।
ब्रह्महा भ्रूणहा सोऽपि दुर्गतिं चाधिगच्छति ॥ ३४ ॥
यो मोहाद् दुर्भगां कृत्वा साध्वीं त्यजति पापकृत् ।
तस्या वधेन यत्पापं तद्भुक्त्वा नरकं व्रजेत् ॥ ३५ ॥

परदारान्बलाद्धृत्वा धनैर्वासं प्रलोभयेत् । स याति नरकं घोरं प्रेत्येह च कलत्रहा ॥
वनिताहरणं कृत्वा चाण्डालकुलतां व्रजेत् । तथैव वनिताहानात्पतितो जायते नरः ॥

रामां विन्यस्य स्कन्धे च चिरं यमपुरे वसेत् ।
मलंमूत्रं शिरोदेशे नित्यं तस्य च सम्पतेत् ॥ ३८ ॥

एवं वर्षसहस्राणि भारं वहति दुर्मतिः । पुनर्यावन्ति लोमानितावत्स रौरवं व्रजेत् ॥
पुनः कीटेषु सन्तीर्णस्तदामानुषतां व्रजेत् । ततश्च कलहं शोकं प्राप्नोति पूर्वकल्मषात्
एवं जन्मत्रयं प्राप्य मुच्यते पातकान्नरः। तत्कालं नरकं भुक्त्वा सा तु काकी तु कच्छपी

उच्छिष्टं नरकं भुक्त्वा मानुषे विधवा भवेत् ।
यः पुनश्चान्त्यजां गच्छेन्म्लेच्छां वा पुल्कसां नरः ॥ ४२ ॥
द्वित्रिचतुर्गुणं भुक्त्वा तत्र सञ्चीर्णवञ्चकः । मातरं गुरुभार्यां च ब्राह्मणीं महिषीं तथा
अन्यां वा प्रभुपत्नीं च गत्वा यात्यपुनर्भवम् ।
भगिनीं तत्पुत्रभार्यां तथा दुहितरं स्नुषाम् ॥ ४४ ॥
पितृव्यां मातुलानीं तु तथैव च पितृष्वसाम् ।
मातृष्वस्रादिकामन्यां गत्वा नास्ति च निष्कृतिः ॥ ४५ ॥
ब्रह्महा स भवेदन्धोवचसा जडतांव्रजेत् । कर्णयोर्बधिरो जातश्च्यवते नास्तिनिष्कृतिः
उक्त्वा अश्लीलमत्यर्थमखिलं स्त्रीकृतेन हि ॥ ४७ ॥

द्विज उवाच ।

एवं दुष्कृतमासाद्य कथं मोक्षोभवेत्पुनः । तत्समाचक्ष्व भगवञ्छ्रोतुमिच्छामि तत्त्वतः

श्रीभगवानुवाच ।

तासांचगमनं कृत्वातप्तां लोहस्यपुत्तलीम् । समालिंग्यत्यजेत्प्राणं शुचिर्लोकान्तरंव्रजेत्
यो वै गृहाश्रमं त्यक्त्वा मच्चित्तो जायते नरः ।
नित्यं स्मरति गोविन्दं सर्वपापक्षयो भवेत् ॥ ५० ॥
ब्रह्महत्यायुतं तेन कृतं गुर्वङ्गनागमात् । शतं शतसहस्रं च पैष्टीमद्यस्य भक्षणात् ॥५१ ॥
स्वर्णादेर्हरणं कृत्वा तेषां संसर्गकं चिरम् । एतान्यन्यानि पापानि महान्तिपातकानिच
अग्निं प्राप्य यथा तूलं तृणं शुष्कं प्रणश्यति ।
तस्मान्मन्नाम गोविन्दं स्मृत्वा पूतो भवेन्नरः ॥ ५३ ॥
यो वा गृहाश्रमेतिष्ठेन्नित्यंगोविन्दघोषणम् । कृत्वाचपूजयित्वाच सपापात्सन्तरोभवेत्
भागीरथीतटे रम्ये खगस्य ग्रहणे शिवे । गवां कोटिप्रदानेन यत्फलं लभते नरः ॥५५॥
तत्फलं समवाप्नोति सहस्रं चाधिकं चयत् । गोविन्दकीर्तने तात मत्पुरे चाक्षयं वसेत्
कामात्सभवनेस्थित्वा सार्वभौमोभवेन्नृपः । पुराणेमत्कथांश्रुत्वा मत्सादृश्यं लभेन्नरः
कथयित्वा पुराणं च विष्णुसायुज्यतां व्रजेत् ।

तस्मान्नित्यं च श्रोतव्यं पुराणं धर्मसञ्चयम् ॥ ५८ ॥
श्रावितव्यं प्रयत्नेन लोके विष्णुतनुं व्रजेत्।
अन्यद्वा स्त्रीकृते दोषे यथायोगं भवेद् ध्रुवम् ॥ ५६ ॥

निशामय प्रवक्ष्यामि तत्त्वतो द्विजनन्दन। सर्वबीजस्य दानेन साम्बुकुम्भं महाफलम्
दद्याद्विप्रायपुण्याहे सद्यः पूतो भवेत्क्षणात्। सर्वधान्यादिकं बीजं कालेदद्याद्द्विजातये

सर्वपापक्षयं कृत्वा अक्षयं स्वर्गमश्नुते।
गुणं वक्ष्यामि विप्रर्षे सतीनां यादृशं दृढम् ॥ ६२ ॥

शुद्धवंशो भवेत्तस्या नित्यं लक्ष्मीः प्रवर्तते। उभयोर्वंशयोः स्वर्गो भर्तुरात्मन एव च
पतिव्रतागुणो विप्र विस्मृतः पृच्छतस्तव। पुनर्वक्ष्यामि योषाणां सर्वलोकहितंशुभम् ॥

उषित्वा पूर्वकालं च पुण्यापुण्ये न योषितः।
पश्चात्पतिव्रतायाश्च ताश्च गच्छन्ति सद्गतिम् ॥ ६५ ॥

षण्मासं वाथ वर्षं वा अधिकं च प्रशस्यते। पतिव्रता भवेद्या च यावत्पूता व्रजेद्दिवम्
सुरापं विप्रहन्तारं सर्वपापयुतं पतिम्। पङ्कात्पूतं नयेत्स्वर्गं भर्त्तारं यानुगच्छति ॥

तिस्रः कोट्योऽर्धकोटी च यावल्लोमानि मानुषे।
तावत्कालं वसेत्स्वर्गे भर्तारं यानुगच्छति ॥ ६८ ॥

कन्दर्पसदृशो भर्ता सा रतीव मनोरमा। जिष्णोरैव चिरं लोके भुङ्क्तेऽनन्तमयं सुखम्

पतिव्रता बलाद्या च विदूरे स्वामिपातने।
चिह्नं लब्ध्वा मृता वह्नौ पापादुद्धरते पतिम् ॥ ७० ॥

पतिव्रता च या नारी देशान्तरमृतेपतौ। सा भर्तुश्चिह्नमादाय वह्नौ सुप्त्वा दिवं व्रजेत्
या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत्। सा स्वर्गमात्मघातेननात्मानं न पतिंनयेत्

न म्रियेत समं गत्व। ब्राह्मणी ब्रह्मशासनात्।
प्रव्रज्या गतिमाप्नोति मरणादात्मघातिनी ॥ ७३ ॥

नरोत्तम उवाच।

सर्वासामपि जातीनां ब्राह्मणःशस्यइष्यते। पुण्यं च द्विजमुख्येन अत्र किं वा विपर्ययः

श्रीभगवानुवाच ।

ब्राह्मण्यास्साहसं कर्म नैव युक्तं कदाचन। निःशेषेऽस्या वधं कृत्वा स नरो ब्रह्महाभवेत्
तस्माद्ब्राह्मणजातीया विप्रया च व्रतं चरेत्। प्रवक्ष्यामि यथातथ्यं शृणु विप्रयथार्थतः
आपणान्तरमामिष्यं भक्षयेन्न कदाचन। अश्वमेधसहस्राणां हायने फलमाप्नुयात्॥
अर्हणं चेष्टदेवस्य हरेर्व्रतमनुत्तमम्। स्वामिनोऽपि जलं पिण्डं सम्प्रदद्यादमत्सरात्॥
युगकोटिसहस्राणि युगकोटिशतानिच। पतिना सहसा साध्वी विष्णुलोके युताभवत्
ततो महाव्रतं प्राप्य निरये ब्राह्मणीवधूः। उद्धरेदुभयोर्वंशाञ्छतशोऽथ सहस्रशः॥८०॥
अतो बन्धुजनैरेव पुत्रैर्भ्रात्रादिभिर्बुधैः। विनियम्य सदा तस्या व्रतलोपं न कारयेत्॥
हरेश्चेद्वासरं प्राप्य विधवा न व्रतं चरेत्। पुनर्वैधव्यमायाति जन्मजन्मनिदुर्भगा॥८२॥

भोजनान्मत्स्यमांसस्य व्रतानां विप्रयोगतः।
चिरं निरयमासाद्य शुनी भवति निश्चितम्॥ ८३ ॥

दुष्टाया मैथुनं गच्छेद्विधवा कुलनाशिनी। नरकाननुभूयाथ गृध्रिणी दशजन्मसु॥८४॥
द्विजन्मफेरवा भूत्वा ततो मानुषतां व्रजेत्। तथैव बालवैधव्या दासीत्वमुपगच्छति॥

द्विज उवाच ।

कन्यादानफलं ब्रूहि वद दास्याः फलं च यत्।
विधानं च यथोक्तं च यदि मेऽनुग्रहः प्रभो॥ ८६ ॥

श्रीभगवानुवाच ।

रूपाढ्ये गुणसम्पन्ने कुलीने यौवनान्विते। समृद्धे वित्तसम्पूर्णे कन्यादानफलं शृणु॥

सर्वाभरणसंयुक्तां कन्यकां यो ददाति च।
तेन दत्ता धरा सर्वा सशैलवनकानना॥ ८८ ॥

अर्द्धाभरणदानेन फलं दातुर्भवेद् ध्रुवम्। अनाभरणकन्यायाः पादैकस्य फलं भवेत्॥

यः पुनः शुल्कमश्नाति स याति नरके नरः।
विक्रीय चात्मजां मूढो नरकान्न निवर्त्तते॥ ९० ॥

लोभादसदृशेपुंसि कन्यां यस्तुप्रयच्छति। रौरवंनरकं प्राप्य चाण्डालत्वं च गच्छति।

अतएव हि शुल्कं च जामातुर्न कदाचन। गृह्णाति मनसा प्राज्ञो यद्दत्तं तस्य चाक्षयम्
भूमिं गां च हिरण्यं च धनं वस्त्रं च धान्यकम्।
जामातुर्यौतकं दत्त्वा सर्वं भवति चाक्षयम्॥ ९३॥
विवाहसमये वत्स सगोत्रपरगोत्रजैः। यौतकं दीयते किंचित्तत्सर्वं चाक्षयं भवेत्॥
दाता न स्मरते दानं प्रतिग्राही न याचते। उभौ तौ नरकं यातश्छिन्नरज्जुर्घटो यथा॥
अवश्यं यौतकं दानं दातव्यं सात्त्विकेन हि। अदत्त्वा नरकं प्राप्य दासीत्वमुपगच्छति
अत्यासन्नेऽतिदूरस्थे चात्याढ्ये चातिदुर्गते। कुलहीने च मूर्खे च षट्सु कन्या न दीयते
अति वृद्धे चातिदीने रोगिष्ठे देशवासिनि। अतिक्रुद्धेऽप्यसन्तुष्टे षट्सु कन्या न दीयते
एतेभ्यः कन्यकां दत्त्वा नरकं चाधिगच्छति।
लोभात्संमानलाभाच्च कन्यका परिवर्तनात्॥ ९९॥
मुनीनांप्रेयसीं नारींयुवतींरूपशालिनीम्। सालङ्कारां स शय्यां च दत्त्वाऽनन्तफलंलभेत्
अनयोश्च फलं तुल्यं युवती कन्ययोरपि। एकावराय दातव्या अपरा ब्राह्मणाय तु॥
क्रीता देवाय दातव्या धीरेणाकष्टकर्मणा। कल्पकालं भवेत्स्वर्गे नृपो वा कौ महाधनी
प्रतिजन्म लभेतैष सुपत्नीं वरवर्णिनीम्। य इदं शृणुयान्नित्यं पुण्याख्यानमनुत्तमम्॥
सर्वपापक्षयस्तस्य सर्वशास्त्रार्थपारगः। लभेत सोऽक्षयंस्वर्गं नारीणां वल्लभो भवेत्॥
क्षत्रियो विजयी चाथ लोकनाथो भवेद्ध्रुवम्।
श्रुतं हरति पापानि जन्मजन्मकृतानि च॥
सौभाग्यं लभते लोके तथैव च वराङ्गनाः॥ १०५॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे पञ्चाख्याने स्त्रीणामाख्यानं नाम
चतुष्पञ्चाशत्तमोऽध्यायः।

———

# पञ्चपञ्चाशत्तमोऽध्यायः

## तुलाधारचरितम्, सत्यस्यप्रशंसा च ।

द्विज उवाच ।

तुलाधारस्य चरितं प्रभावमतुलं प्रभो। वक्तुमर्हस्यशेषेण यदि मय्यस्त्यनुग्रहः ॥ १ ॥

भगवानुवाच ।

सत्यभावादलोभाच्च दद्याद्योवै त्वमत्सरात् । नित्यंयज्ञशतंतस्य सुनिष्पन्नं सुदक्षिणम्
सत्येनोदयते सूरो वाति वातस्तथैवच । न सिन्धुर्लङ्घयेद्वेलां धत्तेकूर्मोधरां तथा ॥
सत्येन लोकास्तिष्ठन्ति सर्वे च वसुधाधराः ।
सत्याद् भ्रष्टोऽथ यःसत्त्वोऽप्यधोवासी भवेद् ध्रुवम् ॥ ४ ॥
सत्यवाचि रतो यस्तु सत्यकार्यरतः सदा । स शरीरेण स्वर्लोकमागत्याच्युततांव्रजेत्
सत्येन मुनयः सर्वे मां च गत्वा स्थिरास्स्थितः ।
सत्याद्युधिष्ठिरो राजा सशरीरो दिवंगतः ॥ ६ ॥
सर्वशत्रुगणं जित्वा लोको धर्मेण पालितः । अकरोच्च मखं शुद्धं राजसूयं सुदुर्लभम्
चतुरशीतिसहस्राणि ब्राह्मणानां च नित्यशः । भोजयेद्रुक्मपात्रेषु राजोपकरणेषु च
भोजयित्वोपकरणांस्तेभ्योदत्त्वा विसर्जयेत् । यदभीष्टंद्विजातीनामतोऽन्यद्दापयेद्धनम्
अदरिद्रं ततो ज्ञात्वा द्विजव्यूहं परित्यजेत् । तथैव स्नातकानां तु सहस्राणि तु षोडश
नित्यं सम्भोजयेद्राजा सत्येनैव विमत्सरः । अतिष्ठंस्ते गृहे पूर्वं चिरं तस्य जिगीषया
जितं तेन जगत्सर्वं प्राणानुग्रहकारणात् । सत्येन चासुरो राजा बलिरिन्द्रो भविष्यति
पातालस्थस्य तस्यैव भूयस्तिष्ठामि वेश्मनि । निरन्तरं च तिष्ठामि स्वान्तेपुण्यैककर्मणः
यद्वा पुरा मया बद्धो दैत्ययोनेर्विमोक्षणात् । तलं चैवामरत्वं हि शक्रत्वं प्रददाम्यहम्
हरिश्चन्द्रो नृपस्सत्यात्सवाहनपरिच्छदः ।
स्वशरीरेण शुद्धेन सत्यलोके प्रतिष्ठितः ॥ १५ ॥

राजानो वहवश्चान्ये ये च सिद्धा महर्षयः। ज्ञानिनो यतयश्चैव सर्वे सत्येऽच्युताभवन्
तस्मात्सत्यरतो लोके संसारोद्धरणक्षमः। तुलाधारो महात्मावै सत्यवाक्ये प्रतिष्ठितः

लोके तत्सदृशो नास्ति सत्यवाक्यस्य कारणात्।
अश्वमेधसहस्रेण सत्यं तु तुलया धृतम्॥ १८॥

अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते। सर्वं सत्याद्भवेत्साध्यं सत्यो हि दुरतिक्रमः
सत्यवाक्येन सा धेनुर्वहुला स्वर्गगामिनी। सर्वराष्ट्रं समाधाय पुनरावृत्तिदुर्लभा॥
तथाऽयं सर्वदा साक्षी मृषा नास्ति कदाचन। बह्वर्घमल्पमर्घं च क्रयविक्रयणे सुधीः॥

सत्यवाक्यं प्रशस्तं च विशेषात्साक्षिणो भवेत्।
साक्षिणः सत्यमुक्त्वा च अक्षयं स्वर्गमाययुः॥ २२॥

वावदूकः सभांप्राप्य सत्यं वदति वाक्रतिः। सयाति ब्रह्मणो गेहं यज्ञैरन्यैश्च दुर्लभम्
सभायां यो वदेत्सत्यमश्वमेधफलंलभेत्। लोभाद्द्वेषामृषोक्त्वा च रौरवं नरकंव्रजेत्
सर्वसाक्षी तुलाधारो जनानां शूरएव च। विशेषाल्लोभसन्त्यागान्नाकेनिर्जरतांव्रजेत्॥

कश्चिच्छूद्रो महाभागो न लोभे वर्तते क्वचित्।
वृत्तिश्शाकेन दुःखेन तथा शिलोञ्छतो भृशम्॥ २६॥

जर्जरं वस्त्रयुग्मं च कटौगोत्रे च सर्वदा। सदापि लोभविरहो न परस्वं गृहीतवान्॥

तस्य जिज्ञासयैवाहं गृहीत्वा वस्त्रयुग्मकम्।
अवकोटे नदीतीरे स्थितस्संस्थाप्य सादरम्॥ २८॥

स दृष्ट्वा वस्त्रयुग्मं तन्नलोभे कुरुते मनः। इतरस्य परिज्ञाय तत्क्षान्त्या स्वगृहं ययौ॥
ततो विचिन्तयित्वा तु हृदा स्वल्पमिति द्विज। उदुम्बरं हेमगर्भं मयातत्रैव पातितम्
कीकटे च नदीतीरे विकोणे जनवर्जिते। दृश्य या तस्य देशे तु दृष्टं तेन तदद्भुतम्॥
अलं विधानमेतत्तु कृत्रिमं चोपलक्ष्यते। ग्रहणेवाधुना चास्य अलोभं नष्टमेव मे॥३२॥
अस्यैव रक्षणे कष्टमहङ्कारपदं त्विदम्। यतो लोभस्ततो लाभो लाभाल्लोभ प्रवर्वते॥
लोभग्रस्तस्य पुंसश्च शाश्वतो निरयोभवेत्। यदि नो विगुणं वित्तं यदावेश्मनितिष्ठति
तदा मे दारपुत्राणामुन्मादो ह्युपपद्यते। उन्मादात्कामसञ्जात विकारान्मतिविभ्रमः॥

भ्रमान्मोहोऽप्यहङ्कारः क्रोधलोभावतःपरम् । एषां प्रचुरभावाच्च तपः क्षयं गमिष्यति
क्षीणे तपसि वर्तन्ते पङ्काश्चित्तप्रमोहकाः । तैश्च शृङ्खलयोगैश्च बद्धोनैवोद्धृतिं व्रजेत् ॥

एतद्विमृश्य शूद्रोऽसौ परित्यज्य गृहं गतः ।
स्वस्था देवा मुदा तत्र साधु साध्विति चाब्रुवन् ॥ ३८ ॥

निर्ग्रन्थिरूपमादाय तस्यान्तिकगृहं तथा । गत्वाऽहं दैवसंवादमवदं भूतवर्तनम् ॥३९॥

ततोऽभ्यासप्रसङ्गाच्च जनानां च परिप्लवात् ।
तस्य योषा तदागत्य पप्रच्छ दैवकारणम् ॥ ४० ॥
ततोऽहमवदं तस्य यद्वाचेतोगतं द्रुतम् ।
निभृतोऽथ निनादस्य कारणं कथितं मया ॥ ४१ ॥

हृद्गतं पतिना तेऽद्य विधिना दत्तमङ्गवत् । परित्यक्तं महाभागे पुनर्नास्तीह ते वसु ॥

यावज्जीवति दौर्विध्यं तस्य भक्ता न संशयः ।
गच्छमातर्गृहं शून्यमलब्धं तत्प्रपृच्छ तम् ॥ ४३ ॥

श्रुत्वा तद्वै शिवं सा च वचनंपत्युरन्तिके । गत्वाप्रोवाचदुर्वृत्तं तच्छ्रुत्वाविस्मयंगतः
स विचिन्त्य तया सार्धमागतोऽसौममान्तिकम् । निभृतं मामुवाचेदं क्षपणत्वंचकीर्तय

क्षपणक उवाच ।

चाक्षुषं चिरसंशुद्धं हेलयातृणवत्कथम् । त्वया त्यक्तं यतस्तात नास्तिभाग्यमकण्टकम्
ऐश्वर्यमतुलं शौर्यं शीर्यतेभावुकं पुनः । स्वबन्धूनां महद्दुःखमाजन्ममरणान्तिकम् ॥४७

द्रक्ष्यसे चात्मना नित्यं मृतानां या गतिर्ध्रुवम् ।
तस्मात्तद्गृह्यतां तूर्णं भुंङ्क्ष्व भोग्यमकण्टकम् ।
ऐश्वर्यमतुलं शौर्यं लोकानां विस्मयं वरम् ॥ ४८ ॥

शूद्र उवाच ।

न मे वित्ते स्पृहा चास्तिधनं संसारवागुरा । तद्विधौ पतितो मर्त्यो न पुनर्मोक्षकंव्रजेत्
शृणु वित्तस्य यद्दोषमिह लोके परत्र च । भयं चोराच्च ज्ञातिभ्योराजभ्यस्तस्करादपि
सर्वेजिघांसवो मर्त्याः पशुमत्स्यविविष्किराः । तथाधनवतांनित्यंकथमर्थास्सुखावहाः

प्राणस्यान्तकरो ह्यर्थस्साधको दुरितस्य च।
कालादीनां प्रियं गेहं निदानं दुर्गतेः परम् ॥ ५२ ॥

क्षपणक उवाच।

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः।
कुलं शीलं च पाण्डित्यं रूपं भोग्यं यशः सुखम् ॥ ५३ ॥

धनेन तु विहीनस्य पुत्रदारोज्झितस्य च। कथं मित्रं कथं धर्मो दीनानां जन्मनःकथम्
सत्त्वादिक्रतुकार्यंच पुष्करिण्युपकारकम्। दानंनाकस्यसोपानंनिःस्वस्यच नसिद्धयति
व्रतकार्यस्य रक्षा च धर्मादिश्रवणं भृशम्। पितृयज्ञादितीर्थं च निर्वित्तस्य नसिद्धयति
तथा रोगप्रतीकारः पथ्यमौषधसञ्चयः। रक्षणंविग्रहस्यैव शत्रूणां विजयोध्रुवम् ॥

स्त्रीणां च जन्मनावार्ता वसुयोगेन लभ्यते।
भूतभव्यप्रवृत्तानां सुकृतं दुष्कृतं च यत् ॥ ५८ ॥

तस्माद्बहुधनंयस्य तस्यभोग्यं यदृच्छया। स्वर्गं वितरणादेव लप्स्यसे ह्यचिरादितः ॥

शूद्र उवाच।

अकामाच्च व्रतं सर्वमक्रोधात्तीर्थसेवनम्। दया जप्यसमा शुद्धं सन्तोषो धनमेव च ॥

अहिंसा परमा सिद्धिः शिलोञ्छवृत्तिरुत्तमा।
शाकाहारः सुधातुल्य उपवासः परन्तप ॥ ६१ ॥

सन्तोषो मे महाभोग्यं महादानं वराटकम्। मातृवत्परदाराश्च परद्रव्याणि लोष्टवत् ॥

परदारा भुजङ्गाभाः सर्वे यज्ञा इदं मम।
तस्मादेनं न गृह्णामि सत्यं सत्यं गुणाकर ॥ ६३ ॥
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ ६४ ॥

भगवानुवाच।

इत्युक्ते तु नरश्रेष्ठ पुष्पवर्षं पपात ह। मूर्ध्नि देशे तनौ तस्य सर्वदेवेरितं द्विज ॥ ६५ ॥
देवदुन्दुभयो नेदुर्नृत्यन्त्यप्सरसां गणाः। जगुर्गन्धर्वपतयो विमानं चापतद्दिवः॥६६॥
ऊचुर्देवगणास्तत्र विमानमिदमारुह। सत्यलोकं समासाद्य भुङ्क्ष्व भोग्यं महेन्द्रवत् ॥

सङ्ख्या तेनापि वर्तेत भोग्यकालस्य धार्मिक ।
इत्युक्तेषु च देवेषु शूद्रो वचनमब्रवीत् ॥ ६८ ॥

शूद्र उवाच ।

कथं निर्ग्रन्थकस्यास्य ज्ञानं चेष्टास्य भाषणम् ।
किं वा हरिहरौ ब्रह्मा किं वा शक्रो बृहस्पतिः ॥ ६९ ॥
किं वा मच्छलनार्थाय साक्षाद्धर्म इहागतः ॥ ७० ॥

श्रीभगवानुवाच ।

इत्युक्ते क्षपणश्चासौ स्मितो वचनमब्रवीत् ॥ ७१ ॥

क्षपणक उवाच ।

विज्ञातुं चैव वो धर्ममहं विष्णुरिहागतः । विमानेन दिवं गच्छ सकुटुम्बो महामुने ॥
मत्प्रसादाच्च युष्माकं सदैव नवयौवनम् । भविष्यति महाप्राज्ञ भाग्यानन्त्यं प्रलप्स्यथ

श्रीभगवानुवाच ।

दिव्याभरणसंयुक्ता दिव्यवस्त्रोपशोभिताः । गतास्ते सहसा नाकं सर्वैर्बन्धुजनैर्वृताः
एवं द्विजवरश्रेष्ठ लोभत्यागाद्ययुर्दिवम् । तुलाधारस्तथा धीमान्सत्यधर्मप्रतिष्ठितः ॥
येन जानाति तद्वृत्तं देशान्तरसमुद्भवम् । तुलाधारसमो नास्ति सुरलोके प्रतिष्ठितः ।
तस्मात्त्वमपि भूदेव समं गत्वा दिवं व्रज ॥ ७६ ॥
य इदं शृणुयान्मर्त्यः सत्यधर्मप्रतिष्ठितः ।
जन्मजन्मार्जितं पापं तत्क्षणात्तस्य नश्यति ॥ ७७ ॥
सकृत्पठनमात्रेण सर्वयज्ञफलं लभेत् । लोकानां पुरतो विप्र देवानामर्च्यतां व्रजेत् ॥
इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे शूद्रस्यालोभाख्यानं नाम पञ्चपञ्चाशत्तमोऽध्यायः ।

---

# षट्पञ्चाशत्तमोऽध्यायः

## कामस्य दुर्जयत्वकथनेऽहल्येन्द्रचरित्रम् ।

श्रीभगवानुवाच ।

अद्रोहकस्य चाख्यातो महिमा लोकदुःसहः ।
एकतल्पगतां वामां क्षान्त्वा सर्वजितोऽभवत् ॥ १ ॥
ज्ञानिनामपि दुःसाध्यं मुनीनां ब्रह्मचारिणाम् । सुरासुरमनुष्याणांविषमंतत्समंगतः ॥२॥
स्वभावाद्विषमं कामं जेतुंकः पुरुषः क्षमः । अद्रोहकमृते विप्र स एव भवजित्पुमान् ॥
अहल्याहरणादेव सुरेशस्य भगाङ्कता । पुनर्देव्याः प्रसादाच्च सहस्राक्षेति विश्रुतः ॥४॥
विदितं सर्वलोके च त्रैलोक्ये सचराचरे ॥ ५ ॥

द्विज उवाच ।

कथं च देवदेवस्य अहल्याहरणं प्रभो । भगाङ्कत्वं च सम्प्राप्य सहस्राक्षः सुराधिपः ॥
नगाङ्कोऽपिभगाङ्कत्वं सम्प्राप्तस्सुरराट् कथम् । दुःश्रुतंसुरवैकल्यंश्रोतुमिच्छामितत्त्वतः

श्रीभगवानुवाच ।

पुरा स्वान्तोद्भवां कन्यां लोकेशश्च महामनाः । गौतमायददौधातालोकपालाग्रतोमुदा
ततस्तुलोकपालानां मन्मथाविष्टचेतसाम् । शचीपतेस्तु संमोहो हृदि शल्य इव स्थितः
लोकपालानतिक्रम्य सुवेषा वरवर्णिनी । द्विजाय रत्नभूतैषा दत्ताकिं वा करोम्यहम् ॥
इति सञ्चिन्त्य तस्यास्तु वर्तमाने च यौवने ।
पुनश्च मायया दृष्टं रूपं तस्यास्सुशोभनम् ॥ ११ ॥
पुनश्चिन्तयमानोऽसौ गौतमाध्यासनंगतः । पश्चात्तु तस्य गमनाद्यद्वृत्तं तच्छृणुष्व मे
एकदा गौतमः स्नातुं गतोऽसौ पुष्करं प्रति । साध्वी च गृहशौचेच गृहवस्तुनि तत्परा
प्रवृत्ता देववास्तूनां बलिंकर्तुं च तत्परा ।
इन्धनं वह्निकार्यं च नित्यकर्मानुसञ्चयम् ॥ १४ ॥

एतस्मिन्नन्तरे शक्रो मुनेस्तस्य महात्मनः। रूपमास्थाय गात्रेण प्रविवेशोटजं मुदा
पतिव्रता पतिं दृष्ट्वा श्रद्धया परया सती। देवस्थाने च वस्तूनां सञ्चयं कर्तुमुद्यता ॥१६॥
ततस्तामब्रवीदार्तो मुनिवेषधरो हरिः ॥ १७ ॥

इन्द्र उवाच।

प्रद्युम्नवशगो वामे देहि मे चुम्बनादिकम् ॥ १८ ॥

श्रीभगवानुवाच।

एतस्मिन्नन्तरे सा च त्रपायुक्ताऽब्रवीद्वचः ॥ १९ ॥

अहल्योवाच।

देवकार्यादिकं त्यक्त्वा वक्तुं नार्हसि मे प्रभो। सर्वं जानासि धर्मज्ञ पुण्यानांनिश्चयंमुने
अयमर्थो हि वेलायामधुनैव न युज्यते ॥ २१ ॥

श्रीभगवानुवाच।

ततस्तां चारुसर्वाङ्गीं दृष्ट्वा मन्मथपीडितः।

इन्द्र उवाच।

अलं प्रियेन वक्तव्यं हृच्छयो मे प्रजायते। कर्तव्यं चाप्यकर्तव्यं पत्युर्वचनसंमतम् ॥
करोति सततं या च सा च नारीपतिव्रता। लङ्घयेद्या च तस्याज्ञां सुरते च विशेषतः ॥
पुण्यं तस्या भवेन्नष्टं दुर्गतिं चाधिगच्छति ॥ २४ ॥

श्रीभगवानुवाच।

साब्रवीद्देवचवस्तूनि सन्ति देवार्थतोमुने। नित्यकर्माणि चान्यानि किं वा तेषुविपर्ययः
सचोवाच सतीं तत्र देह्यालिङ्गादिकं मम।
मनसा भयमुत्सृज्य मया दत्तानि तानि च ॥ २६ ॥

इत्युक्त्वा तां परिष्वज्य कृतस्तेन मनोरथः। एतस्मिन्नन्तरे विप्र मुनेर्हृद्यासकल्मषम्
ततो ध्यानं समारभ्याजानाद्वृत्तं शचीपतेः। तूर्णमेव द्वारदेशे गत्वा च समुपस्थितः ॥
शक्रो मुनिं तु संलक्ष्य चौतुदेहं विवेश ह। गच्छतो वृषदंशस्यापद्धतौ प्रचचालह ॥
मुनिस्तत्राबवदत्तं वै कस्त्वं मार्जाररूपधृक्। भयात्तस्य मुनेरग्रे शक्रः प्राञ्जलिरास्थितः

मघवन्तं पुरो दृष्ट्वा चुकोप मुनिपुङ्गवः ॥ ३१ ॥

मुनिरुवाच ।

यत्त्वयाचेदृशं कर्म भगार्थं छलसाहसम् । कृतं तस्मात्तवाङ्गेषु सहस्रभगमुत्तमम् ॥३२॥

भवत्विह तु पापिष्ठ लिङ्गं ते निपतिष्यति ।

गच्छ मे पुरतो मूढ सुरस्थानं दिवौकसः ॥ ३३ ॥

पश्यन्ति मुनिशार्दूला नराः सिद्धास्सहोरगाः ॥ ३४ ॥

श्रीभगवानुवाच ।

एवमुक्त्वा मुनिश्रेष्ठो रुदन्तीं तां पतिव्रताम् । पप्रच्छ किमिदानीं ते कर्मदारुणमागतम्

इत्युक्ता वेपमाना सा भीता पतिमुवाचह ॥ ३५ ॥

अहल्योवाच ।

अज्ञानाद्यत्कृतं कर्म क्षन्तुमर्हसि वै प्रभो ॥ ३६ ॥

मुनिरुवाच ।

परेणाभिगतासि त्वममेध्या पापचारिणी । अस्थिचर्मसमाविष्टा निर्मांसा नखवर्जिता ॥

चिरं स्थास्यसि चैकापि त्वां पश्यन्तु जनाः स्त्रियः ॥ ३७ ॥

श्रीभगवानुवाच ।

दुःखिता तमुवाचेदं शापस्यान्तो विधीयताम् ।

इत्युक्ते करुणाविष्टो मन्युनापि परिप्लुतः ॥ ३८ ॥

जगाद गौतमो वाक्यं रामोदाशरथिर्यदा । वनमभ्यागतो विष्णुः सविश्वामित्रलक्ष्मणः

दृष्ट्वा त्वां दुःखितां शुष्कां निर्देहां पथि संस्थिताम् ॥

गदिष्यति च वै रामः कौशिकस्याग्रतो हसन् ॥ ४० ॥

किमियं शुष्करूपा च प्रतिमास्थिमयी शुभा । न दृष्टं मे पुरा ब्रह्मन्रूपं लोकविपर्ययम्

ततो रामं महाभागं विष्णुंमानुषविग्रहम् । यद्वृत्तमासीत्पूर्वं तत्कौशिकः कथयिष्यति

कौशिकस्य वचः श्रुत्वा रामो वक्ष्यति धर्मवित् ।

अस्या दोषो न चैवास्ति दोषोऽयं पाकशासने ॥ ४३ ॥

एवमुक्ते तु रामेण त्यक्त्वा रूपंजुगुप्सितम् । दिव्यंरूपं समास्थाय मद्गृहं चागमिष्यसि

शप्त्वा तु गौतमस्तां हि तपस्तप्तुं गतो वनम् ।

ततोऽत्यन्तं शुष्करूपा तथैव पथि संस्थिता ॥ ४५ ॥

रामस्य वचनादेव गौतमं पुनरागता । गौतमोऽपि तया सार्द्धमद्यैवं दिवि तिष्ठति ॥

इन्द्रोऽपि त्रपयायुक्तःस्थितश्चान्तर्जले चिरम् ।

स्थित्वा चान्तर्जले देवीमस्तौदिन्द्राक्षिसंज्ञिताम् ॥ ४७ ॥

सुप्रसन्ना ततो देवी स्तोत्रेण परितोषिता ।

गत्वोवाच ततः सा च वरोऽस्मत्तो विगृह्यताम् ॥ ४८ ॥

ततो देवीमुवाचेदं शक्रः परपुरञ्जयः ॥ ४९ ॥

शक्र उवाच ।

त्वत्प्रसादाच्च मे देवि वैरूप्यं मुनिशापजम् । नश्येच्च देवराज्यं च लभेऽहं तु पुरा यथा

श्रीभगवानुवाच ।

तमुवाच ततो देवी पापं तन्मुनिशापजम् । हन्तुं ब्रह्मादयो देवाश्शक्ता नाहं सुरेश्वर ॥

किं तु बुद्धिं सृजाम्यद्य येन लोकैर्नलक्ष्यते । योनिमध्यगतं दृष्टि सहस्रं ते भविष्यति

सहस्राक्ष इति ख्यातस्सुरराज्यं करिष्यसि ।

मेषाण्डं तव शिश्नं च भविष्यति च मद्वरात् ॥ ५३ ॥

इत्युक्त्वा सा जगन्माता तत्रैवान्तरधीयत ।

शक्रो देववरैः पूज्यो ह्यद्यापि दिवि वर्तते ॥ ५४ ॥

इन्द्रस्यैतादृशी कामादवस्था द्विजसत्तम ॥ ५५ ॥

इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे अहल्याहरणं नाम षट्पञ्चाशत्तमोऽध्यायः ।

———

## सप्तपञ्चाशत्तमोऽध्यायः

### कामस्य दुर्जयत्वे परमहंसचरित्रम् ।

श्रीभगवानुवाच ।

अपरं च प्रवक्ष्यामि कामेनाधिष्ठितस्य च । पुरा भागीरथीतीरे द्विजः परमहंसकः ॥१॥
उपदेष्टा सहस्राणां द्विजानां शान्तिदः परः । एकदण्डधरः साक्षात्कूर्मवद्धरणीस्थितः
एकाकिनः सतस्तस्य देवागारे विनिष्कृते । पत्युर्गृहात्परं गेहं गन्तुंसायं समुद्यता ॥
अकस्माद्युवती नारीमिलितारूपधारिणी । दृष्ट्वा तां भगवान्विप्रो मन्मथस्य भयार्दितः

अगारजठरे कृत्वा स चैनां प्राक्षिपत्क्षपाम् ।
अर्गलं सादृढं कृत्वा देवागारे सुशोभने ॥ ५ ॥

कदाचिदर्पितं द्वारादागन्तुं नददातिह । एवंभूतः समाधिस्थः क्षपां क्षिप्त्वा विलप्यसः

चिन्तयंस्तां वरारोहां द्वारि किं वा कृतं मम ।
एवं सञ्चिन्त्य तामाह द्वारं देहीह नः प्रिये ॥ ७ ॥

पतिश्च वशगः कान्ते दयितस्ते भविष्यति । ततस्तं प्राह सा विप्रं वृद्धं कामप्रलालसम्

नार्युवाच ।

अनन्विता गिरस्तात वक्तुं त्वं नार्हसि प्रभो ॥ ९ ॥

श्रीभगवानुवाच ।

अथासौ भगवान्प्राह प्रचुरं चास्तिमेवहु । तवदास्यामिकल्याणिप्रस्फोटयकपाटिकाम्
विप्रमाह पुनः सा च त्वं वै मे धर्मतःपिता । मागच्छपुत्रिकां मां च परयोषांचधार्मिक

मनसा स समालोच्य सुषिरेण पथा गृहान् ।
वाहुनोद्घाटयतेनैव गन्तुं चैव समुद्यतः ॥ १२ ॥

गच्छतश्चार्द्धमरर उत्तमाङ्गं सुसङ्कटे । प्रविष्टं न पुनश्चैति पञ्चत्वमगमत्तदा ॥ १३ ॥
उषःकालेसमायाता रक्षिणो ये चकिङ्कराः । अद्भुतं तं शवंदृष्ट्वा तामूचुस्ते च विस्मिताः॥

रक्षिण ऊचुः ।

कथं च निधनं त्वस्य सम्भूतं ब्रूहि सुन्दरि ॥ १५ ॥

श्रीभगवानुवाच ।

कथयित्वा तु तद्वृत्तमभीष्टं देशमागता । एवं कामस्यमहिमा दुर्निवारो जनेषु च ॥
सर्वेषामपि जन्तूनां सुरासुरनृणां भवेत् । दृष्ट्वाऽमोघां वरारोहां सर्वलोकपितामहः ॥
च्युतबीजोऽभवत्तत्र लौहित्यसम्भवःस्मृतः । पुनाति सकलाँल्लोकान्सर्वतीर्थमयोहि सः
यमाश्रित्य नरो याति ब्रह्मलोकमनामयम् ॥ १६ ॥

द्विज उवाच ।

कथञ्च ब्रह्मणोमोहो ह्यमोघा का वराङ्गना । उद्भवं तीर्थराजस्य श्रोतुमिच्छामि तत्त्वतः

श्रीभगवानुवाच ।

मुनिर्देवैः समाराध्यः पद्मयोनिसमप्रभः । शन्तनुश्चेति विख्यातः पत्नी तस्य पतिव्रता
अमोघेति समाख्याता रूपयौवनशालिनी । अस्याश्च पतिमन्वेष्टुं यातोब्रह्मा चतद्गृहम्
तस्मिन्काले मुनिश्रेष्ठः पुष्पाद्यर्थं वनं गतः । सा तं दृष्ट्वा सुरश्रेष्ठमर्घ्यपाद्यादिकंददौ ॥
दूरेऽभिवादनं कृत्वा सा गृहं प्रविवेशह । तां च दृष्ट्वाऽनवद्याङ्गीं धाता कामवशं गतः ॥
स्रष्टात्मानं समाधायाचिन्तयत्तां पुरोगताम् । बीजं पपातखट्वायां ब्रह्मणः परमात्मनः
ततो ब्रह्मागतस्त्रस्तस्त्वरया परिपीडितः । अथायातोमुनिर्गेहं शुक्रं पीठे ददर्शह ॥
तामपृच्छद्वरारोहां कश्चाप्यत्रागतः पुमान् । तमुवाचततोऽमोघा ब्रह्मा ह्यत्रागतः पते ॥
त्वामेवान्वेषितुं नाथ मयादत्तोऽत्र पीठकः । शुक्रस्य कारणं चात्र तपसा ज्ञातुमर्हसि ॥
ततो ध्यानात्परिज्ञातं तेनैव च द्विजन्मना ॥ २६ ॥

शन्तनुरुवाच

ब्रह्मरेतः परंसाध्वि पालयस्व ममाज्ञया । उत्पद्यते सुतस्ते तु सर्वलोकैकपावन ॥
आवयोः सर्वकल्याणं फलिष्यति मनोगतम् ॥ ३० ॥

श्रीभगवानुवाच ।

ततः पतिव्रता तस्य आज्ञामागृह्यसम्भवात् । पपौरेतो महाभागा ब्रह्मणः परमात्मनः ॥

आवर्त इव सञ्जज्ञे रौद्रगर्भ इति स्फुरन् । प्रसोढुं नैव शक्ता सा शन्तनुं चाब्रवीत्ततः ॥

अमोघोवाच ।

गर्भं धारयितुं नाथ न शक्नोम्यधुना प्रभो । किंकरिष्यामि धर्मज्ञ प्राणो मेसञ्चलत्यपि

आज्ञापय महाभाग गर्भं त्यक्ष्यामि यत्र च ॥ ३३ ॥

पत्युराज्ञां समादाय मुक्तो गर्भो युगन्धरे । पयस्तेजोमयं शुद्धं सर्वधर्मप्रतिष्ठितम् ॥

तन्मध्ये पुरुषःशुद्धः किरीटी नीलवाससा । रत्नदाम्नाचविद्धाङ्गोदुष्प्रेक्ष्योज्योतिषांगणः

ततो देवगणाः स्वर्गात्पुष्पवर्षमवाकिरन् ।

प्रसूतः सर्वतीर्थेषु तीर्थराज इति स्मृतः ॥ ३६ ॥

ततो राम इति ख्यातःप्रजातोऽहं भृगोः कुले । क्षत्रियान्पितृहन्तॄंस्तुससैन्यबलवाहनान्

हत्वा युद्धगतान्भीतान्पङ्क्तैः सर्वैर्युतो ह्यहम् । ब्रह्महत्यासमं घोरं मद्गेहे समुपस्थितम्

पङ्कयुक्तं कुठारं मे क्षालितं नैव शुद्धयति ।

ततः खेचाभवद्वाणी राम मद्वचनं कुरु ॥ ३९ ॥

देववागुवाच ।

यत्रतीर्थे कुठारं ते निर्मलं च भवेदिह । तत्र ते सर्वपापानां जातानां च क्षयोभवेत् ॥

जनानां तत्र सर्वेषां हितार्थं तिष्ठमानद । चपलं गच्छ तीर्थानि सर्वाणि सुमहान्ति च ॥

तेषांमध्ये महातीर्थे पर्शुः शुद्धो भवेद्यदि । तं च जानीहितीर्थेषु मुक्तिदं परिकीर्तितम् ॥

श्रीभगवानुवाच ।

तच्छ्रुत्वा जामदग्न्यस्तु तीर्थानि प्रययौ तदा । गङ्गां सरस्वतीं शुभ्रांकावेरीं सरयूंतथा

गोदावरीं च यमुनां कद्रूं च वसुदां तथा ।

अन्यां च पुण्यदां रम्यां गौरीं पूर्वां स्थितां शुभाम् ॥ ४४ ॥

गच्छतस्तस्य धीरस्य सदागतिसमस्य च । क्षालितः सर्वतीर्थेषु न पुनर्निर्मलोऽभवत्

ततो गिरिगुहां दुर्गां महारण्यं च पर्वतम् । गिरिकूटं च दुर्लभ्यं ययौतीर्थमसौ हरिः ॥

न च निर्मलतामेति कुठारस्तस्य तेन च । विषादमगमत्तत्र रामः परपुरञ्जयः ॥ ४७ ॥

हाहेति विविधं कृत्वा चोपविश्य धरातले । प्रचिन्तामगमद्वीरस्तमुवाच पुनस्तथा ॥

देववागुवाच ।

पूर्वस्यां दिशि देवेश तीर्थं चास्ति गुहोदरे ॥ ४६ ॥

श्रीभगवानुवाच ।

तच्छ्रुत्वा नरशार्दूलो गत्वा कुण्डं ददर्श सः । प्रदक्षिणं जलावर्तं शुभ्रं पापहरं शुभम् ॥
तज्जलस्पर्शमात्रेण कुठारः शुद्धतां गतः । ततो रामोऽभिषेकं तु कृतवान्प्रमुदान्वितः ॥

शुद्धात्मनस्त्वपापस्य बुद्धिर्जाता प्रपाविनी ।
स रामः सुचिरं स्थित्वा तीर्थराजं प्रसाद्य तम् ॥ ५२ ॥
ततस्ततोऽचलात्प्राप्य पुरं वेगसमन्वितः ।
ख्यातं कृत्वा ततश्चोर्व्यां गतोऽसौ लवणार्णवम् ॥ ५३ ॥

अयं तीर्थवरः साक्षात्पितामहकृतोभुवि । सुखदः सर्वतः शुद्धो मुक्तिमार्गप्रदः किल ॥
एवं कामप्रभावं च विद्धिदुर्वारदुःसहम् । कामाज्जातंवृषपापं प्रपुण्यं (?) पुण्यप्रयोगतः
स जातश्चैव लौहित्यो विरिञ्चेश्चैव चौरसः । शन्तनोःक्षेत्रसञ्जातस्त्वमोघागर्भसम्भवः
विरञ्चिना जितः कामःशन्तनोरप्यमत्सरात् । तस्याःपतिव्रतात्वाच्चतीर्थात्तीर्थवरोहिसः

एवं यस्तु पठेन्नित्यं पुण्याख्यानमिदं शिवम् ।
शृणुयाद्वा मुदा पृथ्व्यां मुक्तिमार्गं स गच्छति ॥ ५८ ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे पञ्चाख्याने लौहित्योत्पत्तिर्नाम सप्तपञ्चाशत्तमोऽध्यायः ।

---

# अष्टपञ्चाशत्तमोऽध्यायः

## कामाख्याने गन्धर्वादिस्त्रीभिः सह शिवक्रीडावर्णनम् ।

श्रीभगवानुवाच ।

पुरा शर्वः स्त्रियो दृष्ट्वा युवतीरूपशालिनीः । गन्धर्वकिन्नराणां च मनुष्याणांचसर्वतः
मन्त्रेण ताः समाकृष्य त्वतिदूरे विहायसि । तपोव्याजपरो देवस्तासु सक्तमानसः ॥

अतिरम्यां कुटीं कृत्वा ताभिः सह महेश्वरः।
क्रीडां चकार सहसा मनोभवपराभव ॥ ३ ॥
एतस्मिन्नन्तरे गौर्याश्चित्तमुद्भ्रान्ततां गतम्। अपश्यद्ध्यानयोगेन क्रीडन्तंजगदीश्वरम्
स्त्रीभिरन्तर्गतं ज्ञात्वा रोषस्य वशगाऽभवत्। ततः क्षेमङ्करीरूपा भूत्वा च प्रविवेशसा
व्योमैकान्तेऽतिदूरे च कामदेवसमप्रभम्। वामातिमध्यगं शुभ्रं पुरुषं पुरुषोत्तमम् ॥६॥
स्त्रीभिः सह समालिङ्ग्य प्रक्रीडन्तं मुहुर्मुहुः।
चुम्बन्तं निर्भरं देवं हरं रागप्रपीडितम् ॥ ७ ॥
वृत्तं क्षेमङ्करी दृष्ट्वा निपपाताग्रतस्तदा। तासां केशेषु चाकृष्य चकार चरणाहतिम् ॥
त्रपया पीडितश्शर्वः पराङ्मुखमवस्थितः। केशेष्वाकृष्य रोषात्ताः पातयामास भूतले
स्त्रियः सर्वाधरां प्राप्य सहसा विकृताननाः।
उमाशापप्रदग्धाङ्गा म्लेच्छानां वशमागताः ॥ १० ॥
ताश्चाण्डालस्त्रियः ख्याताअपवाधवसंयुताः। अद्याप्युमाकृतंशापंसर्वास्ताश्चसमश्नुयुः
अथोमा शतधारूपं कृत्वेशं सङ्गता तदा। एवं प्रभावं जानीहि कामस्य सततं द्विज ॥
ततश्चिरात्तया सार्द्धं गतः कैलासमन्दिरम्।
अतः क्षेमङ्करीं दृष्ट्वा येऽभिनन्दन्ति मानवाः ॥ १३ ॥
तेषां वित्तर्द्धिविभवा भवन्तीह परत्र च। कुङ्कुमारक्तसर्वाङ्गि कुन्देन्दुधवलानने ॥ १४ ॥
सर्वमङ्गलदे देवि क्षेमङ्करि नमोऽस्तुते। योगिनी साम्यं तेनैव सम्मुखा विमुखापि वा
दृष्ट्वा तां नाभिवन्देद्यस्तस्य युद्धे पराजयः। राजगृहेषु विद्यायां नमस्काराज्जयो भवेत्
एवं कामस्य मोहात्म्यं भवो मोहवशं गतः।
ममैव यादृशो मोहः सर्वलोकैः प्रगीयते ॥ १७ ॥
परस्त्रीहरणेदोषान्मम दुर्गतिसञ्चयम्। यथोद्भूतं प्रवक्ष्यामि जनेषु विदितं द्विज ॥
गोपी पतिहिता काचित्काचिद्बाला तपस्विनी।
प्रौढा कात्यायनी वृद्धा काचित्सम्बन्धिनी वधू ॥ १९ ॥
आसां हरणदोषाच्च यद्वृत्तं तच्छृणुष्व मे। रणे पराजयं दैन्यं शोकं पुत्रविनाशनम् ॥

सारथ्यं स्त्रीजने पापं चण्डालादेव विप्लवम् ।
शुक्लाङ्गं क्षयवृद्धिं च कल्पे शाश्वतमाप्नुयाम् ॥ २१ ॥
अयं देवासुराणां च क्षमया प्रभुतां गतः । अस्यैव सदृशो लोके न भूतो न भविष्यति॥
रामामङ्कस्थितांरम्यां क्षमा तल्पगतेन च । त्यक्त्वैव साधिता लोकास्सुरासुरसुदुर्लभा॥
एवं वैष्णवमुख्यश्च सुरासुरगणार्चितः । यो नो ददाति भुक्त्यग्र्यं शेषं च स्वयमश्नुते॥
एवमभ्यासधैर्येण दीर्घकालेसुखंगते । प्राक्सङ्गमात्स्वभार्यां च दृष्ट्वा मां प्रददौ मुदा॥
द्वादशाब्दं प्रसङ्कल्प्य प्राग्भोगो मयि वेशितः ।
तेन तस्य गृहे नित्यं तिष्ठामि गृहरक्षणात् ॥ २६ ॥
तथाधात्री फलस्यापि सदास्वरसमीहते । तस्मादुक्तोमयान्येषां वैष्णवानां च वैष्णवः
पुरा ये विप्र मे भक्तास्सुरामत्पथगामिनः । तैरेव न कृतं यच्च तदनेन कृतं परम् ॥ २८॥
तस्माद्वैष्णवसर्वस्वं नामरम्यं मया कृतम् ।
अस्य वेशमनि तिष्ठामि मुहूर्तं न चलाम्यहम् ॥ २९ ॥
अतो ये चैव मद्भक्तास्तेष्वहं सुलभोद्विज । अस्माकंपदवीं तेभ्यो ह्यग्र दद्मिस्वकारणम्
आवयोर्विप्र सौजन्यं स्वप्नभोज्यादिकं समम् ।
सायुज्यं च सखित्वं च पश्य भूदेव नान्तरम् ॥ ३१ ॥

व्यास उवाच ।

ततोमूकादयस्सर्वे स्वागताहरिमीश्वरम् । गन्तुकामादिवं पुण्यास्सदाराःसपरिच्छदाः
ये च तेषां गृहाभ्याशेऽप्यात्मनो गृहगोधिकाः ।
नानाकीटादयो ये च तेषामनुययुः सुराः ॥ ३३ ॥
एतस्मिन्नन्तरे देवाः सिद्धाश्च परमर्षयः । प्रचक्रुः पुष्पवर्षाणि साधुसाध्वित्यनादयन्॥
देवदुन्दुभयो नेदुर्विमानेषु वनेषु च । समारुह्य रथं स्वं स्वं हरिवीथीपुरं ययुः ॥ ३५॥
तदद्भुतं समालोक्य विप्रोऽब्रोचज्जनार्दनम् । उपदेशं च देवेश ब्रूहि मे मधुसूदन ॥३६॥

श्रीभगवानुवाच ।

गच्छस्व पितरौ तात शोकविक्लवमानसौ ।

समाराध्य प्रयत्नेन मद्गृहं प्राप्स्यसेऽचिरात् ॥ ३७ ॥

पितृमातृसमा देवा न तिष्ठन्ति सुरालये। याभ्यां सुगर्हितं देहं शिशुत्वे पालितं सदा

अज्ञानदोषसहितं प्रपुष्टं चापि वर्धितम्।

याभ्यां तयोस्समं नास्ति त्रैलोक्ये सचराचरे ॥ ३९ ॥

व्यास उवाच।

ततो देवगणास्सर्वे पञ्चभिस्तैर्मुदान्विताः। माधवं संस्तुवन्तश्च गतास्ते हरिमन्दिरम्

खचितांच पुरीं रम्यांविश्वकर्मविनिर्मिताम्। रत्नाढ्यामिष्टसम्पूर्णांकल्पवृक्षादिभिर्युताम्

शातकुम्भमयैर्गेहैस्सर्वरत्नैस्सकर्बुराम्। वज्रवैडूर्यसोपानां स्वर्णदीतोयसंयुताम् ॥४२॥

गीतवाद्यादिसम्पूर्णां सर्वदुर्गसमाकुलाम्। कोकिलालापबहुलां सिद्धगन्धर्वसेविताम् ॥

रूपाढ्यैः सुजनैः पूर्णां प्रयान्तीमिव खेपुरीम्।

ततः स्थित्वाऽच्युताः सर्वे सर्वलोकोर्ध्वतो भृशम् ॥ ४४ ॥

द्विजोऽपि पितरौ गत्वा समाराध्य प्रयत्नतः।

अचिरेणैव कालेन सकुटुम्बो हरिं ययौ ॥ ४५ ॥

पञ्चाख्यानमिदं पुण्यं मया ते समुदाहृतम्। यः पठेच्छृणुयाद्वापि तस्य नास्तीहदुर्गतिः

ब्रह्महत्यादिभिः पापैर्नलिप्येत कदाचन ॥ ४६ ॥

गवां कोटिप्रदानेन यत्फलं लभते नरः। तत्फलं समवाप्नोति पञ्चाख्यानावगाहनात् ॥

स्नानेन पुष्करे नित्यं भागीरथ्यां च सर्वदा।

यत्फलं तदवाप्नोति सकृच्छ्रवणगोचरात् ॥ ४८ ॥

दुःस्वप्नं नाशयेत्क्षिप्रं तथारोग्यंप्रयच्छति। लक्ष्म्यारोग्यकरं चैव तस्माच्छ्रोतव्यमेवहि

इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे पञ्चाख्यानं नामाष्टपञ्चाशत्तमोऽध्यायः।

———

## ऊनषष्टितमोऽध्यायः

### जलदानमाहात्म्यवर्णनम् ।

द्विजा ऊचुः ।

कीर्तिर्धर्मोऽथ लोकेषु सर्वाणि प्रवराणि च। वद नो मुनिशार्दूल यदि नोऽस्तित्वनुग्रहः

व्यास उवाच ।

यस्य खाते वने गावस्तृप्यन्ति मासमेव च ।
यद्वा सप्तदिनात्पूतः सर्वदेवैः सपूजितः ॥ २ ॥

पुष्करिण्या विशेषेण पूताया यज्ञकर्मणा । यत्फलं जलदानेन सर्वमत्रास्तितच्छृणु॥३॥
हायने हायने चैव कल्पं कल्पं विधीयते । दानात्स्वर्गमवाप्नोति तोयदः सर्वदो भुवि
मेघे वर्षति खाते च जायन्ते ये तु शीकराः । तावद्वर्षसहस्राणि दिवमश्नाति मानवः॥
तोयैरन्नादिपाकैश्च प्रसन्नो मानवो भवेत्। प्राणानां च विनान्नैश्च धारणं नैव जायते

पितॄणां तर्पणं शौचं रूपं वै गन्ध्यनाशनम् ।
बीजं त्विहार्जितं सर्वं सर्वं तोये प्रतिष्ठितम् ॥ ७ ॥

वस्त्रस्य धावनं रुच्यं भाजनानां तथैव च। तेनैव सर्वकार्यं च पानीयं मेध्यमेव च ॥८॥
तस्मात्सर्वप्रयत्नेन वापीकूपतटाककम् । कारयेच्च बलैः सर्वैस्तथा सर्वधनेन च ॥९॥

ततो विनिर्जले देशे यो ददाति जलाशयम् ।
वासरे वासरे तस्य कल्पं स्वर्गं विनिर्दिशेत् ॥ १० ॥

त्रिविष्टपाच्च्युतोविप्रोवेदशास्त्रार्थपारगः । लोकबन्धुःस धर्मात्मातपस्तप्त्वादिवंव्रजेत्
एवं जन्माष्टकं प्राप्य एकस्याक्षयमिष्यते । क्षत्रियाणांकुले जातःसार्वभौमोऽभवन्नृपः

विशोऽक्षयं धनं विद्या जन्मजन्मसु यत्प्रियम् ।
शूद्रादयोऽन्त्यजाश्चान्ये लभन्ते स्वर्गतिं मुहुः ॥ १३ ॥

चतुर्हस्तप्रमाणं तु कूपं खनति यः पुमान् । परोपकारकं नित्यं कल्पं स्वर्गं तु हायने॥

द्विगुणेद्विगुणं विद्याच्छतं चैवचतुर्गुणे । विंशत्किष्कुप्रमाणां तु दद्यात्पुष्करिणीं तु यः
विष्णोर्धामलभेत्सोऽपिदिव्यभोगं तथैवच । अनन्तरंनृपो जातो धनी वागीश्वरोभवेत्

एवं द्वित्रिश्चतुर्वापि गुणतो भोग्यमिष्यते ।
विस्तीर्णे प्रचुरं विद्धि सहस्रेणाच्युतो दिवः ॥ १७ ॥

सहस्राद्द्विगुणेनैव सुरपूज्यो भवेन्नरः । जन्तवस्तत्र ये सन्ति यावन्तो जीवनं ययुः ॥
तत्सङ्ख्याका जनास्तस्य किङ्कराः पृष्ठलग्नकाः । भवन्ति सततं गेहे पुरे जनपदेषु च ॥

विहाय पितरं भोग्या धने क्षीणे यथा वनम् ।
पक्षिणस्सूकरश्चैव महिषी करिणी तथा ॥ २० ॥

उपदेष्टा च कर्त्ता च षडेतेस्वर्गगामिनः । दिव्यं च पक्षिणां चैव शतं स्वर्गंविनिर्दिशेत्
क्रोडो वर्षसहस्रं तु महिष्ययुतहायनम् । देवरूपं समास्थाय करिण्या लक्षमुच्यते ॥
कोट्येकमुपदेष्टुश्च कर्तुरक्षयमेव च । पुरा धनिसुतेनैव कृतः ख्यातो जलाशयः ॥२३॥
अयुतधनव्ययेनैव प्राणेनैव बलेन च । सर्वसत्त्वोपकाराय शिवश्रद्धायुतेन च ॥ २४ ॥

कालेन कियता चापि क्षीणवित्तोऽभवत्किल ।
कश्चिदर्थी धनी तस्य मूल्यदानाय चोद्यतः ॥ २५ ॥

विमृश्यधनिनाचोक्तं व्याहारंश्रृणुताधुना । दीनारस्यायुतंवातेदास्यास्यस्याश्चकारणात्

लब्धं ते पुष्करिण्याश्च पुण्यं लाभात्प्रमन्यसे ।
शक्त्या दत्त्वाऽथ मूल्यं तां स्वीयां कर्तुं व्यवस्थितः ॥ २७ ॥

एवमुक्ते स तं प्राह वासरेऽप्ययुतं पुनः । फलं भवति वै नित्यं पुण्यं पुण्यविदो विदुः
एतस्मिन्निर्जले देशे शिवं खातं कृतं च मे । स्नानपानादिकं कर्म सर्वे कुर्वन्त्यभीष्टतः

तस्मान्मेऽप्ययुतार्थस्य नैत्यकं फलमिष्यते ।
ततस्तस्याभवद्दुधास्यं तथैव च समासदाम् ॥ ३० ॥

ह्रिया च पीडितः सोऽपि वाक्यमेतदुवाचह । सत्यमेतद्वचोऽस्माकं परीक्षां कुरु धर्मतः
मत्सरात्स तु तं प्राह श्रृणु मे वचनं पितः । दीनारायुतमेतत्ते दत्त्वा चानीय प्रस्तरम् ॥

पातयिष्यामि ते खाते यथायोगं प्रमज्जतु ।

उन्मज्जति च यत्काले प्रस्तरः सन्तरत्यपि ॥ ३३ ॥
क्षयं यास्यति नो वित्तं नोचेन्मे धर्मतो हि सा ।
बाढमुक्त्वा युतं तस्य गृहीत्वा स्वगृहं गतः ॥ ३४ ॥
साक्षिणामग्रतस्तेन प्रस्तरः पातितस्तथा । पुष्करिण्यां महत्यां च दृष्टं नरसुरासुरैः ॥
ततो धर्मतुलायां तु तुलितं धर्मसाक्षिणाः । दीनारायुतदानस्य पुष्करिण्याजलस्य तु॥
न समं तु दिनैकं तु जलस्य धर्मतो भृशम् ।
धनिनो मानसं दुःखं मोघार्थं च परेऽहनि ॥ ३७ ॥
शिलोच्चयोऽभवत्तीर्णो द्वीपवच्च जलोपरि। ततः कोलाहलः शब्दो जनानां समुपस्थितः
तच्छ्रुत्वाद्भुतवाक्यं च मुदा तौ चागतौ ततः । दृष्ट्वा शैलं तथा भूतं कृतं तेनायुतं तथा
ततः खाताधिपेनैव शैलं दूरे निपातितम् ।
पुण्यं खातस्य चोत्खाते प्रलुप्तस्य सुतेन हि ॥ ४० ॥
सोऽपि नाकं समारुह्य जन्मजन्मसुनिर्वृतः । गोत्रमातृगणानां च नृपाणां सुहृदांतथा
सखीनांचोपकर्तृणां खातंखात्वाऽक्षयंफलम् । तपस्विनामनाथानां ब्राह्मणानांविशेषतः
खातं तु जनयित्वा तु स्वर्गं चाक्षयमश्नुते ।
तस्मात्खातादिकं विप्राः शक्तितो यः करिष्यति ॥ ४३ ॥
सर्वपापक्षयात्पुण्यं मोक्षं यायान्न संशयः । य इदं श्रावयेल्लोके धर्माख्यानं महोत्कटम्
सर्वखातप्रदानस्य फलमश्नाति धार्मिकः । ग्रहणे भास्करस्यैव भागीरथ्यां तटे वरे॥
गवां कोटिप्रदानस्य फलं श्रुत्वा लभेन्नरः । न च दरिद्रतामेति न शोकं व्याधिसञ्चयम्
असंमानं महद्दुःखमुभयोर्नाधिगच्छति ॥ ४७ ॥
इति श्री पाद्मपुराणे प्रथमे सृष्टिखण्डे खातादिकीर्तनं नामैकोनषष्टितमोऽध्यायः ।

———

## षष्टितमोऽध्यायः

### अश्वत्थादिवृक्षरोपणविधानफलवर्णनम् ।

व्यास उवाच ।

शाखिनामेवसर्वेषां फलंवक्ष्यामियादृशम् । तच्छृणुध्वं महाभागा रोपणे च पृथक्पृथक्

यस्तु रोपयते तीरे पुण्यवृक्षान्समन्ततः ।

तस्य पुण्यफलं ज्ञातुं कथितुं नैव शक्यते ॥ २ ॥

अन्यत्र रोपणं कृत्वा शाखिनां यत्फलंलभेत् । ततोजलसमीपे तु लक्षकोटिगुणं भवेत्

स्वयं पुष्करिणी तीरे त्वनन्तं फलमश्नुते ।

तस्माच्छतगुणं ब्रूमः शाखिनां पुण्यकारिणाम् ॥ ४ ॥

अश्वत्थरोपणं कृत्वा जलाशयसमीपतः । यत्फलं लभते मर्त्यो न तत्क्रतुशतैरपि ॥५॥

पतन्ति यानि पत्राणि जले पर्वणि पर्वणि । तानि पिण्डसमानीह पितॄणामक्षयं ययुः

खादन्ति पतगास्तत्र फलानि कामतो ध्रुवम् ।

ब्रह्मभक्ष्यसमं तस्य पुण्यं भवति चाक्षयम् ॥ ७ ॥

अश्वत्थेनैव वृक्षेण रोपणेनैव यत्फलम् । तद्वैक्रतुशतैर्नैव पुत्रैरेव शतैरपि ॥ ८ ॥

उष्णे च्छायांप्रगृह्णन्ति गावो देवद्विजातयः । कर्तुः पितृगणानां च स्वर्गोभवतिचाक्षयः

कर्तुं स्वस्थस्य वै विघ्नमक्षयत्वान्न शक्यते । तस्मात्सर्वप्रयत्नेन रोपयेद्वृक्षमाधवम्

एकं वृक्षं समारोप्य नरः स्वर्गान्न हीयते । तस्मादेव महावृक्षं रोपयध्वं द्विजोत्तमाः ॥

जलानां निकटे रम्ये रसानां क्रयविक्रये । मार्गे जलाशये वृक्षान्रोपयेद्यो महाशयः॥१२॥

अश्वत्थादीन्समारोप्य स्वर्गं याति मनोरमम् ।

अर्चयित्वा तु यत्पुण्यं प्रवक्ष्यामि द्विजातयः ॥ १३ ॥

स्नात्वाश्वत्थं स्पृशेद्यस्तु सर्वपापैः प्रमुच्यते ।

अस्नातो यः स्पृशेन्मर्त्यो लभते स्नानजं फलम् ॥ १४ ॥

दृष्ट्वा च नाशयेत्पापं स्पृष्ट्वा लक्ष्मीं प्रपद्यते। प्रदक्षिणे भवेदायुः सदाश्वत्थ नमोऽस्तुते

चलद्दलाय वृक्षाय सदा विष्णुस्थिताय च।
बोधिसत्त्वाय योग्याय सदाश्वत्थ नमोऽस्तुते ॥ १६ ॥

अश्वत्थाय तु हव्यं तु पयो नैवेद्यमेव च। पुष्पं धूपं दीपकं च दत्त्वा स्वर्गान्न हीयते॥

सपुत्रं चाक्षयं विद्धि धनवृद्धियशस्करम्।
विजयं मानदं भद्रमश्वत्थस्य प्रपूजनम् ॥ १८ ॥

यज्ञतंच हुतं स्तोत्रं यन्त्रमन्त्रादिकं च यत्। सर्वंकोटिगुणं प्रोक्तं मूले चलदलस्य च

यस्यमूले स्थितो विष्णुर्मध्येतिष्ठतिशङ्करः। अग्रभागेस्थितो ब्रह्मा कस्तं जगतिनार्चयेत्

सोमवारे त्वमायां च स्नानं यन्मौनिना कृतम्।
दानस्य गोसहस्रस्य फलं चाश्वत्थवन्दने ॥ २१ ॥

सप्तप्रदक्षिणे नैव गवामयुतजं फलम्। प्रचुराल्लक्षकोटिश्च तस्मात्कार्या हि सा सदा॥

यत्किञ्चिद्दीयते तत्र फलमूलजलादिकम्। सर्वं तच्चाक्षयफलं जन्मजन्मसु जायते॥

अहोऽश्वत्थसमो नास्ति वृक्षरूपी हरिर्भुवि।
यथा पूज्यो द्विजो लोके यथा गावो यथामराः ॥ २४ ॥

तथाश्वत्थवृक्षरूपो देवः पूज्यतमः स्मृतः। रोपणे रक्षणे स्पर्शे पूजाकर्मणि वै सदा॥

ददाति वित्तं पुत्रांश्च स्वर्गं मोक्षं पुनः क्रमात्।
किञ्चिच्छेदं तु यः कुर्यादश्वत्थस्य तनौ नरः ॥ २६ ॥

कल्पैकं निरयं भुक्त्वा चाण्डालादौ प्रजायते।
मूलच्छेदेन तस्यैव स च यात्यपुनर्भवम् ॥ २७ ॥

पुरुषास्तस्य तिष्ठन्ति रौरवे घोरदर्शने। अश्वत्थस्यैकवृक्षस्य रोपणे यत्फलं भवेत्॥

तथैव चम्पकेऽर्के च त्रयाणां रोपणेऽपि च। अष्टौविल्वस्य वृक्षाश्च न्यग्रोधाश्चैवसप्तव

निम्बस्यदशवृक्षाश्च फलं चैषां समंभवेत्। एकैकस्यफलं चोक्तं वृक्षाणां रोपणे द्विजाः

एवं बुद्ध्वा तु धर्मात्मा यः कुर्यात्कृत्रिमं वनम्।
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥ ३१ ॥

नाकमेति स चूतस्य समारोप्य सहस्रकम् । ततो द्वित्रिगुणेनैवन्यूने वा प्रचूरेऽपि वा

भुङ्क्ते भुक्त्वा पुनः कुर्यान्नृपोवाथ सदीश्वरः ।

स्वर्गं भोग्यं ततो राज्यं कल्याणं मङ्गलं शुभम् ॥ ३३ ॥

आरोग्यं शौर्यसम्पन्नमारामादेव जायते । फलानि यस्य खादन्ति जन्तवोऽथसहस्रशः

आश्रिताविहगाःकीटाःपतगाःशलभादयः । छायाश्रिताश्चयेसत्त्वास्तत्संख्याताःपृथग्जना

तस्य किङ्करतां यान्ति शतशो देवतार्चिताः ।

ये च वृक्षा महासत्त्वास्सर्वे ते देवरूपिणः ॥ ३६ ॥

तदर्चा पितृवत्कार्या शुश्रूषा जलपिण्डवत् । मर्त्यलोके च ते पुत्रास्तस्य जन्मनिजन्मनि

सुरूपाः सुविनीताश्च सदा पुण्यक्रियाः शुभाः ।

एवं गणेशतां यान्ति जन्तवश्चूतलग्नकाः ॥ ३८ ॥

धात्री हरीतकी चान्ये कटुतिक्ताम्लसम्भवाः । सर्वेचारामतः शुद्धाःफलदाःशिवदाःसदा

प्रासादा यत्र सौवर्णाः सर्वरत्नविभूषिताः । सर्वाभरणसंयुक्ता विमानाश्चानिलोपमाः

शातकुम्भमया वृक्षाः सदैव सर्वदायिनः ।

सर्वर्तुसुखदाः सौम्या कन्यका अप्सरस्समाः ॥ ४१ ॥

गीतनृत्यपराधीरास्तत्र तिष्ठन्ति वृक्षदाः । पुष्करिण्यो विशेषेणखातान्यन्यानियानिच

शुद्धोपलान्तरचिता नद्यः पायसकर्दमाः । पुनर्दुग्धसफेनाश्च अन्नादिषड्रसान्विताः ॥

मर्त्यलोके यथाभोग्यं पुनःस्वर्गे पुनर्भुवि ।

पुनरेव तदभ्यासात्खातमारामकं पुनः ॥ ४४ ॥

यथा पुण्यादिकं कृत्वा स्वर्गमर्त्याधिपः पुमान् ।

अशक्तस्तु प्रपां कृत्वा पुष्करिण्याः फलं लभेत् ॥ ४५ ॥

प्रपायालक्षणं चात्र सर्वपापहरं परम् । सर्वभोगप्रदं शुद्धं स्वर्गापवर्गदंस्थिरम् ॥

लक्षणं च प्रवक्ष्यामि प्रपायाःकीर्तिवर्धनम् । निर्जलेऽध्वनि पृक्तेचस्थानेकृत्वाचमण्डपम्

बहुपान्थे समायाते ग्रीष्मवर्षाशरत्स्वपि । अगरुकादिसौगन्ध्यं जलं पूगं स चन्द्रकम्

आसनं चैव ताम्बूलं दत्त्वा स्वर्गान्न हीयते । एवं वर्षत्रयेणैव पुष्करिण्याः फलंलभेत्

स्वर्गाच्चैवाच्युतो मर्त्यो देवैरपि प्रपूज्यते । मासमेकं तु योदद्यात्प्रपां ग्रीष्मेऽथनिर्जले
कल्पैकं तु वसेत्स्वर्गे स्वर्गाद्भ्रष्टो महीयते । प्रपादास्तत्रतिष्ठन्ति यत्र पुष्करिणीप्रदाः

नोचेद्धर्मघटो देयः पुण्यः पापक्षयाय च ।
एष धर्मघटो ज्ञेयो ब्रह्मविष्णुशिवात्मकः ॥ ५२ ॥

तवप्रसादात्सफला ममसन्तु मनोरथाः । स्वर्णं माषचतुर्भागं दक्षिणार्थं घटस्य च॥
एवंवर्षत्रयेणैव प्रपादानफलं लभेत् । यः पठेच्छ्रावयेद्वापि पुष्करिण्यादिजं फलम्॥
साक्षात्पापाद्भवेन्मुक्तस्तत्प्रसादात्तु सद्गतिः । जनेषु श्रावयेद्यस्तु पुण्याख्यानमिदं शुभम्

कल्पकोटिसहस्राणि सुरलोके स तिष्ठति ॥ ५६ ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे पुष्करिण्यादि धर्मकीर्तनं नाम
षष्टितमोऽध्यायः ।

---

## एकषष्टितमोऽध्यायः

### सेतुबन्धनफलवर्णनम् ।

व्यास उवाच ।

अतः परं प्रवक्ष्यामि कीर्तिधर्मं परं शुभम् । सेतुबन्धफलं पुण्यं ब्रह्मणा भाषितं यथा
कान्तारे दुस्तरेपङ्के पुरुसङ्कुसमाकुले । आलिङ्कृत्वा भवेत्पूतो देवत्वं यातिमानवः॥

वितस्तौ तु लभेत्स्वर्गं दिव्यं वर्षशतं समम् ।
एवं सङ्ख्याविधानेन नरः स्वर्गान्न हीयते ॥ ३ ॥

कदाचित्पङ्कयोगाच्च स्वर्गाद्भुवि विजायते । तदाभट्टारकः श्रीमान्रोगशोकविवर्जितः॥
पङ्कादौ सङ्क्रमांश्चैव कृत्वास्वर्गान्न हीयते । सर्वपापं क्षयंतस्य सम्प्रयाति दिने दिने॥

तथालिसङ्क्रमाणां च फलं तुल्यं प्रकीर्तितम् ।
धनंप्राणव्ययेनैव धीमता क्रियते सदा ॥ ६ ॥

श्रूयतां यत्पुरावृत्तमाख्यानं वृद्धसम्मतम् । कश्चिच्चोरो महाभीष्मः स्तेयकर्मणि चोद्यतः

कान्तारे गोशिरः स्थाप्य क्रान्त्वा स्तेयं गतो ह्यसौ।
धनापहरणं कृत्वा गृहस्थस्य च ते न हि ॥ ८ ॥
गतः स्वमन्दिरं तत्र जनागच्छन्ति वर्त्मनि। सर्वेषामेकपादस्य सुखंभवति निश्चितम् ॥
एकपादेह्रदे दुर्गे तारकं गोशिरः परम्। चान्द्रायणं च तत्तस्य कान्तारे संस्थितं शिरः
ततश्चोरस्य निधने चित्रगुप्तप्रणीतके ॥ ११ ॥

चित्रगुप्त उवाच।

धर्मस्यफलमात्रं तु एतस्य च न विद्यते। न दैवं पैतृकं कार्यं तीर्थस्नानं द्विजार्चनम् ॥
दानं गुरुजने मानं ज्ञानं परहितं शुभम्।
मनसा न कृतं तेन क्रियया च कथं पुनः ॥ १३ ॥
कृतं साहसिकं स्तेयं परदाराभिमर्शनम्। भूतमिथ्यापवादं च साधुनिन्दापरं तथा ॥
एवं शतसहस्रं तु तथा गोहरणं कृतम् ॥ १४ ॥

व्यास उवाच।

तत्राह धर्मराजस्तु कालानलसमप्रभः ॥ १५ ॥

धर्मराज उवाच।

नयतैनं फलं शूरा दुर्गतिं चापुनर्भवम् ॥ १६ ॥

व्यास उवाच।

एतस्मिन्नन्तरेऽवोचच्चित्रगुप्तोऽनुकम्पकः ॥ १७

चित्रगुप्त उवाच।

अस्त्यस्य गोशिरः पुण्यं किंचिन्नाथ क्षमाधुना। अस्यपुनर्भवो नास्तिशर्मचात्रलवंनहि
चिन्तयित्वोच्यतां देव तत्पापस्य क्षयाय वै ॥ १९ ॥

व्यास उवाच।

नृपो द्वादशवार्षिक्यं लभेत्पुण्योदयं क्षितौ। तथाह धर्मराजस्तं गच्छमर्त्यं दुरात्मक
अकण्टकं च राज्यं च भुङ्क्ष्व द्वादशवत्सरम्। यदुधृतं गोशिरैर्मार्गेमुक्तस्तस्यैवकारणात्
पुनरत्रसमागम्य सङ्गन्ता चापुनर्भवम्। ततः कृताञ्जलिर्देवमुवाच दुःखपीडितः ॥ २२ ॥

चोर उवाच ।

धर्मराजानुकम्पां च मय्येवं पापकारिणि । कुरुनाथ त्वनाथे च जानामि प्रीतिपूर्वकम्

व्यास उवाच ।

धर्मराजस्तु तं चाह बाढमेवमितो व्रज । स्मरिष्यसि स्ववृत्तान्तं मत्प्रसादात्सुदुःखितः
एतस्मिन्नन्तरे चैव मोचितः किङ्करेण हि । तस्य जन्माभवत्कौ च दुर्विधे चातिवाणिके
आजन्मविविधं दुःखं भुक्तं पूर्वं विकर्मतः । भुक्त्वा क्लेशं महान्तं च एकविंशतिहायनम्

तस्मिन्राष्ट्रे मृतो भूपः स्वकर्मपरिपीडितः ।
एतस्मिन्नन्तरेऽमात्यैः समालोक्य सुमन्त्रिभिः ॥ २७ ॥

अनेकपरिमर्शैस्तु पृथिव्यां भ्रमणं कृतम् । तमावृण्वंश्च ते सद्यः सर्वेषां पुरतो दृढम् ॥

ततो राज्याभिषेकश्च कृतस्तैस्तु विमत्सरैः ।
स च राज्यं च संश्रित्य धर्मराजवरेण च ॥ २९ ॥

अकरोदालिकं कर्म शिलाबद्धं च मृण्मयम् । सङ्क्रमं जलदुर्गं च तरणिं च तथापरे ॥
वापीकूपतटाकानि प्रपाराममहीरुहम् । कृतवान्विविधं यज्ञं दानपुण्यमतःपरम् ॥ ३१ ॥

स्मरंश्च पूर्वकर्माणि सर्वपापक्षयाय वै ।
कृतं बहुविधं धर्मं व्रतानि विविधानि च ॥ ३२ ॥

सुराणां ब्राह्मणानां च गुरूणां चैव तर्पणात् । पापात्पूतो ययौ गेहं धर्मराजस्य धीमतः

स यानस्थं ततो दृष्ट्वा क्रोधरक्तेक्षणोऽभवत् ।
स च तं प्राञ्जलिः प्राह भोधर्म कुरु तारणम् ॥ ३४ ॥
चित्रगुप्तोऽब्रवीद्वाक्यं धर्मराजसमीपतः ॥ ३५ ॥

चित्रगुप्त उवाच ।

कर्मणा मनसा पूतो विष्णुलोकं स गच्छतु ॥ ३६ ॥

व्यास उवाच ।

स तच्छ्रुत्वा पुनश्चाह तस्य विज्ञाय कारणम् ।
स्मितः प्रीत्या प्रसन्नात्मा गच्छ गच्छाच्युतालयम् ॥ ३७ ॥

विमानं सुरलोकाच्च स्वागतं वर्णकर्वुरम् ।
समारुह्य गतः स्वर्गं पुनरावृत्तिदुर्लभम् ॥ ३८ ॥

तस्मात्किष्कुप्रमाणं हि दत्तं येनालिकंपुरा । स तु राज्यान्वयंस्वर्गं महान्तंचानुगच्छति
तथैव गोप्रचारं तु दत्त्वा स्वर्गान्न हीयते । यागतिर्गोप्रदस्यैव ध्रुवं तस्य भविष्यति ॥
व्यामैकं गोप्रचारं तु मुक्तं येन सुधीमता । तस्य स्वर्गं भवेदिष्टं किमन्यैः पुरुभाषितैः ॥

गोप्रचारं यथाशक्ति यो वै त्यजति हेतुना ।
दिने दिने ब्रह्मभोज्यं पुण्यं तस्य शताधिकम् ॥ ४२ ॥

तस्माद्गवांप्रचारं तु मुक्त्वा स्वर्गान्नहीयते । यश्छिनत्ति द्रुमं पुण्यं गोप्रचारंछिनत्त्यपि

तस्यैकविंशपुरुषाः पच्यन्ते रौरवेषु च ।
गोचारघ्नं ग्रामगोपः शक्तो ज्ञात्वा तु दण्डयेत् ॥ ४४ ॥

छेत्तारं धर्मवृक्षाणां विशेषाद्गोप्रचारघम् । तस्य दण्डसुखं तस्य तस्मात्तं दण्डयेत्तुसः

प्रासादं कुरुते यस्तु विष्णुलिङ्गस्य मानवः ।
त्रिकाण्डं पञ्चकाण्डं च सुशोभं सुघटान्वितम् ॥ ४६ ॥

इतोऽधिकं तु योदद्यान्मृण्मयं वा दृषन्मयम् । वसुवृत्तिसुपूर्णं च सुरम्यं दिव्यभूतलम् ॥
प्रतिष्ठाकर्मसम्पन्नं किङ्करादिभिरावृतम् । सुलिङ्गमिष्टदेवस्य विष्णोरेव विशेषतः ॥
कृत्वा च विष्णुसायुज्यं समाप्नोति नरोत्तमः । तथैव प्रतिमां कृत्वा हरेरन्यतरस्य च ॥
कृत्वा देवकुलं रम्यं यत्फलं लभते नरः । न तन्मखसहस्रैस्तु दानैर्भुवि व्रतादिभिः ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च । प्रासादे रत्नसंयुक्ते सम्पूर्णद्रव्यसङ्कुले ॥
स वसेत्कामगे याने सर्वलोकमनोहरे । स्वर्गाच्च्युतो भवेद्राजा सार्वभौमो गुणैर्वशी

शिवलिङ्गे तु प्रासादं कारयित्वा स्वशक्तितः ।
यदुक्तं विष्णुलिङ्गे तु तज्ज्ञेयं शिवदेशनि ॥ ५३ ॥

भुङ्क्ते भोगं महाभागो मनः शर्करं परम् । रामाभिरामसम्पूर्णं सर्वतः सुखदंदिवि ॥
ऊर्ध्वमक्षयमोगानि नृपो नाथ महाधनी । हरस्य प्रतिमां यश्च कृत्वा देवगृहे नरः ॥

सुलिङ्गां वा सुरूपां वा कल्पकोटिं वसेद्दिवि ।

स्वर्गाद्भ्रष्टो भवेद्राजा धनी पूज्यतमोऽपि वा ॥ ५६ ॥

देवी लिङ्गेषु सर्वेषु कृत्वा देवगृहं नरः। सुरत्वं प्राप्नुयाल्लोके देव्यास्सर्वसुखोद्भवे ॥

भृशमच्युततामेति सुखमेति निरामयम्। रत्नसंसृष्टप्रासादे मणिकर्बुरभूतले ॥ ५८ ॥

रामायुतप्रसम्भोग्ये देवीसंसृष्टनिर्भये। नृत्यगीतपरे रम्ये सर्वेन्द्रियमनोरमे ॥ ५९ ॥

रत्नमर्द्दलतालाढ्ये सर्वदा स्त्रीजनेरिते। निर्मले सुखदे रम्ये रत्नानां सुशुभे गृहे ॥६०॥

तथैव प्रतिमायाश्च देव्याः प्रासादमुत्तमम्।
नियुक्तं कल्पकोटीनां स्वर्लोकमेति मानवः ॥ ६१ ॥

स्वर्गाद्भ्रष्टो भवेद्भूपो देवीभक्तिपरायणः। एवं च जन्मसाहस्रं स्मर एव भवेद्भुवि ॥

प्रासादं गाणपत्यं च देव्या वा प्रीतिमान्नरः।
कृत्वा सुरगणानां च पूजितो दिवि जायते ॥ ६३ ॥

तथैव राजतामेति भोग्यान्देवीपुरे तथा। अविघ्नं सर्वकार्येषु सदैव गणपो यथा ॥

आज्ञा न स्खलिता तस्य सुरासुरनरेषु च। तथैव सौरप्रासादे फलमेति नरोत्तमः॥६५॥

अरागी सुप्रसन्नात्मा कामदेवसमप्रभः। वरदः सर्वलोकेषु यथा ब्रध्नस्तथा हि सः ॥

सूरस्य प्रतिमायां च गृहं कृत्वा शिलामयम्।
कल्पकोटिशतं भुक्त्वा स्वर्गमुर्वीश्वरो भवेत् ॥ ६७ ॥

विष्णवादि सर्वदेवानामर्चनं यत्पृथक्पृथक्।
प्रत्येकं सम्प्रवक्ष्यामि नराणां हितहेतवे ॥ ६८ ॥

घृतप्रदीपं यो दद्यान्मासमेकमहर्निशम्। दिव्यं वर्षायुतं स्वर्गे पूजितो देवसत्तमैः॥६९॥

घृतस्नानं तथा लिङ्गे यः कुर्याद्भुवि मानवः। कल्पकोटिसहस्राणि मासैके लभते नरः ॥

तिलतैलप्रदीपस्य तथान्यस्याद्धकं फलम्। मासैकं जलदानस्य फलेनेश्वरतां व्रजेत् ॥

धूपदानेन गन्धर्वं चन्दने द्विगुणं भवेत्।
मृगमदागरुसत्त्वस्य दाने बहुफलं भवेत् ॥ ७२ ॥

मालापुष्पप्रदानेन नरः स्यात्त्रिदशेश्वरः। शीते तूलपटीं दत्त्वा सर्वदुःखात्प्रमुच्यते ॥

जन्मजन्मसु लभ्येत उष्णे च शीतलां पटीम्।

दत्त्वा च नैव सीदेत शक्त्या वस्त्रं ददाति यः ॥ ७५ ॥

चतुर्हस्तप्रमाणं च वर्ष्मवेष्टं सुशोभनम् । पिधानं चरणानां च दत्त्वा स्वर्गान्न हीयते ॥

शक्त्या स्वर्णप्रदानेन स्वर्गे पूज्यो भवेन्नरः ।

दशयोजनविस्तीर्णे मण्डपे रूपभाग्भवेत् ॥ ७६ ॥

सुवर्णं रत्नसंयुक्तं दत्त्वा दशगुणं लभेत् । वज्रवैडूर्यगारुत्ममाणिक्यादीननर्घतः

दत्त्वा लिङ्गे विधानाच्च ब्राह्मणे वा यशस्विनि ।

शतयोजनविस्तीर्णमण्डलेऽधिपतिर्भवेत ॥ ७८ ॥

तथैव भुवि जातोऽपि सर्वलोकप्ररञ्जनः । सुरभिद्रव्यदानेन वावदूकश्च सुन्दरः ॥७९॥

रक्तामृतसुकण्ठश्च पूगदानान्नरो भवेत् । वरदासीप्रदानेन नरः कल्पं वसेद्दिवि ॥ ८० ॥

वरदासीप्रदानेन उर्व्यां जातो धनेश्वरः । तथैव भृत्यदानेन बहुभृत्यो भवेद्दिवि ॥

धरायामक्षया ऋद्धिर्जन्मजन्मसु जायते । सर्वतूर्यप्रदानेन गुणवांल्लोकसम्मतः ॥८२॥

नृत्यगीतादिशास्त्रेण गन्धर्वाणां पतिर्भवेत् ।

दासीदासयुतः स्वर्गे धनैः स्त्रीभिर्वरैर्युतः ॥ ८३ ॥

तथैव गोप्रदानेन तावत्कालं वसेद्दिवि । लिङ्गे दुग्धप्रदानाच्च नरः कल्पं वसेद्दिवि ॥

दध्ना स्नानेन द्विगुणं घृतेन तु शताधिकम् । अन्नं षड्रससंयुक्तं दत्त्वा क्षितिपतिर्भवेत्

तथैव पायसं दत्त्वा मुनीनां प्रवरो भुवि । हविष्यान्नं मुदा दत्त्वा वेदशास्त्रार्थपारगः ॥

निरामिषप्रदानाच्च ब्रह्मचारी व्रती भवेत् । मधुदानाच्च सौभाग्यं गुडेन लवणेन च ॥

शर्करादिभिर्लावण्यं सर्वलोकेषु गीयते । देवानां शम्भुलिङ्गानामर्चां कृत्वा विधानतः ॥

अनुक्रमेण स्वर्गादौ लोकानां स पतिर्भवेत् ।

लोकानां च हितार्थाय देवास्तिष्ठन्ति सम्मुखाः ॥ ८६ ॥

सकृत्प्रदक्षिणं कृत्वा शम्भुलिङ्गेषु पण्डितः । दिव्यं वर्षशतं पूर्णं स्वर्गमेति नरोत्तमः ॥

एवमेवक्रमेणैव नमस्कारैः स्वयम्भुवः । लोकवन्द्यो व्रजेत्स्वर्गं तस्मान्नित्यं समाचरेत्

लिङ्गरूपस्य देवस्य यो धनं हरते नरः । स च रौरवमासाद्य हरणात्कीटतां व्रजेत् ॥

दातुः पूजां च लिङ्गार्थे हरेश्चाप्याददाति यः ।

कुलकोटिसहस्रेण नरकान्न निवर्तते ॥ ९३ ॥

जलपुष्पादिदीपार्थं वसु चान्यद्गृहीतवान् । पश्चान्न दीयते लोभादक्षयं नरकं व्रजेत् ॥

दासीं हृत्वा तु लिङ्गस्य नरकान्न निवर्तते ।

कामार्तो मातरं गच्छेन्न गच्छेच्छिवचेटिकाम् ॥ ९५ ॥

शिवदासीं ततो गत्वा शिवस्वहरणे तथा । भक्षणादन्नपानानां नरो दुर्गतिमाप्नुयात्

अतो देवलविप्रो यो नरकान्न निवर्तते । तस्माद्वेश्याजनानां च दौष्ट्यमेव हितंभवेत् ॥

अतस्तु गणिकांस्पृष्ट्वा नरः स्नानाद्विशुध्यति । मलिनां दुर्गतिं याति बहुपूरुषसंश्रयात्

वेश्या तपस्विनी या च देवार्चनरता सदा । पतिव्रतपरा शुद्धा स्वर्गं चाक्षयमश्नुते ॥

गणिकां मातृवद्यस्तु सदासन्नां प्रपश्यति । देववत्सुरलोकेषु निखिलं भोगमश्नुते ॥

सुरासुरनराणां च वन्दनीयोयथाहरिः । तथार्होऽयं सर्वलोके सर्वभूतैकपावनः ॥१०१॥

देवदासः सदायस्तु देवकृत्येषु लोलुपः । स च गच्छति लोकेशो देवलोके महीयते ॥

एतेषामेव लिङ्गानि कारयित्वा च मण्डपम् ।

शक्त्याऽयं लभते नाकं कालस्य निश्चयं शृणु ॥ १०३ ॥

हायनैकं तृणेनैव शरकाण्डेन तच्छतम् । अयुतं त्वन्यकाष्ठेन लक्षं खादिरदारुणा ॥

कोटिकोटि च पाषाणैः सुदृढैर्यत्नसंयुतैः । तस्मात्सर्वप्रयत्नेन मण्डपं कारयेद् बुधः ॥

यावत्काले वसेत्स्वर्गे नरोमण्डपकारकः । तावत्कालं च हरणे नरो दुर्गतिमाप्नुयात्

जनानां निचये रम्ये वस्तूनां क्रयविक्रये ।

आश्रये चाध्वगानां च नदीनदसमागमे ॥ १०७ ॥

देवानां मण्डपं कृत्वा यत्फलं लभते नरः । तत्फलं समवाप्नोति द्विगुणं विप्रमन्दिरे ॥

अनाथस्य च दीनस्य श्रोत्रियस्य विशेषतः । कारयित्वा गृहं रम्यं नरःस्वर्गान्न हीयते

य इदं शृणुयान्नित्यं पुण्याख्यानमनुत्तमम् । अक्षयं लभते स्वर्गं प्रासादादेः फलंलभेत्

धनिनां चेश्वराणां च तथा पुण्यवतां पुनः ।

पाठयित्वा पठित्वा तु नरःस्वर्गान्न हीयते ॥ १११ ॥

देवानां दासदासीनां सदा देवालयेषु च । पठेद्यस्तु सदाविप्रो मोक्षमार्गं स गच्छति ॥

नृपाणामीश्वराणां च धनिनां गुणिनां पुरः ।
पठित्वा मोक्षमाप्नोति श्रवणात्तत्फलं लभेत् ॥ ११३ ॥

द्विजा ऊचुः ।

सामान्येकः परः पुण्यो मर्त्यलोके द्विजोत्तम ।
सुलभो मर्त्यपूज्यस्तु मुनीनां च तपस्विनाम् ॥ ११४ ॥

चातुर्वर्ण्याश्रमाणां च पापपुण्यवतां नृणाम् । गुणागुणवतां चैव वर्णावर्णवतां तथा

व्यास उवाच ।

सर्वेषामेवभूतानां रुद्राक्षेण युतो नरः । दर्शनाद्यस्य लोकानां पापराशिः प्रलीयते ॥
स्पर्शनाद्दिवमश्नाति धारणाद्रुद्रतां व्रजेत् । शिरस्युरसि बाहौ च रुद्राक्षं धारयेत्तु यः
स चेशानसमो लोके मखे सर्वत्र गोचरः । यत्र तिष्ठन्त्य सौ विप्र स देशःपुण्यवान्भवेत्

तं दृष्ट्वाप्यथवा स्पृष्ट्वा नरः पूयेत कल्मषात् ।
यज्जप्यं तर्पणं दानं स्नानमर्चा प्रदक्षिणम् ॥ ११६ ॥

यत्किञ्चित्कुरुते पुण्यं निखिलं तदनन्तकम् । तीर्थानां च महत्तीर्थं रुद्राक्षस्यफलंद्विजाः

अस्यैव धारणाद्देही पापात्पूतोऽतिपुण्यभाक् ।
गृहीत्वा चाक्षमालां च ब्रह्मग्रन्थियुतां शिवाम् ॥ १२१ ॥

यज्जप्तं च कृतं दानं स्तोत्रं मन्त्रं सुरार्चनम् । सर्वं चाक्षयतामेति पापं च क्षयमाव्रजेत्
मालाया लक्षणं ब्रूमः श्रूयतां द्विजसत्तमाः। तस्यान्तु लक्षणं ज्ञात्वा शैवमार्गं प्रलप्स्यथ
निर्योनिकीटविद्धं च भग्नलिङ्गं यथाक्रमम् । अन्योन्यं बीजलग्नं च मालायांपरिवर्जयेत्

स्वयं च ग्रथिता या च श्लथान्योन्यप्रसज्जिता ।
शूद्रादिग्रथिताऽशुद्धा दूरात्तां परिवर्जयेत् ॥ १२५ ॥

मध्यमालग्नकं बीजं जप्तव्यं च यथाक्रमम् । हस्तसम्भ्रमणेनैव मेर्वामर्शं पुनः पुनः ॥

सङ्ख्यातं यज्जपेन्मन्त्रमसङ्ख्यातं च निष्फलम् ।
सर्वेषामेव देवानां जपेन्मन्त्रं स्वमालया ॥ १२७ ॥

प्रयतः सकले तीर्थे कोटिकोटिगुणं भवेत् । शुद्धायामेव भूम्यां तु मेध्यके वृक्षमूलके

गोष्ठे चतुष्पथागारे विष्णोर्मन्त्रंशिवस्य च। गणपतेश्चसूरस्य लिङ्गेऽनन्तफलंभवेत् ॥
शून्यागारे शवस्याग्रे श्मशाने च चतुष्पथे।
देवीमन्त्रं जपेद्यस्तु सद्यस्सिद्ध्यति साधकः ॥ १३० ॥
यावच्चावैदिकं मन्त्रं पौराणं चागमोद्भवम्। सर्वं रुद्राक्षमालायामीप्सितार्थप्रदायकम् ॥
रुद्राक्षस्रवजं शुद्धं जलं शिरसि धारयेत्। सर्वस्मात्कल्मषात्पूतः पुण्यंभवतिचाक्षयम् ॥
रुद्राक्षस्य च प्रत्येकं बीजं प्रत्येकनिर्जरम्।
धारयेद्यस्तनौ मर्त्यः सुराणां सत्तमोभवेत् ॥ १३३ ॥

द्विजा ऊचुः।

रुद्राक्षस्तु कुतो जातः कुतो वा मेध्यतां गतः।
किमर्थं स्थावरो भूमौ केनैव च प्रचारितः ॥ १३४ ॥

व्यास उवाच।

पुरा कृतयुगे विप्रास्त्रिपुरो नाम दानवः। सुराणां च वधं कृत्वा अन्तरिक्षपुरे हि सः
प्रणाशे सर्वलोकानां स्थिरो ब्रह्मवरेण च। शुश्राव शङ्करो भीमं देवैरीशो निवेदितम्
ततोऽजगवमासज्य बाणमन्तकसन्निभम्। धृत्वा तं च जघानाथ दृष्टं दिव्येन चक्षुषा ॥
स पपात महीपृष्ठे महोल्केव च्युतो दिवः। घटनव्याकुलाद्रुद्रात्पतिताः स्वेदबिन्दवः ॥
तत्राश्रुबिन्दुतो जातो महारुद्राक्षकः क्षितौ।
अस्यैव च फलं जीवा न जानन्त्यतिगुह्यतः ॥ १३६ ॥
ततः कैलासशिखरे देवदेवं महेश्वरम्। प्रणम्य शिरसा भूमौ स्कन्दो वचनमब्रवीत् ॥

स्कन्द उवाच।

रुद्राक्षस्यफलं नाथ ज्ञातुमिच्छामितत्त्वतः। जप्येऽथधारणे चैव दर्शने स्पर्शनेऽपि वा

ईश्वर उवाच।

लक्षं तु दर्शनात्पुण्यं कोटिर्वै स्पर्शनेन च। दशकोटिफलं पुण्यं धारणाल्लभते नरः ॥
लक्षकोटिसहस्राणि लक्षकोटिशतानि च।
जप्त्वाऽस्य लभते पुण्यं नात्र कार्या विचारणा ॥ १४२ ॥

उच्छिष्टो वा विकर्मस्थो युक्तो वा सर्वपातकैः । मुच्यते सर्वपापेभ्यो रुद्राक्षधारणेनवै
कण्ठे रुद्राक्षमादाय श्वापदो म्रियते यदि । सोऽपिरुद्रत्वमाप्नोति किं पुनर्मानुषादयः

ध्यानधारणहीनोऽपि रुद्राक्षं यदि धारयेत् ।
सर्वपापविनिर्मुक्तः स याति परमां गतिम् ॥ १४६ ॥

कार्तिकेय उवाच ।

एकवक्त्रं द्वित्रिचतुःपञ्चषड्वक्त्रमेव च । सप्ताष्टनववक्त्रं च दशैकादशवक्त्रकम् ॥ ॥
रुद्राक्षं द्वादशास्यं च त्रयोदशमुखं तथा । चतुर्दशास्यसंयुक्तं स्वयमुक्तं च शङ्करम् ॥

तेषां च तन्मुखानां च देवताः काश्च तद्वद ।
गुणो वा कीदृशस्तेषां दोषो वा जगदीश्वर ॥ १४९ ॥
यदि मेऽनुग्रहो वास्ति कथयस्व यथार्थतः ॥ १५० ॥

ईश्वर उवाच ।

एकवक्त्रः शिवः साक्षाद्ब्रह्महत्यां व्यपोहति । तस्मात्तु धारयेद्देहे सर्वपापक्षयाय च
शिवलोकं स गच्छेच्च शिवेन सह मोदते । महता पुण्ययोगेन हरानुग्रहकारणात् ॥
एकवक्त्रंलभेन्मर्त्यःकैलासं च षडानन । देवदेवो द्विवक्त्रं च यस्तु धारयते नरः ॥

सर्वपापं क्षयं याति यद्गुह्यं गोवधादिकम् ।
स्वर्गं चाक्षयमाप्नोति द्विवक्त्रधारणात्ततः ॥ १५४ ॥

त्रिवक्त्रमनलःसाक्षाद्यस्य देहे प्रतिष्ठति । तस्य जन्मार्जितं पापं दहत्यग्निरिवेन्धनम् ॥

स्त्रीहत्याब्रह्महत्याभ्यां बहूनां चैव हत्यया ।
यत्पापं लभते मर्त्यः सर्वं नश्यति तत्क्षणात् ॥ १५६ ॥

यत्फलं वह्निपूजायामग्निकार्ये घृताहुतौ । तत्फलं लभतेधीरः स्वर्गं चानन्तमश्नुते ॥

त्रिवक्त्रं धारयेद्यस्तु स च ब्रह्मसमो भुवि ।
निचितं दुष्कृतं सर्वं दहेज्जन्मनि जन्मनि ॥ १५८ ॥

न चोदरे भवेद्रोगो न चैवापटुतांव्रजेत् । पराजयं न लभते नाग्निना दह्यते गृहम् ॥

एतान्यन्यानि सर्वाणि वज्रादेश्च निवारणम् ।

नाशुभं विद्यते किञ्चित्त्रिवक्त्रस्य तु धारणात् ॥ १६० ॥
चतुर्वक्त्रः स्वयं ब्रह्मायस्य देहे प्रतिष्ठति ।
स भवेत्सर्वशास्त्रज्ञो द्विजो वेदविदांवरः ॥ १६१ ॥
सर्वधर्मार्थतत्त्वज्ञः स्मार्तः पौराणिकोभवेत् । यत्पापं नरहत्यायां बहुसत्त्वेषु वेश्मसु ॥
तत्सर्वं दहते शीघ्रं चतुर्वक्त्रस्य धारणात् । महेशस्तुष्यते नित्यं भूतानामधिपो भवेत्
सद्योजातस्तथेशानस्तत्पुरुषोऽघोर एव च । वामदेव इमेदेवा वक्त्रैः पञ्चभिराश्रिताः ॥
अतः सर्वत्र भूयिष्ठाः पञ्चवक्त्रा धरातले । रुद्रस्यात्मजरूपोऽयं तस्मात्तं धारयेद् बुधः
कल्पकोटिसहस्राणि कल्पकोटिशतानि च । तावत्कालं शिवस्याग्रे पूजनीयः सुरासुरैः
सार्वभौमो भवेद्भूमौ शर्वतेजाः शिवालये । तस्मात्सर्वप्रयत्नेन पञ्चवक्त्रं तु धारयेत्
षड्वक्त्रं कार्तिकेयन्तु धारयन्दक्षिगे भुजे । ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः
स्कन्दस्य सदृशः शूरः कल्पान्ते समुपस्थिते । नात्र पराजयं चैति गुणानामाकरोभुवि
कुमारत्वमवाप्नोति यथा गौरीशनन्दनः । ब्राह्मणो भूपपूज्यश्च क्षत्रियो लभते जयम्
वैश्याः शूद्रादयो वर्णाः सदैश्वर्यप्रपूरिताः । तस्यैव वरदा गौरी मातेव सुलभाभवेत्
ततो भुजबलादेव विश्वतेजा भवेन्नरः । वाग्मी धीरस्सभायां च नृपवेश्मनि संसदि ॥
न च कातरतामेति नैव भङ्गो भवेद् ध्रुवम् ।
एतान्यन्यानि सर्वाणि षड्वक्त्रस्यैव धारणात् ॥ १७३ ॥
सप्तवक्त्रो महासेनस्त्वनन्तो नाम नागराट् ।
अस्य प्रत्येकवक्त्रे तु प्रतिनागा व्यवस्थिताः ॥ १७४ ॥
अनन्तः कर्कटश्चैव पुण्डरीकोऽथ तक्षकः । बिषोल्बणश्च कारीषः शङ्खचूडश्च सप्तमः
एते नागा महावीर्याः सप्तवक्त्रे व्यवस्थिताः । अस्य धारणमात्रे तु विषं न क्रमते तनौ
हरश्च परमप्रीतो भवेन्नागेश्वरे यथा । प्रीत्याऽस्य सर्वपापानि क्षयं यान्ति दिने दिने
ब्रह्महत्यासुरापानं स्तेयादि गुरुतल्पजम् । यत्पापं लभते मर्त्यः सर्वं नश्यति तत्क्षणात्
देवस्य सदृशं भोग्यं त्रैलोक्ये निश्चितं लभेत् ।
अष्टवक्त्रो महासेनः साक्षाद्देवो विनायकः ॥ १७९ ॥

अस्यैव धारणादेव यत्पुण्यं तच्छृणुष्व मे। जन्मजन्मनमूर्खःस्यान्नातुरो न च नष्टधीः
अविघ्नं सर्वकार्येषु तस्यैव सततं भवेत्। नैपुण्यं लिपिकार्येषु महाकार्येषु कौशलम्॥

सर्वारम्भादिकार्येषु क्षमं तस्य दिने दिने।
अर्थकूटं तुलाकूटं सर्वकूटं तथैव च॥ १८२॥

शिश्नोदरकरेणैव संस्पृशेद्वा गुरुस्त्रियम्। एवमादीनि सर्वाणि हन्ति पापानि सर्वथा

अक्षयं त्रिदिवं भुक्त्वा मुक्तो याति परां गतिम्।
गुणान्येतानि सर्वाणि अष्टवक्त्रस्य धारणात्॥ १८४॥

नवास्यं भैरवं प्रोक्तं धारयेद्यस्तु बाहुतः। कपिलं मुक्तिदं धृत्वा मम तुल्यबलो भवेत्
लक्षकोटिसहस्राणि ब्रह्महत्या करोति यः। ताः सर्वा दहते शीघ्रं नववक्त्रस्य धारणात्
सुरलोके सदा देवैः पूजितो मघवा यथा। हरवद्धरवेश्मस्थो गणेशो नात्र संशयः॥

पन्नगाश्च विनश्यन्ति दशवक्त्रस्य धारणात्।
वक्त्रे चैकादशे वत्स रुद्राश्चैकादश स्मृताः॥ १८८॥

शिखायां धारयेन्नित्यं तस्य पुण्यफलं शृणु। अश्वमेधसहस्राणि यज्ञकोटिशतानि च

गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम्।
तत्फलं शीघ्रमाप्नोति वक्त्रैकादशधारणात्॥ १९०॥

हरस्य सदृशो लोके पुनर्जन्म न विद्यते। रुद्राक्षं द्वादशास्यं यः कण्ठदेशे तु धारयेत्॥
आदित्यस्तुष्यते नित्यं द्वादशास्ये व्यवस्थितः। गोमेधं नरमेधं च कृत्वायत्फलमश्नुते
तत्फलं शीघ्रमाप्नोति वज्रादेश्च निवारणम्। नैव वह्नेर्भयं चैव न च व्याधिःप्रवर्तते॥
अर्थलाभं सुखं भुङ्क्ते ईश्वरो न दरिद्रता। हस्त्यश्वनरमार्जारमूषकान्दशकांस्तथा॥

व्यालदंष्ट्रिश्रृगालादीन्हत्वा व्याघातयत्यपि।
मुच्यते नात्र सन्देहो वक्त्रद्वादशधारणात्॥ १९५॥

वक्त्रत्रयोदशो रुद्रो रुद्राक्षः प्राप्यते यदि। शन्तमः स तु विज्ञेयः सर्वकामफलप्रदः॥
सुधारसायनं चैव धातुवादश्च पादुका। सिध्यन्ति तस्य वै सर्वे भाग्ययुक्तस्य षण्मुख
मातृपितृस्वसृभ्रातृगुरून्वाथ निहत्य च। मुच्यते सर्वपापेभ्यस्त्रयोदशास्यधारणात्॥

अक्षयं लभते स्वर्गं यथा देवो महेश्वरः । चतुर्दशमुखं वत्स रुद्राक्षं यदि धारयेत् ॥
सततं मूर्ध्नि बाहौ वा शक्तिपिण्डं शिवस्य च । किं पुनर्बहुनोक्तेन वर्णितेन पुनः पुनः
पूज्यते सततं देवैः प्राप्यते पुण्यगौरवात् ॥ २०० ॥

कार्तिकेय उवाच ।

भगवञ्छ्रोतुमिच्छामि वक्त्रे वक्त्रेयथाविधि । न्यसनंकेन मन्त्रेण धारणं वा कथं वद

ईश्वर उवाच ।

शृणु षण्मुख तत्त्वेन वक्त्रे वक्त्रे यथाविधि ।
अमन्त्रोच्चारणादेव गुणा ह्येते प्रकीर्तिताः ॥ २०२ ॥

यः पुनर्मन्त्रसंयुक्तं धारयेद्भुवि मानवः । गुणास्तस्य महत्त्वं च कथितुं नैव शक्यते ॥
इदानीं मन्त्रा आदिश्यन्ते । ॐ रुद्र एकवक्त्रस्य । ॐ खं द्विवक्त्रस्य ।
ॐ वुं त्रिवक्त्रस्य । ॐ ह्रीं चतुर्वक्त्रस्य । ॐ ह्रां पञ्चवक्त्रस्य ।
ॐ ह्रूं षड्वक्त्रस्य । ॐ हः सप्तवक्त्रस्य । ॐ कं अष्टवक्त्रस्य ।
ॐ जूं नववक्त्रस्य । ॐ क्षं दशवक्त्रस्य । ॐ श्रीं एकादशवक्त्रस्य ।
ॐ ह्रीं द्वादशवक्त्रस्य । ॐ क्षौं त्रयोदशवक्त्रस्य । ॐ त्रां चतुर्दशवक्त्रस्य
एवं मन्त्रा यथाक्रमं न्यस्तव्याः । शिरस्युरसि मालां च गृहीत्वा यो व्रजेन्नरः ।
पदेपदेऽश्वमेधस्य फलमाप्नोति नान्यथा ॥ २०४ ॥

सर्वेषामपि वक्त्राणां धारणे मत्समो भवेत् । तस्मात्सर्वप्रयत्नेन रुद्राक्षं पुत्र धारय
धारयित्वा तु रुद्राक्षं म्रियते यः क्षितौनरः । सयाति मत्पुरं रम्यं सर्वदेवैः प्रपूजितः ॥
मरुदेशे पुरा वत्सवाणिज्याय किलस्थले । गच्छन्वणिक्सुतस्तात तरौ प्रेताप्रपीडितः
नरीनर्ति ततः प्रेता द्विजेन परमैक्षि च ॥ २०८ ॥

द्विज उवाच ।

का त्वं नृत्यसि दीनासि संवृता जीर्णवाससा ॥ २०९ ॥

ईश्वर उवाच ।

अथ सा च द्विजं प्राह देवदूतान्मया श्रुतम् । अस्य चारुनरस्यैव वज्रपातेन साम्प्रतम् ॥

निश्चितं निधनं विप्र मद्भर्त्ता तु भविष्यति । एतस्मिन्नन्तरे नाकाद्वज्रं तस्य शिरोपरि
अपतत्स पपातोर्व्यां रुद्राक्षस्यार्धखण्डके । ततो मम पुरात्पुत्र विमानं चापतद्द्रुतम् ॥

समारुह्य ततः श्रीमांस्तत्र तिष्ठति सञ्चिरम् ।
ममांशकं समासाद्य ईश्वरः कौ धनी भवेत् ॥ २१३ ॥

एवं रुद्राक्षखण्डे च मृतस्य सुगतिः सुत । ज्ञानेन धारिणः पुंसः फलंवक्तुं न शक्नुमः ॥

स शैवो वा भवेच्छाक्तो गाणपत्योऽथ सौरकः ।
यो दधाति मृतो मालामेकं रुद्राक्षकं तु वा ॥ २१५ ॥

यः पठेत्पाठयेद्वापि श्रावयेच्छृणुतेऽपि वा । सर्वपापात्प्रमुक्तात्मा सुखंस्वर्गंलभेत्क्रमात्

इति श्रीपाद्मपुराणे प्रथमेसृष्टिखण्डे रुद्राक्षमाहात्यं नामैकषष्टितमोऽध्यायः ।

---

## द्विषष्टितमोऽध्यायः

### धात्रीमाहात्म्यवर्णनम् ।

स्कन्द उवाच ।

अपरस्यापि पृच्छामि फलस्य पूततां तरोः । सर्वलोकहितार्थाय वद नो जगदीश्वर ॥

ईश्वर उवाच ।

धात्रीफलं परं पूतं सर्वलोकेषु विश्रुतम् । यस्यरोपान्नरो नारी मुच्यते जन्मबन्धनात्
पावनंवासुदेवस्य फलंप्रीतिकरं शुभम् । अस्य भक्षणमात्रेण मुच्यते सर्वकल्मषात् ॥
भक्षणे च भवेदायुः पाने वै धर्मसञ्चयः । अलक्ष्मीनाशनं स्नाने सर्वैश्वर्यमवाप्नुयात्

यस्मिन्गृहे महासेन धात्री तिष्ठति सर्वदा ।
तस्मिन्गृहे न गच्छन्ति प्रेता दैतेयराक्षसाः ॥ ५ ॥
न गङ्गा न गया चैव न काशी न च पुष्करम् ।
एकैव हि नृणां धात्री सम्प्राप्ते हरिवासरे ॥ ६ ॥

जन्तुभूतान्स चक्रेण चिच्छेद देहलग्नकान् ॥ ४७ ॥
ततो जिष्णुस्त्रिभिर्बाणैः पातयामास भूतले ।
पृथिव्यां पतितो दैत्यो मूर्च्छितः स्खलितः पुनः ॥ ४८ ॥
दधार मुद्गरं घोरं शक्रं हन्तुं समुद्यतः । ततो जघान मघवा कुलिशेन महासुरम् ॥
स पपात महीपृष्ठे क्षतवक्षा महाबलः । साधुसाध्विति देवाश्च सिद्धाश्चैव महर्षयः ॥
अपूजयंस्तदा शक्रं बहुभिः पुष्पवृष्टिभिः । ततो दैत्यगणाः सर्वे भीतास्तत्र प्रदुद्रुवुः ॥
गीतं गायन्ति गन्धर्वा ननृतुश्चाप्सरोगणाः ॥ ५२ ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे बलनमुचिवधो नामैकोनसप्ततितमोऽध्यायः ॥६९

## सप्ततितमोऽध्यायः

### इन्द्रेण नमुचिवधः ।

व्यास उवाच

बलं च निहतं दृष्ट्वा नमुचिं च स्वकाग्रजम् ।
मुचिस्तत्राब्रवीद्वाक्यं ज्येष्ठो मे सूदितस्त्वया ॥ १ ॥
परोक्षेणाधुना त्वां च शरैर्नेष्यामि भास्करिम् ॥ २ ॥

व्यास उवाच ।

तमब्रवीन्महातेजाः शक्रः सर्वसुरार्चितः ॥ ३ ॥

शक्र उवाच ।

भ्रातुस्ते धर्मपन्थानमिदानीं लप्स्यसे ध्रुवम् ।
वह्निं कृष्णमविज्ञाय प्रमोहाच्छलभा यथा ।
सहसा प्रविशन्त्यग्निं तथा मां योद्धुमिच्छसि ॥ ४ ॥

व्यास उवाच ।

एवं चाणव्रुमिन्द्रं च जघान विशिखैस्त्रिभिः । स चिच्छेद त्रिभिर्बाणैः शक्रःपरपुरञ्जय

ततो जघान दशभिरिन्द्रमैरावणंत्रिभिः । सप्तभिर्मातलिं छित्वा नादैरुच्चैर्ननाद ह ॥६॥

शक्रं प्रति पुनर्दैत्यो भ्रामयामास सम्भ्रमात् ।
आयसीं तां गदां कोपान्महाबलपराक्रमः ॥ ७ ॥

ततस्तु लाघवाच्छक्रो जघान कुलिशेन हि । भिदुरस्यावपातेन गतासुर्निपपात ह ॥८॥

दनुजस्य प्रपातेन सञ्चचाल वसुन्धरा । देवाः प्रचक्रुर्नृत्यानि दानवा विप्रदुद्रुवुः ॥९॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे मुचिवधो नाम सप्ततितमोऽध्यायः ॥७०॥

## एकसप्ततितमोऽध्यायः

### षडाननेन तारेयवधः ।

व्यास उवाच ।

तारेयो बलसम्पन्नः शक्रतुल्यपराक्रमः । जघान विशिखैस्स्कन्दं पितृघातिनमाहवे ॥१॥

ततस्स्कन्दो महाबाहुर्हरितुल्यपराक्रमः ।
विचकर्त्त शरांस्तांस्तान्निर्बिभेद शरोत्तमैः ॥ २ ॥

सदैत्यस्सहसा स्कन्दं छादयामास मार्गणैः ।
असम्भ्रान्तः प्रचिच्छेद विशाखो विशिखैस्तदा ॥ ३ ॥

तारेयोऽग्निशरैः स्कन्दं जघान रणमूर्धनि । विशिखं भिदुरप्रख्यं चखान हरनन्दने ॥४॥

वैश्वानरेण सेनानीस्तत्र सम्पर्यवारयत् । रौद्रमस्त्रं पुनर्दैत्यः प्रेषयामास तं प्रति ॥५॥

तन्निरस्तं कृतं तेन बाणेनास्फालितेन च । अघोरं प्राक्षिपद्दैत्यो घोररूपं सुदारुणम् ॥

भूधरा विटपास्सिंहास्तथा सर्पादयः शराः ।
धावन्ति पार्वतीपुत्रं कोटिकोटिसहस्रशः ॥ ७ ॥

छित्त्वा तांस्तु शरान्स्कन्दो बिभेद दैत्यपुङ्गवम् ।
आपादं शीर्षपर्यन्तं शरैरग्न्यर्कसन्निभैः ॥ ८ ॥

स्वर्णपुङ्खाः शरा लग्ना देहे दैत्यपतेर्भृशम् । रेजुस्ते स्वर्णशकला यथा कृष्णशिलोच्चये

तस्य देहात्ततश्चैव बहुसुस्राव शोणितम् । यथा च माधवे मासि पुरुपुष्पशमीतरुः ॥
स्यन्दनाधश्चराश्वाश्च शिशियरे भूमिलग्नकाः ।
अथ क्रुद्धो महादैत्यः शूलं भीमं च दारुणम् ॥ ११ ॥
धृत्वा त प्रतिचिक्षेप कालमृत्युसमप्रभम् । पार्वतीनन्दनेनापि शूलं पाशुपतेन ह ॥१२॥
क्षिप्रं तेन कृतं दग्धं मुहूर्तेन रणाजिरे । पुनः शक्तिं मुमोचाथ ब्रह्मदत्तान्तु दानवः ॥१३
शूलंप्रति जघानाथ शतकूटसमप्रभम् । ततोऽस्त्रे वज्रसङ्काशे जघ्नाते वियत्यपि ॥१४॥
तयोस्समवीर्ययोरस्त्रे धरण्यां प्रणिपेततुः ।
ततो दैत्यपतिः स्कन्दं शरैरग्निशिखोपमैः ॥ १५ ॥
अर्दयामास सहसा घनधारेव पर्वतम् । तांस्तुच्छित्त्वा महाबाहुःसेनानीश्चापमस्य वै ॥
विचकर्तार्धचन्द्रेण तथा यन्तुः शिरो महत् । तथाश्वान्बहुभिर्बाणैः पातयामास भूतले
गृहीत्वा मुसलं वेगात्सदुद्राव स्थले गुहम् । जघान तेन दैत्येन्द्रः शिखिनंशिखिवाहनम्
ततो मोहं गतो बर्हीं प्रचकम्पे मुहुर्मुहुः ।
ततः स्कन्दः पुनस्तं च जघानासुरपुङ्गवम् ॥ १६ ॥
प्रचिच्छेदासिना वेगान्मुसलं चातिदारुणम् ।
तारेयः शक्तिमादाय जघान क्रौञ्चदारणम् ॥ २० ॥
सोऽपि शक्तिं मुमोचाथ अमोघां दुष्टघातिनीम् ।
ततः सन्दह्य सा शक्तिर्विश्वप्रलयकारिणी ॥ २१ ॥
यमदण्डसमा तं च भित्त्वा पुनर्गुहं गता । स गतासुः पपातोर्व्यां चालयंश्चवसुन्धराम्
पुष्पधूपादिभिः स्कन्दः सर्वदेवैः प्रपूजितः ॥ २३ ॥
इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे तारेयवधो नामैकसप्ततितमोऽध्यायः ॥ ७१ ॥

———

# द्विसप्ततितमोऽध्यायः

## यमेन देवान्तकदुर्धर्षदुर्मुखवधः ।

व्यास उवाच ।

ततो देवान्तको दैत्यो व्यनदत्समरंप्रति । रणं चकार धर्मेण सन्दष्टौष्ठपुटो बली ॥१॥
स गत्वा चाब्रवीद्वाक्यं सर्वलोकविगर्हितम् ॥ २ ॥

देवान्तक उवाच ।

न जानासि महद्धर्मं दुष्टमोहाद्यथाक्रमम् । पापपुण्यप्रयोगेण निग्रहानुग्रहे प्रभुः ॥ ३ ॥
अहं च निर्मितो धात्रा करोमि तव शासनम् । न जानासि यतोधर्मं कालमृत्युपुरःसरः
न रोगो न जरा कालो न मृत्युर्नच किङ्करः ।
धर्मात्प्रचलितः कर्मी कष्टं याति दिवानिशम् ॥ ५ ॥

व्यास उवाच ।

उक्त्वा चैवं महावीर्यं यमं धर्मैकसाक्षिकम् । स जघानत्रिभिर्बाणैः कालमृत्युसमप्रभैः
प्रचिच्छेद स धर्मात्मा ते त्वन्यैर्विशिखैस्त्रिभिः ।
ततस्तूच्चैः शरैः प्राज्यैर्युगान्तानलसप्रभैः ॥ ७ ॥
निजघान यमं सङ्ख्ये स चिच्छेद शरैः शरान् । एतस्मिन्नन्तरे क्रुद्धौ परस्परजयैषिणौ
जघ्नतुः समरेऽन्योन्यं महाबलपराक्रमौ ।
अहोरात्रं तयोर्युद्धमवर्त्तत सुदारुणम् ॥ ६ ॥
एतस्मिन्नन्तरे क्रुद्धः शक्त्या प्रशमनं रुषा । बिभेद दैत्यशार्दूलो ह्यहङ्कारयुतो बली ॥
तामेवाथ रुषा धर्मो गृहीत्वा शक्तिकां द्रुतम् ।
निजघान तयैवामुं स्तनयोरन्तरे भृशम् ॥ ११ ॥
सविह्वलितसर्वाङ्गो मुखादागतशोणितः । ततः क्रुद्धो महातेजा धृत्वा दण्डं सुदारुणम्
अमोघं पातयामास तस्य दैत्यस्य विग्रहे । साश्वं रथं तथा सूतं योद्धारं शस्त्रसञ्चयम्

चकार भस्मसात्तं च शमनः क्रोधमूर्च्छितः । पतिते च तथा दैत्ये दुर्धर्षो नाम दानवः
शमनं शूलहस्तस्तु प्रदुद्राव जिघांसया । शूलहस्तं समायान्तं वडवानलसन्निभम् ॥
आससाद रणे मृत्युः शक्तिहस्तोऽतिनिर्भयः ।
स च दृष्ट्वाऽसुरो मृत्युं शूलेनैव जघानह ॥ १६ ॥
शक्तिं चैव ततो मृत्युः प्रचिक्षेप रणाजिरे । संदह्य सहसा शूलं वह्निकूटसमप्रभम् ॥
दैत्यस्य हृदयंभित्त्वा गता सा च धरातलम् । सरथः स पपातोर्व्यां शक्तिजर्जरविग्रहः
अथान्यो दुर्मुखो मृत्युं कृष्टचापो महाबलः । खड्गचर्मधरः कालो रथ एव गतोऽभवत्
दृष्ट्वा तं विशिखैः प्राज्यैर्जघान स यमं रणे ।
स चाप्लुत्य रथाद्देवो ह्यसिना च सकुण्डलम् ॥ २० ॥
शिरश्चिच्छेद सहसा पातयित्वा च भूतले । हतशेषं बलं सर्वं प्रदुद्राव दिशो दश ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे देवान्तकदुर्धर्षदुर्मुखवधो नाम
द्विसप्ततितमोऽध्यायः ॥

## त्रिसप्ततितमोऽध्यायः

### इन्द्रेणान्यनमुचिवधः ।

व्यास उवाच ।

अथान्यो नमुचिः क्रुद्धः स्यन्दनस्थो दिवौकसः ।
विशिखैरर्दयामास घोरैराशीविषोपमैः ॥ १ ॥
ततस्तु संयुगेदेवाः सिद्धकिन्नरपन्नगाः । न शक्नुवन्ति बाणानां वेगं सोढुं समन्ततः॥
रथमुच्चैःश्रवोऽश्वेन युक्तं मातलिनेरितम् । पुरुहूतः समास्थाय प्रागमत्तं महाबलम् ॥
दृष्ट्वा शक्रं महावीर्यं नमुचिर्दैत्यपुङ्गवः । अब्रवीद्वासवं संख्ये वचनं सानुगे तदा ॥४॥

नमुचिरुवाच ।

प्राकृतं निर्जरं हत्वा न यशोऽस्ति न च प्रियम् ।

न लाभकृतकं वापि न जयस्तु पुरन्दर ! ॥ ५ ॥
तस्मात्त्वयि हतेऽत्रैव सर्वं भवति शाश्वतम् ।
देवराज्यं प्रलप्स्यामि सुखं भोग्यं सुरालये ॥ ६ ॥

व्यास उवाच ।

तमब्रवीन्महातेजाः शक्रः परपुरञ्जयः ॥ ७ ॥

इन्द्र उवाच ।

शूरतावाक्यमात्रेण सर्वत्र सुलभा भवेत् । महापराक्रमं यद्वा अस्ति ते दानवाधम ! ॥
दर्शयस्वाहवे वीर्यं पुरं नेष्यामि भास्करे ॥९॥

व्यास उवाच ।

एतच्छ्रुत्वा महातेजाश्चुकोप दैत्यपुङ्गवः ।
पञ्चभिर्निशितैर्बाणैर्जघान सुरसत्तमम् ॥ १० ॥
तांस्तु चिच्छेद मघवा क्षुरप्रैः पञ्चभिर्द्रुतम् । जग्मतुस्तौ महावीर्यौ समरे विजयैषिणौ
अन्योन्यं सहसा वेगाच्छरैश्चिच्छिदतुः शरान् ।
बिभिदातेऽथ गात्राणि विशिखैर्भिदुरोपमैः ॥ १२ ॥
अत्यपूर्वं कृतं कर्म ताभ्यामेव रणे भृशम् । लाघवं शरसन्धानग्रहमोक्षेषु दुर्लभम् ॥
दृष्ट्वातु विस्मयं जग्मुर्देवा सुरगणास्तदा । एतस्मिन्नन्तरे दैत्यो मायास्त्रंप्रमुमोचह ॥
विशिखाः शतशस्तत्र विनिश्चेरुस्समन्ततः ।
शक्रः कोपात्पुनः शीघ्रं धनुरुद्यम्य वीर्यवान् ॥ १५ ॥
जघान विशिखैरुग्रैः सर्वगात्रेषु सञ्ज्वलन् ।
ततो मार्गणसाहस्रैरष्टभिस्त्वधिकं तथा ॥ १६ ॥
बिभिदाते ततोऽन्योन्यं चिच्छिदाते परस्परम् ।
शरैर्निरन्तराकाशं ददृशुस्तत्र संयुगे ॥ १७ ॥
निपतन्ति धरापृष्ठे खड्गपातैः सहस्रशः । एवं सुदीर्घकाले तु गते तस्मिन्महाहवे ॥१८॥
मायास्त्रं दर्शयामास क्रूरकृन्नमुचिस्तदा । तामसं त्रिषु लोकेषु कृतं स्यात्तु निरन्तरम् ॥

परस्परं न पश्यन्ति देवासुरगणा भृशम् । सूर्यचन्द्रग्रहाणां च वह्नीनां च दिवौकसाम्॥
तस्मिंस्तमसि दुष्पारे गभस्तिर्नैव दृश्यते । दैत्यस्य च ततस्तूणं शरैरग्निशिखोपमैः ॥

विभग्नाः सर्वदेवाश्च शक्रश्चरणसंमुखे ।
शरैर्विभिन्नदेहास्तु निपेतुर्धरणीतले ॥ २२ ॥

प्रभग्नाश्चापरेशूरास्संयान्ति च दिशो दश । कूटं तस्य परिज्ञाय सर्वदेवार्चितो हरिः ॥

सौम्यमस्त्रं मुमोचाथ दिवि सूर्यशतप्रभम् ।
विलम्बितं समालोक्य शक्त्या च बहुघण्टया ॥ २४ ॥
जघानोरसि दैत्यस्य स पपात व्यथान्वितः ।
चिरात्संलभ्य संज्ञां च दैतेयः क्रोधमूर्च्छितः ॥ २५ ॥

गत्वावेगात्सुरश्रेष्ठमैरावतं दधारह । त्रासयामास सुतरामिन्द्रस्य द्विरदं रुषा ॥ २६ ॥
धृत्वा स तु गजं सेन्द्रं मुमोच धरणीतले । ततो भूमिगतः शक्रः कश्मलं च क्षणं गतः

अवप्लुत्य स दैत्येन्द्रो गजदन्तान्तरस्थितः ।
शक्रं ग्रहीतुकामस्य वधार्थं यूथपस्य सः ॥ २८ ॥
असिनाऽसुरमुख्यस्य शिरश्छित्वा न्यपातयत् ।
सर्वे प्रजहृषुर्देवा गन्धर्वा ललितं जगुः ॥ २९ ॥
मुदितास्ते च मुनयः स्तुवन्ति सुरसत्तमम् ॥ ३० ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे द्वितीयनमुचिवधो नाम त्रिसप्ततितमोऽध्यायः ॥

## चतुःसप्ततितमोऽध्यायः

### विष्णुना मधुदैत्यवधः ।

व्यास उवाच ।

दिव्यं रथं समास्थाय धनुर्हस्तो बलैर्युतः । गत्वा च माधवं सङ्ख्येदेवासुरगणाग्रतः ॥
क्रोधेन महताविष्टो मधुर्निर्जरमर्दनः । अब्रवीत्पुरुषं वाक्यमव्ययं हरिमीश्वरम् ॥ २ ॥

नारायण न जानासि युद्धधर्ममितः कथम् ।
अन्यायाद् दुर्वधोपायं कृत्वा नष्टो न शोचसि ॥ ३ ॥
अनेन पङ्क्तयोगेन व्यवहारे कृतस्य च ।
सुरत्वं चोपनष्टं स्यादन्यसृष्टिं करोम्यहम् ॥ ४ ॥

त्वामेव निहनिष्यामि सह देवगणैरिह । इत्युक्त्वा धनुरादाय जघान विशिखैर्विभुम् ॥
माधवस्तान्विभेदाथ शरैर्वज्रसमप्रभैः । बहुभिस्सर्वगात्रेषु जघान च मधुं ततः ॥ ६ ॥

माययाच्छादितः सोऽभूद्दैत्यस्तं सुरसत्तमाः ।
ये वै शूराश्च रुद्राद्यास्त्रिदशास्सत्त्वधारिणः ॥ ॥ ७ ॥
देव्यो नानाविधाश्चापि सायुधा वाहनान्विताः ।
सेनान्यो गणपा देवा लोकेशहरविष्णवः ॥ ८ ॥

अन्ये ग्रहादयो देवाः सर्वे युध्यन्ति सङ्गताः । विनष्टाश्च तदा देवा मधोर्वैमायया ध्रुवम्
संमुखे विमुखे चैव शरशक्त्यृष्टिवृष्टिभिः । पतन्ति सहसा देवा भूमौ शस्त्राभिपीडिताः

एतस्मिन्नन्तरे विष्णुर्गृहीत्वा च सुदर्शनम् ।
असुरान्मायया देवाञ्जघान रणमूर्धनि ॥ ११ ॥
अथ तेषां शिरांस्येष च्छित्वा चैव सहस्रशः ।
पातयामास देवेशो दैत्यानां च दुरात्मनाम् ॥ १२ ॥
एवमन्यान्विभुर्दैत्यान्द्रावयामास सङ्गरात् ।
तं दृष्ट्वा मुनयो देवाः सर्वे विस्मयमाययुः ॥ १३ ॥
कर्णे कर्णे प्रजल्पन्ते देवा मुनिगणास्तथा ॥ १४ ॥

मुनिर्देवा ऊचुः ।

सदा देवैकगोप्ता च हरिरव्यय ईश्वरः । सर्वसाक्षी त्वयं देवो दैत्यजिष्णुर्युगेयुगे ॥१५॥
कथं हन्ति सुरान्सर्वान्कल्पान्त इह जायते ॥ १६ ॥

व्यास उवाच ।

एतस्मिन्नन्तरे दूरे मधुर्मायां प्रयोजिता । हररूपधरो भूत्वा अब्रवीद्धरिमव्ययम् ॥१७॥

मधुरुवाच ।

दैत्यानामग्रतः पाप रणे देवान्समन्ततः ।
हत्वा किं ते शिवं चाद्य धर्मकीर्तिर्यशोगुणाः ॥ १८ ॥
महतोन्मत्तभावेन न जानासि परान्स्वकान् ।
अतस्त्वां निशितैर्बाणैर्नयामि यमसादनम् ॥ १९ ॥

व्यास उवाच ।

एवमुक्त्वाशरैरुग्रैर्जघान केशवं रणे । निचकर्त शरांस्तांस्तु माधवो वाक्यमब्रवीत् ॥

माधव उवाच ।

जानामि त्वां रणे दैत्यं हररूपधरं प्रियम् । शूरं शूरविकर्माणं मधुं मायानियोजितम् ॥
मिथ्यालोकं प्रदास्यामि पातयित्वा रणाजिरे ॥ २२ ॥

व्यास उवाच ।

एतस्मिन्नन्तरे तीक्ष्णैः शरैर्विव्याधसंयुगे । जटिलं वृषकेतुं च वृषभस्थं महेश्वरम् ॥
तयोर्युद्धमतीवासीद्देवदानवयोस्तदा । परस्परं भिन्दतोश्च प्राप्तान्प्राप्ताञ्छराञ्छरैः ॥२४
क्षुरप्रेण धनुस्तस्य चिच्छेद हरिरव्ययः । ततश्च पातयामास घोटकं वृषरूपिणम् ॥२५
स दैत्यश्शूलहस्तोऽथ प्रदुद्राव जगत्पतिम् ।
भ्रामयित्वा ततः शूलं जघान परमेश्वरम् ॥ २६ ॥
त्रिभिश्चिच्छेद बाणैश्च शूलं कालानलप्रभम् ।
ततः क्रूरो महाबाहुर्मधुर्मायातिमायिकः ॥ २७ ॥
देवीरूपं समास्थाय सिंहस्थः प्रययौ हरिम् । शरैर्बहुविधैर्विष्णुं जघानैवाब्रवीद्वचः ॥२८

मधुरुवाच ।

स्वामी तु मे सुरश्रेष्ठ त्वयैव पातितो युधि ।
अहं त्वां च हनिष्यामि सुतौ स्कन्दविनायकौ ॥ २९ ॥

व्यास उवाच ।

उक्तवन्तं च दैतेयं जघान बहुमार्गणैः । स पपात महीपृष्ठे गतासुर्लोहितोद्गिरः ॥३०

पितरौ निहतौ दृष्ट्वा मायाबद्धो महाबलः ।
स्कन्दः शक्तिं समादाय प्रायाद्योधयितुं हरिम् ॥ ३१ ॥
ततो धाताऽब्रवीद्वाक्यं स्कन्दं मोहप्रपीडितम् ॥ ३२ ॥

ब्रह्मोवाच ।

पश्य ते पितरौ दूरे पश्यन्तौ युद्धमीदृशम् ।
अन्तरिक्षे भ्रमन्तौ च संस्थितौ लोकसाक्षिणौ ॥ ३३ ॥

व्यास उवाच ।

एतच्छ्रुत्वा ततो दृष्ट्वा तत्रैवान्तरधीयत। ततो धुन्धुश्च सुन्धुश्च भ्रातरावतिदर्पितौ ॥
वधं प्रतिहरैर्युद्धे पेततुर्गरुडोपरि । खड्गहस्तं च धुन्धुं च सगदं सुन्धुमेव च ॥ ३५ ॥
चिच्छेद नन्दकेनैकं गदयाऽसादयत्परम् । पेततुस्तौ धरापृष्ठे प्रवीरौ क्षतविक्षतौ ॥
मधुस्तदागतस्तूर्णमन्तर्धानं तमोवृतः । पातयामास विष्णौ च मायया शतपर्वतान् ॥
ततस्तान्पर्वतांश्छित्वा तमसोऽन्तर्गतो युधि ।
क्रोधात्सुदर्शनेनैव शिरश्छित्त्वा निपातितः ॥ ३८ ॥
ततो ब्रह्मादिभिर्देवैश्शम्भुना त्रिदशैरपि । मधुसूदन इति ख्यातिर्विष्णोर्लोकेषु कारिता॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे मधुवधो नाम चतुःसप्ततितमोऽध्यायः ॥७४

---

# पञ्चसप्ततितमोऽध्यायः

## इन्द्रेणवृत्रासुरवधः ।

व्यास उवाच

ततो वृत्रो महातेजा दैत्यानां प्रवरो युधि । दिग्गजाढ्यं समारूढः प्राद्रवद्बलसूदनम् ॥
आगच्छन्तं ततो वृत्रं शरैः कालानलप्रभैः । विव्याध सर्वगात्रेषु द्विरदस्थो महाहवे ॥२
ततो वृत्रस्तु शीर्षं च जिष्णोरेव पतत्त्रिणा । विव्याध सहसा तेन स चचालमहाबलः

आत्मानं च समाश्वास्य धनुरुद्यम्य वीर्यवान् ।
ववर्ष शरवर्षेण तस्य दैत्यस्य विग्रहे ॥ ४ ॥
शरांश्छित्वा बिभेदाशु शरैराशीविषोपमैः । शतक्रतुं महावीर्यः सर्वदेवाधिपं युधि ॥
ततः शरसहस्रैस्तु दैत्यं विव्याध देवराट् । परस्परं शरा यान्ति हेमरत्नविभूषिताः ॥
सञ्चरन्ति यथा वाता वृत्ताश्शतसहस्रशः । वियत्पथि शरा यान्ति यथा सप्ताश्वरश्मयः
एवं शरसहस्रैस्तु बिभिदाते परस्परम् ।
मनोजवसमाः शीघ्रा गाढाः शिखरिणो यथा ॥ ८ ॥
वडवानलसंस्पर्शाः खगावज्रारभेदकाः । तयोर्धनुष्मतोर्युद्धे शरास्तुल्यगुणान्विताः ॥
एवं क्रमेण युद्धे च अहोरात्रमवर्तत । महेन्द्रो द्विरदं तस्य शूलेनैव जघान ह ॥ १० ॥
स निपत्य महीपृष्ठे लाघवात्स्वरथं ययौ ।
रथस्थस्तस्य देवस्य शक्त्या चैरावणं दृढम् ॥ ११ ॥
बिभेद लाघवेनाशु वज्रेणेव महागिरिम् । शुशुभे कम्पमानस्तु सेन्द्रः स च महागजः ॥
ततः शक्तिं समादाय आविध्य मघवाऽसुरम् । बिभेदोरसि दैत्यस्य स पपात रथोपरि
क्षणात्संज्ञां समालम्ब्य स विनद्य पतत्रिणा ।
बिभेद समरे शक्रं स ततः कश्मलं गतः ॥ १४ ॥
इन्द्रःसंज्ञां पुनः प्राप्य जघान विशिखैःशितैः । शतकोटिसमैर्बाणैरर्दितो व्यथयान्वितः
ततो वृत्रो महाशूलं प्राक्षिपन्निर्जरेश्वरे । शाम्भवास्त्रेण देवेशो वैष्णवास्त्रं मुमोच ह
उभयोरम्बरे चास्त्रे वह्निकूटसमप्रभे । अन्योन्यं जघ्नतुस्तत्र स्फुलिङ्गानि विमुञ्चती ॥
स्पर्शने च स्फुलिङ्गानामुभयोः सेनयोर्भटाः ।
न शक्ताः सम्मुखे स्थातुं शलभा ज्वलने यथा ॥ १८ ॥
दग्धाः पेतुः पृथिव्यां च दिशस्सर्वाः प्रदुद्रुवुः । देवदानवयोर्वीराः शून्यस्तत्राभवद्रणः
स्वंस्वमस्त्रं समाहृत्य चक्रतुः सुभृशंतथा । अस्त्रंनिरस्तकं दृष्ट्वा सदैत्यः क्रोधमूर्च्छितः
मायया शैलसन्दोहमस्त्रं शक्रे मुमोच ह ।
बाणौघैः शैलसङ्घातं प्रचिच्छेद रणे हरिः ॥ २१ ॥

अघोरं प्रासृजद्दैत्यः पुरुहूते महाबले। कोटिकोटिसहस्राणि जन्तूनां प्रवराणि च ॥
सिंहशार्दूलभल्लूकवृकव्याघ्रमहागजाः। दन्दशूकादयः सत्त्वाः प्रधावन्ति सुरेश्वरम् ॥
क्षुरप्रैरर्धचन्द्रैश्च भल्लैः शिलीमुखैस्तथा। असम्प्राप्तान्प्रचिच्छेद मघवा परवीरहा ॥२४॥
ततो वृत्रो महाबाहुर्धनुरुद्यम्य वीर्यवान्। बिभेद शरसाहस्रैर्वज्रकल्पैः शतक्रतुम् ॥२५॥

छित्वा क्षुरप्रैश्शक्रश्च धनुस्तस्य चकर्त च।
सूतं चाश्वान्पृथिव्यां च पातयामास तत्क्षणात् ॥ २६ ॥
सकण्टकां गदां भीमां सम्पूज्यासुरसत्तमः।
जघान पक्षिनः शीर्षे मोहाद्दन्ती क्षितिं ययौ ॥ २७ ॥

सगदः सर्वदेवेशो धरणीं समुपस्थितः। ततस्तयोर्गदायुद्धमवर्तत मुहुर्मुहुः ॥ २८ ॥

तयोः प्रहरतोः शब्दो गदापातोद्भवो ध्रुवम्।
आवर्तं परिवर्तं च चक्रतुस्तौ पुनः पुनः ॥ २९ ॥

अध ऊर्ध्वं प्रहारं च पार्श्वयोरतिभीषणम्। बभूवैवं तयोर्युद्धं लोकालोकभयङ्करम् ॥

दृष्ट्वा देवगणाः सिद्धा दानवा विस्मयं गताः।
युद्ध्यमानौ तु तौ वीरौ मृत्युसंशयमागतौ ॥ ३१ ॥

देवदानववीराश्च द्रष्टुं नैव तदीशिरे। ईशब्रह्मादयः खे तु स्थिता द्रष्टुं तदद्भुतम् ॥३२॥
तयोर्हुंकारशब्देन गदापातस्वनेन च। ऊर्ध्वोर्ध्वमगमच्छब्दो ह्यशनेश्चोपजायते ॥३३॥
भग्ने गदे द्वयोरेव करः सम्पुटितस्तयोः। एवं चैवार्धयामेन तयोरस्त्रे निपेततुः ॥३४॥
एतस्मिन्नन्तरे वीरौ खड्गचर्मधरौ तदा। प्रतियोद्धुं महाघोरमाहवे सम्प्रचेरतुः ॥३५॥
निस्त्रिंशौ विद्युदुल्काभौ तयोर्गात्रे च चर्मणी। दृश्यते सर्वलोकैश्च लाघवाद्विस्मयंगतैः
चिच्छिदाते तयोरेव चर्मणी बहुवर्णके। भीष्मकं बलयुद्धं च तयोरेवं प्रवर्तते ॥ ३७ ॥
मण्डलं चक्रधन्वं च लाघवं च परिप्लुतम्। वृत्रवासवयोर्युद्धं वृत्रवासवयोरिव ॥

केशान्वृत्रस्य उत्प्लुत्य सम्प्रधृत्यासिना द्रुतम्।
शिरश्चिच्छेद सहसा मघवा रणमूर्धनि ॥ ३९ ॥

जयशब्दस्ततस्त्वासीद्देवानां च समन्ततः। प्रोत्फुल्लहृदया देवा मघवन्तमपूजयन् ॥४०॥

देवदुन्दुभयो नेदुर्ननृतुश्चाप्सरोगणाः । गीतं गायन्ति गन्धर्वा मुनयः स्तुतिपाठकाः ॥
भीताः पलायिताः सर्वे दैत्यास्त्यक्तायुधा दिशः ॥ ४२ ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे वृत्रासुरवधो नाम पञ्चसप्ततितमोऽध्यायः ॥७५॥

---

## षट्सप्ततितमोऽध्यायः

### गणेशेन त्रैपुरिवधः ।

व्यास उवाच ।

चतुर्भिस्तुरगैर्जुष्टं रथं सूर्यसमप्रभम् । त्रैपुरिः संरुरोहाथाब्रवीद्वाक्यं गणाधिपम् ॥

त्रैपुरिरुवाच ।

पिता मे निहतः पित्रा तव यस्माद्गणाधिप ।
तस्मात्त्वामद्य विशिखैर्नयामि यमसादनम् ॥ २ ॥

व्यास उवाच ।

ततस्तमब्रवीद्देवो गणेशस्त्रिपुरात्मजम् ॥ ३ ॥

गणेश उवाच ।

तव तातेन दुष्टेन सुराणामहितं पुरा । कृतं कर्म महत्पापं श्रुतं नो जनकेन हि ॥ ४ ॥
पापकर्मरतं दुष्टं ज्ञात्वा ज्ञानबलेन च । अवधीत्तं शरैकेन पितरं ते बलेन च ॥ ५ ॥
पङ्कात्प्रतारितो मोहात्प्रेषितो यममन्दिरम् ।
त्वां चाहं तत्पथं दैत्य प्रेषयामि क्षणादिह ॥ ६ ॥

व्यास उवाच ।

उक्तवन्तं महाप्राज्ञं सुराणां च गणाधिपम् । विव्याधदशभिस्तीक्ष्णैः कालानलसमप्रभैः
ततः शरसहस्रैस्तु दैत्यं विव्याध साहसात् ।
यमदण्डसमैर्बाणैः क्षुरप्रैश्च शिलीमुखैः ॥ ८ ॥

कङ्कपत्रैर्महातीक्ष्णैर्वज्रानलसमप्रभैः । विचकर्त शरांश्चास्य लम्बोदरः सुरार्चितः ॥ ९ ॥
पुनर्विव्याध विशिखैः सहसा भिदुरोपमैः । शरैरर्दितसर्वाङ्गो मूर्च्छितस्त्वपतद्भुवि ॥
ततो भद्रश्च सौभद्रो भीषणो निर्जरान्तकः ।
स्वां स्वां गदां समादाय दुद्रुवुस्तं विनायकम् ॥ ११ ॥
युगपत्ते गदापातैर्निजघ्नुर्गणनायकम् । लाघवात्तु वृथा कृत्वा गदास्तेषां महाबलः ॥
भद्रकस्य तु शीर्षं चाहनत्परशुना तदा । सौभद्रस्योत्तमाङ्गं च असिनाग्रे निपातितम् ॥
भीषणस्य कुठारेण खड्गेन निर्जरान्तकम् ।
पातयित्वा च हेरम्बो महागिरिसमांस्तदा ॥ १४ ॥
चतुरो गणमुख्यांश्च अन्यांश्चापातयद्द्विषः । ततः संज्ञां समालभ्य त्रैपुरिश्चासुरोत्तमः
समारुह्य रथं स्वं च जघान सुरसत्तमम् । विशिखैरर्धचन्द्रैश्च क्षुरप्रैर्भल्लकैस्तथा ॥१६॥
तांस्तु चिच्छेद धर्मात्मा पुनर्विव्याध तं शरैः ।
चतुर्भिः सैन्धवांश्चैव शरैकेन च सारथिम् ॥ १७ ॥
शरैः सम्पातयामास धरण्यां गणनायकान् । लाघवात्तु रथं चान्यं गत्वा त्रिपुरनन्दनः
विशिखैर्वज्रसङ्काशैः संबिभेद गणाधिपम् । रुधिरेणावसिक्ताङ्गो रुषा घोरयमप्रभः ॥
ललाटे च त्रिभिर्बाणैस्सप्तभिश्च स्तनान्तरे । चतुर्भिर्नाभिदेशे च पञ्चभिर्मुष्टिमस्तके ॥
संबिभेद महाक्रोधो बलिनं शम्भुनन्दनः । शरैरर्दितसर्वाङ्गः स दैत्यो रणमूर्धनि ॥
कश्मलं परमं गत्वा सम्पपात रथोपरि । ततः सूतेन धीरेण अपनीतो रणाजिरात् ॥
विमुखं नाहनच्छूरो विनायकः सुरार्चितः । चिरात्संज्ञां समालभ्य यन्तारं चाब्रवीद्वचः

त्रैपुरिरुवाच ।

गच्छ सूत रणे भीरुं विनायकं हरात्मजम् ॥ २४ ॥

व्यास उवाच ।

ततो यन्ताऽब्रवीद्वाक्यं सत्यं पथ्यं च कोमलम् ॥ २५ ॥

सारथिरुवाच ।

हरात्मजशरान्सोढुं कस्समर्थो रणाजिरे । तस्मान्मोहगतस्त्वं च मयानीतः प्रभासुतः

एतज्ज्ञात्वा त्विदानीं भो यद्युक्तं तद्विधीयताम् ॥ २७ ॥

व्यास उवाच ।

एतस्मिन्नन्तरे राज्ञा प्रेरितः कविसत्तमः । औषधादिप्रयोगेण गजः संज्ञामबोधयत् ॥
अकारयच्छतगुणप्राणं च जयमादिशत् ।
प्राग्जलं मन्त्रितं दत्त्वा रुरोधास्याङ्कव्रणान् ॥ २९ ॥
स गजोदशनैरेव स्फोटयामास वै गिरिम् । एवंशतसहस्राणि सैन्यानि सैन्यपालकान् ।
पातयामास समितौ गजः परमदुर्जयः ।
सदैत्यस्तस्य पृष्ठस्थः शरैः कालानलप्रभैः ॥ ३१ ॥
हत्वा त्वपातयच्चोर्व्यां मुख्यमुख्यान्सुराधिपान् । शरैस्तस्य तदा देवायमदण्डसमप्रभैः
निपतन्ति महावीर्या रुधिरौघपरिप्लुताः ।
यस्मिन्यस्मिंश्च मार्गे तु सदैत्यः सगजो गतः ॥ ३३ ॥
तत्र तत्र चकाराशु भीषणं सञ्चितं शरैः । गजेन पातिताः केचिद्गजारोहेण चापरे ॥
वेगेन भ्रमणेनैव सुराः केचित्प्रतापिताः । एवं सुरगणाध्यक्षाः शस्त्रास्त्रैर्विविधैश्च तम् ।
स गजं युद्धनिर्भीता निजघ्नुर्बहुभिः शरैः ।
तथापि तद्गजं योद्धुं न शक्तास्ते महाबलाः ॥ ३६ ॥
क्षिप्रं तांस्तु गजो दन्तैस्त्रैपुरोऽपातयच्छरैः । न गता ये धरण्यां च देवा जर्जरविग्रहाः
धरण्यां गणपं जग्मुर्भीतास्ते वेदनातुराः ।
देवानां कदनं दृष्ट्वा गणाधीशः प्रतापवान् ॥ ३८ ॥
स गजं ताडयामास वज्रानलसमैः शरैः । स गजोवेगसंरुद्धः शरेण च समुत्थितः ॥
अथो तौ द्वौ शरैरेव बिभिदाते परस्परम् ।
उभौ तौ नर्दमानौ च अन्योन्यं जयमैच्छताम् ॥ ४० ॥
शोणितैर्लिप्तसर्वाङ्गौ वीरमुख्यौसुरासुरौ । अथाखुं स गजो मत्तो विभेद दशनैःस्वकैः
आखुनाऽभिद्रुतो नागो घोरयुद्धं तयोः परम् ।
अधोर्ध्वं संविभागे च चतुर्भिर्युद्धमद्भुतम् ॥ ४२ ॥

स शब्दं तुमुलं युद्धं सर्वलोकभयङ्करम् । दशनैर्दशनैरेव शरैरेव शरोत्तमैः ॥ ४३ ॥
तद्घोरमभवद्युद्धं देवदानवसङ्करे । आखुको भेदयाञ्चक्रे महानागं महाबलम् ॥ ४४ ॥
पर्शुनापृष्ठवंशाग्रे स्थित्वा तेनाहनत्पुनः । दैत्यस्य दशनद्वारे हृदिस्कन्धेऽथ लाघवात् ॥

स गजः सपपातोर्व्यां गतासुर्लोहितं वमन् ।
शशंसुर्मुनयो देवास्साधुसाध्विति चाब्रुवन् ॥ ४६ ॥

गणपं पुष्पगन्धैश्च गन्धधूपैरपूजयन् । दुद्रुवुर्दैत्यसङ्घाश्च भीताश्च प्राणकातराः ॥ ४७ ॥

तथैव सह पार्वत्या सुरानाह महेश्वरः ॥ ४८ ॥

महेश्वर उवाच ।

अत्रान्येऽस्त्रैरमोघैश्च दैत्यानाजघ्नुराहवे । यावत्तु सेनयोर्नैव जययुद्धं समापयेत् ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे त्रैपुरिविमर्दो नाम षट्सप्ततितमोऽध्यायः ।

---

# सप्तसप्ततितमोऽध्यायः

## देवदैत्यानां द्वन्द्वयुद्धम् ।

व्यास उवाच ।

श्रुत्वा महेश्वराद्वाक्यं देवाः शक्रपुरोगमाः । दुद्रुवुर्दैत्यसङ्घांस्तान्सर्वे सर्वान्समन्ततः ॥
आजगाम महाबाहुः कुम्भो नाम महासुरः ॥ नैर्ऋतो यक्षराजानं गदया चाहनद् भृशम्
गुह्यकेशो गदापातैर्जघान भृशमुत्तमम् । ततोऽन्योन्यं गदायुद्धमभवद्भीषणं तयोः ॥ ३ ॥

चक्रबन्धं महाबन्धं पुरो वध्य निबन्धनम् ।
प्राचुरं भीषणं यानं स्फोटतैलाभिवास्तिकम् ॥ ४ ॥

तेन कृत्वा महायुद्धमवसाने धनेश्वरः । पातयामास तं स्फोटं तस्य कुम्भस्य चोरसि ॥
भग्नदंष्ट्रस्ततः कुम्भो निपपात महीतले । स्यन्दनस्थो महावीर्यो जम्भो हरिहयं तदा ॥
जघान शरसङ्घैश्च तथैवैरावणं भृशम् । वासवो भिदुरेणैव संबिभेदासुरोत्तमम् ॥७॥

सपपात धरापृष्ठे गतासुर्लोहितोक्षितः । तथारण्यं सुघोरं च अघोरं घोरमेव च ॥८॥
चतुरो गणमुख्यांश्च शक्त्या बिभेद संयुगे । सेनानीश्चैव प्रत्येकं पातयामास लाघवात्
सौरभं शरसङ्घैश्च जयन्तो वशमानयत् । शक्तिहस्तं च संह्लादं यमदण्डं नरान्तकम् ॥
हत्वा च पातयामास स भस्मीकृतविग्रहः ।
कालश्च खड्गपातेन पातयामास बाभ्रवम् ॥ ११ ॥
शक्त्या मृत्युर्बिभेदाश्वं तथानिर्घृणकं रणे । अग्निना दह्यमानाश्च सतैते च महाबलाः ॥
भद्रबाहुर्महाबाहुः सुगन्धो गन्ध एव च । भौरिको वह्लिको भीम एते सेनाग्रगामिनः
रणे सन्दग्धदेहाश्च पेतुरुर्व्यां गतासवः ।
पाशबद्धा महावीर्या वरुणस्य महात्मनः ॥ १४ ॥
पेतुरुर्व्यां महासत्त्वाः शूराः शूरभयानकाः । शूरस्य रश्मिजालेन निहताः पञ्चदानवाः
तुरुतुम्बुरुदुर्मेधस्साधकासाधकाभिधाः । क्रूरक्रौञ्चरणेशानमोदसम्मोदषण्मुखाः ॥१६॥
शरैर्निपातिता दैत्याः संयुगे मातरिश्वना । नैर्ऋतो गदया भीमं पातयामास भूतले ॥
शूलपातैश्च रुद्राणां शतशो दैत्यदानवाः । निपेतुः संयुगे भीताः संमुखा रणपण्डिताः
वसूनां शरपातैश्च शूराणां रश्मिमालिनाम् ।
मेघानां करकाभिश्च वज्रपातैस्सुदारुणैः ॥ १९ ॥
निपातिता रणे दैत्याः शतशो बलशालिनः । कुबेरस्य गदापातैर्निपतन्ति सहस्रशः ॥
शक्रस्य भिदुरेणैव भेदिता दैत्यपुङ्गवाः ।
असङ्ख्याताः पेतुरुर्व्यां स्कन्दशक्त्या तथाहताः ॥ २१ ॥
गणेशपर्शुपातेन पतन्ति मुख्यमुख्यकाः । वैकुण्ठकरमुक्तेन चक्रेण तीव्रकर्मणा ॥ २२ ॥
दैत्यानां प्रवराणां च शिरांसि निपतन्ति कौ । शमनो यमदण्डेन कोटिकोटिसहस्रशः
अपातयत्तदा भूम्यां कालः खड्गेन दानवान् ।
मृत्युश्शक्त्या तथा दैत्यान्पाशीपाशेन चापरान् ॥ २४ ॥
पातेन तक्षकादीनां सुधांशोः शिशिरेण च ।
अश्वारोही खरो मन्यो हनिपाशस्तथा गजान् ॥ २५ ॥

परिघेण गजं कुम्भे दैत्यानां नाशयत्ततः । एवमश्वान्गजांश्चैव लाघवात्स न्यपातयत्
एवं सिद्धैश्च गन्धर्वैरप्सरोभिर्महाबलैः । अन्याभिर्देवताभिश्च समातृगणनायकैः ॥२७॥
निपातिता महाघोरा ये ते प्रलयदानवाः । शरैश्च खड्गपातैश्च शूलशक्तिपरश्वधैः ॥
यष्टिपरिघकुन्तैश्च पातयन्त्यसुरान्सुराः । एवं संक्षीयमाणेषु दैत्यराट् समपद्यत ॥२९॥
आदित्यरथसङ्काशं रथं रत्नविभूषितम् । शातकुम्भमयं दिव्यं घण्टाचामरभूषितम् ॥
पताकाध्वजसम्पूर्णं रम्यं शक्ररथोपमम् । समारुह्य महावीरो हिरण्याक्षोऽसुराधिपः ॥
जघान शरजालैश्च दुर्निवार्यः सुरासुरैः । ससैन्यानि गजान्वीरो रथांश्च सहसैन्धवान्

पातयामास भूमौ च शतशोऽथ सहस्रशः ।
एवं वरन्सवृन्देषु निखिलेषु दिवौकसाम् ॥ ३३ ॥
पातयामास दैत्येन्द्रः शरौघान्मृत्युसन्निभान् ।
क्रमेण समरे चाथ देवसैन्यान्यमन्थत ॥ ३४ ॥

यथा पुष्करिणीवृन्दे गजः कञ्जवनं शितैः । शरपातैरथो वेगात्सिंहनादैः पुनः पुनः ॥
धरण्यां पतिता वेगात्तदा दैत्येश्वरस्य च । दशभिश्च सुतीक्ष्णाग्रैर्जयन्तं स जघानह ॥
रैमन्तं पञ्चभिर्बाणैः शक्रं पञ्चदशेन तु । चित्ररथं विंशतिभिः पञ्चविंशतिभिर्गुहम् ॥
हेरम्बं त्रिशरेणैव चत्वारिंशच्छरैर्यमम् । तथैव कालं मृत्यु च पाणिना द्विगुणेन च ॥
गुह्यकेशं जगत्प्राणं दशभिर्दशभिः शरैः । षड्भिश्च सप्तभिश्चैव रुद्रान्सर्वान्पृथक्पृथक्
वसून्सर्वांश्च सशरैः सिद्धगन्धर्वपन्नगान् । दशाष्टदशभिः षड्भिर्युद्धे देवान्भिनत्त्यसौ
ओजौघादतिवीर्यात्तु शीघ्रलाघवदर्शनात् । आपत्प्राप्ताः सुराभीत्या प्रतिकर्तुं न चेश्वराः
महेशशूलसङ्काशैः शरैर्मर्मविभेदिभिः । ताडिता निर्जरायुद्धे मूर्च्छिता धरणीं ययुः ॥

तस्यैव संमुखे स्थातुं न शेकुः प्रवरास्सुराः ।
ततो देवा विनिर्धूतास्त्रिदिवेशेन संयुताः ॥ ४३ ॥

शरण्यं ते हरिं तत्र शरणं ताडिता ययुः । एतस्मिन्नन्तरे विष्णुः प्राहजिष्णुं खगेश्वरम् .

विष्णुरुवाच ।

अधुना गच्छ दैत्यस्य सम्मुखं रणमूर्धनि ॥ ४५ ॥

व्यास उवाच ।

नाशाय स ततस्तूर्णं गतस्तस्यान्तिकं जवात् ।
सरथं मार्गणैर्भित्त्वा विष्णुमारोधयज्जवम् ॥ ४६ ॥
रथस्य सम्मुखे दैत्य उवाच विष्णुमव्ययम् ॥ ४७ ॥

दैत्यराज उवाच ।

अन्यसृष्टिं करोम्यद्य हत्वा त्वां च सनिर्ज्जरम् ॥ ४८ ॥

व्यास उवाच ।

ततो विष्णुरुवाचेदं गर्जन्तं दैत्यपुङ्गवम् ॥ ४९ ॥

विष्णुरुवाच ।

शक्तस्त्वं स्पर्द्धने पाप यदि युद्धे स्थिरो भव ॥ ५० ॥

व्यास उवाच ।

ततः शरशतैरेव जघान विष्णुमव्ययम् । असम्भ्रान्तः स चिच्छेद यमदण्डनिभाञ्छरान्
पुनः शरसहस्राणि प्रेरयामास तं रणे ।
तांश्च छित्वा शरैः शौरिस्तं च विव्याध मार्गणैः ॥ ५२ ॥
प्रगौरवाद्धार्याभिः संस्पर्शाद्वाडवानलैः । शरैश्च भेदकैस्तीक्ष्णैः खगमैश्च मनोजवैः ॥
लाघवात्केशवास्त्रस्य तूलशुष्कतृणोपमैः । हैमैः शरसहस्रैस्तु ताडितो दैत्यपुङ्गवः ॥
बाधयाभ्यर्दितः क्रुद्धो धृत्वा शिखरिणं रणे । जघान माधवं वेगाद्धिरण्याक्षो महाबलः
तं च सञ्चूर्णयामास गदया लीलया हरिः । एवं पर्वतसाहस्रं पातितं तु क्रमेण हि ॥
तथैव लाघवाच्चूर्णं हरिणा दानवारिणा ।
पुनर्बाहुसहस्राणि कृत्वाऽसौ दानवोत्तमः ॥ ५७ ॥
शरैः शक्तिभिरत्युग्रैः शूलैः परशुकादिभिः । ववर्ष बहुभिर्विष्णुं क्रोधाविष्टेन चेतसा ॥
तांस्तु तेनैव प्रहितांश्चिच्छेद सुरसत्तमः । शरैर्दीप्तैर्महाघोरैरसुराणां भयङ्करैः ॥ ५९ ॥
विव्याध सर्वगात्रेषु शम्भुशूलोपमैश्शरैः । दानवाधिपतिं सङ्ख्ये ह्यव्ययो हरिरीश्वरः
स च कश्मलतां गत्वा सर्वशक्तिमनुत्तमाम् ।

कालजिह्वोपमां घोरामष्टघण्टासमन्विताम् ॥ ६१ ॥

हरेरुरसि पीने च विद्धुत्या पातयद्द्रुतम् । शुशुभे स सुरश्रेष्ठस्तडित्वत्सान्द्रमेघवत् ॥

ततश्च चुक्रुशुर्दैत्या जयेति साधुवादिनः ।

ततश्चक्रं दैत्यसैन्ये दानवारिर्व्यसर्जयत् ॥ ६३ ॥

तेषां शिरांसि सञ्छिद्य माधवं पुनरागमत् ।

सदैत्यं शक्तिपातेन पातयामास वै रणे ॥ ६४ ॥

चिरात्संज्ञां समालम्ब्य वह्निबाणेन केशवम् ।

निजघान रणे क्रुद्धो हरिः कौबेरमाक्षिपत् ॥ ६५ ॥

ततो मुमोच मायास्त्रं चासुरं चातिदारुणम् । सिंहव्याघ्रलुलायांश्चतद्वद्द्विपसरीसृपान्

जघान समरे विष्णुं हिरण्याक्षः प्रतापवान् ।

ततो मायास्त्रसम्भूताञ्छस्त्रास्त्रौघान् रणे हरिः ॥ ६७ ॥

प्रचिच्छेद शरैरेव शूलेनैवमताडयत् । सविह्वलितसर्वाङ्गस्तत्क्षणंलोहितोक्षितः ॥६८॥

विचकर्ष हरन्विष्णुरसृग्विप्लुतविग्रहः । तच्छूलं च त्रिभिर्बाणैः प्रविव्याध सुराधिपः

वरूथं सध्वजं केतुं रथं चैवातपत्रकम् । यन्तारं च प्रचिच्छेद दशभिश्च हरिः शरैः ॥

पातिते च रथे दैत्यः सम्प्लुत्याथ रथंपरम् । आरुरोह सदैत्येन्द्रः सम्मुखं चाकरोद्बली

ततो युद्धं महाघोरमभवल्लोमहर्षणम् । हिरण्याक्षस्य च हरेर्लोकविस्मापनं महत् ॥

अस्त्रयुद्धं तथान्योन्यं कृतप्रतिकृतं च तत् । ततो नियुद्धे सततं दिव्यवर्षशतं गतम् ॥

ततो दैत्यो महासत्त्वो ववृधे वामनो यथा ।

मुखेन जग्राह रुषा त्रैलोक्यं सचराचरम् ॥ ७४ ॥

भूमण्डलं समुद्धृत्य विवेश च रसातलम् । शेषाश्च विविशुर्दैत्यास्तमनुप्रीतिसंयुताः ॥

ततो विष्णुर्महातेजा ज्ञात्वा दैत्यबलं महत् । दधार रूपं वाराहं दैत्यराजजिघांसया ॥

धृत्वा क्रोडतनुं विष्णुर्विवेश तमनुद्रुतम् ।

तत्र गत्वा रसामूले रसातलगतां महीम् ॥ ७७ ॥

दृष्ट्वा स्वदंष्ट्रयोर्दध्रे लोकाधारां वसुन्धराम् ।

तां धृत्वा गच्छतस्तस्य विष्णोरमिततेजसः ॥ ७८ ॥

समाजगाम दैत्येन्द्रो धृष्टं वाग्भिस्तुदन्ननु । मायाक्रोडतनुर्विष्णुर्दुर्वचांसि सहन्रुषा ॥

जलोपरि दधारेमां धरां भूधर एव च ।

तस्यां न्यस्य स्वसत्त्वं च स चकार तदाऽचलाम् ॥ ८० ॥

ततः पश्चात्स संलग्नो दैत्यराट् समुपस्थितः ।

क्रोधेन महताविष्टो जघान गदया हरिम् ॥ ८१ ॥

मायया सूकरो विष्णुस्तां गदां समवञ्चयत् ।

योगयुक्तो यथा मृत्युं कौमोदक्याहनच्च तम् ॥ ८२ ॥

ततः पुना रुषाविष्टोहिरण्याक्षोमहाबलः । मुष्टिना प्राहरद्देवं दक्षिणे तु भुजेप्रभोः ॥

एवं युद्धं महाघोरं सव्यासव्यं गतागतम् । परिभ्रमणविक्षेपं कृतानुकरणं तथा ॥ ८४ ॥

ततो ब्रह्मादयो देवा युद्धं पश्यन्ति खे स्थिताः ।

स्वस्ति प्रजाभ्यो देवेभ्य ऋषिभ्यश्चेति चाब्रुवन् ॥ ८५ ॥

ऊचुश्च देवदेवेशं विष्णुं वाराहरूपिणम् ॥ ८६ ॥

ब्रह्मादय ऊचुः ।

मा क्रीड बालवद्देव जह्यमुं देवकण्टकम् ॥ ८७ ॥

व्यास उवाच ।

ततो विष्णुर्महातेजा मायावाराहरूपधृक् । ब्रह्माद्यनुमतिं प्राप्य चक्रं प्राक्षिपदुल्बणम् ॥

सहस्रसूर्यसङ्काशं सहस्रारं महाप्रभम् । दैत्यान्तकरणं रौद्रं प्रलयाग्निसमप्रभम् ॥८६॥

तच्चक्रं विष्णुना मुक्तं हिरण्याक्षं महाबलम् ।

चकार भस्मसात्सद्यो ब्रह्मादीनां च पश्यताम् ॥ ६० ॥

दैत्यान्तकरणं रौद्रं चक्रं चागमदच्युतम् । ततो ब्रह्मादयो देवाःशक्रमुख्याश्च लोकपाः

दृष्ट्वा च विजयं विष्णोः स्तुवन्तिस्म समागताः ॥ ६१ ॥

देवा ऊचुः ।

नताःस्म विष्णुं जगदादिभूतं सुरासुरेन्द्रं जगतां प्रपालकम् ।

यन्नाभिपद्मात्किलपद्मयोनिर्बभूव तं वै शरणं गताः स्मः ॥ ९२ ॥
नमो नमो मत्स्यवपुर्द्धराय नमोऽस्तु ते कच्छपरूपधारिणे ।
नमः प्रकुर्मश्च नृसिंहरूपिणे तथा पुनर्वामनरूपिणे नमः ॥ ९३ ॥
नमोऽस्तु ते क्षत्त्रविनाशनाय रामाय रामाय दशास्यनाशिने ।
प्रलम्बहन्त्रे शितिवाससे नमो नमोऽस्तु बुद्धाय च दैत्यमोहिने ॥ ९४ ॥
म्लेच्छान्तकायापि च कल्किनाम्ने नमः पुनः क्रोडवपुर्धराय ।
जगद्धितार्थं च युगे युगे भवान्बिभर्ति रूपं त्वसुराभवाय ॥ ९५ ॥
निषूदितोऽयं ह्यधुना किल त्वया दैत्यो हिरण्याक्ष इति प्रगल्भः ।
यश्चेन्द्र मुख्यान्किललोकपालान्संहेलया चैव तिरश्चकार ॥ ९६ ॥
स वै त्वया देवहितार्थमेव निपातितो देववर प्रसीद ।
त्वमस्य विश्वस्य विसर्गकर्ता ब्राह्मेण रूपेण च देवदेव ॥ ९७ ॥
पाता त्वमेवास्य युगे युगे च रूपाणि धत्से सुमनोहराणि ।
त्वमेव कालाग्निहरश्च भूत्वा विश्वं क्षयं नेष्यसि चान्तकाले ॥ ९८ ॥
अतो भवानेव च विश्वकारणं न तेऽपरं जीवमजीवमीश ।
यत्किंच भूतं च भविष्यरूपं प्रवर्त्तमानं च तथैव रूपम् ॥ ९९ ॥
सर्वं त्वमेवासि चराचराख्यं न भाति विश्वं त्वदृते च किंचित् ।
अस्तीति नास्तीति च भेदनिष्ठं त्वय्येवभातं सदसत्स्वरूपम् ॥ १०० ॥
ततो भवन्तं कतमोऽपि देव न ज्ञातुमर्हत्यविपक्वबुद्धिः ।
ऋते भवत्पादपरायणं जनं तेनागताः स्मश्शरणं शरण्यम् ॥ १०१ ॥

व्यास उवाच ।

ततो विष्णुः प्रसन्नात्मा उवाच त्रिदिवौकसः ॥ १०२ ॥

विष्णुरुवाच ।

तुष्टोऽस्मि देवा भद्रं वो युष्मत्स्तोत्रेण साम्प्रतम् ॥ १०३ ॥
य इदं प्रपठेद्भक्त्या विजयस्तोत्रमादरात् । न तस्य दुर्लभं देवास्त्रिषु लोकेषु किंचन ।

गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ।
तत्फलं समवाप्नोति कीर्तनाच्छ्रवणान्नरः ॥ १०५ ॥
सर्वकामप्रदं नित्यं देवदेवस्य कीर्तनम् । अतःपरं महाज्ञानं न भूतं न भविष्यति ॥
इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे देवासुरसंग्रामसमाप्तौ विजयस्तोत्रं नाम सप्तसप्ततितमोऽध्यायः ॥

# अष्टसप्ततितमोऽध्यायः

## रणे मृतानां दैत्यानामुत्तमगतिप्राप्तिः ।

संजय उवाच ।

येऽसुराश्च मृता युद्धे सम्मुखे विमुखेऽपिवा । गतिं तेषामहंब्रह्मञ्छ्रोतुमिच्छामितत्त्वतः
असङ्ख्याता इमे दैत्यास्त्रैलोक्ये सचराचरे ।
अद्याप्यासन्गताः कुत्र एतन्मे शंस भोगुरो ॥ २ ॥

व्यास उवाच ।

ये मृतास्संमुखे शूरा दैत्यानां प्रवरा रणे ।
स्वयं प्राप्य च देवत्वं भोग्यमश्नन्ति शाश्वतम् ॥ ३ ॥
प्रासादा यत्र सौवर्णा नानारत्नविभूषिताः । सर्वकामप्रदा वृक्षाः स्वर्णदीतोयसंयुताः ॥
पद्मोत्पलसुकह्लारैर्गन्धाढ्यैरन्यपुष्पकैः । दधिदुग्धाज्यखण्डैश्च युता पुष्करिणी शुभा ॥
अतीवरूपसम्पन्नाः सदैव नवयौवनाः । यत्र सन्ति स्त्रियो दिव्याः सर्वाभरणभूषिताः
तत्र राज्यं प्रकुर्वन्ति तथैव वसुधातले । एवं जन्माष्टकं प्राप्य धनिनोऽध्यक्षमन्त्रिणः ॥
अर्धसंमुखगात्रेण दिवमश्नन्तिशाश्वतम् । विमुखाः कातरा भीता ये च मायाविनो रणे
ते यान्ति निरयं घोरं ये च देव द्विजद्विषः । पतितं मूर्च्छितं भग्नमन्ययोद्धारमाहवे ॥
हन्तारो निरयं यान्ति ते च म्लेच्छाः कुवाचकाः ।
परन्यासापहर्त्तारो विमुखास्सन्ति तत्त्वतः ॥ १० ॥

रात्रौ वा विपिने नष्टे चोरास्साहसकारिणः। सर्वभक्षरता मूढा म्लेच्छागोब्रह्मघातकाः
कुवाचकाः परैम्लेच्छा एते ये कूटयोनयः । तेषां पैशाचिकी भाषा लोकाचारोनविद्यते

नास्ति शौचं तपो ज्ञानं न देवपितृतर्पणम् ।
दानश्राद्धादिकं यज्ञे सुराणां च प्रपूजनम् ॥ १३ ॥

पितॄणां च न शुश्रूषा द्विजदेवतपस्विनाम् । ज्ञानलोपादतस्तेषां मलशौचं न विद्यते ॥

मातरं भगिनीं चान्यां गृहिणीं कामयन्ति च ।
सर्वो विपर्ययो लोकात्सदाचारो मलीमसः ॥ १५ ॥
ताक्ष्यैस्योद्गमनानां च अन्येषां गोत्रवासिनाम् ।
कुलजातास्सदा दैत्या येषां पुण्यमकारणम् ॥ १६ ॥

दुर्गतिं च मृता यान्ति द्विजस्त्रीशिशुघातिनः । गवाशिनो दुरात्मानोह्यभक्ष्यभक्षणेरताः
कीटयोनिं व्रजन्त्येते तरवश्च पिपीलिकाः । न मन्त्रेषु न देवेषु कल्पन्ते ते सुरद्विषः ॥
अग्रजः सहजस्तेषां स दुङ्नो ग्राम्यवृत्तयः । लोमकेशप्रणेतारः क्रव्यभक्षरता भुवि ॥
साहसं च व्रतं दानं स्नानं यज्ञादिकं च यत् । मत्स्यमांसादिषु प्रीता मृषावचनभाषिणः

सदा कामास्सदा लोभास्सदा क्रोधमदान्विताः ।
वधबन्धरतोद्वेगा द्यूतसङ्गीतसम्प्रियाः ॥ २१ ॥

कुभृत्याः कुजनप्रीताः पूतिगन्धरता नराः । न देवेषु न विज्ञेषु न धर्मश्रवणेषु च ॥
स्तोत्रमन्त्रादिके पुण्ये यथाकार्येष्वनिश्चयाः । बहुरोगाधिरोषाश्च बहुरूपपरिच्छदाः ॥
नरजातिषु दैत्यानां चिह्नान्येतानि भूतले । न जानन्ति परं लोकं न गुरुं स्वं न चापरम्
गर्भपूरणमिच्छन्ति नातिथिं न गुरून्द्विजान् । न देवं न सुतं गोत्रं न मित्रं नच बान्धवम्

स्वप्ने दानं न जानन्ति भक्षणान्नपरिच्छदम् ।
गोपायन्ति धनं यस्मात्ते यक्षा नररूपिणः ॥ २६ ॥

प्राणान्तेऽपि धनं किंचिन्नदिशन्ति च राजनि । ते यक्षा दुर्गतिस्थाश्चपरार्थभारवाहकाः
प्रेतानां लक्षणं यद्वासर्वलोकविगर्हितम् । स्त्रीणां च पुरुषाणां च शृणुष्वैकमना मम ॥
मलपङ्कधरा नित्यं सत्यशौचविवर्जिताः । दन्तकुन्तलवस्त्राणां वपुषो मलसञ्चयाः ॥

गृहपीठादिपात्राणां सकृच्छौचं न रोचते ।
न पश्यन्ति सुखं स्त्रीणां विशन्ति कानने द्रुतम् ॥ ३० ॥
विघसोच्छिष्टपूतीनां भक्षणेऽभिरता भुवि । अन्नपानं च शयनमन्धकारेषु रोचते ॥
कदाचित्स्वस्थता नास्ति क्वचिद्वा शुचिता तनौ ।
लक्षणं नरलोकेषु प्रेतानामीदृशं किल ॥ ३२ ॥
हिताहितं न जानन्ति मित्रामित्रं गुणागुणम् ।
पापपुण्यादिकं स्थानं स्नानं देवद्विजार्चनम् ॥ ३३ ॥
अरिमित्रमुदासीनं न विदन्ति स्वभावतः । मर्त्यस्थाः पशवस्ते च ज्ञायन्ते बुद्धिसंमतैः
बुद्ध्या नानात्वभावाश्च भ्रमन्ति च मृषाभुवि । यक्षरूपा नरास्ते च सर्वकर्मबहिष्कृताः
एषां भेदं प्रवक्ष्यामि लक्षणं धरणीतले । विजाता मर्त्यलोकेषु पापस्यैवानुरूपतः ॥
मलीमसभुवि प्रस्थं नागरं छद्मरूपिणम् । विघसादि प्रभोक्तारं काकमाहुर्मनीषिणः ॥
अभक्ष्ये निरतः पापः कुक्कुरः पूतिसंप्रियः । प्रवृत्तस्सर्वगुह्येषु भक्ष्याभक्ष्यसजीवनः ॥
भूम्यां पश्वादियोनिनां कुलेषु प्राप्तसम्भवाः ।
शुनो विगृह्य हस्तेन म्लेच्छानां भक्षणप्रियाः ॥ ३६ ॥
विशेषात्सूकराणां च तथा चरणयोधिनाम् । पोषणेभक्षणेप्रीताः पूतिगर्ह्येष्वसाधुषु ॥
पर्वते करणाद्गृहेः काष्ठसञ्चयसङ्ग्रहे । विज्ञेयास्ते सदाम्लेच्छाः क्षत्रियाणांभयाकुलाः
लोकानां नष्टधर्मे च सदा शौचविवर्जिते ।
कुलीनानां तदा म्लेच्छा भविष्यन्ति च दस्यवः ॥ ४२ ॥
तेषां संसर्गतोऽन्ये च सम्बन्धादन्नभोजनात् ।
मैथुनात्तस्य योषासु तद्भावं तु व्रजन्ति ते ॥ ४३ ॥
तस्मिन्काले जनास्सर्वे दुःखरोगप्रतापिताः । दुर्भिक्षान्नपरा मूढाःसदा राजप्रपीडिताः
तत्रासत्ये रता मर्त्याः सर्वशौचविवर्जिताः । न श्रूयन्ते जनैरेव पुराणागमसंहिताः ॥
मद्यमांसप्रियाः पापास्सर्वभक्षास्सुदारुणाः ।
दारुणाचारनिरता नित्यं छलपरायणाः ॥ ४६ ॥

न पुष्णन्ति सुतास्तातं प्रसुवं च गुरूनपि। न शुश्रूषन्तिवै भृत्याःस्वामिनंगुणशालिनम्
भर्तारं न स्त्रियः काश्चिच्छ्वशुरौ च स्वमातरः। नित्यकष्टा नरास्तत्र कलहश्च गृहेगृहे
नृपा म्लेच्छाः सुरापाश्च तथा मन्त्रिपुरोहिताः।
मनुष्यैश्च बलिस्तेषां मत्स्यैर्मांसैर्निरामिषः ॥ ४६ ॥
पाषण्डायासयोगेभ्यः प्रधाना गुणवार्तयोः।
धनिकैः कोकिलैर्मन्दैर्व्याप्तं तैस्तु महीतलम् ॥ ५० ॥
ततोऽन्योन्यं प्रिया मूढा वने वानगरेषु च। भक्ष्याभक्ष्यंसमश्नन्तिमत्स्यमांसादिकंनराः
वने द्विजातयश्चान्ये भुञ्जते चानुपापकम्।
भक्तिमन्तं पशुं चान्यत्सर्वे यान्त्यपुनर्भवम् ॥ ५२ ॥
पातयन्ति पितॄन्पापाः सर्वे ते पूर्वदेवकाः।
पिशाचा राक्षसा ये च मर्त्यका गुह्यका भ्रुवम् ॥ ५३ ॥
एते चाविनयप्रीता न देवा न च मानुषाः ॥ ५४ ॥

संजय उवाच।

कथं च मर्त्यभावेषु लक्षं जानन्ति तात्त्विकाः।
एतं मे संशयं नाथ दूरीकुरु ततस्ततः ॥ ५५ ॥

व्यास उवाच।

कृतपापानुरूपास्तु द्विजातिष्वन्यजातिषु। असुरा राक्षसाः प्रेताः स्वभावं न त्यजन्तिते
जाता ये चासुरा मर्त्ये सदा ते कलहोत्सुकाः।
कुहकाः कच्चराः क्रूराः विज्ञेया राक्षसा भुवि ॥ ५७ ॥
जनोद्विग्नादिकं दानं तथा देवार्चनं भुवि। उग्रभावाद्धनं लब्ध्वा राज्यं भुञ्जन्तिशाश्वतम्
जयं शौर्यादिकं पुण्यं पुनः पापक्षयं व्रजेत्। एवमुर्व्यां तथा नाके नागलोके यमालये ॥
उग्रेण तपसा कश्चित् सुरत्वं लभते दिवि। वासुदेवं समाराध्य प्रह्लादः सुरपूजितः ॥
हरं तथान्धको दैत्यः स्तुत्वा तत्सभ्यकोऽभवत्। तस्यैव गणमुख्यत्वंलेभेभृङ्गीमहाबलः
एते चान्ये च बहवोबलिरिन्द्रो भविष्यति। गच्छन्ति सद्गतिं तात इहामुत्र च सर्वदा

केचिद्दैत्यकुले जाताः पृथिव्यां सुरसत्तमाः ।
भावयन्ति पितॄन्सर्वाञ्छतशोऽथ सहस्रशः ॥ ६३ ॥

एकेनापि सुपुत्रेण कुलत्राणं च धीमता । एकोऽपि वैष्णवः पुत्रः कुलकोटिं समुद्धरेत्
म्रियन्ते पुंण्यतीर्थेषु मुक्तिक्षेत्रे चज्ञानतः । ब्रह्मज्ञानविदो ये ते तारयन्ति तरन्ति च ॥

एका पतिव्रता नारी कुलकोटिं समुद्धरेत् ।
जितेन्द्रियोऽपि धर्मात्मा द्विजदेवार्चने रतः ॥ ६६ ॥

क्षये धर्मे कलौ शेषे पुरे जनपदेषु च । एको रक्षति धर्मात्मा पुरे ग्रामं जनं कुलम् ॥
विज्ञातृमेदुरं चासीद्‌ब्राह्मणानां पुरं महत् । तत्र सर्वे द्विजाः शश्वत्सन्ध्योपासनतत्पराः
वेदपाठरता धीरा देवातिथिद्विजार्चकाः । यज्ञव्रताग्निकर्माणः षट्कर्मपरिनिश्चयाः ॥
अतिकृच्छ्रे च तेषां वै न पापे वर्तते मनः । कुर्वन्ति सततं धीरा व्रतं यज्ञं सनातनम् ॥

कदाचिद्दैवयोगाच्च गृहस्थश्च स कोविदः ।
वह्नौ जुहोति विप्रर्षिराज्यं मन्त्रेण मन्त्रवित् ॥ ७१ ॥
तस्मिन्काले च तस्यैव मूत्रकृच्छ्रं सुदारुणम् ।
तत्प्रोज्झितुं गतः सोऽपि रक्षार्थं स्थाप्य चेटिकाम् ॥ ७२ ॥
तस्यास्त्वनवधानेन शुना चाज्यं च भक्षितम् ।
भिया तया ततः पात्रं स्वीयमूत्रेण सम्भृतम् ॥ ७३ ॥

असंलक्ष्याजुहोदग्नौ सविप्रस्त्वरया ततः । आश्चर्यं च ततो वह्नौ लक्षितं तेन तत्क्षणात्
कूटं हेममयं साक्षात्स्वर्णं जाम्बूनदप्रभम् । गृहीत्वा तन्मुदा विप्रः पापयोगं चकार ह ॥
पप्रच्छ विस्मयाद्दासीं कथमेतद्वद प्रिये । मुदा तत्र यथावृत्तं कथितं तु तया द्विज ॥
ततो नित्यं यथाकालं तच्च तस्य प्रवर्तते । समृद्धिरद्भुता गेहे लोकविस्मयकारिणी ॥
ततः परस्पराच्छ्रुत्वा सर्वैरेव च तत्पुरे । कृतं कर्मदुराचारं श्रुत्वा लोभादसाधुभिः ॥
गुरुलोभाच्च सुमहत्स्वान्ते पङ्कं विशत्यपि । पङ्कादेव भयान्मोहान्मतिभ्रंशोऽभवत्ततः ॥
अथ किल्बिषकूटेन दग्धमेव पुरं च तत् । स्त्रियो दुष्टाः जना दुष्टाः सर्वे पापबलात्तदा
वृद्धो ज्ञाताद्विजस्तत्र तत्कार्ये न मतिं दधौ । तस्य भार्या तदा साध्वी पुरुदुःखेन संयुता

भर्तारं कृच्छ्रसन्तप्ता पुरकार्यं जगाद सा ॥ ८२ ॥

ब्राह्मण्युवाच ।

कष्टं मे वर्तते नाथ दृष्ट्वा त्वां दुःखसंयुतम् । ग्रामाचारमिमं यद्वाऽप्यपरं कर्तुमर्हसि ॥

व्यास उवाच ।

ततस्तत्र स दोषज्ञः स्मित्वा वचनमब्रवीत् ॥ ८४ ॥

द्विज उवाच ।

यस्तु जीवति पापेन त्यक्त्वा धर्मं परं हितम् । स वैधेयो महाभागेप्रगच्छत्यपुनर्भवम्

एते विप्रा दुराचाराः सदारास्सपरिच्छदाः ।

अतिपातकयोगाच्च महापातकसंमताः ॥ ८६ ॥

सहपापेन महता प्रयास्यन्ति रसातलम् । अन्तेऽपुनर्भवं प्राप्यापराधान्तो न विद्यते ॥

अहमेकोऽत्र तिष्ठामि स्वपुण्यपरिरक्षणात् ॥ ८८ ॥

व्यास उवाच ।

ततस्सा तमुवाचेदं लोकहास्यं वचस्तव ।

वक्तुमर्हसि नश्चाग्रे न पुरोऽन्यस्य कस्यचित् ॥ ८९ ॥

द्विज उवाच ।

यदि यास्यामिचान्यत्रइतोऽहंतत्क्षणात्प्रिये । सचित्तैः स्वजनैरेवपुरीयास्यत्यधोगतिम्

व्यास उवाच ।

इत्युक्त्वा परमप्रीतः सङ्गृह्य च धनं स्वकम् । क्षिप्रंसचतया सार्धं ययौसीमान्तरंद्विजः

स्थित्वाऽपश्यत्पुरी तावत्स्थिरा तिष्ठति पूर्ववत् ।

सा चाह तं पतिं साध्वी पुरीं चेयं न नश्यति ॥ ९२ ॥

विमृश्य तामुवाचेदं विप्रवर्यस्सुविस्मितः । किं नु तिष्ठति तत्रैव द्रव्यमस्मद्गृहाद्बहिः

विचार्य सा धवं प्राह मयाभ्रान्त्या उपानहौ । नानीते तिष्ठतस्तत्र धारयिष्यामिकिंनुवै

एवमुक्त्वा पतिं साध्वी गृहीत्वा ते उपागता । पत्युरभ्याशतो दृष्टं पुरं निर्व्यथनं गतम्

ततो विप्रादयो वर्णाः कच्चराः पुरवासिनः । तिष्ठन्ति नरके घोरे दुःखिताश्चापुनर्भवे ॥

कृच्छ्राद्यमपुरं यान्ति नास्ति तेषां च निष्कृतिः ।
पूतिगन्धं ततोऽमेध्यं वर्जनीयं प्रकीर्तितम् ॥ ९७ ॥
पूर्ववद्भक्षणे प्रीतो ह्यद्य पापं करोति च ।
स्तेयशीलो निशाचारी बुधैर्ज्ञेयस्स वञ्चकः ॥ ९८ ॥
अबुधः सर्वकार्येषु अज्ञातः सर्वकर्मसु । समयाचारहीनस्तु पशुरेव सबालिशः ॥ ९९ ॥
एवमुष्ट्राद्यस्सन्ति भक्षादिनकुलादयः । हिंस्रो ज्ञातिजनोद्वेगी रते युद्धे च कातरः ॥
विघसादिप्रियो नित्यं नरः श्वा कीर्तितो बुधैः । चौर्यकर्मरतो नित्यं बहुमित्रप्रवञ्चकः
मिथुने कलहो नित्यं मर्त्यस्तु परिकीर्तितः । प्रकृत्या चपलो नित्यं सदा भोजनवत्सलः
प्लवगः काननप्रीतो नरः शाखामृगो भुवि ।
सूचको भाषया बुद्ध्या स्वजनेऽन्यजनेषु च ॥ १०३ ॥
उद्वेगजनकत्वाच्च स पुमानुरगः स्मृतः । बलवान्कान्तशीलश्च सततं चानपत्रपः ॥१०४॥
पूतिमांसप्रियो भोगी नृसिंहस्समुदाहृतः ।
तत्स्वनादेव सीदन्ति भीता अन्ये वृकादयः ॥ १०५ ॥
द्विरदादि नरा ये च ज्ञायन्ते दूरदर्शिनः । एवमादिक्रमेणैव विजानीयान्नरेषु च ॥१०६॥
सुराणां लक्षणं ब्रूमो नररूपं व्यवस्थितम् । द्विजदेवातिथीनां च गुरुसाधुतपस्विनाम् ॥
पूजातपो रतो नित्यं धर्मशास्त्रेषु नीतिषु । क्षमाशीलो जितक्रोधःसत्यवादीजितेन्द्रियः
अलुब्धः प्रियवाक्शान्तो धर्मशास्त्रार्थसंप्रियः ।
दयालुर्दयितो लोके रूपवान्मधुरस्वरः ॥ १०९ ॥
वागीशः सर्वकार्येषु गुणी दक्षो महाबलः ।
साक्षरश्चापि विद्वांश्च गीतनृत्यार्थतत्त्ववित् ॥ ११० ॥
आत्मविद्यादिकार्येषु सर्वतन्त्रीस्वरेषु च । हविष्येषु च सर्वेषु गव्येषु च निरामिषे ॥
सद्योगास्वादद्रव्ये च प्रत्यग्रे चातिशोभने । गन्धमाल्येषु वस्त्रेषु शास्त्रेष्वाभरणेषु च
सम्प्रीतश्चातिथौ दाने पार्वणादिषु कर्मसु ।
स्नानदानादिभिः कार्ये व्रतैर्यज्ञैः सुरार्चनैः ॥ ११३ ॥

कालो गच्छति पाठैश्च न क्लीबं वासरं भवेत्। अयमेवमनुष्याणां सदाचारो निरन्तरम्
देववन्मानवाचारोगीयते मुनिसत्तमैः। किन्तुसत्त्वाधिको देवो मनुष्यो भीत एव च
गम्भीरःसर्वदा देवः सदैव मानवोमृदुः। द्वयोस्तुल्या च सम्प्रीतिर्न दैत्यादौभवेत्किल
प्रीतिभावं परं सौख्यं सौहृदं सुकृतं शुभम्। देवमानुषयोरेव दैत्यराक्षसयोस्तथा।

प्रेतादीनां च प्रेतेषु पशौ प्रीतिः पशोरपि।
काकादयः स्वजातौ च तथान्ये च स्वजातिषु ॥ ११८ ॥

प्रीताभवन्ति चाप्रीता विद्या तेषां च लक्षणम्। एवं पुण्यविशेषेण सविशेषासुजातिषु

प्रियाप्रियं विजानीयात्पुण्यापुण्यं गुणागुणम्।
दम्पत्योर्न सुखं किंचिज्जातिभेदान्नृणां भुवि ॥ १२० ॥

स्वजातिषुभवेत्प्रीतिर्मुक्तौ वा निरयेऽपिवा। अतिपुण्याल्लभेदायुः शोभनाःपुण्यकारिणः

पापात्मानो लभन्तेऽन्तं ये च दैत्यादयो नराः।
कृते जाताः सुरा भूमौ न दैत्याश्चान्यजातयः ॥ १२२ ॥

त्रेतायामेकपादं च द्विपदं द्वापरे युगे। सन्ध्यायां च कलेरेव सर्वपादं च सङ्कुलम् ॥
देवादीनां भवेज्जातं भारतं यत्प्रवर्तितम्। ये ते दुर्योधनस्यैव योधाः सैन्यादयस्तथा
ते च दैत्यादयः सर्वे ये च कर्णादयो भुवि। गाङ्गेयो वसुमुख्यश्च द्रोणो देवमुनिःप्रभुः
अश्वत्थामा हरः साक्षाद्धरिर्नन्दकुलोद्भवः। पञ्चेन्द्राःपाण्डवा जाता विदुरो धर्म एवच

गान्धारी द्रौपदी कुन्ती चैता देव्यो धरातले।
देवदैत्याः कलेर्मध्ये दैत्याश्शेषे च मानवाः ॥ १२७ ॥
उत्पत्स्यन्ते सदाप्रेताः क्रव्यादाः पशुपक्षिणः।
तेषां च कुलटा दासी नित्यकष्टा यवीयसी ॥ १२८ ॥

नित्यं द्वन्द्वेषु सम्प्रीत्या तेषामाचारभाषिणी। किल्बिषेषु च सर्वेषु कलहेऽन्यायकर्मणि

रता दैत्यादयो ये ते सर्वे निरयगामिनः ॥ १२६ ॥

वैशम्पायन उवाच।

दैत्यादीनांमृषाभावात्सुरत्वं न सुरालयम्। कथंभोग्यंकथं सौख्यमारोग्यंबलसञ्चयम्

राज्यमायुस्तथाकीर्तिरभीष्टं दयितं बलम् । नीतिविद्यादिकं भाग्यं जन्मवृद्धं सनातनम्
दानाध्ययनकर्माणि यज्ञादि च कथं प्रभो । एतदाप्ताय शिष्याय मह्यं भो वक्तुमर्हसि

व्यास उवाच ।

दैत्यानां साहसादेव तपो भवति निश्चितम् ।
व्रतं यज्ञादिकं चैव सम्प्रीतिः स्वजनस्य च ॥ १३३ ॥

यो दान्तोऽविगुणैर्मुक्तो नीतिशास्त्रार्थतत्त्वगः । एतैश्च विविधैः पूतः स भवेत्सुरलक्षणः
पुराणागमकर्माणि नाकेष्वत्र च वै द्विज । स्वयमाचरते पुण्यं स धरोद्धरणक्षमः ॥
यः शैवो वैष्णवश्चाण्डः सौरो गाणप एव च । तारयित्वापितॄन्सर्वान्स धरोद्धरणक्षमः
विशेषाद्वैष्णवं दृष्ट्वा प्रीयते पूजयेच्च यः । विमुक्तस्सर्वपापेभ्यस्स धरोद्धरणक्षमः ॥
षट्कर्मनिरतो विप्रः सर्वयज्ञरतस्सदा । धर्माख्यानप्रियो नित्यं स धरोद्धरणक्षमः ॥

विश्वासघातिनो ये च कृतघ्ना व्रतलोपिनः ।
द्विजदेवेषु विद्विष्टाश्शातयन्ति धरां नराः ॥ १३९ ॥

ये च मद्यरताः पापा द्यूतकर्मरतास्तथा । पाषण्डपतितालापाः शातयन्ति धरां नरा ॥

सुकर्मरहिता ये च नित्योद्वेगाश्च निर्भयाः ।
स्मृतिशास्त्रार्थकोद्विग्नाश्शातयन्ति धरां नराः ॥ १४१ ॥

निजवृत्तिं परित्यज्य कुर्वन्ति चाधमां च ये । गुरुनिन्दारता द्वेषाच्छातयन्ति धरां नराः
दातारं ये रोधयन्ति पातके प्रेरयन्ति च । दीनानाथान्पीडयन्ति शातयन्ति धरां नराः

एते चान्ये च बहवः पापकर्मकृतो नराः ।
पुरुषान्पातयित्वा तु शातयन्ति धरां नराः ॥ १४४ ॥

य इदं शृणुयाद्रम्यं गुह्याद्गुह्यं परं हितम् । न तस्य दुर्गतिर्दुःखं दौर्भाग्यं दीनता भुवि

न दैत्यादौ भवेज्जन्म स्वर्लोके शाश्वतं सुखम् ।
नाकाले मरणं तस्य न च पापैः प्रलिप्यते ॥ १४६ ॥

इह सर्वजनाध्यक्षस्त्रिदिवे त्रिदिवेश्वरः । कल्पं कल्पं दिवं मुक्त्वा मोक्षमार्गं व्रजत्यसौ

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे पुण्यव्यक्तिर्नामाष्टसप्ततितमोऽध्यायः ।

# ऊनाशीतितमोऽध्यायः

## सूर्यमाहात्म्यवर्णनम् ।

वैशम्पायन उवाच ।

प्रभवत्ययमाकाशे नित्यं द्विजवर प्रभो ।
कोऽयं को वा प्रभावोऽस्य कुत्रजातो घृणीश्वरः ॥ १ ॥
किं करोति हि कार्यं वै यतो रश्मिमयोभृशम् । देवैर्मुनिवरैस्सिद्धैश्चारणैर्दैत्यराक्षसैः
निखिलैर्मानुषैः पूज्यः सदैव ब्राह्मणादिभिः ॥ ३ ॥

व्यास उवाच ।

परमं ब्रह्मणस्तेजो ब्रह्मदेहाद्विनिस्सृतम् । साक्षाद्ब्रह्ममयं विद्धि धर्मकामार्थमोक्षदम्
मयूखैर्निर्मलैः कृत्स्नमतिचण्डं सुदुःसहम् । दृष्ट्वा प्रदुद्रुवुर्लोकाः करैश्चण्डैः प्रपीडिताः ॥
ततश्च सागराः सर्वे वा नद्यो नदादयः ।
शुष्यन्ति जन्तवस्तत्र म्रियन्ते चातुराजनाः ॥ ६ ॥
अथ शक्राद्यो देवा ब्रह्माणं समुपागताः । इममर्थं तदा प्रोचुर्देवांश्च विधिरब्रवीत् ॥

ब्रह्मोवाच ।

आदिर्ब्रह्मतनोर्देवाः सत्त्वगो जनकः प्रभुः । अयं रजोमयः साक्षात्सुधांशुस्तनुमध्यगः ॥
एताभ्यां पालितालोकास्त्रैलोक्ये सचराचराः ।
दिव्योपपादका देवा ये वात्रैव जरायुजाः ॥ ६ ॥
अण्डजास्स्वेदजाश्चैव ये वाऽत्रैवोद्भिज्जादयः। सूर्यस्यास्यप्रभावं तु वक्तुमेव नशक्नुमः
अनेनरक्षिता लोका जनिता पालिताध्रुवम् । अस्यैवसदृशो नास्ति सर्वेषां परिरक्षणात्
यं च दृष्ट्वाप्युषः काले पापराशिः प्रलीयते । तमाराध्य जना मोक्षं साधयन्ति द्विजातयः
सन्ध्योपासनकाले तु विप्रा ब्रह्मविदः किल ।
उद्‌बाहवो भवन्त्येव ते च देवप्रपूजिताः ॥ १३ ॥

अस्यैव मण्डलस्थां च देवीं सन्ध्यास्वरूपिणीम् ।
समुपास्य द्विजास्सर्वे लभन्ते स्वर्गमोक्षकौ ॥ १४ ॥
धरायांपतितोच्छिष्टाःपूतास्तेचास्यरश्मिभिः । सन्ध्योपासनमात्रेणकल्मषात्पूततांव्रजेत्
दृष्ट्वा चाण्डालकं गोघ्नं पतितं कुष्ठसङ्गतम् । महापातकसङ्कीर्णमुपपातकसंवृतम् ॥
पश्यन्ति ये नरास्सूरं ते पूता गुरुकिल्बिषात् । अस्योपासनमात्रेण सर्वरोगात्प्रमुच्यते
नान्धत्वं न च दारिद्र्यं न दुःखं न च शोच्यताम् ।
लभते च इहामुत्र समुपास्य विरोचनम् ॥ १८ ॥
प्रदृष्टा नैव लोकैश्च देवा हरिहरादयः । ध्यानरूपप्रगम्यास्ते दृष्टो देवो ह्ययं स्मृतः॥१६॥
देवा ऊचुः ।
अस्तु प्रसादनाराध्यश्चास्तूपासनपूजनम् । अस्यैव दर्शनं ब्रह्मन्प्रलयानलसंमितम् ॥२०॥
सर्वे नरादयस्सत्त्वा मृतावस्थांगता भुवि । अस्य तेजः प्रभावेण प्रनष्टास्सागरादयः
न समर्था वयं सोढुं कथमन्ये पृथग्जनाः । तस्मात्तवप्रसादाच्च पूजयामो यथा रविम्
यजन्ति च नरा भक्त्या तदुपायो विधीयताम् ॥ २२ ॥
व्यास उवाच ।
देवानां वचनं श्रुत्वा गतो ब्रह्मा खगेश्वरम् । गत्वा स्तोतुं समारेभे सर्वलोकहिताय वै
ब्रह्मोवाच ।
देवत्वं सर्वलोकस्य चक्षुर्भूतो निरामयः । ब्रह्मरूपधरः साक्षाद्दुष्प्रेक्ष्यः प्रलयानलः ॥
सर्वं देवस्थितस्त्वं हि सदा वायुसखस्तनौ । अन्नादिपाचनंत्वत्तो जीवनं च भवेद्ध्रुवम्
उत्पत्तिप्रलयौ देव त्वमेको भुवनेश्वरः । त्वदृते सर्वलोकानां दिनैकं नास्ति जीवनम्
प्रभुस्त्वं सर्वलोकानां त्राता गोप्ता पिता प्रसूः ।
चराचराणां सर्वेषां त्वत्प्रसादाद्धृतं जगत् ॥ २७ ॥
देवेषु त्वत्समो नास्ति भगवंस्त्वखिलेषुच । अन्तर्देहेषु बाह्येषु सर्वेषु भुवनेष च ॥२८॥
सर्वत्र तेऽस्ति सद्भावस्त्वयैतद्धारितं जगत् ।
रूपगन्धादिकारी त्वं रसानां स्वादुता त्वया ॥ २६ ॥

एवंविश्वेश्वरः सूरो निखिलस्थितिकारकः । तीर्थानांपुण्यक्षेत्राणां मखानां जगतःप्रभोः
त्वमेकः प्रयतो हेतुस्सर्वसाक्षी गुणाकरः । सर्वज्ञः सर्वकर्ता च हर्ता पाता सदोत्सुकः
ध्वान्तपङ्कामयघ्नश्च दारिद्र्यदुःखनाशनः । प्रेत्येह च परो बन्धुः सर्वज्ञः सर्वलोचनः ॥
त्वद्धृते सर्वलोकानामुपकारी न विद्यते ॥ ३३ ॥

आदित्य उवाच ।

पितामह महाप्राज्ञ विश्वेन्द्र विश्वभावक । ब्रूहि शीघ्रं परं यत्ते करिष्यामि मतं विधे

ब्रह्मोवाच ।

मयूखस्तेऽतिचण्डश्च लोकानामतिदुःसहः । यथैव मृदुतामेति तथा कुरु सुरेश्वर ॥३५॥

आदित्य उवाच ।

किरणाः कोटिकोटिर्मे लोकनाशकराः पराः ।
न चाभीष्टकरा लोके प्रयोगा च्छिन्धि तान्प्रभो ॥ ३६ ॥

व्यास उवाच ।

ततोविरिञ्चिना तूर्णं रविवाक्यवशाद्ध्रुवम् । आहूयविश्वकर्माणंकृत्वा वज्रमयींभ्रमिम्
चिच्छेद च रवेर्भानून्प्रलयानलसन्निभान् । तैरेव रचितं तत्र विष्णोश्चक्रं सुदर्शनम् ॥
अमोघं यमदण्डं च शूलं पशुपतेस्तथा ।
कालस्य च परः खड्गश्शक्तिर्गुरुप्रमोदिनी ॥ ३९ ॥
चण्डिकायाःपरं शस्त्रं विचित्रं शूलकंतथा । चक्रेब्रह्माऽऽज्ञयाशीघ्रं विश्वकर्मा तु तेन वै
सहस्रकिरणं शिष्टमन्यच्चैव प्रशातितम् । अजनोपाय भावेन पुनश्च कश्यपान्मुने ॥४१॥
अदितेर्गर्भसञ्जात आदित्य इति वै स्मृतः । अयं च रतिविश्रान्ते मेरुश्रृङ्गं भ्रमत्यपि ॥
सदोध्वं दिनरात्रं च धरण्या लक्षयोजने ।
ग्रहाश्चन्द्रादयस्तत्र चरन्ति विधिनोदिताः ॥ ४३ ॥
सूरः सञ्चरते मासान्द्वादश द्वादशात्मकः । सङ्क्रमादस्य सङ्क्रान्तिः सर्वैरेव प्रतीयते
तासु यद्वा फलं ब्रूमो लोकानां निखिलं मुने । धनुर्मिथुनमीनेषु कन्यायां षडशीतयः ॥
वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी स्मृता । तर्पणं चाक्षयं विद्धि दानं देवार्चनं तथा ॥

षडशीतिसहस्राणि षडशीतौ फलं भवेत् ।
विष्णुपद्यां तु लक्षं तु अयने कोटिकोटिकम् ॥ ४७ ॥
विष्णुपद्यां तु यद्दानमक्षयं परिकीर्तितम् । दातुर्वदामि सान्निध्यं सदा जन्मनि जन्मनि
शीते तूलपटीदानान्न दुःखं जायते तनौ । तुलादाने तल्पदाने द्वयोरेवाक्षयं फलम् ॥
सर्वोपकरणां शय्यां यो ददाति विमत्सरः ।
वर्णमुख्याय विप्राय स राजपदवीं लभेत् ॥ ५० ॥
तथैवाग्निं जलं दत्त्वा नदीतीरे पथि प्रगे । दत्त्वा च तैलताम्बूलमुर्व्या अधिपतिर्भवेत् ॥
सत्यभावाद्द्विजं नत्वा धनी चाक्षयतां व्रजेत् । माघे मास्यसिते पक्षे पञ्चदश्यामहर्मुखे
पितॄंस्तिलजलैरेव तर्पयित्वाऽक्षयो दिवि । सुलक्षणां च गां दत्त्वा हेमशृङ्गांमणिप्रभाम्
रौप्यखुरप्रदेशां च तथा कांस्यसुदोहनाम् ।
एतां दत्त्वा द्विजाग्र्याय सार्वभौमो भवेन्नृपः ॥ ५४ ॥
दत्त्वान्नाभरणं राजा मण्डलेशोधनेश्वरः । तिलधेनुं तु योदद्यात्सर्वोपस्करणान्विताम्
सप्तजन्मार्जितात्पापान्मुक्तो नाकेऽक्षयो भवेत् ।
भोज्यान्नं ब्राह्मणे दत्त्वा अक्षयं स्वर्गमश्नुते ॥ ५६ ॥
धान्यंवस्त्रंतथा भृत्यं गृहपीठादिकं च यत् । योददाति द्विजाग्र्याय तं च लक्ष्मीर्नमुञ्चति
यत्किञ्चिद्दीयते दानं स्वल्पं वा यदि वा बहु ।
अक्षयं परलोकेषु युगाद्यासु तथैव च ॥ ५८ ॥
यद्वा देवार्चनं स्तोत्रं धर्माख्यानप्रतिश्रवः । पुनातिसर्वपापेभ्यो दिवि पूज्योभवत्यसौ ॥
तृतीया माघमासस्य सिता मन्वन्तरा स्मृता । तस्यां यद्दीयते दानं सर्वमक्षयमुच्यते ॥
धनं भोग्यं तथा राज्यं नाकं कल्पान्तरस्थितम् ।
तस्माद्दानं सतां पूजा श्रेयानन्तफलप्रदा ॥ ६१ ॥
मन्वन्तरा तु माघे स्यात्सप्तमो या सितेतरा । तिथिःपुण्यतमा प्रोक्तापुराणैरभिरक्षिता
माघमासेसिते पक्षे सप्तमी कोटिभास्करा । तामुपोष्य नरः पुण्यां मुच्यते नात्रसंशयः
सूर्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।

अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥ ६४ ॥

यच्च तत्र कृतं पापं मया सप्तसु जन्मसु । तन्मे रोगं च शोकं च भास्करी हन्तुसप्तमी ॥
जननी सर्वभूतानां सप्तमी सप्तसप्तिके । सप्तम्यामुदिते देवि नमस्ते रविमण्डले ॥६६॥
अर्कपत्रं यवाः पुष्पं सुगन्धबदरीफलम् । तत्पत्रे ताम्रपात्रे वा युक्तमानीय तण्डुलम् ॥

यज्ञसूत्रं ससिन्दूरं दत्वा चार्घं सुशोभनम् ।
सर्वं पापं क्षयं याति सप्तजन्मकृतं च यत् ॥ ६८ ॥

नरकैः पीड्यते तावद्रोगैः पापैश्च दुःखदैः । हविष्यं भोजयेदन्नं शुद्धमातपतण्डुलैः ॥६९॥
वर्जयेच्च शिलाघृष्टं शृङ्गवेरं तु शाककम् । कोरदूषकपत्रं च रम्भाच्छागीघृतं तथा ॥
केशकीटादिकं वर्ज्यमुष्णोदस्नानमेवच । अल्पबीजादिकं सर्वं व्रते सूरस्य वर्जयेत् ॥
अन्यच्च नाचरेत्तत्र धर्मचिन्तां विनाव्रती । सौरव्रतं महापुण्यं पुराणैरभिनन्दितम् ॥७२॥
वर्षकोटिसहस्राणि वर्षकोटिशतानि च । आदित्यस्य समं भोग्यं लभते दिविशाश्वतम्
एवं स्वर्गक्षयादेव राजा भूमौ महाधनी । मर्त्यलोके पुराऽभ्यासात्करोति भास्करव्रतम्

तथा स्वयं सुखं भोग्यं लभते दिवि शाश्वतम् ।
आरोग्यं ससपदं जन्मी भास्करस्य प्रसादतः ॥ ७५ ॥

रविवारे भवेद्या च सप्तमी माघशुक्लके । महाजयेति विख्याता अन्यत्र विजया स्मृता ॥

विजया कोटिलक्षं स्यादनन्तं स्यान्महाजया ।
तत्रैकेन व्रतेनैव मुच्यते जन्मबन्धनात् ॥ ७७ ॥

अश्वरत्नंसुवर्णं च रक्तवस्त्रं च धान्यकम् । ददातिभास्करप्रीत्या स्वर्गमर्त्यपतिःक्रमात्
एषां भेदं प्रवक्ष्यामि शृणु विप्र यथार्थवत् । उत्तमाभरणैर्युक्तं सद्वाहं यो ददाति ह ॥

समुद्रैस्सप्तभिर्जुष्टां भूमिमेत्यरिवर्जिताम् ।
लभेद्भवान्तरे मर्त्यमेकेनैकाधिपो भवेत् ॥ ८० ॥

अश्वहीनं च पत्राङ्गं वृषभैर्वाप्यलङ्कृतम् । हेममाषं द्विमाषं वा दक्षिणाविहिवा बुधैः ॥
रत्नभाण्डं महार्घं च हैमैरेव कृतं न यत् । स्वर्णं वा केवलं दत्त्वा त्रिविष्टपधनेश्वरः ॥

रक्तवस्त्रं च धान्यं च शक्तितो यः प्रयच्छति ।

स्वर्गोर्व्योरीशतामेति न तं लक्ष्मीर्विमुञ्चति ॥ ८३ ॥

अरोगी सुप्रसन्नात्मा दस्युजेता प्रतापवान् । यावत्प्रभासते भानुस्तावत्पूज्यतमोहिसः
माघादौ द्वादशीं मायां सप्तमीं कारयेत्सतु । इहाभीष्टफलं भुक्त्वा सुरैश्चैव प्रपूज्यते ॥
अर्काङ्गसप्तमीव्रतं कृत्वा च विधिवद् बुधः । पापात्पूत इहाभीष्टं सम्प्राप्यमुक्तिमाप्नुयात्

लक्षणं च प्रवक्ष्यामि मासि मासि च यो विधिः ।
व्रतस्यास्य प्रसादाच्च सुराणामर्चितो दिवि ॥ ८७ ॥

शुक्लपक्षे रविदिने प्रवृत्ते चोत्तरायणे । पुंनामधेयनक्षत्रे गृह्णीयात्सप्तमीव्रतम् ॥ ८८ ॥
हस्तो मैत्रं तथा पुष्यः श्रवो मृगपुनर्वसू । पुंनामधेयनक्षत्राण्येतान्याहुर्मनीषिणः ॥

पञ्चम्यामेकभक्तं तु षष्ठ्यां नक्तं प्रकीर्तितम् ।
सप्तम्यामुपवासं च अष्टम्यां पारणं भवेत् ॥ ९० ॥
अर्काग्रं शुचि गोमयं सुमरिचं तोयं फलं चाश्नुते,
मूलं नक्तमुपोषणं च विधिवत्कृत्वैकभक्तं तथा ।
क्षीरं वाप्यशनं घृताक्तमिति च प्रोक्ताः क्रमेणामुना,
कृत्वावासरसप्तमीं दिनकृतः प्राप्नोत्यभीष्टंफलम् ॥ ९१ ॥
अर्काग्रं ग्रामात्पूर्वोत्तरदिग्गतार्कविटपस्य-
शाखाग्रस्थितं विशिष्टं सूक्ष्मपत्रद्वयं सतोयं दन्तैरस्पृष्टं पातव्यम् ॥
शुचि गोमयं भूमावपतितं मध्याङ्गुष्ठाभ्यां पलमात्रं दन्तैरस्पृष्टं सतोयं पातव्यम् ।
सुमरिचमव्रणमपुरातनं स्थूलमवशुष्कमेकं दन्तैरस्पृष्टं सतोयं पातव्यम् ।
तोयं ब्रह्मपित्रङ्गुलीमूलप्रसरं पातव्यम् ।
फलं खर्जूरनारिकेलानामन्यतमं दन्तैरस्पृष्टं पातव्यम् ।
घृताक्तमिति चाहारं मयूरडिम्भपरिमाणम् । घृतमपि तत्परिमाणम् ॥ ९२ ॥
आत्मनो द्विगुणां छायां यदा कुर्वीत भास्करः ।
तदा नक्तं विजानीयान्न नक्तं निशिभोजनम् ॥ ९३ ॥
प्रथमं पूजयेद्देवं फलपुष्पादिमन्त्रकैः । अन्नदानं ततः कुर्याद्विध्युक्तपरिमाणकम् ॥९४॥

ततो ध्यानम् ।

सर्वलक्षणसम्पूर्णं सर्वाभरणभूषितम् । द्विभुजं रक्तवर्णं च रक्तपङ्कजधृक्करम् ॥ ९५ ॥
तेजोबिम्बं बहुजलमध्यस्थं सपरिच्छदम् । पद्मासनगतं देवं रक्तगन्धानुलेपनम् ॥
आदित्यं चिन्तयेद्देवं पूजाकाले विशेषतः ॥ ९६ ॥

मन्त्रश्चायम् ।

भास्कराय विद्महे सहस्ररश्मये धीमहि तन्नः सूर्यः प्रचोदयात् ॥ ९७ ॥
जप्य एष परः प्रोक्तः सप्तम्यां विजयावहः । करवीरैः करञ्जैश्च रक्तकुङ्कुमसन्निभैः ॥
पश्चाच्च पारणा कार्या तथाष्टम्यां विशेषतः । अष्टम्यामेव कर्तव्यं नवम्यां नैव पारणम् ॥
व्रते फलं न चाप्नोति नवम्यां पारणे कृते । पारणं त्वपराह्णे तु कटुतिक्ताम्लवर्जितम्
तण्डुलं शोधयेद्यत्नात्तृणबीजादिकं त्यजेत् ।
मुद्गमाषतिलादीनि घृतं च परिवर्जयेत् ॥ १०१ ॥
ब्राह्मणान्भोजयेद्भक्त्या शक्तः क्षीरादिहव्यकैः ।
यथाशक्त्यन्नपानैश्च व्यञ्जनैश्च निरामिषैः ॥ १०२ ॥
विप्राय दक्षिणां दद्याद्विभज्य चानुरूपतः । इमामनन्तफलदां यः कुर्यात्सप्तमीं नरः ॥
सर्वपापप्रशमनीं धनपुत्रविवर्धनीम् । मासि मासि द्विजश्रेष्ठ व्रतं कृत्वाऽर्कतुष्टये॥१०४॥
यः कुर्यात्पारणं भक्त्या सूर्यलोकं स गच्छति ।
कल्पकोटिं वसेत्स्वर्गे ततो याति परां गतिम् ॥ १०५ ॥
इदमेवपरं गुह्यं भाषितं शम्भुना पुरा । श्रवणात्सततं तस्य व्रतस्य परिपालनात् ॥
श्रावयेद्वापि लोकस्य फलं तुल्यं प्रकीर्तितम् ॥ १०६ ॥
इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे अर्काङ्गसप्तमीव्रतं नामैकोनाशीतितमोऽध्यायः ॥

———

# अशीतितमोऽध्यायः

## सूर्यस्यानेकव्रतवर्णनम् ।

वैशम्पायन उवाच ।

भगवंस्त्वत्प्रसादाच्च श्रुतं मे पावनं व्रतम् ।
अपरं श्रोतुमिच्छामि ब्रध्नस्य च प्रियं च यत् ॥ १ ॥

व्यास उवाच ।

कैलासशिखरे रम्ये सुखासीनं महेश्वरम् । प्रणम्य शिरसा भूमौ स्कन्दो वचनमब्रवीत्
अर्काङ्गाख्यविधिस्त्वत्तो मयैवं विस्तराच्छ्रुतः ।
वारादेर्यत्फलं नाथ श्रोतुमिच्छामि तत्त्वतः ॥ ३ ॥

ईश्वर उवाच ।

रक्तपुष्पैरवेर्वारे त्वर्घ्यं दद्याद्व्रतीनरः । नक्ताहारं हविष्यान्नं कृत्वा स्वर्गान्न हीयते ॥४॥
सप्तम्याश्च सदाचारं सर्वमेवार्कवासरे । कुर्वतः प्रीतिमाप्नोति सगणः परमेश्वरः ॥५॥
सूरस्य सदृशं याति तिथिवारस्य पालनात् । एकेन गाणपत्यस्य यावत्सूरो नभस्तले ॥
सर्वकामप्रदं पुण्यमैश्वर्यं रोगनाशनम् । स्वर्गदं मोक्षदं पुण्यं रवेर्वारे व्रतंहितम् ॥ ७ ॥
रविवारेण सङ्क्रान्त्या सप्तम्या तद्दिने शिवे । व्रतपूजादिकं जप्यं सर्वं चाक्षयतांव्रजेत्
आदित्यवासरे शुभ्रे ग्रहाधिपप्रपूजनम् । प्राणादहतवक्त्रेण निःसार्यं मण्डले न्यसेत् ॥
द्विभुजं रक्तपद्मस्थं सुगलं रक्तवाससं सर्वरक्ताभरणं ध्यात्वा-
हस्ताभ्यां पुष्पं विधृतं सङ्घ्रायैशान्यां क्षिपेत् ॥ १० ॥
आदित्याय विद्महे भास्कराय धीमहि । तन्नो भानुः प्रचोदयात् ॥ ११ ॥
ततो गुरूपदिष्टेन विधिना च विलेपनम् । विलेपनान्ते सद्धूपं धूपान्ते च प्रदीपकम् ॥
प्रदीपान्ते च नैवेद्यं ततो वारिनिवेदयेत् । ततो जप्यंस्तुतिं मुद्रां नमस्कारं तु कारयेत्
अञ्जलिः प्रथमा मुद्रा द्वितीया धेनुका स्मृता । एवं यः पूजयेदर्कं रविसायुज्यमाव्रजेत्

मम ब्रह्मवधाद्घोरं कपालं करलग्नकम्। रवेस्तस्य प्रसादात्तु मुक्तं वाराणसीतटे ॥ १५॥
रवेः परतरं दैवं त्रैलोक्ये तु न विद्यते। यस्य प्रसादतो घोरान्मुक्तोऽहं गुरुकिल्बिषात्

स्कन्द उवाच।

श्रुत्वा त्वत्तोगिरं नाथ विस्मयो मेऽभवत्प्रभो।
त्वदन्योऽस्ति न को देवः कथं ब्रह्मवधस्त्वयि ॥ १७ ॥
त्वं च ज्ञानीश्वरो योगी लोके भोक्ताऽक्षरोऽव्ययः।
देवानां गुरुरेकस्त्वं व्याप्तरूपी महेश्वरः ॥ १८ ॥

सर्वज्ञो वरदो नित्यं सर्वेषां प्राणिनां प्रभुः। दुष्कृतं ते कुतो नाथ तथा क्रोधोविशेषतः

शिव उवाच।

लोकानां च हितार्थाय पृथग्भूता युगे युगे। सर्वं कुर्मो वयं पुत्र ब्रह्मविष्णुमहेश्वराः ॥
नास्माकं बन्धमोक्षौ च नाकार्यं कार्यमेव वा।
तथा लोकस्य रक्षार्थं चरामो विधिपूर्वकम् ॥ २१ ॥
सर्वं च परमं चैव सर्वविघ्नविनाशनम्। सर्वरोगप्रशमनं सर्वार्थप्रतिसाधकम् ॥ २२ ॥
एकोऽसौ बहुधा भूत्वा कालभेदादनिन्दितः।
मासे मासे तु तपति एको द्वादशतां व्रजेत् ॥ २३ ॥
मित्रो मार्गशिरे मासि पौषे विष्णुः सनातनः।
वरुणो माघमासे तु सूर्यो वै फाल्गुने तथा ॥ २४ ॥
चैत्रे मासि तपेद्भानुर्वैशाखे तापनः स्मृतः। ज्येष्ठमासे तपेदिन्द्र आषाढे तपते रविः ॥
गभस्तिः श्रावणे मासि यमोभाद्रपदे तथा। हिरण्यरेताश्वयुजि कार्तिके तु दिवाकरः ॥
इत्येतेद्वादशादित्यामासिमासिप्रकीर्तिताः। उरुरूपामहातेजायुगान्तानलवर्चसः ॥२७॥
य इदं पठते नित्यं तस्य पापं न विद्यते। न रोगो नच दारिद्र्यं नावमानोभवेत्क्वचित्
अक्षयं लभते स्वर्गं सुखं राज्यं यशः क्रमात्।
महामन्त्रं प्रवक्ष्यामि सर्वप्रीतिकरं परम् ॥ २६ ॥
ॐ नमः सहस्रबाहवे आदित्याय नमोनमः। नमस्ते पद्महस्ताय वरुणाय नमोनमः ॥

नमस्तिमिरनाशाय श्रीसूर्याय नमोनमः । नमः सहस्रजिह्वाय भानवे च नमोनमः ॥३१॥

त्वं च ब्रह्मा त्वं च विष्णू रुद्रस्त्वं च नमोनमः ।

त्वमग्निः सर्वभूतेषु वायुस्त्वं च नमोनमः ॥ ३२ ॥

सर्वगः सर्वभूतेषु न हि किंचित्त्वया विना । चराचरे जगत्यस्मिन्सर्वदेहे व्यवस्थितः ॥

इति जप्त्वा लभेत्कामं स्वर्गभोग्यादिकं क्रमात् ।

आदित्यो भास्करः सूर्यो अर्को भानुर्दिवाकरः ॥ ३४ ॥

सुवर्णरेता मित्रश्च पूषा त्वष्टा च ते दश । स्वयम्भूस्तिमिराशश्च द्वादशः परिकीर्तितः

नामान्येतानि सूर्यस्य शुचिर्यस्तु पठेन्नरः । सर्वपापाच्च रोगाच्च मुक्तो याति परांगतिम्

पुनरन्यत्प्रवक्ष्यामि भास्करस्य महात्मनः । रक्ताख्या ये रक्तनिभा स्सिन्दूरारुणविग्रहाः

यानि नामानि मुख्यानि तच्छृणुष्व षडानन ।

तपनस्तापनश्चैव कर्त्ता हर्त्ता ग्रहेश्वरः ॥ ३८ ॥

लोकसाक्षी त्रिलोकेषु व्योमाधिपो दिवाकरः ।

अग्निगर्भो महाविप्रः स्वर्गः सप्ताश्ववाहनः ॥ ३९ ॥

पद्महस्तस्तमोभेदी ऋग्वेदो यजुस्सामगः । कालप्रियं पुण्डरीकं मूलस्थानं चभावितम्

यः स्मरेच्च सदाभक्त्या तस्य रोगभयं कुतः । शृणु कार्तिक यत्नेन सर्वपापहरं शुभम् ॥

न सन्देहो मनाक्कार्य आदित्यस्य महामते । ॐ इन्द्राय नमः ॐ विष्णवेनमः ॥४२॥

एष जप्यश्च होमश्च सन्ध्योपासनमेव च । सर्वशान्तिकरश्चैव सर्वविघ्नविनाशनः ॥

नाशयेत्सर्वरोगांश्च लूताविस्फोटकादिकान् ।

कामलादिकरोगांश्च ये रोगाश्चैव दारुणाः ॥ ४४ ॥

एकाहिकं त्र्याहिकं च ज्वरं चातुर्थिकं तथा । कुष्ठं रोगं क्षयं रोगंकुक्षिरोगंज्वरं तथा

अश्मरीमूत्रकृच्छ्रांश्च नानारोगामयांस्तथा ।

ये वातप्रभवा रोगा ये रोगा गर्भसम्भवाः ॥ ४६ ॥

मर्दयन्तो महारोगा मर्दिता वेदनात्मकाः । विलयं यान्ति ते सर्वे आदित्योच्चारणेन तु

रक्षमां देवदेवेश ग्रहरोगभयेषु च । प्रशमं यान्ति ते सर्वे कीर्तिते तु दिवाकरे ॥ ४८ ॥

मूलमन्त्रं प्रवक्ष्यामि सर्वकामार्थसाधकम्।
भुक्तिमुक्तिप्रदं नित्यं भास्करस्य महात्मनः ॥ ४६ ॥

मन्त्रश्चायम्। ॐ ह्रां ह्रीं सः सूर्याय नमः। अनेन मन्त्रेण सदा सर्वसिद्धिर्भवेद्ध्रुवम् ॥
व्याधयो वै न बाधन्ते न चानिष्टभयं भवेत्। सूर्यावर्तोदकं यस्तु गृहीत्वा तु क्रमेण तु
तस्य प्राशनमात्रेण नरो रोगात्प्रमुच्यते। न दातव्यं न ख्यातव्यं जप्तव्यं च प्रयत्नतः ॥
अभक्तेष्वनपत्येषु पाषण्डलौकिकेषु च। कटुतैलसमायुक्तं नस्ये पाने च दापयेत् ॥

सूर्यावर्तजलं पुत्र सर्वरोगाद्विमुच्यते।
मूलमन्त्रस्तु जप्तव्यः सन्ध्यायां होमकर्मसु ॥ ५४ ॥
जप्यमाने तु नश्यन्ति रोगाः क्रूरग्रहास्तथा।
किमन्यैर्बहुभिः शास्त्रैर्मन्त्रैर्वा बहुविस्तरैः ॥ ५५ ॥

सर्वशान्तिरियं वत्स सर्वार्थप्रतिसाधिका। नास्तिकाय न दातव्या देवब्राह्मणनिन्दके
गुरुभक्ताय दातव्या नान्येभ्योऽपि कदाचन। प्रातरुत्थाय यो नित्यंकीर्तयिष्यतिमानवः
गोघ्नः कृतघ्नकश्चैव मुच्यते सर्वपातकैः। शरीरारोग्यकश्चैव धनवृद्धियशस्करः ॥५८॥

जायते नात्र सन्देहो यस्य तुष्येद्दिवाकरः।
एककालं द्विकालं वा त्रिकालं नित्यमेव च ॥ ५९ ॥
यः पठेद्रविसान्निध्ये सोऽभीष्टं फलमाप्नुयात्।
पुत्रार्थी लभते पुत्रं कन्यार्थी कन्यकां लभेत् ॥ ६० ॥

विद्यार्थी लभते विद्यां धनार्थी लभते धनम्। शृणुयात्संयुतो भक्त्याशुद्धाचारसमन्वितः
सर्वपापविनिर्मुक्तस्सूर्यलोकं व्रजत्यपि। भास्करस्य व्रते यच्च व्रताचारमखेषु च ॥६२॥

पुण्यस्थानेषु तीर्थेषु पठेत्कोटिगुणं भवेत्।
ग्रहे भोज्येषु पूजायां ब्रह्मभोज्ये द्विजाग्रतः ॥ ६३ ॥

य इदं पठते विप्रस्तस्यानन्तफलं भवेत्। तपस्विनां च विप्राणां देवानामग्रतः सुधीः ॥

यः पठेत्पाठयेद्वापि सुरलोके महीयते ॥ ६५ ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे सूर्यशान्तिर्नामाशीतितमोऽध्यायः।

# एकाशीतितमोऽध्यायः

## सूर्यमाहात्म्यप्रसंगाद्भद्रेश्वरनामकमध्यदेशनृपतिकथानकम् ।

व्यास उवाच ।

मध्यदेशे स्वराट् सम्राड् भद्रेश्वर इति श्रुतः । तपोभिर्बहुभिः पूतो व्रतैर्नानाविधैरपि ॥
देवांस्तु पूजयेन्नित्यं सुभावेन सदा खलु ।
तस्य सव्येऽभवत्कुष्ठं करे श्वेतमजायत ॥ २ ॥
ततो भिषक्प्रयोगाच्च लक्षणं दृश्यते पुरा । आहूय द्विजमुख्यांश्च मन्त्रिणः सोऽब्रवीद्वचः

राजोवाच ।

किल्बिषं मे करे विप्रा दुःसहं लोकगर्हितम् ।
तस्मात्पुण्यं महाक्षेत्रं यत्र त्यक्ष्यामि विग्रहम् ॥ ४ ॥
आज्ञापयत धर्मज्ञाः परलोकहिताय वै । वंशहीनस्य मे वीराः प्रेत्यामुत्र हितं च यत् ॥
तद् ब्रूत सुप्रसन्ना मउद्दिष्टं यत्करोम्यहम् ॥ ६ ॥

द्विजा ऊचुः ।

परित्यक्ते त्वया राष्ट्रे धर्मशीलेन धीमता । नष्टं जगदिदं राजंस्तस्मान्नो वक्तुमर्हसि ॥
अयमस्य प्रतीकारो ह्यस्माभिरवगम्यते । सूरं मन्त्रैर्महादेवं यत्नादाराधय प्रभो ॥ ८ ॥

राजोवाच ।

केनोपायेन विप्रेन्द्रास्तोषयिष्यामि भास्करम् । अमेध्येनाथ कुष्ठेन लोकानां गर्हितेन च
अदृश्यः सर्वभूतानां गर्हितोऽस्मि द्विजातयः ।
किं करिष्यामि राज्यं च किंस्यादाराधनेन तु ॥ १० ॥

द्विजा ऊचुः ।

अत्र स्थित्वा स्वराज्ये तु समुपास्य विरोचनम् ।
प्रमुच्य किल्बिषाद्घोरात्स्वर्गमोक्षं च लप्स्यसे ॥ ११ ॥

व्यास उवाच ।

एतच्छ्रुत्वा तु राजेन्द्रः प्रणिपत्यद्विजोत्तमान् । अकार्षीत्तस्य सूर्यस्य परमाराधनंचयत्
नित्यपूजां तथा मन्त्रैरुपहारैर्विलेपनैः । फलैर्नानाविधैर्गन्धैरक्षतातपतण्डुलैः ॥ १३ ॥
जपापुष्पार्कपर्णैश्च करवीरकरञ्जकैः । रक्तकुङ्कुमसिन्दूरैस्तथा वासन्तिकादिभिः ॥
सुगन्धकदलीपत्रैस्तत्फलैः सुमनोहरैः । अर्घ्यमौदुम्बरे कृत्वा सदा सूर्याय पार्थिवः ॥
आदित्यसंमुखो दत्ते सदामन्त्रिपुरोहितैः । महिषीभिस्तथाचार्घो भोगिनीभिःसमन्ततः
सर्वैरन्तःपुरस्थैश्च सपत्नीकैश्च रक्षिभिः । चेटवर्गैस्तथाऽन्यैश्च दीयतेऽर्घो दिने दिने ॥
अर्कशान्तिभिरत्युग्रैःस्तोत्रमन्त्रादिभिःपरैः । मूलमन्त्रान्य मन्त्रैश्च यजन्तिस्मदिवाकरम्
तथार्काङ्गव्रतं चान्यत्कृत तैस्सुसमाहितैः । क्रमात्समां समासाद्य रोगस्यान्तंगतो नृपः
बाधिते चामये घोरे स राजा निखिलं जगत् । नियम्य कारयामास कल्येचयाजनव्रतम्
एवमेव जपापुष्पं सुगन्धं कदलीफलम् । बाणैर्जायाभिरालभ्यमर्कपर्णान्यपुष्पकम् ॥
एवमेव महापुण्यं कृत्वा सर्वजनप्रियम् । हविष्यान्नो निराहारो जनो यजति भास्करम्
एवमेव त्रिभिर्वर्गैरर्चितस्तैर्विभाकरः । सन्तुष्टो भूपमागम्य कृपया च ब्रवीद्वचः ॥ २३ ॥

सूर्य उवाच ।

वरं वरय चाभीष्टं यत्ते मनसि वर्तते । सर्वेषां बोहितार्थाय सानुगः पुरवासिनाम् ॥

राजोवाच ।

यदीच्छसि वरं दातुं सर्वलोचनमत्प्रियम् । सर्वेषां नः परं स्वर्गंत्वत्सकाशे भवत्विति

सूर्य उवाच ।

अमात्यास्ते द्विजा विप्राः सदारास्सपरिच्छदाः ।
नवीनयौवनाः शुद्धा यावदाभूतसम्प्लवम् ॥ २६ ॥

तिष्ठन्तु मत्पुरे रम्ये सर्वभोगैर्निरामयाः । सुरद्रुमैः सुसम्पूर्णैः प्रासादैर्द्रुमकल्पकैः ॥
प्रमदाभिर्महाभाग नृत्यगीतादिभिः परैः । पञ्चकल्पान्तरे राजा मन्वादौ त्वं भविष्यसि
अमी ते मनुजा भूप पुरस्थाश्च पुरोधसः । तथा जनपदस्थाश्च विद्वांसोधनिनो नराः ॥
तत्र मत्तो वरं लब्ध्वा सुखं स्वर्गमवाप्स्यथ ॥ ३० ॥

व्यास उवाच।

एवमुक्त्वा जगच्चक्षुस्तत्रैवान्तरधीयत। ततोभद्रेश्वरो राजा स पुरो दिवि मोदते॥
तत्र कीटादयो ये च तेऽपीताः ससुतादयः।
स्वर्गे देवद्रुमे भोग्यं कुर्वन्ति महदद्भुतम्॥ ३२॥
एवमेव नृपा विप्रा मुनयश्शंसितव्रताः। ये च क्षत्रादयो वर्णास्सूरस्वर्गं ययुर्द्रुतम्॥
कैश्चिदभ्यर्थितंवृत्तं पुत्रदारास्तथापरैः। सुखं स्वर्गं तथारोग्यं भास्करस्य प्रसादतः॥
पुण्यकूटमिदं भद्रं यः पठेन्मानवः शुचिः। सर्वपापक्षयस्तस्य रुद्रवत्पूजितोभुवि॥
सर्वसाक्षी भवेत्स्वर्गे वरदो भास्करप्रियः।
शृणोति·संयतो मर्त्यः सोऽभीष्टं फलमाप्नुयात्॥ ३६॥
पारगः सर्वपापानां भास्करस्यैव संसदि। वावदूको भवेन्नित्यं श्रवणात्पुण्यवान्धनी॥
इदं गुह्यातिगुह्यं च भास्करेण प्रचारितम्। इदं यमाय कथितं क्षितौव्यासेन कीर्तितम्
इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे भद्रेश्वराख्यानं नामैकाशीतितमोऽध्यायः।

---

## द्व्यशीतितमोऽध्यायः

### सूर्यपूजाविधिवर्णनम्।

वैशम्पायन उवाच।

श्रुतो ग्रहेश्शरस्यैष प्रभावस्त्वत्प्रसादतः। रव्यादीनां ग्रहाणां च साधनं नो वद द्विज
के तेरव्यादयस्तेषां कथं तोषः कथं प्रियम्।
काले देशे तु सम्प्राप्ते दर्शनं तच्छिवाशिवम्॥ २॥

व्यास उवाच।

ग्रहादयो येलोके तु भुञ्जन्ति पुण्यपातकम्। शिवाशिवं च कुर्वन्ति विश्वकर्मक्षयायवै
सूरः कालोऽन्तको ज्ञेयो जनेषु च ग्रहेषु च।

तिग्मसौम्याच्च योगात्स निग्रहानुग्रहे प्रभुः ॥ ४ ॥

ग्रहभावाच्च तस्यैव सन्तोषं निगदाम्यहम् । उदुम्बरपलाशाभ्यां पल्लवाभ्यां जुहोति यः

आकृष्णेनेति मन्त्रेण मूलकेनाथ शान्तये । जुहुयादाज्ययुक्ताभ्यामभीष्टफलहेतवे ॥ ६ ॥

शान्तये सर्वरोगाणां वधबन्धविमोचने ।

एकैकेन तु मन्त्रेण होतव्यं च शतं शतम् ॥ ७ ॥

शितं च च्छागलं दद्यात्सूरायादित्यवासरे । भोजयेद्ब्राह्मणाञ्छक्त्या हव्यकव्यैर्मनोहरैः

सप्तम्यां च सिते पक्षे पञ्चदश्यां तथैव च ।

रोगाद्विमुच्यते रोगी न रोगात्कृच्छ्रमेष्यति ॥ ६ ॥

परमंचामरं सत्यमाब्रह्मस्तम्बमात्रके । ब्रह्माण्डे चाणुमात्रे च सूरः सम्भावयिष्यते ॥

संहारान्तं क्रमात्सर्वमुत्पत्तिस्थितिकारणात् । प्राणसर्गे जनानां सपाताविश्वचरस्तनौ

मृत्युकाले तनोर्मध्यात्प्राणेन सह गच्छति ।

शीर्षान्तस्थः सदा चन्द्रो द्विरष्टकलया युतः ॥ १२ ॥

अहर्निशं सुधावृष्टिं देहे वर्षत्यधोमुखः । जन्तवस्तेन जीवन्ति महासत्त्वानुमात्रकाः ॥

उर्व्यां सस्यानि पुष्णाति तथा स्थावरजङ्गमान् ।

एताभ्यां पुष्पवद्भ्यां च धारितं जनितंजगत् ॥ १४ ॥

तयोराराधनात्पुष्टिः सदा पुण्यापरार्द्धिका । साधयेत्सर्वकार्याणिसाधकःसर्वदाशुचिः

न पूजयति यो मोहात्सुधांशुं मानवाधमः ।

आयुस्तस्य क्षयंयाति नरकं चाधिगच्छति ॥ १६ ॥

निष्कलङ्ककलाधार गङ्गाधर शिरोमणे । द्वितीयायां जगन्नाथ तुभ्यं चन्द्र नमोऽस्तुते

तिथिमन्यामनुप्राप्य नमस्कारं विधोरपि ।

प्रकरोति नरो यस्तु सोऽभीष्टं फलमाप्नुयात् ॥ १८ ॥

अत्रिनेत्रोद्भवश्रीमन्क्षीरोदमथनोद्भव । महेशमुकुटावास तुभ्यं चन्द्र नमोऽस्तुते ॥१६॥

दिव्यरूपनमस्तुभ्यं सुधाकरजगत्पते । शुक्लपक्षे तथाकृष्णे त्रियामायां विदुर्बुधाः ॥

ॐ ह्रां ह्रीं सोमाय नमः इति जप्यमन्त्रः । प्रभाते जपनीयः ।

एवं यः पूजयेत्सोमं श्रावयेच्च शृणोति वा ।
स पीयूषसमो लोके भवेज्जन्मनि जन्मनि ॥ २२ ॥
एवं सहस्रनाम्ना यः स्तौति पूजयते भुवि । सोऽक्षयं लभते स्वर्गं पुनरावृत्तिदुर्लभम् ॥

इति सोमपूजा ।

पित्तले भाजने कांस्ये दधिपूर्णे घृते शिवे ।
न्यूनोऽधिकस्तु विभवात्कृत्वा कर्मविमत्सरः ॥ २३ ॥
स्वर्णे वा राजते वारे सौम्ये कृष्णभवेबुधम् । संस्थाप्यसर्वसंस्थाने दद्याद्बहुसुतायच
परं भवति सौभाग्यं पीयूषादधिकभृशम् । स्त्रीणां च पुरुषाणां च न दौर्भाग्यं कदाचन
रूपसौभाग्यकामोऽहं दधिपूर्णं च भाजनम् ।
ददामि कांस्यपात्रस्थं देहि सौभाग्यरूपकम् ॥ २६ ॥
द्विजाय वाक्यपूर्वेण दद्याद्विमत्सरो नरः । शक्तितो दक्षिणा देया तथा वस्त्रादिकंनवम्
भोज्यान्नं सर्वसंपूर्णं ताम्बूलं सुमनोहरम् । पुष्पमालादिकं दद्याद्रूपसौभाग्यहेतवे ॥
एवं यः कुरुते दानं सोमोद्दिष्टं द्विजातये ।
स्वर्लोके नरलोके वा रूपसौभाग्यभुग्भवेत् ॥ २९ ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे सोमार्चनं नाम द्व्यशीतितमोऽध्यायः ।

---

## त्र्यशीतितमोऽध्यायः

### शम्भोः सकाशात् भौमग्रहस्योत्पत्तिवर्णनम् ।

वैशम्पायन उवाच ।

उद्भवं लोहिताङ्गस्य सन्तोषं तु जनेषु च । प्रभावं वैभवं तेजः श्रोतुमिच्छामि तत्त्वतः

व्यास उवाच ।

हरांशसम्भवो देवः कुजातः पृथिवीसुतः । सत्त्वस्थस्सत्त्वसंपूर्णश्शूरः शक्तिधरो भुवि

तीक्ष्णः क्रूरग्रहो देवो लोहिताङ्गः प्रतापवान् । कुमारो रूपसंपन्नो विद्युत्पातमयःप्रभुः

अनेन भर्जिता दैत्याः क्रव्यादा ये सुरद्विषः ।

दशायोगाच्च मनुजा उद्भिज्जाः पशुपक्षिणः ॥ ४ ॥

वैशम्पायन उवाच ।

शम्भोरेष कथं जातः कथं जातो महीसुतः । ग्रहोदेवः कथं क्रूर एतदिच्छामि वेदितुम्

कथमस्य भवेत्तुष्टिः सर्वलोकेषु सर्वदा । गुरो मय्याप्तभावे तु वद निस्संशयं मुखात्

व्यास उवाच ।

हिरण्याक्षकुले धीमानसुराणां च पार्थिवः ।

अन्धकेतिसमाख्यातो दैत्यः सर्वसुरान्तकृत् ॥ ७ ॥

जातोविष्णुवरादेव जातो ,विष्णुपराक्रमः । तेनैवनिर्जिता देवास्सेन्द्राः क्रतुभुजःक्रमात्

ततो देवा विधिं गत्वा वचनं चेदमब्रुवन् । अन्धकेनैव चास्माकं हृतं राज्यं सुखं मखः

तस्मात्तस्य वधोपाय उच्यतां तद्विधीयताम् ।

अथ धाताऽब्रवीद्वाक्यं देवानस्य च नैधनम् ॥ १० ॥

नास्ति विष्णुवरादेव पीयूषस्य च भक्षणात् ।

किन्तु तस्यासुरत्वस्य यथा परिभवो ध्रुवम् ॥ ११ ॥

कुर्वंलोकहितार्थायश्रद्धांकामसमन्विताम् । विचिकित्सा तु तत्रैव सर्वास्त्रीरतिगच्छति

त्यक्त्वैकां पार्वतीं दुर्गां न तस्य मानसं स्थिरम् ।

ततः क्रुद्धो जगत्स्वामी तं च वैरूप्यतां नयेत् ॥ १३ ॥

ततोऽसुरत्वंसन्त्यज्यगणस्तस्यभविष्यति । एवमुक्त्वाप्रजाध्यक्षःश्रद्धां कामसमन्विताम्

विचिकित्सांस्वमायां च प्रेषयामास तं प्रति । ततोविचेष्टितः कामाद्योषान्वेषणतत्परः

स्वदारान्परयोषांच नापश्यद्विचिकित्सया । ततोमायाप्रयुक्तोऽसौ त्रैलोक्यं विचचारह

दृष्टं च हिमवत्पृष्ठे स्त्रीरत्नं चातिशोभनम् ।

दृष्ट्वा च पार्वतीं दैत्यः कामस्य वशगोऽभवत् ॥ १७ ॥

ज्ञानलोपात्ततो दुर्गां ग्रहीतुं तां सचेच्छति । उमा च कोटवीरूपं कृत्वा देहस्यचात्मनः

ईश्वरस्यान्तिकस्था च ग्रहीतुं तां ससार सः ।
ततः कामविचेताश्च उन्मत्ती कृतचेतनः ॥ १६ ॥
न जहाति शिवां धात्रीं पार्वतींदैत्यपुङ्गवः । ततोध्यानात्समागम्य मिलितःपार्वतीधवः
दृष्ट्वा तं च स दैत्येन्द्रः प्रगतस्तु स्वमालयम् ।
सज्जीकृत्य स्वयोधांश्च शम्भुं जेतुं समुत्सुकः ॥ २१ ॥
गौरीमेव समानेतुं काममोहादचेतनः । एतच्छ्रुत्वा तु त्रिदशा गत्वा तं नन्दिनेरिताः ॥
अकुर्वंश्च महद्युद्धं घोरं लोकभयङ्करम् । दैत्यान्रणे मृतांस्तत्र दैत्याचार्यो ह्यजीवयत् ॥
एतद्वृत्तं तु कैलासे सर्वे चैवन्यवेदयन् । क्रोधाच्छम्भुस्तदा वाक्यं नन्दिनंनिजगादह

शम्भुरुवाच ।

गच्छ दैत्यालयं वीर द्रुतमेव ममाज्ञया । पश्यतां सर्वदैत्यानां दैत्येन्द्रस्य च संसदि ॥
गृहीत्वा चिकुरेऽत्यर्थं भार्गवं तं दुरात्मकम् ।
लब्ध्वा चास्मत्सकाशं वै विह्वलं चानयत्क्षणात् ॥ २६ ॥

व्यास उवाच ।

ततो नन्दीश्वरः श्रीमान्पार्वतीपतिनेरितः ।
काव्यं तं कुन्तले धृत्वा दैत्यानां पुरतो बलात् ॥ २७ ॥
आनयन्तं च तं दैत्या जघ्नुः प्रहरणैःशरैः । न शेकुस्ते रुजां कर्तुं नन्दिनोबलशालिनः
देवानामग्रतो नन्दी गृहीत्वा तं च कुन्तले ।
हरस्य पुरतो हृष्टः सह तेन समाययौ ॥ २६ ॥
गृहीत्वा भार्गवं शम्भुरसुराणां गुरुं रुषा । अगिलद्रौद्रमूर्तोऽसौकालान्तकसमःप्रभुः ॥
ततो दैत्यपतिः क्रुद्धः सर्वसैन्यवृतो बली । दुद्राव शङ्करं तत्र घोरैः प्रहरणादिभिः ॥
त्रिदशाश्च तथा क्रुद्धास्ततो विद्याधरादयः । प्रययुः समरं तत्र दैत्यानां च भृशं रुषा ॥
एतस्मिन्नन्तरे घोरं युद्धं भीष्मं समुत्थितम् । देवदानवयोरेवं सर्वलोकभयङ्करम् ॥
ततः प्रत्ययितास्तत्रश्च देवा निघ्नन्ति दानवान् ।
दनुजा निर्जरांस्तत्र विनिघ्नन्ति महाहवे ॥ ३४ ॥

शातकुम्भमयाङ्गैस्ते शरैर्वज्रसमानकैः। बिभिदू रत्नपुङ्खैश्च परस्परजयैषिणः ॥ ३५ ॥
दीपयन्ति भृशं कान्तैस्तद्गात्राणि नभांसि च। वीर्यवन्तो महादैत्यानमोघैरस्त्रसञ्चयैः
हत्वा च पातयामासुः काश्यपाः सुरसत्तमाः। जगद्भयातं महासैन्यं बलायुधसुसंवृतम्

नीतं क्षयं सुरैः सर्वैः शस्त्रैः प्रत्ययितैः क्षणात्।
स्वयं च युध्यमानेन महादेवेन यत्नतः॥ ३८ ॥

शूलोद्धृतोऽपि सुचिरमविनष्टोऽथनप्रधीः। अन्धकोगणतां नीत्वा कृतोभृङ्गीरिटिर्द्विज
ततोदेवान्समाभाष्य शुक्रमुद्गीर्णवाञ्छिवः। भूमौनिपतितो गर्भस्ततो भौम इतिस्मृतः
शुक्रशिशवंसमाभाष्य गतो दैत्यान्मुदान्वितः। एवंभौमस्समुत्पन्नो हरांशो भूसमुद्भवः

तस्य पूजा चतुर्थ्यां तु भौमवारे च सुव्रतैः।
दशाद्यरिष्टे च तथा गोचरेऽनिष्टराशिगे ॥ ४२ ॥

त्रिकोणे मण्डले चैव रक्तपुष्पानुलेपनैः। एवं वै पूजितो भौमः प्रयच्छति मतिं धनम्
पुत्रान्सुखंयशश्चैव किं भूयःश्रोतुमिच्छसि। एतद्वःकथितंशिष्या धर्माख्यानंशुभावहम्

यच्छ्रुत्वा न पुनर्भूयो जायते म्रियतेऽपि वा।
द्विजातीनां पुण्यदं च संसेव्यं च शुभेप्सुभिः ॥ ४५ ॥
यथासुखं च गच्छध्वं कृतकृत्या ममाज्ञया ॥ ४६ ॥

ब्रह्मोवाच।

एवंविश्राव्य भगवान्व्यासः सत्यवतीसुतः। निर्णीयधर्मं विविधं शम्याप्रासमगात्सुत
त्वमपिश्रद्धया वत्स ज्ञात्वा तत्त्वंयथासुखम्। विहरस्वयथाकालं गायमानो हरिं मुदा

लोकान्धर्मं चोपदिशन्प्रीणयञ्जगतां गुरुम् ॥ ४८ ॥

पुलस्त्य उवाच।

इत्युक्तः प्रययौ भूप नारदो गन्धमादनम्। नारायणं मुनिवरं द्रष्टुं बदरिकाश्रमे ॥४९॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे भौमोत्पत्तिपूजनं नाम ऽशीतितमोऽध्यायः।

———

# चतुरशीतितमोऽध्यायः

## चण्डिकानुग्रहादवशिष्टदैत्यानां रसातलम्प्रतिगमनम् ।

भीष्म उवाच ।

चण्डिकानुग्रहाद्दैत्या गताश्शिष्टा रसातलम् । तद्वदस्व महाप्राज्ञ चण्डिकापूजने फलम्
यथा सम्पूज्यते देवी तुष्टा यच्छति यत्फलम् । श्रोतुं कौतूहलं मेऽद्य तद्वदस्वसविस्तरम्

पुलस्त्य उवाच ।

शृणुष्व नृपशार्दूल चण्डिकापूजने फलम् ।
यत्कृत्वा स्वर्गभुङ्मर्त्यः पश्चान्मोक्षं लभेद् ध्रुवम् ॥ ३ ॥
यत्पूजने फलं देव्या न तत्क्रतुशतैरपि । लभ्यते नितरां तात तीर्थदानव्रतादिभिः ॥४॥
चण्डिकां पूजयेद्भक्त्या यो नरः प्रत्यहं नृप । न क्षमस्तत्फलं वक्तुं साक्षाद्देवः पितामहः
मातुर्देव्याः प्रसादेन सुलभं सर्वमेवहि । अश्वमेधसहस्राणि वाजपेयशतानि च ॥ ६ ॥
चण्डिकाभ्यर्चनस्यैतेलक्षांशेनापि नो समाः । स दाता स मुनिर्यष्टास तपस्वीसतीर्थगः
यः सदा पूजयेद्दुर्गां नानापुष्पानुलेपनैः । धूपैर्दीपैस्तथाभोज्यैः प्रणमेद्वापिभाविनीम्
स योगी स मुनिः श्रीमांस्तस्य मुक्तिः करे स्थिता ।
वर्षमेकं तु यो दुर्गां पूजयेद्विजितेन्द्रियः ॥ ९ ॥
एकाहारो महाबाहो सोऽग्निष्टोमफलं लभेत् । पौर्णमास्यांनवम्यां च क्षीरेणैवनराधिप
स्नापयित्वा शुभां दुर्गां वाजपेयफलं लभेत् ।
शुक्लपक्षे नवम्यां तु अष्टम्यां परमेश्वरीम् ॥ ११ ॥
त्रिकालं पूजयेद्यस्तु चतुर्दश्यां नराधिप । स गच्छति परं स्थानं यत्र देवी व्यवस्थिता
क्रीडयित्वां चिरं कालं राजा भवति भूतले ।
नवम्यां सोपवासस्तु यः पूजयति चण्डिकाम् ॥ १३ ॥
दशानामश्वमेधानां फलं प्राप्नोति मानवः ।

जितेन्द्रियो ब्रह्मचारी शुचिर्भूत्वा तु यो नरः ॥ १४ ॥
चण्डिकां पूजयेद्भक्त्या स यातिपरमां गतिम् ।
स्नानोपवासनियमैः पूजाजागरमार्जनैः ॥ १५ ॥
पर्वकालेषु सर्वेषु चण्डिकां यः प्रपूजयेत् । विमानं वरमारुह्य ध्वजमालाकुलंनृप ॥
ब्रह्मलोके नरो गत्वा मोदते शाश्वतीः समाः । तस्मात्सर्वप्रयत्नेन यथाविभवविस्तरैः
पूजयेत्सततं दुर्गां महापुण्यफलेच्छया । अयने विषुवे चैव षडशीतिमुखे नृप ॥ १८ ॥
मासैश्चतुर्भिर्यत्पुण्यं विधिना पूज्य चण्डिकाम् ।
तत्फलं लभते वीर नवम्यां कार्तिकस्य तु ॥ १९ ॥
मासि चाश्वयुजे वीर शुक्लेपक्षे त्रिशूलिनीम् । नवम्यां पूजयेद्यस्तु तस्य पुण्यफलंशृणु
अश्वमेधसहस्रस्य राजसूयशतस्य च । यत्फलं तल्लभेद्वीर दिविदेवगणैर्वृतः ॥ २१ ॥
मासि मासि नरो भक्त्या पूजयेद्यस्तु चण्डिकाम् ।
लभेत्षाण्मासिकं पुण्यं नवम्यां तु न संशयः ॥ २२ ॥
मेरुपर्वततुल्योऽपि राशिः पापस्य कर्मणः । चण्डिकां वैद्यमासाद्य क्षीयते दुष्टरोगवत्
दुर्गार्चने रतो नित्यं महापातकसम्भवैः । दोषैर्न लिप्यते वीर पद्मपत्रमिवाम्भसा ॥
छित्त्वा भित्त्वा च भूतानि हत्वा सर्वमिदं जगत् ।
प्रणम्य शिरसा देवीं न पापैर्भुवि लिप्यते ॥ २५ ॥
सर्वावस्थां गतो वापि युक्तो वा सर्वपातकैः ।
दुर्गां दृष्ट्वा नरः सोऽपि प्रयाति परमं पदम् ॥ २६ ॥
स्वपंस्तिष्ठन्व्रजन्मार्गे प्रलपन्भोजने रतः । स्मरते सततं दुर्गां स च मुच्येत बन्धनात्
तद्देशे न च दुर्भिक्षं न च दुःखं प्रवर्तते । न कश्चिन्म्रियतेराजन्पूज्यते यत्र चण्डिका ॥
यो दुर्गां पूजयेन्नित्यं श्वपचो वा जितेन्द्रियः ।
भावेन च समायुक्तः सोऽपियाति परां गतिम् ॥ २९ ॥
पूजयित्वा तु तां भक्त्या श्रद्धया सर्वमङ्गलाम् ।
प्रयाति परमं स्थानं यत्र सा सर्वमङ्गला ॥ ३० ॥

घृताभिषेकं यः कुर्यादहोरात्रं नराधिपः । सूक्ष्मधारेण ताम्रेण भगवत्या विचक्षणः।
मासि चाश्वयुजे वीर सर्वपापैः प्रमुच्यते ।
कार्तिके पौर्णमास्यां यः सोमवारेऽर्चयेदुमाम् ॥ ३२ ॥
सोऽग्निष्टोमफलं विन्देत्सूर्यलोकं च गच्छति ।
आषाढे पौर्णमास्यां तु योऽर्चयेदम्बिकां नरः ॥ ३३ ॥
सोपवासो महाभाग स याति परमां गतिम् ।
पौर्णमास्यां तु यो माघे पूजयेद्विधिवच्छिवाम् ॥ ३४ ॥
सोऽश्वमेधमवाप्नोति विष्णुलोके महीयते । अयने दक्षिणे यस्तु पूजयेदम्बिकां नृप।
सक्तुगन्धोदकैः पुण्यैर्गन्धर्वसद्ने वसेत् । पञ्चगव्यं ततः क्षिप्त्वा पञ्चचूडाचले वसेत्।
आपःक्षीरं कुशाग्राणि तण्डुला हविरक्षताः । सहा सिद्धार्थका दूर्वाः कुङ्कुमं रोचनामधु
अर्घोऽयं कुरुशार्दूल द्वादशाङ्ग उदाहृतः । अनेन पूजयेद्यस्तु स याति परमंपदम् ॥ ३८।
दारवेणार्घ्यपात्रेण दत्त्वार्घ्यंविधिवन्नृप । देव्यैतदा महाराज अग्निष्टोमफलं लभेत्।
अब्दमेकशतं दिव्यं शक्रलोके महीयते ।
गन्धानुलेपनं कृत्वा ज्योतिष्टोमफलं लभेत् ॥ ४० ॥
चन्दनेनावलिप्यार्यामग्निष्टोमफलं लभेत् । विलिप्य कृष्णागरुणा वाजपेयफलं लभेत्।
कुङ्कुमेन विलिप्यार्यां गोसहस्रफलं लभेत् । चन्दनागरुकस्तूरैः सूक्ष्मपत्रैः सकुङ्कुमैः।
दुर्गामालिप्य विधिवत्कल्पकोटिं वसेद्दिवि । अग्निहोत्रपरे विप्रे वेदवेदाङ्गपारगे ॥४३॥
सुवर्णानां सुवर्णानां शते दत्ते तु यत्फलम् ।
तत्फलं लभते राजन्पूजयित्वा तु चाम्बिकाम् ॥ ४४ ॥
मालया विल्वपत्राणां नवम्यां गुग्गुलेन च । मालाद्वयेन सम्पूज्य दुर्गां देवीं नराधिपः
बिल्ववृक्षस्य पत्रैर्वा राजसूयफलं लभेत् ।
करवीरस्य च स्रग्भिः पूजयेद्यस्तु चण्डिकाम् ॥ ४६ ॥
वाजपेयस्य यज्ञस्य फलं प्राप्नोति मानवः ।
द्रोणपुष्पस्य च स्रग्भिः पूजयेद्यस्तु चण्डिकाम् ॥ ४७ ॥

राजसूयफलं प्राप्य स्वर्गलोके महीयते ।
पूजयित्वा तु राजेन्द्र श्रद्धया विधिपूर्वकम् ॥ ४८ ॥
वन्यपुष्पस्य मालाभिः पितृलोके महीयते ।
शमीपुष्पस्य च स्रग्भिरार्यां सम्पूज्य भक्तितः ॥ ४९ ॥
गोसहस्रफलं लब्ध्वा विष्णुलोके महीयते । सर्वेषामेव पुष्पाणां प्रवरंनीलमुत्पलम् ॥
नीलोत्पलसहस्रेण यस्तु मालां प्रयच्छति ।
दुर्गायै विधिवद्वीर तस्य पुण्यफलं शृणु ॥ ५१ ॥
वर्षकोटिसहस्राणि वर्षकोटिशतानि च । दिव्यमूर्तिधरो भूत्वा रुद्रलोके महीयते ॥
सर्वासां पुष्पजातीनां यत्फलं परिकीर्तितम् ।
तस्माच्छतगुणं प्राप्य दुर्गालोके महीयते ॥ ५३ ॥
नीलोत्पलसहस्रैस्तु पूजयेद्यस्तु चण्डिकाम् । वाजपेयफलं प्राप्य रुद्रलोके महीयते ॥
अलाभे पुष्पजातीनां पत्राण्यपिनिवेदयेत् । पत्राणामप्यलाभे तु ओषधीस्तु निवेदयेत्॥
ओषधीनामभावे तु भक्त्या भगवती जिता ।
प्रत्येकमुक्तपुष्पेषु कुशेष्वपि फलं नृप ॥ ५६ ॥
आङ्गिरसेषु तेष्वेव द्विगुणं काञ्चनस्य तु । मल्लिकामुत्पलं पत्रं शमीपुन्नागचम्पकम् ॥
कर्णिकारमशोकं च द्रोणपुष्पं विशेषतः । चन्दनं च जपापुष्पं नागकेसरमेवच ॥ ५८॥
यः प्रयच्छति पुण्यात्मा पुष्पाण्येतानि भावतः ।
चण्डिकायै नरश्रेष्ठ स च प्रोक्तफलं लभेत् ॥ ५९ ॥
सम्प्राप्य कालाद्राजत्वं चण्डिकानुचरो भवेत् ।
अथ पुष्पविशेषाणां फलं वक्ष्येऽम्बिकार्चने ॥ ६० ॥
ऋतुकालोद्भवैः पुष्पैर्मल्लिकाजातिकुङ्कुमैः । सितरक्तैस्तथापुष्पैर्नीलपुष्पैस्तु पाण्डुरैः ॥
किंशुकैः करवीरैश्च विकङ्कतसुचम्पकैः । बकुलैश्चैव मन्दारैः कुन्दपुष्पैः कुरण्टकैः ॥
कर्णिकारार्कपुष्पैश्च निम्बजैश्चापराजितैः । धत्तूरकातिमुक्तैश्च ब्रह्मकागस्तिसम्भवैः ॥
दमनैः सिन्दुवारैश्च सुरभीमार्कवैस्तथा । लताभिर्ब्रह्मवृक्षस्य दूर्वाङ्कुरैश्च कोमलैः ॥६४॥

मञ्जरीभिः कुशानां च बिल्वपत्रैः सुशोभनैः। भक्त्या युक्तस्तथानुक्तैर्जलजैःस्थलसम्भवैः
पत्रैः पुष्पैर्यथालाभं सर्वौषधिमयैः शुभैः। वन्यानां सर्वपत्रैश्च पुष्पैश्चैव प्रपूजयेत्॥
पद्माकृतिं च यः कुर्यान्मण्डलं चण्डिकागृहे।
स ब्रह्मणः पुरे गत्वा मोदते ब्रह्मणा सह ॥ ६७ ॥
शङ्खवर्णं तु यः कुर्यान्मण्डलं विधिवन्नृप। स दिव्यं यानमारुह्य चन्द्रलोकमवाप्नुयात्
नानावर्णेन चूर्णेन कृत्वा मण्डलमुत्तमम्।
गत्वा माहेश्वरीलोकं मोदते शाश्वतीः समाः ॥ ६९ ॥
वज्राकृतिं वज्रचूर्णैर्यः कुर्यान्मण्डलं नृप। ऐरावतसमारूढ इन्द्राणीलोकमाप्नुयात्॥
यः करोति नरो भक्त्या दुर्गायाः पुरतो महत्।
श्वेतकृष्णैः सितैर्वर्णैः श्रीवत्साङ्कितमुत्तमम् ॥ ७१ ॥
मण्डलं स नरो वीर विमानवरमाश्रितः। सेव्यमानोऽप्सरोव्रातैर्व्रजेल्लक्ष्मीलोकमुत्तमम्
यः करोति नरो भक्त्या मण्डलं ह्यम्बिकागृहे।
रमते किन्नरैः सार्धं यावदाभूतसम्प्लवम् ॥ ७३ ॥
घृतपिष्टप्रदीपाद्यौ घृतमिश्रितपल्लवैः। ओषधीभिश्च मेध्याभिः सर्वबीजैर्यवादिभिः॥
नवम्यां सर्वकाले तु यात्राकाले विशेषतः। यः कुर्याच्छ्रद्धया वीर दिव्यं नीराजनं नरः
शङ्खभेर्यादिभिर्घोषैर्महद्भिर्देववादितैः। नताशेषविनिर्घोषैर्जयशब्दैश्च पुष्कलैः ॥ ७६ ॥
यावन्तो दिवसा देव्याः पूजने यान्ति वै नृणाम्।
तावत्कल्पसहस्राणि स्वर्गलोके महीयते ॥ ७७ ॥
यस्तु कुर्यात्प्रदीपेन शिवलोकं स गच्छति।
लवणेनाक्षतैः कृत्वा देव्या नीराजनं शुभम् ॥ ७८ ॥
तावत्कल्पसहस्राणि विष्णुलोके महीयते। सुवर्णरौप्यवर्णैश्च कृत्वा नीराजनं नरः॥
भगवत्यै महाराज ब्रह्मलोके महीयते। त्रिकालं यो नरः कुर्याद्दुर्गायाः पुरतोनृप ॥८०॥
नृत्यं गीतं च वादित्रं तस्य पुण्यफलं शृणु।
यावन्त्यब्दानि कुरुते नृत्यं गीतं च वादितम् ॥ ८१ ॥

तावत्कल्पानि राजेन्द्र देवीलोके सुखं वसेत्।
एकाहमपि यो भक्त्या पञ्चगव्येन चण्डिकाम् ॥ ८२ ॥
स्नापयेन्नृपशार्दूल स गच्छेत्सुरभीपुरम्। कपिलापञ्चगव्येन घृतक्षीरयुतेन च ॥ ८३ ॥
स्नानं शतगुणं प्रोक्तमितरेभ्यो नराधिप। वर्षैश्च षट्सहस्राणां पापानां समुपार्जनम् ॥
तत्सर्वं विलयं याति तोयेन लवणं यथा। घृताभ्यङ्गेन देव्यास्तु कृतेन विधिवन्नृप ॥
तस्मादभ्यञ्जयेद्भक्त्या नित्यं भगवतीं नृप। नवम्यां शुक्लपक्षे तु विधिवच्चण्डिकां नृप
घृतेन स्नापयेद्यस्तु तस्य पुण्यफलं शृणु। दशपूर्वान्दशपरानात्मानं च विशेषतः ॥
भवार्णवात्समुद्धृत्य दुर्गालोके महीयते। क्षीराद्यैः स्नापयेद्यस्तुश्रद्धाभक्तिसमन्वितः ॥
चण्डिकां स नरो याति गोलोकं तमसः परम्।
चण्डिकां स्नापयेद्यस्तु नरश्चेक्षुरसेन च ॥ ८६ ॥
सौपर्णकेनयानेन विष्णुना सह मोदते। यो नरः स्नापयेद्दुर्गां श्रद्धया हेमवारिणा ॥
सौवर्णयानमारूढो मोदते पुरुषैर्दिवि। रत्नोदकेन विधिवत्स्नापयेच्छ्रद्धयान्वितः ॥
चण्डिकां स नरैः पूर्वैर्विष्णुलोके महीयते। स्नापयेद्य उमां देवीं नरः कर्पूरवारिणा ॥
सौवर्णयानमारूढो गच्छते यत्र चण्डिका।
चण्डिकां स्नापयित्वा तु श्रद्धयाऽगरुवारिणा ॥ ९३ ॥
इन्द्रलोकं समासाद्य क्रीडते सह किन्नरैः।
पितॄनुद्दिश्य यो दुर्गां मधुना पायसेन च ॥ ९४ ॥
स्नापयेद्विधिवद्भक्त्या तस्य पुण्यफलं शृणु।
तृप्ता भवन्ति पितरस्तस्य वर्षशतद्वयम् ॥ ९५ ॥
य एवं स्नापयेन्नित्यं स्नानद्रव्यैर्नराधिप। युगपद्विधिवद्वीर तस्य पुण्यफलं शृणु ॥
अश्वमेधसहस्रस्य राजसूयशतस्य च। अग्निष्टोमस्य यज्ञस्य स फलं विन्दते नरः ॥
स्नापयित्वा नरस्ताम्रैर्वाजपेयफलं लभेत्।
सौवर्णैः स्नापयित्वा तु चण्डिकां कलशैर्नृप ॥ ९८ ॥
अश्वमेधफलं प्राप्य ब्रह्मलोके महीयते। घृतस्नातां तथा दुर्गां समुद्वर्तयते तु यः॥९९॥

यवगोधूमजैश्चूर्णैर्घर्षयेच्छार्करेण च । घृतेन पयसा दध्ना स्नापयेच्चण्डिकां ततः ॥
बिल्वपत्रैः सुगन्धाढ्यं घर्षयेद्यत्नतः पुमान् ।
गोसहस्रशते दत्ते यत्फलं पुष्करे स्मृतम् ॥ १०१ ॥
तत्फलं लभते वीर देव्या उद्वर्तने कृते ।
दत्त्वाऽर्घ्यं विधिवद्भक्त्या दुर्गायै पद्मवारिणा ॥ १०२ ॥
सम्पूज्यमानो गन्धर्वैं रमते दिवि देववत् ।
कृत्वोपवासं विधिवत्सुभोगी पुत्रवान्भवेत् ॥ १०३ ॥
उत्तरे त्वयने यस्तु सोपवासो यजेच्छिवाम् ।
बहुपुत्रो बहुधनः स नरः कीर्तिमान्भवेत् ॥ १०४ ॥
कृत्वोपवासं विधिवद्विषुवे योऽर्चयेच्छिवाम् ।
शक्तिमान्बहुपुत्रश्च स भवेद्बलवान्नरः ॥ १०५ ॥
योऽर्चयेद्विधिवद्दुर्गां ग्रहणे चन्द्रसूर्ययोः । कृत्वोपवासं विधिवत्स भवेत्पुत्रवान्नरः ॥
शान्तिकामो नरो यस्तु राहुग्रस्ते दिवाकरे । सोपवासोऽर्चयेद्देवीं स गच्छेत्परमं पदम्
इत्येते कथिता वीर पूजाकाला मनीषिभिः । दुर्गायाः कुरु शार्दूल येषु पूज्य दिवंव्रजेत्
दुर्गाया दर्शनं पुण्यं दर्शनादभिवन्दनम् । वन्दनात्स्पर्शनं पुण्यं स्पर्शनादभिपूजनम् ॥
पूजनाल्लेपनं श्रेष्ठं लेपनात्तर्पणं स्मृतम् । तर्पणान्मांसदानं तु महिषाजनिघातनम् ॥
अहन्यहनि यो दुर्गां पूजयेद्रुधिरादिभिः । कुलानां शतमुद्धृत्य ब्रह्मलोके महीयते ॥
वरं प्राणपरित्यागः शिरसः कर्तनं वरम् ।
नचा (नाना) पूज्येह भुञ्जीत चण्डिकां चण्डरूपिणीम् ॥ ११२ ॥
इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे देवीपूजाकथनं नाम चतुरशीतितमोऽध्यायः ॥

———

# पञ्चाशीतितमोऽध्यायः

## दुर्गायाः पूजाविधिनिरूपणम् ।

पुलस्त्य उवाच ।

देवैःपुरा जगत्कर्ता पृष्टो देवः पितामहः । ब्रूहि दुर्गार्चनं देव येन तुष्यति चण्डिका ॥

ब्रह्मोवाच ।

शम्भुः पूजयते देवीं मन्त्रशक्तिमयीं शुभाम् । अक्षमालांकरे न्यस्य तेनासौ विभवोद्भवः

दुर्गां रत्नमयीं देवाः पूजयामि सदा ह्ययम् ।

तेन प्राप्तं मया चैव ब्रह्मत्वं च सुदुर्लभम् ॥ ३ ॥

इन्द्रनीलमयीं देवीं विष्णुः पूजयते सदा । विष्णुत्वं प्राप्तवांस्तेन अद्भुतैकं सनातनम् ॥

देवीं हेममयीं दुर्गां धनदोऽर्चयते सदा । तेनासौ धनदो देवो धनेशत्वमवाप्तवान् ॥

विश्वेदेवा महात्मानो रौप्यां देवीं मनोरमाम् ।

यजन्ति विधिवत्तेन विश्वेदेवत्वमागताः ॥ ६ ॥

वायुः पूजयते भक्त्या देवीं पित्तलसम्भवाम् । वायुत्वं तेन सम्प्राप्तमनौपम्यगुणावहम्

वसवः कांस्यकां देवीं पूजयन्ति विधानतः ।

प्राप्तास्ततो महात्मानो वसुत्वं तन्महोदयम् ॥ ८ ॥

अश्विनौ पार्थिवीं देवीं पूजयन्तौ विधानतः । तेन तावश्विनौ देवौ स्ववैद्यौसम्बभूवतुः

स्फाटिकींशोभनां देवीं वरुणःपूजयेत्सदा । वरुणत्वंच सम्प्राप्त तेन चद्ध्यर्यासमन्वितम्

देवीं रत्नमयीं पुण्यामग्निर्यजति भावितः । अग्नित्वं प्राप्तवांस्तेन तेजोरूपसमन्वितम् ॥

ताम्रां देवीं सदाकालं भक्त्या देवो दिवाकरः ।

अर्चयेत्तेन सम्प्राप्तं सूर्यत्वं शुभमुत्तमम् ॥ १२ ॥

मुक्ताफलमयीं देवीं सोमः पूजयते सदा । तेन सोमेन सम्प्राप्तं सोमत्वं सततोज्ज्वलम्

प्रवालकमयीं देवीं पूजयन्ति विधानतः । तेन ते ग्रहतां प्राप्ताः ग्रहाः सूर्यादयोऽनिशम् ॥

वारिजां शोभनां देवीं पूजयन्त्यसुरोत्तमाः । वारिजाश्च महात्मानस्तेनतेऽमितविक्रमाः

त्रपुसीसमयीं देवीं यजन्ते पितरः सदा ।

पितृत्वं प्राप्य ते सर्वे सम्पूज्याश्च जगत्त्रये ॥ १६ ॥

तथा लोहमयीं देवीं पिशाचाः पूजयन्ति ताम् ।

तेन सिद्धिबलोपेताः प्रयान्ति परमं पदम् ॥ १७ ॥

त्रिलोहिनीं सदा देवीं यजन्ते गुह्यकादयः । तेन भोगबलोपेताः प्रयान्तीश्वरमन्दिरम्

वज्रलोहमयीं देवीं यजन्ते भूतयोनयः । तेनमुक्ताः सुरत्वं च लभन्ते सततं दिवि १९

देवास्तथा यूयमपि यदीच्छथ परां गतिम् ।

शिवां मणिमयीं पूज्य लभध्वं मनसेप्सितम् ॥ २० ॥

यश्च देव्या गृहं नित्यं संमार्जयति भक्तितः । स भवेद्बलवान्देवाः सर्वसम्पत्तिसंयुतः

देव्या गृहं तु यो देवा गोमयेनानुलेपयेत् । स्त्रीपुमान्वा यथावच्चषण्मासाभ्यन्तरे ततः

स लभेदीप्सितान्कामान्देवीलोकं च गच्छति ॥ २२ ॥

पुलस्त्य उवाच ।

स्नानकाले महाराज नानावादित्रमङ्गलैः । जयशब्दैश्चयो दुर्गां स्नाप्यमानांजलादिभिः

सम्पूजयति भक्त्या च गन्धपुष्पादिभिस्तथा ।

स क्रीडते दिवं गत्वा गन्धर्वाप्सरसांगणैः ॥ २४ ॥

चक्रैर्वा शतसङ्ख्यैस्तु क्षीरवृक्षसमुद्भवैः । हेमजैश्चापि कलशैर्जलक्षीरघृतान्वितैः ॥२५॥

अनेकवर्णसंयुक्तैरक्षतैर्नीरतण्डुलैः । यः करोति नरो भक्त्या चक्राकारं तु मण्डलम् ॥

चण्डिकायाः पुरो राजंश्चण्डिकायाश्च मन्दिरे ।

स दिव्ययानगो भूत्वा रमते वैष्णवे पुरे ॥ २७ ॥

शुभं वाप्यशुभंवापि फलं पुष्पं निवेदयेत् । भक्त्या युक्तो नरः सर्वंसचदेवत्वमाप्नुयात्

नानाकुसुममालाभिर्मण्डपं चण्डिकोपरि । यः कुर्याद्विधिवद्भक्त्या विष्णुलोके महीयते

कुर्यात्पुष्पगृहं भक्त्या विधिवच्चण्डिकोपरि ।

नवम्यां पर्वकाले वा विचित्रकुसुमोज्ज्वलम् ॥ ३० ॥

विमानं वरमारुह्य पुष्पदामोपशोभितम् । अक्षयं मोदते कालं चण्डिकालयमाश्रितः ॥
पूजाविभक्तविन्यासरचनादिषु सर्वतः । फलमेवं समासेन ज्ञेयं वित्तानुसारतः ॥ ३२ ॥

कृष्णागरुं सकर्पूरं रोचनं चन्दनं तथा ।
भगवत्यनरो भूयः पङ्कं दत्वा नराधिपः ॥ ३३ ॥

इष्टकामानवाप्याथ शिवलोके महीयते । गुग्गुलं सघृतं दत्त्वा दुर्गायै च नरर्षभ ॥ ३४॥
वर्षार्धं विधिवद्भक्त्या गोसहस्रफलं लभेत् । अगुरुं धूपमावेद्य सर्वयज्ञफलंलभेत् ॥

सितागरुं नरो दत्त्वा गोसहस्रफलंलभेत् ।
सर्वेषामेव धूपानां दुर्गाया गुग्गुलुःप्रियः ॥ ३६ ॥

घृतयुक्तो विशेषेण सततं प्रीतिवर्धनः । द्वेसहस्रे पलानां तु तथापलशतद्वयम् ॥ ३७ ॥

दत्त्वा शुक्लनवम्यां तु चण्डिकावल्लभो भवेत् ।
महिषाक्षं घृताक्तं तु दत्त्वा बिल्वमथापि वा ॥ ३८॥

वाजपेयफलंप्राप्य सूर्यलोके महीयते । सकृच्चागरुधूपेन प्रीतिदा सर्वमङ्गला ॥ ३९ ॥

शोधयेत्पापकलिलं काञ्चनं दहनो यथा ।
वस्त्राणि सुविचित्राणि सूक्ष्माणि सुमृदूनि च ॥ ४० ॥
यः प्रयच्छति दुर्गायै स गच्छति शिवालयम् ।
यावन्तस्तन्तवो वीर तेषु वस्त्रेषु कीर्तिताः ॥ ४१ ॥

तावद्वर्षसहस्राणि शोभते चण्डिकालये । सुवर्णतिलके यस्तु भगवत्यै प्रयच्छति ॥

स गच्छति परं स्थानं यत्र सा परमा कला ।
सुवर्णघटितं वस्त्रं यो दुर्गायै प्रयच्छति ॥ ४३ ॥

गोसहस्रफलं प्राप्य सूर्यलोके महीयते । वित्तानुसरणेनैवं फलं ज्ञेयं समासतः ॥ ४४ ॥

सन्ध्याकाले नवम्यां यो बलिं कुर्यान्नराधिपः ।
चण्डिकायतने भक्त्या महिषाजनिपातनैः ॥ ४५ ॥
स गच्छति परं स्थानं यत्र सा चण्डिका स्थिता ।
गुडखण्डाज्यसम्मिश्रमन्नं दद्यान्नराधिप ॥ ४६ ॥

देव्यै यः सकुलोऽथासौ सूर्यलोके महीयते। गुडखण्डघृतानां च तथाशर्करयानृप ॥
दत्ते चोद्वर्तनं देव्यै स याति ब्रह्मणः पदम्।
शाल्योदनं रसानां च प्रपानं विरजं तथा ॥ ४८ ॥
यः प्रयच्छतिदुर्गायै स च गच्छेच्छिवालयम्। दुर्गामुद्दिश्यपानीयंकेतकीगन्धवासितम्
यः प्रयच्छति राजेन्द्र सगणाधिपतिर्भवेत्। आम्रं च नारिकेलं च खर्जूरं बीजपूरकम्
यः प्रयच्छति दुर्गायै स गच्छेत्परमं पदम्।
घृतदीपप्रदानेन योऽर्चयेच्चण्डिकां नरः ॥ ५१ ॥
सोऽश्वमेधफलं प्राप्य चण्डिकाऽनुचरो भवेत्।
तैलदीपं च योदद्यात्पूजयित्वा तु चण्डिकाम् ॥ ५२ ॥
नागलोकं समासाद्य क्रीडते सह किन्नरैः। आत्मदेहवसादीपं प्रज्वाल्य चण्डिकाग्रतः
निवेदयेन्नरो भक्त्या मोदते सोऽम्बिकालये।
यः कुर्यात्कार्तिके मासि शोभनां दीपमालिकाम् ॥ ५४ ॥
चण्डिकायतने भक्त्या ससूर्यालयमाव्रजेत्। घृतेन कुरुशार्दूल अमायां च स्वशक्तितः ॥
विशेषतो नवम्यां च भक्तिश्रद्धासमन्वितः। तावद्वर्षसहस्राणि ब्रह्मलोके महीयते ॥५६॥
अश्मसारमयं कृत्वा नानादीपसमन्वितम्। दीपवृन्दं समुद्बोध्य दुर्गायाः पुरतो नृप
नरः कल्पायुतं साग्रं दुर्गालोके महीयते। चन्द्रांशुनिर्मलं छत्रं मणिमाणिक्यभूषितम् ॥
सर्वतः शोभनं कृत्वा नानापुष्पानुलेपनैः। दुर्गायाः पुरतो धत्ते स याति परमां गतिम्
चामरे श्रद्धया देव्यै दत्त्वा च श्रद्धयान्वितः। राजसूयफलं प्राप्य हंसलोके महीयते ॥
सम्प्रसारितदेहो यो दण्डवत्पतितो भुवि। चण्डिकापुरतो वीर स याति परमांगतिम्
जपसन्ध्योपवासेषु सर्वतीर्थेषु यत्फलम्।
तत्फलं लभते वीर प्रणम्य शिरसा शिवाम् ॥ ६२ ॥
दुर्गापूजोपकरणं स्वल्पं वा यदि वा बहु। कृत्वा वित्तानुसारेण रुद्रलोके महीयते ॥
चण्डिकां पूजयित्वा तु प्रहृष्टेनान्तरात्मना।
कृताञ्जलिपुटो भूत्वा इदं स्तोत्रमुदीरयेत् ॥ ६४ ॥

दुर्गां शिवांशान्तिकरींब्रह्माणीं ब्रह्मणःप्रियाम् । सर्वलोकप्रणेत्रींच प्रणमामिसदाम्बिकाम्

मङ्गलां शोभनां शुद्धां निष्कलां परमां कलाम् ।
विश्वेश्वरीं विश्ववन्द्यां चण्डिकां प्रणमाम्यहम् ॥ ६६ ॥

सर्वदेवमयीं देवीं सर्वदेवनमस्कृताम् । ब्रह्मेशविष्णुनमितां प्रणमामि सदाप्युमाम् ॥

विन्ध्यस्थां विन्ध्यनिलयां दिव्यस्थाननिवासिनीम् ।
योगिनीं योगविद्यां च चण्डिकां प्रणमाम्यहम् ॥ ६८ ॥

ईशानमातरंदेवीमीश्वरीमीश्वरप्रियाम् । प्रणतोऽस्मि सदा दुर्गां संसारार्णवतारिणीम्

इदं यः पठते नित्यं शृणुयाद्वापि भक्तितः । स मुक्तः सर्वपापेभ्यो दुर्गालोके महीयते

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे दुर्गार्चनस्तोत्रकथनं नाम पञ्चाशीतितमोऽध्यायः ।

---

# षडशीतितमोऽध्यायः

## बुधगुरुशुक्रशनिराहुकेतूनां पूजाविधिवर्णनम् ।

भीष्म उवाच ।

श्रुतं सूर्यस्य चन्द्रस्य भौमस्यापि प्रपूजनम् । बुधस्य सोमसूनोश्च पूजनं कथयाधुना ॥

पुलस्त्य उवाच ।

तारागर्भसमुद्भूतो बुधश्चन्द्रकुमारकः ।
सौम्यः क्रूरो ग्रहो ज्ञेयः शुभाशुभप्रदो नृणाम् ॥ २ ॥

शराकारं मण्डलं तु बुधस्य परिकीर्तितम् । हरिन्मणिसमैर्वर्णैश्चूर्णैःकुर्याच्चु मण्डलम्

पूजयेत्तत्र गन्धाद्यैः पुष्पैर्धूपैस्सुशोभनैः । दानं च विधिवत्कुर्याद्दशारिष्टे च गोचरे ॥

कर्पूराश्चैव मुद्गाश्च हरिद्वस्त्रं हरिन्मणिः । सुवर्णं च यथा शक्ति दद्याद्बोधनतुष्टये ॥

सोमपुत्रमहाप्राज्ञ वेदवेदाङ्गपारग । नमस्ते ग्रहमध्यस्थ प्रसन्नो भव मे सदा ॥ ६ ॥

इति स्तुत्वा महाराज बुधं भक्त्या समाहितः ।

प्राप्नुयान्निखिलान्कामान्सोमसूनुप्रसादतः ॥ ७ ॥

गुरोश्च पूजनं प्रोक्तं पट्टसाकारमण्डले पीतवर्णैः सुनिष्पन्नैश्चूर्णैराजन्सुशोभनैः ॥८॥

पीतैर्गन्धयुतैःपुष्पैर्वस्त्रैर्हेम्ना च पूजयेत् । दशागोचरयोर्दौःष्ट्ये दानंदद्याच्च शक्तितः ॥

चणकद्विदलंचैव पीतवस्त्रं सुवर्णकम् । पुष्परागं तु विप्राय दद्याच्चारिष्ट शान्तये ॥

बृहस्पते सुराचार्य सर्वशास्त्रविशारद । दानेनानेन संतुष्टो भवसौख्यो ममाधुना ॥

एवं कृते तु राजेन्द्र स्वानुकूलो भवेद्गुरुः ।

सर्वान्कामानवाप्नोति नरो गुरुसमर्चनात् ॥ १२ ॥

भार्गवस्यापि वक्ष्यामि पूजनं नृपतेऽधुना ।

यत्कृत्वा सर्वकामाप्तिः सम्यक्पुंसां प्रजायते ॥ १३ ॥

पञ्चकोणं समुद्दिष्टं मण्डलं भार्गवस्य तु । चूर्णकैः श्वेतवर्णैश्च विधिनासुधियाकृतम्

श्वेतगन्धैश्च पुष्पैश्च वस्त्रैश्चापि सितैस्तथा । पूजयेद्भार्गवंभक्त्या नरःश्रद्धासमन्वितः ॥

रौप्यं च दक्षिणादानं यथाशक्ति प्रकीर्तितम् । दशाद्यरिष्टे चोत्पन्ने सितमश्वंप्रदापयेत्

तण्डुलाः श्वेतवस्त्रं च रौप्यं चन्दनमेव च । कर्पूरं च सुगन्धाढ्यं देयंदानं द्विजातये ॥

भृगुपुत्र महाभाग दानवानां पुरोहित । दानेनानेन संतुष्टो भव सर्वासुरार्चित ॥ १८ ॥

इति मन्त्रं समुच्चार्य दद्याद्दानं यथोदितम् ।

तस्य तुष्टो भवत्याशु भार्गवः कुरुनन्दन ॥ १९ ॥

शनैश्चरस्य पूजार्थं मण्डलं च नराकृति । कृत्वाचूर्णैःकृष्णवर्णैः पूजयेत्तत्र भक्तितः ॥

कृष्णैर्गन्धैश्च पुष्पैश्च वस्त्रैश्चापि तथाविधैः ।

लोहं च दक्षिणा दानं पिण्याकं च तिलस्य च ॥ २१ ॥

दानं शनैश्चरारिष्टे कृष्णांगां कृष्णवस्त्रकम् । सुवर्णं च यथाशक्ति दद्यान्नीलमणिंतथा

सूर्यसूनो महाभाग छायापुत्र महाबल । अधो दृष्टे भव शने प्रसन्नोऽस्मात्प्रदानतः ॥

एवं स्तुत्वा शनिं भक्त्या यश्च दद्याद् द्विजातये ।

स्वानुकूलो भवेत्तस्य शनिः पापे च गोचरे ॥ २४ ॥

राहोर्वर्णादिकं सर्वं शनिवन्मण्डलं तथा । सूर्याकारं समुद्दिष्टं तत्र पूजाऽर्कसूनुवत् ॥

गोमेदं सर्षपाश्चैव तिला माषाश्च कृष्णकाः ।
महिषी च तथा च्छागो दानं राहोः प्रकीर्तितम् ॥ २६ ॥
सिंहिकासुत दैत्येन्द्र राहो चन्द्रार्कमर्दन । भवतुष्टो महाभाग दानेनानेन सुव्रत ॥२७॥
केतोर्मण्डलकं कुर्याद् ध्वजाकृति सुशोभनम् ।
शनिवत्सकलं ज्ञेयं पूजा वर्णादिकं नृप ॥ २८ ॥
सप्तधान्यं समुद्दिष्टं सस्वर्णं केतुदानकम् । एवं कृते स्वानुकूलौ भवेतां च नृणांनृप ॥
प्रदद्यातां धनं पुत्रान्सुखं सौभाग्यमेव च । आकृष्णेतिरवेर्मन्त्र इमं देवास्तथाविधोः॥
अग्निर्मूर्द्धेति भौमस्य मन्त्रो जप्येऽर्हणे तथा ।
उद्बुध्यस्वेतीन्दुसूनो वृंहस्पते गुरोस्तथा ॥ ३१ ॥
अन्नात्परीति शुक्रस्य शन्नोदेवीरयं शनेः । कयान इति राहोश्च केतोःकेतुमितिस्मृतः
एते मन्त्राःसमुद्दिष्टा ग्रहाणां पूजने जपे । एवं कृते नृपश्रेष्ठानुकूला अखिलाग्रहाः ॥
भवन्ति पुंसां सततं यच्छन्ति च सुसम्पदः ॥ ३४ ॥
एतन्महाराज मया समस्तं तुभ्यं समुद्दिष्टमिह क्रमेण ।
श्रुत्वानरः सर्वश्रुतार्थसारमेतीश्वरस्यैव च सन्निधानम् ॥ ३५ ॥
इदं पवित्रं यशसो निधानमिदं पितृणामतिवल्लभं स्यात् ।
इदं च देवेष्वमृताय कल्पते पुण्यावहं पातकिनां च पुंसाम् ॥ ३६ ॥
इति पठति यशस्यं यः शृणोतीह भक्त्या मधुमुरनरकारेरर्चनं वाथ पश्येत् ॥
मतिमपि च जनानां यो ददातीन्द्रलोके विधिशिवविबुधेन्द्रैः पूज्यतेकल्पमेकम् ॥
यः इदं शृणुयान्नित्यमृषीणां चरितं शुभम् । विमुक्तस्सर्वपापेभ्यःस्वर्गलोके महीयते ॥
तपः कृते प्रशंसन्ति त्रेतायां ज्ञानमेव च । द्वापरे यज्ञमित्याहुर्दानमेकं कलौयुगे ॥३९॥
सर्वेषामेव दानानामिदमेवैकमुत्तमम् । अभयं सर्वभूतानां नास्ति दानमतः परम् ॥
दान प्रधानं शूद्रस्य त्वित्याह भगवान्प्रभुः ।
दानेन सर्वकामाप्तिस्तस्य संजायते तपः ॥ ४१ ॥
पुण्यं पवित्रमायुष्यं सर्वपापविनाशनम् । पुराणमेतत्कथितं तीर्थश्राद्धानुवर्णनम् ॥

शृणोति यः पठेद्वापि श्रीमान्संजायते नरः ।
सर्वपापविनिर्मुक्तः सलक्ष्मीकं हरिं लभेत् ॥ ४३ ॥
इदं महाराज अगादि तुभ्यं पुण्यं महापातकनाशनं च ।
ब्रह्मार्करुद्रैश्च सुपूजितं च श्रोतव्यमेतत्प्रवदन्ति तज्ज्ञाः ॥ ४४ ॥
सृष्टिखण्डमिदं राजन्मया तुभ्यं प्रकीर्तितम् ।
पुराणस्यादिभूतं च नवधा सृष्टि पौष्करम् ॥ ४५ ॥
द्विजेभ्यः श्रावयेद्विद्वान्यश्च शृणुयात्पठेत् । कल्पकोटिशतं साग्रं ब्रह्मलोके स मोदते ॥

इति श्रीपाद्मपुराणे प्रथमे सृष्टिखण्डे पुराणावतारे ब्रह्मार्चनवर्णनं नाम षडशीतितमोऽध्यायः ॥ ८६ ॥

॥ इति सृष्टिखण्डं समाप्तम् ॥

॥ शुभंभवतु ॥

ॐ तत्सद्ब्रह्मार्पणमस्तु ।



॥ श्रीगणेशाय नमः ॥

# पद्मपुराणस्थ-सृष्टिखण्डस्य शुद्धिपत्रम्

| पृष्ठाङ्काः | पङ्क्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ८ | १५ | सर्सपैश्च | सर्षपैश्च |
| ९ | १३ | प्रधानतत्वेन | प्रधानतत्त्वेन |
| १२ | ५ | ब्रह्मविदांवर | ब्रह्मविदाम्वरः |
| १३ | १७ | सङ्ख | शङ्ख |
| १६ | ६ | माश्रमानाश्च | माश्रमाणाश्च |
| ४६ | २१ | पतिरो | पितरो |
| ५० | ११ | कमफलं | कमफलं |
| ५१ | ७ | विमानेष्यपि | विमानेष्वपि |
| ५२ | २५ | निमाच्छृणु | निमाञ्छृणु |
| ५३ | १३ | साक्षाताभिः | साक्षताभिः |
| ६३ | ७ | पिपीलिकलापं | पिपीलिकालापं |
| ६३ | १८ | विलव्य | विलप्य |
| ६७ | ५ | पुना | पुनः |
| ६७ | १० | क्षेपप्स्यति | क्षेप्स्यति |
| ७३ | २१ | पूरोर्वशं | पूरोर्वंशं |
| ७६ | १० | पथुरुक्म | पृथुरुक्म |
| ७६ | १४ | भवद्रार्या | भवद्भार्या |
| ७७ | ५ | प्रताववान् | प्रतापवान् |

| पृष्ठाङ्काः | पङ्क्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ७७ | ६ | त्वभद्धार्या | त्वभवद्धार्या |
| ७७ | ६ | व्यजापत | व्यजायत |
| ७७ | ११ | द्धजमान | द्धजमाना |
| ७८ | २ | सभामध्य | सभामध्या |
| ७६ | ३ | प्रसेनस्यस्य | प्रसेनस्य |
| ७६ | ५ | गाविन्दश्च | गोविन्दश्च |
| ८० | १६ | ननंदि | नंदि |
| ८० | १६ | च्छुतकीर्ते | च्छ्रुतकीर्ति |
| ८२ | ११ | पूर्वमजात | पूवमदात्त |
| ८३ | १६ | स्त्रैलोक्य | स्त्रैलोक्य |
| ८५ | १७ | कायार्थं | कार्यार्थं |
| ८६ | ७ | वीजेतुं | विजेतुं |
| ६१ | १६ | एवा | एव |
| ६१ | १८ | अनुहार्थं | अनुग्रहार्थं |
| ६३ | ३ | प्रसादत्तव | प्रसादात्तव |
| ६७ | १३ | रो | शूरो |
| ६८ | २ | दाकुन्तीत | तदा कुन्ती |
| ६८ | ८ | त्वाया | त्वया |
| ६८ | ११ | कलस्य | कुलस्य |
| ६८ | १३ | त्रलोक्यं | त्रैलोक्यं |
| १०० | २३ | प्रसूतिस्प्वं | प्रसूतिस्त्वं |
| १०३ | १ | प्राश्चित्त | प्रायश्चित्त |
| १०३ | २४ | महाता | महता |

| पृष्ठाङ्काः | पङ्क्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| १०४ | १० | आदेह पानाद्ये | आदेहपतनाद्ये |
| १०७ | ५ | वृक्षे | वृक्षै |
| ११० | ८ | वेदोक्तावधानवित् | वेदोक्तविधानवित् |
| ११२ | ४ | मोक्षार्थे | मोक्षार्थं |
| ११२ | ७ | सुमीष्टाशी | सुमिष्टाशी |
| ११२ | १४ | वैवत्यं | दैवत्यं |
| ११३ | ६ | चान्द्रायणदिभिः | चान्द्रायणादिभिः |
| ११४ | १० | प्रसन्निधौ | सन्निधौ |
| ११४ | १२ | धर्मपर्यणाः | धर्मपरायणाः |
| ११४ | २२ | वेदाध्यन | वेदाध्ययन |
| ११४ | २३ | सर्वकांमा | सर्वकामा |
| ११५ | २१ | नुहेणैव | नुग्रहेणैव |
| ११५ | २२ | ब्रह्मलोक | ब्रह्मलोका |
| ११५ | २२ | विष्णुलीका | विष्णुलोका |
| ११६ | १० | नानरत्न | नानारत्न |
| ११६ | ११ | गुणैरन्य | गुणैरन्यै |
| ११६ | १३ | नराधा | नरा |
| ११८ | ७ | १७६ | २७६ |
| ११९ | ३ | गुरोर्मुखात् | गुरोमुखात् |
| १२० | ६ | ब्रह्मणामिहिता | ब्रह्मणाभिहिता |
| १२४ | १३ | शतारूपा | शतरूपा |
| १२६ | १८ | उद्गात्रंत्रो | उद्गातंभो |
| १२७ | २ | न्निरैः | किन्नरैः |

| पृष्ठाङ्काः | पङ्क्ति | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| १२७ | १५ | सद्वृत्त | सद्वृत्त |
| १३० | १५ | वाक्ष्य | वीक्ष्य |
| १३४ | २ | कन्याका | कन्यका |
| १४० | १४ | भवष्यसि | भविष्यसि |
| १४० | १४ | शत्रुभिर्बद्ध | शत्रुभिर्बद्धो |
| १४३ | १६ | जपेच्छुणु | जपेच्छृणु |
| १४६ | १५ | प्रीताः | पीताः |
| १४७ | ६ | सरोऽपि | सारोऽपि |
| १४६ | २२ | पूंणमा | पूर्णिमा |
| १५३ | ५ | मृगु | भृगु |
| १५६ | २ | चित्याथ | चिन्त्याथ |
| १५७ | ६ | नाम्न | नाम्ना |
| १५७ | १५ | नत्यति | नृत्यति |
| १५८ | १६ | नेतस्मा | नैतस्मा |
| १६२ | १२ | छषोपेता | झषोपेता |
| १६४ | २ | कण्टकाकीर्ण | कण्टकाकीर्णे |
| १६५ | १६ | ध्र्वं | ध्रुवं |
| १६७ | ८ | वञ्चितां मया | वञ्चितो मया |
| १६८ | १८ | श्लाध्यं | श्लाघ्यं |
| १७३ | २ | मुक्तऽसि | मुक्ताऽसि |
| १७६ | १२ | तीर्थफलं | तीर्थफल |
| १७८ | ६ | कातिकीं | कार्तिकीं |
| १७८ | ११ | सावित्रा | सावित्री |

| पृष्ठाङ्काः | पङ्क्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| १८२ | ४ | वनेचान्वे | वनेचान्ये |
| १८२ | १२ | परमदर्पिता | परमदर्पिताः |
| १८३ | ६ | विनाशं | विनाशं |
| १८३ | १६ | वचा | वचो |
| १८६ | ६ | एवमुक्त | एवमुक्तः |
| १८७ | ६ | भोजिता | भोजिताः |
| १९४ | १५ | धर्म | धर्मः |
| १९५ | २१ | महायते | महीयते |
| १९८ | ३ | इन्द्रण | इन्द्रेण |
| १९९ | ३ | विक्ष्य | वीक्ष्य |
| १९९ | ४ | वभाषे | बभाषे |
| १९९ | २४ | विभ्रती | बिभ्रती |
| २०१ | १० | क्षार | क्षीर |
| २०२ | २० | सपिषी | सर्पिषी |
| २०३ | ४ | गौरालोके | गौरीलोके |
| २०३ | १५ | तव्रमिदं | व्रतमिदं |
| २०३ | १७ | चैत्रै | चैत्रे |
| २०६ | ११ | कुर्या | कुर्यात् |
| २०६ | ११ | विष्णुं | विष्णुं |
| २०९ | १२ | पद्मानाभाय | पद्मनाभाय |
| २०९ | १५ | पुनर्भुवौ | पुनर्भ्रवौ |
| २०९ | १९ | पारिष्टात्तु | परिष्टात्तु |
| २११ | २ | सूक्ष्ला | सूक्ष्मा |

| पृष्ठाङ्काः | पङ्क्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| २१३ | ५ | दिवाकरो | दिंवाकरो |
| २१३ | १६ | संयुत | संयुतः |
| २१४ | १४ | पर्वतामा | पर्वताना |
| २१४ | २४ | रधम | रधमः |
| २१६ | २५ | घतार्चि | घृतार्चि |
| २१८ | ५ | द्रजात | द्रजता |
| २१९ | १५ | तद्वद्धत्तांचकणिकाम् | तद्वद्वृत्ताञ्चकर्णिकाम् |
| २२० | २३ | वजितः | वर्जितः |
| २२१ | १९ | कल्मप | कल्मष |
| २२३ | १४ | र्भास्कारायेति | र्भास्करायेति |
| २२३ | १७ | कणिकायाम् | कर्णिकायाम् |
| २२९ | ६ | न्यासेत् | न्यसेत् |
| २२९ | १४ | अशोकायै न | अशोकायै |
| २३२ | ११ | पटाघृताम् | पटावृताम् |
| २३४ | २ | वणां | वर्णां |
| २३५ | १४ | चाष्टाभी | चाष्टाभि |
| २३५ | १५ | मौनतेन भुञ्जीव्रत | मौनव्रतेन भुञ्जीत |
| २३५ | २१ | वित्तशाठ्य न | वित्तशाठ्येन |
| २३५ | २४ | बायुतत्रयम् | वर्षायुतत्रयम् |
| २३८ | ३ | पुण्डराकाक्षं | पुण्डरीकाक्षं |
| २३८ | १८ | कणिकाम् | कर्णिकाम् |
| २३८ | २५ | विर्यक्ता | विधैर्युक्ता |
| २४२ | १५ | पुण्रीकाक्ष | पुण्डरीकाक्ष |

| पृष्ठाङ्काः | पङ्क्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| २४३ | ४ | त्रोदश | त्रयोदश |
| २४३ | ७ | मलङ्कत्य | मलङ्कृत्य |
| २४४ | १५ | मन्त्रै | मंन्त्रै |
| २४७ | १ | चतुर्था | चतुर्थी |
| २४७ | ८ | दम्भय | दम्भ |
| २४७ | २० | विधत्त | विधत्ते |
| २५२ | ७ | यावदुष्पोष्य | यावदुपोष्य |
| २५२ | १८ | त्रेलाक्या | त्रैलोक्या |
| २५४ | १३ | तत्रैब | तत्रैव |
| २५५ | २१ | चत्वारि | चत्वारि |
| २५७ | २३ | चाश्वस्थ | चाश्वत्थ |
| २५६ | ६ | पिनाकधृक | पिनाकधृक् |
| २६२ | ६ | वैंकुठेऽस्य | वैंकुण्ठस्य |
| २६२ | ८ | मंहल्लोंके | मंहर्लोके |
| २६२ | ६ | प्रकीतिता | प्रकीर्तिता |
| २६५ | २३ | जावलोके | जीवलोके |
| २६६ | १६ | प्रहृश्यन्ते | प्रदृश्यन्ते |
| २७१ | १० | अथिता | अर्थिता |
| २७१ | २२ | यज्ञपर्वता | यज्ञपर्वत |
| २७१ | २४ | ब्रह्याण्ड | ब्रह्माण्ड |
| २७२ | ८ | भोगन् | भोगान् |
| २७४ | ३ | शिवदूता | शिवदूती |
| १७४ | १५ | वांसुकि | वासुकि |

| पृष्ठाङ्काः | पङ्क्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| २७६ | १८ | मन्त्रैषधै | मन्त्रौषधै |
| २७६ | २५ | तः | ततः |
| २७७ | ८ | निष्क्रान्ता | निष्क्रान्ता |
| २७८ | ७ | भीभं | भीमं |
| २७९ | १५ | शूलाग्र | शूलाग्रै |
| २७९ | २१ | पुरतोऽ भिसुखी | पुरतोऽ भिमुखी |
| २८१ | १४ | दुलभं | दुर्लभं |
| २८३ | २१ | यच्छुत्वा | यच्छ्रुत्वा |
| २८४ | ६ | यक्त | युक्त |
| २८६ | ६ | कृतैनित्यं | कृतैर्नित्यं |
| २८९ | ८ | परिभाषिता | परिभाषिताः |
| २८९ | २० | स्तपोभिश्व | स्तपोभिश्च |
| २९० | २१ | जाह्ववा | जाह्नवी |
| २९० | २१ | वियुधा | विबुधाः |
| २९१ | ८ | देवा | देवी |
| २९१ | १२ | ब्राह्मणो | ब्रह्मणो |
| २९१ | १६ | कि | किं |
| २९२ | २ | त्रिविष्टम् | त्रिविष्टपम् |
| २९२ | १७ | भुक्तेवा नच वा भुक्ते दिवा वा | भुङ्क्ते वा न च वा भुङ्क्ते दिवा वा |
| २९२ | २३ | सरस्वरती | सरस्वती |
| २९२ | २५ | मन्दकिन्या | मन्दाकिन्या |
| २९३ | ५ | घृषध्वजः | वृषध्वजः |

| पृष्ठाङ्काः | पङ्क्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| २६३ | १२ | पाद्मयुराणे | पाद्मपुराणे |
| २६४ | ५ | तच्छुत्वा | तच्छ्रुत्वा |
| २६४ | २५ | भूयो | भूँयो |
| २६५ | ६ | सर्वाकाम | सर्वकामा |
| २६५ | १५ | स्त्रियः | स्त्रयः |
| २६६ | ८ | वच | वचन |
| २६७ | ५ | पश्यस्व | |
| २६८ | २ | क्षण | क्षणं |
| २६८ | ६ | सूय | सूर्ये |
| ३०२ | २३ | र्बलिभिगणेन्द्रैः | र्बलिभिर्गणेन्द्रैः |
| ३०६ | २ | ह्रोता | होता |
| ३०६ | ४ | धर्यु | ध्वर्यु |
| ३०६ | २१ | कार्या | कार्यौ |
| ३०७ | १३ | गृहित्वो | गृहीत्वो |
| ३०८ | ३ | ब्रह्मावाचा | ब्रह्मोवाच |
| ३०८ | १२ | श्रद्धधासि | श्रद्दधासि |
| ३१० | ५ | रवाच | उवाच |
| ३१० | १३ | कहिंचित् | कर्हिचित् |
| ३११ | २ | हाराय | हराय |
| ३१४ | ४ | पलावते | |
| ३१४ | १८ | सुभाङ्गस्तु | शुभाङ्गस्तु |
| ३१८ | ३ | सन्देह | सन्देहः |
| ३१८ | २० | अम्बुभक्षौ | अम्बुभक्षो |

| पृष्ठाङ्काः | पङ्क्तिः | अशुद्धपाठः | शुद्धपाठः |
|---|---|---|---|
| ३२० | २ | पाद्यमाचनीयं | पाद्यमाचमनीयं |
| ३२१ | २ | सतो | सती |
| ३२२ | १४ | क्रमयोयेन | क्रमयोगेन |
| ३२३ | ५ | वस | वश |
| ३२३ | १६ | अतीवस्पर्धने | अतीव स्पर्धते |
| ३२३ | १७ | स्त्वर्बदानि | स्त्वर्बुदानि |
| ३२८ | २५ | प्रप्नोत्यनामयम् | प्राप्नोत्यनामयम् |
| ३३५ | १८ | शन्ति | शान्ति |
| ३३६ | २५ | क्षत् | क्षुत् |
| ३३७ | १० | नप | नृप |
| ३३८ | ११ | पूणिमा | पूर्णिमा |
| ३३९ | ३ | क्षमस्मा | क्षमस्वा |
| ३४१ | ७ | प्राप्तावां | प्राप्तवां |
| ३४३ | २५ | अधर्मश्चानतं | अधर्मश्चानृतं |
| ३४६ | ३ | भुक्तातु | भुक्ता तु |
| ३४७ | १२ | साजता | सर्जिता |
| ३६४ | ८ | पृथवीं | पृथिवीं |
| ३६६ | १५ | विनिजित्य | विनिर्जित्य |
| ३६७ | ३ | सुग्रीवेणैव | सुग्रीवेणैव |
| ३६७ | ११ | मरुदेश | मरुदेशो |
| ३६८ | २१ | द्राक्षासालये | द्राक्षसालये |
| ३७० | १४ | कान्यकुजे | कान्यकुब्जे |
| ३७२ | १३ | विरिञ्चनं | विरिञ्चिनं |

| पृष्ठाङ्काः | पङ्क्तिः | अशुद्धपाठः | शुद्धपाठः |
| --- | --- | --- | --- |
| ३७२ | १४ | विरिञ्चनं | विरिञ्चिनं |
| ३७३ | २२ | नैगामा | नैगमा |
| ३७७ | १५ | क्रिमीणां | कृमीणां |
| ३८२ | | हंसज्ञतः | |
| ३८२ | २३ | क्षुब्धस्य | क्षुब्धस्य |
| ३८३ | १६ | ब्रह्माण' | ब्रह्माणं |
| ३८६ | १६ | स्तपाघारं | स्तपोघोरं |
| ३८६ | २३ | समुत्पादिवा | समुत्पादित्वा |
| ३८७ | ८ | महामना | महामनाः |
| ३८७ | २२ | खसा | सखा |
| ३८७ | २३ | कन्य | कन्या |
| ३८८ | १५ | चव | चैव |
| ३८८ | २० | स्मृता | स्मृताः |
| ३९० | ४ | प्रभवोऽव्य | प्रभवोऽव्यय |
| ३९३ | १४ | स्तथो | स्तथौ |
| ३९३ | ५ | सौऽध्यारोह | सोऽध्यारोह |
| ३९६ | १० | दधार | दधारा |
| ३९६ | २१ | निर्घोषं | निर्घोषं |
| ३९७ | ७ | जनं | जननं |
| ३९७ | ९ | मृध | मृधे |
| ३९७ | १४ | वज्रण | वज्रेण |
| ३९८ | १७ | मुनोनां | मुनीनां |
| ३९८ | २० | दन्तोलूखलिन | दन्तोलूखलिन |

